# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.

जव्हेरी बजार—मुंबई.

संवत् १९८०

ब्रान्च गोपीपुरा—सुरत.

६०००—८—२४.

धी न्यु लक्ष्मी प्रिन्टिंग प्रेस.
शाकगली माडवी, मुंबई. ३.

आगमोदयसमितिसिद्धान्तसंग्रहे अङ्कः १.

श्रीमदाचार्यवर्यभद्रबाहुततनिर्युक्तियुतं पूर्वधराचार्यविहितभाष्यभूषितं

श्रीमद्भवविरहहरिभद्रसूरिसूत्रितवृत्त्यलङ्कृतं

# श्रीमदावश्यकसूत्रम् ( प्रथमो विभागः )

प्रकाशकः जव्हेरी चुनीलाल पन्नालालदत्तकिञ्चिदधिकार्धद्रव्यसाहायेन

शाह-वेणीचन्दसूरचन्द अस्यैकः कार्यवाहकः।

इदं पुस्तकं मुम्बय्यां निर्णयसागरमुद्रणास्पदे कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्।

वीरसंवत्. २४४२. विक्रमसंवत्. १९७२. क्राइस्टस्य. १९१६.

वेतनं मपादरूप्यकद्वयम्।

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
| --- | --- | --- | --- |
| ५२०० | श्रीभगवतीजीमां | शेठ पुनमचंदजी करमचंदजी कोटावाळा पत्रव्यवहार चाले छे. | पाटण. |
| × ५२०० | ,, | मारफते हा: झवेरी हीराचंद तलकचंद | सुरतबंदर. |
| ५२०० | ,, | शेठ उत्तमचंद मूळचंद तथा शेठ अमेचंद मूळचंद | सुरतबंदर. |
| १२५० | श्री[illegible]जीमां | शेठ उत्तमचंद [illegible]चंद | पाटण. |
| × १२०० | ,, | झवेरी मगनभाइ प्रतापचंद | सुरतबंदर. |
| १००० | ,, | शेठ अमीचंद खुशालभाइ फुलचंद झवेरी. | सुरतबंदर. |
| × ५०१ | उपासकदशांग, अंतगडदशांग, [illegible] अनुत्तरोववाइ. | शेठ चुनीलाल छगनचंद श्रोफ [illegible] | सुरतबंदर. |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
| --- | --- | --- | --- |
| × १००० | रायपसेणीजीमां | पारी-सरूपचंद लल्लुभाइ | मेसाणा. |
| ॥ १००० | ,, | शा. रायचंदभाइ दुर्लभदास | कालीयावाडी. |
| × ६५१ | ,, | शेठ मोहनलाल सांकलचंद | अमदाबाद. |
| × ७५० | प्रश्नव्याकरणमां | बाबु गुलाबचंदजी अमीचंदजी झवेरी | मुंबाइबंदर. |
| ७५० | ,, | शेठ मंछुभाइ तलकचंद | सुरतबंदर. |
| ५०० | ,, | शेठ कल्याणचंद सोभाग्यचंद झवेरी | सुरतबंदर. |
| * ३७२५ | आवश्यकजीमां | बाबु चुनीलालजी पन्नालालजी झवेरी | मुंबाइबंदर. |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| × ५५० | उववाइजीमां | शा. हरखचंद अगरचंदनी-दीकरी बेन रतन तथा तेजकोर | सुरतबंदर. |
| × ५४० | " | झवेरी नवलचंद उदेचंदनी विधवाबाइ नंदकोर | सुरतबंदर |
| × ३५०१ | पन्नवणाजीमां | शीकपडवंजना संघतरफथी पारी-गीठाभाइ कल्याणचंदनी पेढीमांथी ज्ञानखाताना मारफत परी बाला-भाइ दलसुखभाइ रु. २३३१. चउद सुपननी उपजना रुः ११७० | कपडवंज |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| * १८०० | नंदीजीमां | शेठ प्रेमचंद रायचंद | मुंबाइबंदर |
| ÷ १७५५ | ओघनिर्युक्तिमां | जैनविद्याशाळा तरफथी सुबाजी रवचंद जयचंद | अमदावाद |
| * २८५१ | चंदपन्नतिसूत्रमां | झवेरी भगवानदास हीराचंद | मुंबाइबंदर |

× आ निशानीवाळा सद्गृहस्थोनी रकम वसुल आवी गइ छे माटे ते-ओने धन्यवाद घटे छे.

|| आ निशानीवाळा सद्गृहस्थोनी रकम अर्ध वसुल आवी गई छे.

* आ निशानीवाळा सद्गृहस्थोनी रकमनो थोडो भाग बाकी छे.

÷ आ निशानीवाळा सद्गृहस्थोनी रकमनो झाझो भाग बाकी छे.

॥ अर्हम् ॥

श्रीमद्गणधरवरसुधर्मस्वामिविरचितं

श्रीमद्भद्रबाहुश्रुतकेवलिततनिर्युक्तियुतं

श्रीमद्भवविरहहरिभद्रसूरिप्रणीतवृत्तिसमवेतं

# श्रीआवश्यकसूत्रम्.

श्रीगणधरेन्द्रो विजयन्तेतराम्.

प्रणिपत्य जिनवरेन्द्रं[1], वीरं[2] श्रुतदेवतां[3] गुरून्[4] साधून्[5]। आवश्यकस्य विवृतिं, गुरूपदेशादहं वक्ष्ये ॥ १ ॥

---

१ अनेनाभीष्टदेवतास्तवः ( अभियुक्तैरिज्यते इत्यभीष्टः ) जिनाः अवधिजिनाद्यन्तेषु वराः केवलिनस्तेषामिन्द्रः. २ अनेनाभिमतदेवतास्तवः ( अभिमन्यते विघ्नविघातकत्वेनेत्यभिमता शासनदेवतादिः ) ३ श्रुताधिष्ठात्री देवता श्रुतदेवता, श्रुतरूपा देवता श्रुतदेवतेतिविग्रहे तु नाभिमतदेवतात्वं किन्तु अधिकृतदेवतात्वं स्यात्, अस्या ज्ञानावरणीयक्षयोपशमसाधकत्वेन प्रणिपातो नानुचित., "सुयदेवये" त्यादिवचनात्। अनेनाविरतत्वेऽपि श्रुतदेवतायाः स्तवनीयता ज्ञापिता, मिथ्यात्वापादनं तु सिद्धान्ताचरणोभयोत्तीर्णमेव ४ अनेनाधिकृतदेवतास्तवः ( शास्त्रप्रणेतृत्वेनाधिक्रियते इत्यधिकृता ). ५ साधुत्वाव्यभिचारादुपाध्यायवाचनाचार्यगणावच्छेदकादयः.

यद्यपि मया तथाऽन्यैः, कृताऽस्य विवृतिस्तथापि संक्षेपात् । तद्रुचिसत्त्वानुग्रहहेतोः क्रियते प्रयासोऽयम् ॥ २॥

इहावश्यकप्रारम्भप्रयासोऽयुक्तः, प्रयोजनादिरहितत्वात्, कण्टकशाखामर्दनवत् इत्येवमाद्याशङ्कापनोदाय प्रयोजनादि पूर्वं प्रदर्श्यत इति, उक्तं च—"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मङ्गलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥१॥" इत्यादि । अतः प्रयोजनमभिधेयं संबन्धो मङ्गलं च यथावसरं प्रदर्श्यत इति । तत्र प्रयोजनं तावत् परापरभेदभिन्नं द्विधा, पुनरेकैकं कर्तृश्रोत्रपेक्षया द्विधैव, तत्र द्रव्यास्तिकनयालोचनायामागमस्य नित्यत्वात् कर्तुरभाव एव, "इत्येषा द्वादशाङ्गी न कदाचिन्नासीत्, न कदाचिन्न भविष्यति, न कदाचिन्न भवति" इतिवचनात् । पर्यायास्तिकनयालोचनायां चानित्यत्वात्तत्सद्भाव इति । तत्त्वालोचनायां तु सूत्रार्थोभयरूपत्वादागमस्य अर्थापेक्षया नित्यत्वात् सूत्ररचनापेक्षया

---

१ विवृतं विस्तरतोऽभियुक्तैरेभिरिति भणितं, चतुरशीतिसहस्रप्रमितं च तदिति प्रघोषः २ अनेनास्याः समूलतामाह.३ संक्षेपरुचिजीवोपकाराय तन्निमित्तमाश्रित्येति वा. ४ चिकीर्षितायामावश्यकविवृतौ. ५ सूत्रार्थोभयरूपस्यावश्यकस्य. ६ अभिधेयसंबन्धौ मङ्गलं च. ७ काकदन्तपरीक्षापडपूपादिवाक्यदृष्टान्तयोरुपलक्षकमिदम्. ८ पूर्वाचार्यैः प्ररूपितं, मयेति शेषः. ९ चर्चितविषयसाम्मत्याय. १० अविघ्नेन पारगमनादिरूपेष्टार्थसिद्धिः ११ सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते इत्यादिवाक्यग्रहः. १२ उक्तनिगमात्. १३ परं प्रकृष्टम् अपरं तत्साधनभूतं फलम् १४ उपदेशस्योभयाश्रितत्वात्. १५ इष्टावधारणार्थः, उभयोरुभयफलास्पदता तेन १६ कर्तृप्रयोजनविचारे "नत्थि नएहिं विहूणं सुत्तं अत्थो व जिणमए किंची"ति वचनान्नयविचारणामाह–तत्रेत्यादिना. १७ अर्थरूपस्य ( जीवादेर्वाच्यस्य ) १८ सर्वक्षेत्रापेक्षया ( विदेहेषु तु सर्वदाभावः सूत्रस्य ) श्रुतवतामविनाशात्पर्यायाणां द्रव्याभेदात्. १९ इत्यभिप्रायवज्जन्यादिशास्त्रवाक्यात्, तात्पर्यं तु त्रिकालावस्थायित्वे. २० उत्पत्तिभाववत्त्वात्. २१ कर्तृसद्भावः २२ नययोरेकदेशग्राहित्वात्स्याद्वादश्रुतरूपप्रमाणविचारणादर्शनाय. २३ गणभृद्विहितां सूत्ररचनामपेक्ष्य.

चानित्यत्वात् कथञ्चित् कर्तृसिद्धिरिति । तत्र सूत्रकर्तुः परमपवर्गप्राप्तिः अपरं सत्त्वानुग्रहः, तदर्थप्रतिपादयितुः किं प्रयोजनमिति चेत्, न किञ्चित्, कृतकृत्यत्वात्, प्रयोजनमन्तरेणार्थप्रतिपादनप्रयासोऽयुक्तः इतिचेत्, न, तस्य तीर्थकरनामगोत्रविपाकित्वात्, वक्ष्यति च—"तं च कहं वेइज्जइ?, अगिलाए धम्मदेसणादीहि" इत्यादिना । श्रोतॄणां त्वपरं तदर्थाधिगमः, परं मुक्तिरेवेति । कथम्? ज्ञानक्रियाभ्यां मोक्षस्तन्मयं चावश्यकमितिकृत्वा, नावश्यकश्रवणमन्तरेण विशिष्टज्ञानक्रियावाप्तिरुपजायते, कुतः?, तत्कारणत्वात्तदवाप्तेः, तदवाप्तौ च पारम्पर्येण मुक्तिसिद्धेः, इत्यतः प्रयोजनवानावश्यकप्रारम्भप्रयास इति । तदभिधेयं तु सामायिकादि । संबन्धश्च उपायोपेयभावलक्षणः तर्कानुसारिणः प्रति, कथम्?, उपेयं सामायिकादिपरिज्ञानं, मुक्तिपदं वा, उपायस्तु आवश्यकमेव वचनरूपापन्नमिति, यस्मात्ततः सामायिकाद्यर्थनिश्चयो भवति, सति च तस्मिन् सम्यग्दर्शनादिवैमल्यं क्रियाप्रयत्नश्च, तस्माच्च मुक्तिपदप्राप्तिरिति । अथवा उपोद्घातनिर्युक्तौ "उद्देसे निद्देसे य" इत्यादिना ग्रन्थेन सप्रपञ्चेन स्वयमेव वक्ष्यति। कश्चिदाह—अधिगतशास्त्रार्थानां स्वयमेव प्रयोज-

---

१ वय.शक्तिशीले इति तृन्, याजकादिभिरित्यस्याकृतिगणत्वाद्वा तृजपि. २ प्रयोजनं परं मुक्तिः, सा प्राप्तैवकेवलत्वात् 'मोक्षे भवे च' ति वचनाजोविदेशा, अवश्यम्भाविनी च सेति कृतकृत्यः. ३ प्रयासस्य तीर्थकृतो वा. ४ (गाथा १८५) ५ ग्रन्थेन. ६ अल्पबन्धकत्वात् सूर्याद्याकारन्यायेनादावपरं. ७ सूत्रार्थाभयागमवाच्यावबोधः. ८ परमपदानुकूला ९ आवश्यकश्रवणं १०-११ विशिष्टज्ञानक्रियावाप्तिः १२ आरम्भकस्य. १३ ज्ञानाशातनाद्यभिधानात् १४ अपरप्रयोजनं. १५ परप्रयोजनं १६ एवकारस्येष्टावधारणार्थत्वात् अपरप्रयोजनस्य नान्यच्छास्त्रमुत्तराध्ययनादि परम्परयाऽनावश्यकादिग्रन्थोऽभावात् मुक्तेर्नान्यः कोऽपि उपायः १७ रचितं. १८ आवश्यकात् १९ चतुर्विंशतिस्तवादीनां. २० श्रद्धानुसारिणः प्रति. २१ धर्मोत्तरानुसारी न्यायोपयोगी बौद्धः.

नादिपरिज्ञानात् शास्त्रादौ प्रयोजनाद्युपन्यासवैयर्थ्यमिति, तन्न, अनधिगतशास्त्रार्थानां प्रवृत्तिहेतुत्वात् तेदुपन्यासोपपत्तेः । प्रेक्षावतां हि प्रवृत्तिर्निश्चयपूर्विका, प्रयोजनादौ उक्तेऽपि च अनधिगतशास्त्रार्थस्य तन्निश्चयानुपपत्तेः, संशयतः प्रवृत्त्यभावात्तदुपन्यासोऽनर्थकः इति चेत् , न, संशयविशेषस्य प्रवृत्तिहेतुत्वदर्शनात् , कृषीवलादिवत् , इत्यलं प्रसङ्गेन । साम्प्रतं मङ्गलमुच्यते—यस्मात् श्रेयांसि बहुविघ्नानि भवन्ति इति, उक्तं च—"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥ १ ॥" इति । आवश्यकानुयोगश्च अपवर्गप्राप्तिबीजभूतत्वात् श्रेयोभूत एव, तस्मात्तदारम्भे विघ्नविनायकोपशान्तये तत् प्रदर्श्यत इति । तच्च मङ्गलं शास्त्रादौ मध्ये अवसाने चेष्यत इति । सर्वमेवेदं शास्त्रं मङ्गलमित्येतावदेवास्तु, मङ्गलत्रयाभ्युपगमस्त्वयुक्तः, प्रयोजनाभावात् इति चेत् , न, प्रयोजनाभावस्यासिद्धत्वात् । तथाच कथं नु नाम विनेया विवक्षितशास्त्रार्थस्याविघ्नेन पारं गच्छेयुः ?, अतोऽर्थमादिमङ्गलोपन्यासः, तथा स एव कथं नु नाम तेषां स्थिरः स्याद् ? इत्यतोऽर्थं मध्यमङ्गलस्य, स एव च कथं नु नाम शिष्यप्रशिष्यादिवंशस्य अविच्छित्त्या उपकारकः स्याद् ? इत्यतोऽर्थं चरममङ्गलस्य इत्यतो हेतोरसिद्धता इति । तत्र "आभिणिबोहियणाणं, सुयणाणं

१ शास्त्रारम्भे. २ प्रयोजनादेरुपन्यासस्य युक्तियुक्तत्वात्. ३ केवलशास्त्रस्य गुरुत्वात् शास्त्रार्थस्येति. ४ प्रयोजनादेः ५ अनिष्टाननुबन्धीष्टसिद्धिसंशयस्य ६ निर्युक्तिकृता साक्षादुक्तत्वात्. ७ पुनरवतारणा. ८ महान्तो विघ्नाः ( पूर्वपदलोपात् विघ्नविनायकाः ) ९ निर्युक्तिरूपः १० कदाचनापि. ११ आवश्यकानुयोगारम्भे. १२ विशेषानामादिना सत्त्वानां. १३-१४ शास्त्रस्यैकान्ताद्वार्थम्. १५ तपोवत्निर्जरार्थत्वात्. १६ निर्विघ्नसमाप्तिस्थैर्याव्यवच्छित्तिनिमित्तकेति. १७ मङ्गलप्रयोजनस्य प्रागुक्तेन साधनात्प्रयोजनान्तराभावादित्यर्थः १८ "विभक्तिरन्ततसाधाभाः" इति तसन्तमव्ययं, तथा चैतदर्थमिति. १९ शास्त्रार्थः २० विनेयानाम्. २१ उपन्यास इति. + चारपाठो १–४ | पुनतः ८–४

चैवे'"[1] त्यादिनाऽऽदिमङ्गल[3]माह। तथा "वंदण चिति कितिकम्मं" इत्यादिना[4] मध्यमङ्गलं, वन्दनस्य विनयरूपत्वात्, तस्य चाभ्यन्तरतपोभे[5]दत्वात्, तपोभेदस्य च मङ्गल[6]त्वात्। तथा "पचक्खाणं" इत्यादिना चावसानमङ्गलं, प्रत्याख्यानस्यापि[7] तपोभेदत्वादेव मङ्गलत्वमिति॥ तत्रै[8]तत्स्यात्, इदं मङ्गलत्रयं शास्त्राद्भिन्नमभिन्नं वा?, यदि भिन्नमतः शास्त्रममङ्गलं, तद्भेदा[9]न्यथानुपपत्तेः, अमङ्गलस्य च सतोऽन्यमङ्गलशतेनापि मङ्गलीकर्तुमशक्यत्वात् तन्मङ्गलोपन्यासवैयर्थ्यं, तदुपादानेऽनिष्ठा वा, यथा प्रागमङ्गलस्य सतःशास्त्रस्य मङ्गलमुक्तम्, एवं मङ्गलान्तरमप्यभिधातव्यम्, आद्यमङ्गलाभिधानेऽपि तदमङ्गलत्वात्, इत्थं पुनरप्यभिधातव्यमित्यतोऽनिष्ठेति। अथाभिन्नम्, एवं सति शास्त्रस्यैव मङ्गलत्वात् अन्यमङ्गलोपादानानर्थक्यमेव, अथ मङ्गलभूत[10]स्याप्यन्यन्मङ्गलमुपादीयत इति, एवं स[11]ति तस्याप्यन्यदुपादेयमित्यनवस्थानुषङ्ग एव, [12]अथानवस्था नेष्यत इति मङ्गलाभावप्रसङ्गः, कथम्? यथा मङ्गला*त्मकस्यापि सतः शास्त्रस्य अन्यमङ्गलनिरपेक्षस्यामङ्गलता†, एवं मङ्गल[13]स्याप्यन्य[14]मङ्गलशून्यस्य, इत्य[15]तो मङ्गलाभा[16]व इति।

अत्रोच्यते—आद्य[17]पक्षोक्तदोषाभावस्तावदनभ्युपगमादेव, तदभ्युपगमेऽपिच मङ्गलस्य लवणप्रदीपादिवत् स्वपरानुग्रहकारित्वादुक्तदोषा[18]भाव इति। [19]चरमपक्षेऽपि न मङ्गलोपादानानर्थक्यं, शिष्यमतिमङ्गलपरिग्रहाय शास्त्रस्यैव मङ्गलत्वा-

---

१ प्रयोजनाभावरूपस्य. २ गाथा १ आदिशब्देनाद्यभागावसानपर्यन्तस्य ग्रहः ३ जं नेरइओ इत्यादिना ज्ञानस्य स्पष्टं निर्जरार्थत्वान्मङ्गलता ४ गाथा वन्दनकेति. ५ द्वितीयभेदः ६ धम्मो मंगलमुक्किट्ठं अहिंसा संजमो तवो इति वचनात् ७ यावेति ८ मङ्गलभेदत्रयस्य. ९ न पर्यवसानम्. १० शास्त्रस्य ११ मङ्गलरू. पस्याप्यन्यन्मङ्गलकरणे. १२ मूलक्षयकरीति (अन्यद्वितीयमङ्गलकरणाभावात्) १३ कृतस्य. १४ द्वितीयेति १५ द्वितीयकरणाभावात्. १६ शास्त्रे संपन्नः. १७ भेदेति १८ अनिष्ठालक्षणेति. १९ अभेदपक्षे. * मङ्गलभूतस्यापि १-४ † स्वं १-४-५

नुवादात्[1], एतदुक्तं भवति—कथं नु नाम विनेयो मङ्गलमिदं शास्त्रमित्येवं गृह्णीयात्?, अतो मङ्गलमिदं शास्त्रमितिक[2]थ्यते। आह—यद्यपि मङ्गलमिदं शास्त्रमित्येवं न गृह्णाति विनेयस्तथापि तत्[3] स्वतो मङ्गलरूपत्वात्[4] स्वकार्यप्रसाधनाया[5]लमेवेति कथं नानर्थक्यं?, न, अभि[6]प्रायापरिज्ञानात्, इह मङ्गलमपि मङ्गलबुद्ध्या परिगृह्यमाणं मङ्गलं[7] भवति, साधुवत्, तथाहि—साधुर्मङ्गल[8]भूतोऽपि सन्मङ्गलबुद्ध्यैव[9] गृह्यमाणः प्रशस्तचेतोवृत्तेर्भव्यस्य[10] तत्कार्य[11]प्रसाधको भवति, यदा तु न तथा[12] गृह्यते तदा कालुष्योपहतचेतसः सत्त्वस्य न भवतीति[13], एवं शास्त्रमपी[14]तिभावार्थः। आह—यद्येवम[15]मङ्गलमपि मङ्गलबुद्धेः प्राणिनो मङ्गलकार्यकृत्प्राप्नोतीति, अनिष्टं चैतदिति, न, तस्य[16] स्वरूपेणैवामङ्गलत्वात्, मङ्गलस्य[17] च[18] स्वबुद्धि[19]सापेक्षस्य स्वकार्या[20]भिनिवर्त्तकत्वादिति, तथाहि—यदि कश्चित्काञ्चनमेव काञ्चनतयाऽभिगृह्य प्रवर्त्तते ततस्तत्फल[21]मासादयति, न पुनरकाञ्चनं सत्काञ्चनबुद्ध्या[22], नाप्येतद्[23]बुद्ध्येति। मङ्गलत्रयापान्तरालद्वयमित्थम[24]मङ्गलमापद्यत इति चेत्, न, अशेषशास्त्रस्यैव तत्त्वतो मङ्गलत्वात्, तस्यैव* च संपूर्णस्यैव त्रिधा विभक्तत्वात् मोदकवदपान्तरालद्वयाभाव इति, यथा

१ सिद्धस्य कथनम्. २ इष्टनमस्कारादिमङ्गलविधानद्वाराऽनूद्यते. ३ शास्त्रम्. ४ अन्यनमस्कारादिमङ्गलनिरपेक्षत्वेन. ५ निर्विघ्नपारगमनादि. ६ मङ्गलरूपस्यापि मङ्गलकरणे. ७ मङ्गलकार्यकृत्. ८ 'नोआगमओ भावो सुविसुद्धो खाइयाइओ' त्ति ( वि० ४९ गाथा ) वचनात्क्षायिकादिभाववतो यतेर्मङ्गलता. ९ लोकोत्तरतत्त्वप्राप्तिमत्ताज्ञापनाय. १० आसन्नसिद्धिताज्ञापनाय. ११ प्रधानमङ्गलतासंपादनेति १२ मङ्गलबुद्ध्या. १३ मङ्गलकार्यकृत् १४ मङ्गलबुद्ध्या गृह्यमाणं मङ्गलभूतमपि मङ्गलकार्यकृत्. १५ मङ्गलबुद्धेर्मङ्गलकार्यकृत्त्वे. १६ अमङ्गलस्य. १७ स्वरूपेण मङ्गलस्यापि तथात्वापत्तेराह मङ्गलेति १८ चो विशेषार्थः १९ मङ्गलत्वेति २० विघ्नविध्वंसादि. २१ सुवर्णकार्यं दारिद्र्यनाशादि. २२ काञ्चनकार्यकृद्भवतीति शेषः २३ काञ्चनमपि काञ्चनकार्यकृत् भवतीतिशेषः २४ मङ्गलं मङ्गलबुद्ध्या गृह्यमाणं तत्कार्यकृदितिनियमे. * तस्य च १–३–४

हि मोदकस्य त्रिधाविभक्तस्य अपान्तरालद्वयं नास्ति, एवं प्रकृतशास्त्रस्यापीति भावार्थः । मङ्गलत्वं चाशेषशास्त्रस्य निर्जरार्थत्वात्, प्रयोगश्च—विवक्षितं शास्त्रं मङ्गलं, निर्जरार्थत्वात्, तपोवत् । कथं पुनरस्य निर्जरार्थतेति चेत्, ज्ञानरूपत्वात्, ज्ञानस्य च कर्मनिर्जरणहेतुत्वात्, उक्तं च—"जं नेरइओ कम्मं, खवेइ बहुयाहि वासकोडीहिं । तं नाणी तिहि गुत्तो, खवेइ ऊसासमित्तेणं ॥ १ ॥" । स्यादेतत्, एवमपि मङ्गलत्रयपरिकल्पनावैयर्थ्यमिति, न, विहितोत्तरत्वात्, तस्मात्स्थितमेतत्—शास्त्रस्य आदौ मध्येऽवसाने च मङ्गलमुपादेयमिति ।

आह—मङ्गलमिति कः शब्दार्थः ?, उच्यते, अगिरगिलगिवगिमगि इतिदण्डकधातुः, अस्य "इदितो नुम्धातोः" ( पा० ७–१–५८ ) इति नुमि विहिते औणादिकालचूप्रत्ययान्तस्यानुबन्धलोपे कृते प्रथमैकवचनान्तस्य मङ्गलमितिरूपं भवति, मङ्ग्यते हितमनेनेति मङ्गलं, मङ्ग्यते अधिगम्यते साध्यत इतियावत्, अथवा मङ्गेतिधर्माभिमानं, 'ला आदाने' अस्य धातोर्मङ्ग उपपदे "आतोऽनुपसर्गे कः" ( पा० ३–२–३ ) इति कप्रत्ययान्तस्य अनुबन्धलोपे कृते "आतो लोप इटि च क्ङिति" ( पा० ६–४–६४ आतो लोप इटि च ) इत्यनेन सूत्रेणाकारलोपे च प्रथमैकवचनान्तस्यैव मङ्गलमिति भवति, मङ्गं लातीति मङ्गलं धर्मोपादानहेतुरित्यर्थः, अथवा मां गालयति भवादिति मङ्गलं संसारादपनयतीत्यर्थः ।

---

१ अनुमानस्य. २ मङ्गलत्रयस्य अविघ्नसमाप्त्यादिकार्यत्रयस्य पृथक्पृथक्तया साधकत्वात् ३ सिद्धम्. ४ सदृशधातूनामेकार्थे पाठात ५ ग्राह्यर्थं नात् गत्यर्थानां. ६ निदर्शनमात्रत्वाद्धातूनाम् ७ पर्यायस्य पर्यायकथने प्रयोग एतस्य.

तेच्च नामादि चतुर्विधं, तद्यथा—नाममङ्गलं १ स्थापनामङ्गलं २ द्रव्यमङ्गलं ३ भावमङ्गलं ४ चेति । तत्रे "यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षम् । पर्यायानभिधेयं ( च ) नाम यादृच्छिकं च तथा ॥ १ ॥" अस्यायमर्थः—'यद्' 'वस्तुनो' जीवाजीवादेः 'नाम' यथा गोपालदारकस्येन्द्र इति, 'स्थितमन्यार्थे' इति परमार्थतः त्रिदशाधिपेऽवस्थानात्, 'तदर्थनिरपेक्षम्' इति इन्द्रार्थनिरपेक्षं, कथम्? तत्रे गुणतो वर्त्तत इति, इन्दनादिन्द्रः 'इदि परमैश्वर्ये' इति तस्य परमैश्वर्ययुक्तत्वात्, गोपालदारके तु तदर्थशून्यमिति, तथा पर्यायैः—शक्रपुरन्दरादिभिः नाभिधीयत इति, इह नामनामवतोरभेदोपचाराद्गोपालवस्त्वेव गृह्यते, एवंभूतं नामेति, तथाऽन्यत्रावर्त्तमानमपि किञ्चिद् यादृच्छिकं डित्थादिवत्, चशब्दात् यावद्द्रव्यभावि च प्रायस इति । यत्तु सूत्रोपदिष्टं "णामं आवकहियं" तत् प्रतिनियतजनपदसंज्ञामाश्रित्येति, नाम च तन्मङ्गलं चेतिसमासः, तत्र यत् जीवस्याजीवस्योभयस्य वा मङ्गलमिति नाम क्रियते तन्नाममङ्गलं, जीवस्य यथा—सिन्धुविषयेऽग्निर्मङ्गलमभिधीयते, अजीवस्य यथा—श्रीमल्लाटदेशे दवरकवलनकं मङ्गलमभिधीयते, उभयस्य यथा—वन्दनमालेति । "यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि । लेप्यादिकर्म तत् स्थापनेति क्रियतेऽल्पकालं च ॥ २ ॥" अस्यायमर्थः—'यद्' वस्तु 'तदर्थवियुक्तं' भावेन्द्राद्यर्थरहितं, तस्मिन्नभिप्रायस्तदभिप्रायः, अभिप्रायो बुद्धिः, तद्बुद्ध्येत्यर्थः, करणिराकृतिः, यच्चेन्द्राद्याकृति 'लेप्यादिकर्म क्रियते' चशब्दात्तदाकृतिशून्यं चाक्षनिक्षेपादि 'तत्स्थापनेति' तच्चे-

१ तत्त्वभेदपर्यायैर्व्याख्येतिनियमात् प्राक्तत्त्वं मङ्गलस्य हितप्राहृयाणभिधाग भेददर्शनाय. २ चतुर्विधे मङ्गले. ३ आर्यावृत्तस्य नामलक्षणप्रतिपादकग्रन्थस्येति गा. ४ आदिना तदुभयस्य. ५ गुणतः. ६ त्रिदशाधिपे. ७ इन्द्रस्य. ८ इन्द्रार्थेति. ९ अभिधानान्तरेऽपि प्रागभिधानवाच्यत्वात्. १० परावृत्तिभावात्.

त्वरमल्पकालमितिपर्यायौ, चशब्दाद्यावद्द्रव्यभावि च, स्थाप्यत इति स्थापना, स्थापना चासौ मङ्गलं चेति समासः, तत्र स्वस्तिकादि स्थापनामङ्गलमिति । "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद्द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥ ३ ॥" अस्यायं भावार्थः—'भूतस्य' अतीतस्य 'भाविनो वा' एष्यतो 'भावस्य' पर्यायस्य 'कारणं' निमित्तं 'यद्' एव 'लोके' 'तद् द्रव्यम्' इति द्रवति गच्छति तांस्तान्पर्यायान् क्षरति चेति द्रव्यं 'तत्त्वज्ञैः' सर्वज्ञैस्तीर्थकृद्भिरितियावत् सचेतनम् अनुपयुक्तपुरुषाख्यम् अचेतनं ज्ञशरीरादि तथाभूतमन्यद्वा 'कथितं' आख्यातं प्रतिपादितमित्यर्थः । तत्र द्रव्यं च तन्मङ्गलं चेतिसमासः, तच्च द्रव्यमङ्गलं द्विधा—आगमतो नोआगमतश्च, तत्र आगमतः खल्वागममधिकृत्य आगमापेक्षमित्यर्थः, नोआगमतस्तु तद्विपर्ययमाश्रित्य, तत्रागमतो मङ्गलशब्दार्थज्ञाता अनुपयुक्तो द्रव्यमङ्गलम् 'अनुपयोगो द्रव्य' मितिवचनात्, तथा नोआगमतस्त्रिविधं द्रव्यमङ्गलं, तद्यथा–ज्ञशरीरद्रव्यमङ्गलं १ भव्यशरीरद्रव्यमङ्गलं २ ज्ञशरीरभव्यशरीरव्यतिरिक्तं ३ द्रव्यमङ्गलमिति । तत्र ज्ञस्य शरीरं ज्ञशरीरं, शीर्यत इति शरीरं ज्ञशरीरमेव द्रव्यमङ्गलं ज्ञशरीरद्रव्यमङ्गलम्,

---

१ आकृत्यन्तरे पूर्वाकारोच्छेदात्. २ नन्दीश्वरद्वीपादिस्थप्रतिमादि. ३ स्थाप्यमानापेक्षया, अन्यत्र तु निष्ठतीति स्थापना. ४ आदिना नन्दावर्त्तादि. ५ आगमनोआगमाभ्यां विचारयिष्यमाणत्वाद्भावार्थ इति । ६ वाशब्दस्य निपातानामनेकार्थत्वेन समुच्चयार्थत्वा द्भूतभविष्यतोश्चेति ज्ञेयं ( चकाराद्भूतभविष्यत्पर्यायमिति विशेषावश्यके ) ७ विवक्षितस्य भावतया ८ "आगमकारणमाया देहो सद्दो य तो दव्वं" नि३०विशेषावश्यकवचनादुपादानादीनि विविधानि कारणानि. ९ इष्टावधारणार्थत्वाद्योग्यत्वसद्भाव इति ज्ञापयति । १० पर्यायस्य क्रमभावित्वात्पूर्वपर्यायान् क्षरति, भूतापेक्षया क्षरति, भविष्यदपेक्षया गच्छतीत्यपि ११ द्वादशाङ्गार्थप्ररूपणाकारित्वात्तेषाम्. १२ आदिना भव्यशरीरग्रहः. १३ ज्ञभव्यशरीरव्यतिरिक्तमप्रधानं कारणादि च. १४ युक्तिदर्शनपुरस्सरं दर्शितं द्रव्यस्वस्वरूपमेतदिति १५ पठिता. * उपलक्षणादनुपयुक्तानुष्ठानादि व्यतिरिक्तमङ्गलत्वात्तस्य. + पेक्षयेत्यर्थः १–४ † ज्ञाता २

अथवा ज्ञशरीरं च तद्द्रव्यमङ्गलं चेतिसमासः । एतदुक्तं भवति—मङ्गलपदार्थज्ञस्य यच्छरीरमात्मरहितं तदतीतकालानुभूततद्भावानुवृत्त्या सिद्धशिलादितलगतमपि घृतघटादिन्यायेन नोआगमतो ज्ञशरीरद्रव्यमङ्गलमिति, मङ्गलज्ञानशून्यत्वाच्च तस्य, इह सर्वनिषेध एव नोशब्दः । तथा भव्यो योग्यः, मङ्गलपदार्थं ज्ञास्यति यो न तावद्विजानाति स भव्य इति, तस्य शरीरं भव्यशरीरं, भव्यशरीरमेव द्रव्यमङ्गलम्, अथवा भव्यशरीरं च तद्द्रव्यमङ्गलं चेतिसमास इति । अयं भावार्थः—भाविनीं वृत्तिमङ्गीकृत्य मङ्गलोपयोगाधारत्वात् मधुघटादिन्यायेनैव तत् बालादिशरीरं भव्यशरीरद्रव्यमङ्गमिति, नोशब्दः पूर्ववत् । ज्ञशरीरभव्यशरीरव्यतिरिक्तं च द्रव्यमङ्गलं संयमतपोनियमक्रियानुष्ठाता अनुपयुक्तः, आगमतोऽनुपयुक्तद्रव्यमङ्गलवत्, तथा यच्छरीरमात्मद्रव्यं वा अतीतसंयमादिक्रियापरिणामं, तच्च उभयातिरिक्तं द्रव्यमङ्गलं, ज्ञशरीरद्रव्यमङ्गलवत्, तथा यद् भाविसंयमादिक्रियापरिणामयोग्यं तदपि उभयव्यतिरिक्तं, भव्यशरीरद्रव्यमङ्गलवत्, तथा यदपि स्वभावतः शुभवर्णगन्धादिगुणं सुवर्णमाल्यादि, तदपि हि भावमङ्गलपरिणामकारणत्वाद् द्रव्यमङ्गलम्, अत्रापि नोशब्दः सर्वनिषेध एव द्रष्टव्यः, इत्युक्तं द्रव्यमङ्गलम् । "भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात् ॥ ४ ॥" अस्यायमर्थः—भवनं भावः, स हि वक्तुमिष्टक्रियानुभवलक्षणः सर्वज्ञैः

१ मङ्गलभावेति. २ यत्र विधायानशनं जग्मुः शोभनां गतिं वाचंयमाः सेति, ( अनु० ) आदिना तीर्थंकरनिर्वाणभूम्यादि, ३ आदिना मधुकुम्भादि. ४ नोआगमतोपपादनाय. ५ भावमङ्गलकारणताज्ञापनाय. ६ आदिना युवादि. ७ सर्वनिषेध एव. ८ उभयसमुच्चयायापि. ९ आदिना तपोनियमादि. १० शरीरमात्मद्रव्यं वा. ११ ज्ञभव्यशरीरेति उभयं १२ निमित्तकारणस्यापि द्रव्यत्वार्थं. १३ वदित्यन्तः. * नानुपयुक्तः १-२-३-४ + चाती० १३

समाख्यातः, इन्दनादिक्रियानुभवनयुक्तेन्द्रादिवदिति । तत्र भावतो मङ्गलं भावमङ्गलम् , अथवा भावश्चासौ मङ्गलं चेति समासः, तच्च द्विधा–आगमतो नोआगमतश्च, तत्रागमतो मङ्गलपरिज्ञानोपयुक्तो* भावमङ्गलं, कथमिह भावमङ्गलोपयोगमात्रात् तन्मयताऽवगम्यत इति, नह्यग्निज्ञानोपयुक्तो माणवकोऽग्निरेव, दहनपचनप्रकाशनाद्यर्थक्रियाप्रसाधकत्वाभावाद् इति चेत्, न, अभिप्रायापरिज्ञानात्, संवित् ज्ञानम् अवगमो भाव इत्यनर्थान्तरं, तत्र 'अर्थाभिधानप्रत्ययाः तुल्यनामधेयाः' इति सर्वप्रवादिनामविसंवादस्थानम्, अग्निरितिच यज्ज्ञानं तदव्यतिरिक्तो ज्ञाता तल्लक्षणो गृह्यते, अन्यथा तज्ज्ञाने सत्यपि नोपलभेत, अतन्मयत्वात्, प्रदीपहस्तान्धवत् पुरुषान्तरवद्वा, नचानाकारं तज्ज्ञानं, पदार्थान्तरवद्विवक्षितपदार्थापरिच्छेदप्रसङ्गात्, वन्धाद्यभावश्च, ज्ञानाज्ञानसुखदुःखपरिणामान्यत्वाद्, आकाशवत्, न चानलः सर्व एव दहनाद्यर्थक्रियाप्रसाधको, भस्मच्छन्नादिना व्यभिचारात्, इत्यलं प्रसङ्गेन, प्रकृतमुच्यते–नोआगमतो भावमङ्गलम् आगमवर्जं ज्ञानचतुष्टयमिति, सर्वनिषेधवचनत्वान्नोशब्दस्य, अथवा सम्यग्दर्शनज्ञानचारित्रोपयोगपरिणामो यः स नागम एव केवलः न चानागमः, इत्यतोऽपि मिश्रवचनत्वान्नोशब्दस्य नोआगमत इत्याख्यायते, अथवा अर्हन्नमस्कारान्द्युपयोगः

१ मङ्गलाधिकारे भावाधिकारे भावलक्षणसिद्धौ वा. २ अर्थाभिधानप्रत्ययेतिन्यायादग्निज्ञानस्याग्निरूपत्वं, तदव्यतिरिक्तस्य ज्ञातुरपि, तथा सति अग्निलक्षणत्वमिति ज्ञायते. ३ ज्ञानात्मनोर्व्यतिरिक्तत्वे. ४ ज्ञानात्मनोर्भेदात्. ५ प्रदीपवज्ज्ञानम् , अन्धवज्ज्ञानानिरिक्तः पुरुषः, प्रदीपहस्तत्वं च निकटत्वाय. ६ समवायापेक्षया दृष्टान्तान्तरं अन्तरापेक्षया वा. ७ विषयवैशिष्ट्यशून्यं, तथाच ज्ञेयस्य भिन्नत्वं ज्ञानात्. ८ प्रसङ्गोऽनिष्टापत्तिः ९ चकारो नोपलभेतेत्यनेन सह समुच्चयार्थः, ज्ञानात्मनोर्भेदे दूषणान्तरमेतदिति १० स्यादित्यध्याहार्यम्. ११ चन्द्रकान्तमणिव्यवहितादेर्ग्रहः, भस्मच्छन्नादिवदुपयोगरूपोऽपि न दाहकादिगुण इति तत्त्वम् । १२ नोशब्दस्य पर्युदासप्रतिषेधार्थत्वादागमवर्ज्यं ज्ञानचतुष्टयमिति. * ज्ञानोपयुक्तो.

खल्वागमैकदेशत्वात् नोआगमतो भावमङ्गलमिति[1] ॥ ननु नामस्थापनाद्रव्येषु मङ्गलाभिधानं[2] विवक्षितभावशून्यत्वाद् द्रव्यत्वं[3] च समानं वर्त्तते[4]; ततश्च क एषां विशेष इति, अत्रोच्यते, यथा हि स्थापनेन्द्रे[5] खल्विन्द्राकारो लक्ष्यते[6], तथा कर्तुश्च सद्भूतेन्द्राभिप्रायो[7] भवति, तथा द्रष्टुश्च तदाकारदर्शनादिन्द्रप्रत्ययः[8], तथा प्रणतिकृतधियश्च[9] फलार्थिनः[10][11] स्तोतुं प्रवर्त्तन्ते, फलं[12] च प्राप्नुवन्ति केचिद्देवतानुग्रहात्[13], न तथा नामद्रव्येन्द्रयोरिति[14], तस्मात्स्थापनायास्तावदित्थं भेद इति । यथा च द्रव्येन्द्रो भावेन्द्रस्य[15] कारणतां प्रतिपद्यते, तथोपयोगापेक्षायामपि[16] तदुपयोगतामासादयिष्यति[17] अवाप्तवांश्च[18], न तथा नामस्थापनेन्द्रावित्ययं विशेषः । भावमङ्गलमेवैकं[19] युक्तं, स्वकार्यप्रसाधकत्वात्[20], न नामादयः, तत्कार्याप्रसाधकत्वात्, पापवद् इति चेत्, न, नामादीनामपि[21] भावविशेषत्वात्[22], यस्मादविशिष्टमिन्द्रादि वस्तु उच्चरितमात्रमेव[23] नामादिभेदचतुष्टयं

---

१ नोशब्दस्य सर्वदेशनिषेधैकदेशवाचकत्वात्, क्रमेण नोआगमतो मङ्गलपदार्थत्रयं ज्ञानचतुष्टयादिरूपम्. २ द्रव्येषु दधिदूर्वादिषु अक्ष्यादिषु च मङ्गलाभिधानं. ३ "अभिहाणं दव्वत्तं तयत्थसुन्नत्तणं च तुल्लाइं" इतिविशेषावश्यके पृथक् प्रोक्तं, अत्र तु तदर्थशून्यत्वं द्रव्यत्वे हेतुतयोक्तम्, 'यद्वस्तुनोऽभिधान' मिति 'यत्तु तदर्थवियुक्त' मिति वचनान्नामस्थापनयोरपि द्रव्यत्वं, कारणता सर्वत्रेति वा द्रव्यता, पूर्वं निक्षेपचतुष्कस्य प्रक्रान्तत्वान्नामद्रव्यभेदविषयाशङ्का, विवक्षितेत्यादेस्तु द्रव्यत्वे हेतुता. ४ भावे संभवान्नाम्न आह–द्रव्यत्वमिति,विवक्षितभावशून्यत्वं हि तत्,नच तद्भाव इति। ५ स्पष्टं लक्ष्यमानत्वादादौ स्थापनाभेदनिरूपणम्. ६ सद्भावस्थापनापेक्षया. ७ अवितथेति. ८ बुद्धिः ९ सहस्राक्षवज्रधरत्वादि १० प्रतीति. ११ आराधनातत्परतादर्शनाय १२ सुतधनादि फलं. १३ तत्पाक्षिकेति. १४ स्थूलबुद्धेर्लोकस्य तत्र तथाध्यवसायाद्यभावात्. १५ नोआगमतो भावेन्द्रस्य. १६ लब्धिज्ञानवतां. १७ भव्यशरीरद्रव्यं. १७ ज्ञशरीरद्रव्यं. १९ अर्थक्रियाकारि वस्त्वित्यभिप्रेत्याह. २० निर्विघ्नशास्त्रार्थपारगमनादि. २१ नाममङ्गलादीनां. २२ धर्मरूपत्वात्. २३ अव्युत्पादितं.

प्रतिपद्यंते, भेदाश्च पर्याया एवेति, अथवा नामस्थापनाद्रव्याणि भावमङ्गलस्यैवाङ्गानि, तत्परिणामकारणत्वात्, तथा च मङ्गलाद्यभिधानं सिद्धाद्यभिधानं चोपश्रुत्य अर्हत्प्रतिमास्थापनां च दृष्ट्वा भूतयतिभावं भव्ययतिशरीरं चोपलभ्य प्रायः सम्यग्दर्शनादिभावमङ्गलपरिणामो जायते, इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः—तत्र नोआगमतोऽर्हन्नमस्करादि भावमङ्गलमुक्तं, अथवा नोआगमतो भावमङ्गलं नन्दी, तत्र नन्दनं नन्दी, नन्दन्त्यनयेति वा भव्यप्राणिन इति नन्दी, असावपि च मङ्गलवन्नामादिचतुर्भेदभिन्ना अवगन्तव्येति, तत्र नामस्थापने पूर्ववत्, द्रव्यनन्दी द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तो, नोआगमतस्तु ज्ञशरीरभव्यशरीरोभयव्यतिरिक्ता च द्रव्यनन्दी द्वादशप्रकारस्तूर्यसंघातः 'भंभा मुकुंद मद्दल कडंव झल्लरि हुडुक्क कंसाला। काहलि तलिमा वंसो, संखो पणवो य वारसमो ॥ १ ॥' तथा भावनन्द्यपि द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता †उपयुक्तः, नोआगमतः पञ्चप्रकारं ज्ञानं, तच्चेदम्—

**आभिणिवोहियनाणं सुयनाणं चेव ओहिनाणं च। तह मणपज्जवनाणं केवलनाणं च पंचमयं ॥ १ ॥**

---

१ जानीते २ निक्षेपचतुष्कस्य भिन्नभिन्नाधिकरणतामाश्रित्याह. ३ अवयवाः. ४ भावमङ्गलनिदानत्वात्. ५ आदिना ज्ञाननिर्जरादिग्रहः. ६ विशेषनाम्नां कारणतायै, आदिना जिनेन्द्रादिः. ७ सम्यग्दर्शनादेः प्रबलकारणत्वात्, शय्यम्भवादिवत्. ८ 'इमेणं सरीरसमुस्सएणं जिणदिट्ठेणं भावेणं आवस्सएत्ति पयं सेअकाले सिक्खिस्सइ न ताव सिक्खति' इति अनुयोगद्वारवचनात्. ९ ज्ञात्वा दृष्ट्वा वा १० क्लिष्टस्याभावात्. ११ ज्ञानचारित्रोपयोगग्रहः. १२ 'कयपंचनमुक्कारस्स दिन्ति सामाइयाइयं विहिणा' इतिवचनात्सूत्रापेक्षं, १३ अनुयोगापेक्षं, नन्द्यनुयोगस्यैकदेशत्वाद्. १४ कर्तृतामापन्नाः. १५ 'दव्वे तूरसमुदओ' इति वचनात्, क्रियाविशिष्ट इत्यध्याहार्यमन्यथा नामनन्दीत्वापत्तेः. *तिलिमा १–४. † तदुपयुक्तः १–३–४.

व्याख्या—अर्थाभिमुखो[1] नियतो[2] बोधः अभिनिबोधः, अभिनिबोध एव आभिनिबोधिकं, विनयादिपाठात् अभिनिबोधशब्दस्य "विनयादिभ्यष्ठग्" ( पा० ५.४-३४ ) इत्यनेन स्वार्थ एव ठक्प्रत्ययो, यथा विनय एव वैनयिकमिति अभिनिबोधे वा भवं तेन वा निर्वृत्तं तन्मयं तत्प्रयोजनं वाअथवा[*]ऽभिनिबुध्यते[†] तद् इत्याभिनिबोधिकं, अवग्रहादिरूपं मतिज्ञानमेव, तस्य[3] स्वसंविदितरूपत्वात्, भेदोपचारादित्यर्थः[4], अभिनिबुध्यते वाऽनेनेत्याभिनिबोधिकं, तदावरणकर्मक्षयोपशम इति भावार्थः, अभिनिबुध्यते अस्मादिति वाऽऽभिनिबोधिकं, तदावरणकर्मक्षयोपशम एव, अभिनिबुध्यतेऽस्मिन्निति वा क्षयोपशम इत्याभिनिबोधिकं, आत्मैव वाऽभिनिबोधोपयोगपरिणामानन्यत्वाद् अभिनिबुध्यत इत्याभिनि[5]बोधिकं, आभिनिबोधिकं च तज्ज्ञानं चेति समासः ।तथा श्रूयत[6] इति श्रुतं शब्द एव, भावश्रुतकारणत्वादिति भावार्थः, अथवा श्रूयतेऽनेनेति श्रुतं, तदावरण[‡]क्षयोपशम इत्यर्थः, श्रूयतेऽस्मादिति वा श्रुतं, तदावरणक्षयोपशम एव, श्रूयतेऽस्मिन्निति वा क्षयोपशम इति श्रुतं, शृणोतीति वाऽऽत्मैव तदुपयोगानन्यत्वात्, श्रुतं च तज्ज्ञानं चेति समासः,चशब्दस्त्वनयोरेव[7] तुल्यकक्षतो[8]द्भावनार्थः, स्वाम्यादिसाम्यात्, कथम्?, य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्य "जत्थ मइनाणं तत्थ सुयणाण"

---

१ पदार्थनान्तरीयकः. २ नियतविषयं, नतु द्विचन्द्रादिवत्. ३ प्रकाश्यप्रकाशकोभयरूपत्वादित्यर्थः, प्राक् प्रकाशकम् . ४ एकत्वात् कर्तृकर्मैक्यात्. ५ 'भावाकर्त्रोः' इत्यभिनिबोधशब्दनिष्पत्तौ प्राग्वदाभिनिबोधिकशब्दनिष्पत्तिः, कर्तरि तु लिहादित्वादच्, ६ बहुलवचनात् कर्मादिष्वपि क्तो नपुंसके, प्राभृतश्रो द्रव्यमिति भव्यमाहेतिवचनात्प्राभृताद्वा निष्पत्तिरेवमन्यत्राप्यूह्यम् . ७ ज्ञानद्वयानन्तरं चस्य पाठात्. ८ तुल्यपक्षतोद्बोधनाय. * कृदन्तव्युत्पत्तये, उपसर्गोवत्र विशेषको धातोः † प्रकाशकमतो + भिन्नत्वाशङ्कापनोदाय ‡ ०कर्म० १–४.

मिति[1] वचनात्, तथा यावान्मतिज्ञानस्य स्थितिकालस्तावानेवेतरस्य, प्रवाहापेक्षया अतीतानागतवर्त्तमानः सर्व एव, अप्रतिपतितैकजीवापेक्षया च षट्षष्टिसागरोपमाण्यधिकानीति, उक्तं च भाष्यकारेण[2] "दोवारे विजयाइसु गयस्स तिण्णच्चुए अहव ताइं । अइरेगं णरभविअं णाणाजीवाण सवद्धं[3] ॥ १ ॥" यथा च मतिज्ञानं क्षयोपशमहेतुकं, तथा श्रुतज्ञानमपि, यथा च मतिज्ञानमादेशतः[4] सर्वद्रव्यादिविषयम्[5], एवं श्रुतज्ञानमपि, यथा च मतिज्ञानं परोक्षम्, एवं श्रुतज्ञानमपि इति, एवकारस्त्ववधारणार्थः, परोक्षत्वमनयोरेवावधारयति[6], आभिनिबोधिकश्रुतज्ञाने एव परोक्षे इति भावार्थः। तथा अवधीयतेऽनेन इत्यवधिः, अवधीयते इति अधोऽधो विस्तृतं परिच्छिद्यते, मर्यादया[7] वेति, अवधिज्ञानावरणक्षयोपशम एव, तदुपयोगहेतुत्वादित्यर्थः[8], अवधीयतेऽस्मादिति वेति अवधिः, तदावरणीयक्षयोपशम* एव, अवधीयतेऽस्मिन्निति वेत्यवधिः, भावार्थः पूर्ववदेव, अवधानं वाऽवधिः, विषयपरिच्छेदनमित्यर्थः[9], अवधिश्चासौ ज्ञानं च अवधिज्ञानं, चशब्दः खल्वनन्तरोक्तज्ञानद्वयसाधर्म्यप्रदर्शनार्थः, स्थित्यादिसाधर्म्यात्, कथम्?, यावान्मतिश्रुतस्थितिकालः प्रवाहापेक्षया अप्रतिपतितैकसत्त्वाधारापेक्षया च, तावानेवावधेरपि, अतः स्थितिसाधर्म्यात्,

---

१ एकेन्द्रियादिषु क्षयोपशमसद्भावाद्द्वयोः संज्ञासद्भावाच्च श्रुतसत्ता (वि० १०२ प्रभृतिके), सम्यग्ज्ञानापेक्षया. २ श्रीमता जिनभद्रगणिक्षमाश्रमणेन. ३ द्वौ वारौ विजयादिषु गतस्य त्रीन् वारान् अच्युतेऽथवा तानि ( षट्षष्टिसागरोपमाणि ) अतिरिक्तं नरभविकं ( अप्रतिपतितैकजीवापेक्षया ) नानाजीवानां सर्वाद्धं (वि० ४३६). ४ ओघादेशात्सूत्रादेशाद्वा. ५ आदिना क्षेत्रकालभावग्रहः. ६ द्रव्येन्द्रियमनोनिष्पाद्यत्वात्. ७ दर्शनरूपयोधव्यवच्छेदाय. ८ रूपिद्रव्यात्मिकया. ९ क्षयोपशमस्याभावरूपत्वेनेदम्. आत्मस्वरूपं ज्ञानमित्युक्तमिदम्. * तदावरण० १-४.

यथा मतिश्रुते विपर्ययज्ञाने भवतः, एवमिदमपि मिथ्यादृष्टेर्विभङ्गज्ञानं भवतीति विपर्ययसाधर्म्यात्, य एव च मतिश्रुतयोः स्वामी स एव चावधेरपि भवतीति स्वामिसाधर्म्यात्, विभङ्गज्ञानिनः त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपज्ज्ञानत्रयं संभवतीति लाभसाधर्म्याच्च । तथा मनःपर्यवज्ञानं, अयं भावार्थः—परिः सर्वतो भावे, अवनं अवः, अवनं गमनं वेदनमिति पर्यायाः, परि अवः पर्यवः पर्यवनं वा पर्यव इति, मनसि मनसो वा पर्यवो मनःपर्यवः, सर्वतस्तत्परिच्छेद इत्यर्थः, स एव ज्ञानं मनःपर्यवज्ञानं, अथवा मनसः पर्याया मनःपर्यायाः, पर्याया भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यनर्थान्तरं, तेषु ज्ञानं मनःपर्यायज्ञानं, तेषां वा सम्बन्धि ज्ञानं मनःपर्यायज्ञानं, इदं चार्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिसंज्ञिमनोगतद्रव्यालम्बनमेवेति, तथाशब्दोऽवधिज्ञानसारूप्यप्रदर्शनार्थः, कथम्?, छद्मस्थस्वामिसाधर्म्यात्, तथा पुद्गलमात्रालम्बनत्वसाम्यात्, तथा क्षायोपशमिकभावसाम्यात्, तथा प्रत्यक्षत्वसाम्याच्चेति । केवलमसहायं मत्यादिज्ञाननिरपेक्षं, शुद्धं वा केवलं, तदावरणकर्ममलकलङ्काङ्करहितं, सकलं वा केवलं, तत्प्रथमतयैव अशेषतदावरणाभावतः संपूर्णोत्पत्तेः, असाधारणं वा केवलं, अनन्यसदृशमितिहृदयं, ज्ञेयानन्तत्वाद् अनन्तं वा केवलं, यथावस्थिताशेषभूतभवद्भाविभावस्वभावावभासीति भावना. केवलं च तज्ज्ञानं चेति समासः, चशब्दस्तूक्तसमुच्चयार्थः, केवलज्ञानं च पञ्चमकमिति, अथवाऽनन्त-

१ विषयसप्तमी. २ सम्बन्धे षष्ठी. ३ विना दर्शनं ज्ञानेनानेन विशेषोपयोग इति, विशुद्धतराणि वा मनोद्रव्याणि जानात्यनेनेति ज्ञापनाय वा. ४ अरूपिद्रव्यालम्बनव्यवच्छेदाय मात्रेति. ५ "जीवो अक्खो अत्थव्वावणभोयणगुणण्णिओ जेणं । तं पइ वट्टइ नाणं, जं पच्चक्खं तयं तिविहं" (वि० ८९) इति. ६ अपेक्षाऽनसहावस्थानरूपा. ७ मत्यादीनां स्वावरणोपेतत्वात्, अक्षो लक्ष्म. ८ उत्पत्तिसमय एव. ९ न तारतम्यवत् न्यूनं वा कयापि. १० अन्यस्य कस्यापि रूप्यरूपिसूक्ष्मदूरेतरादिपदार्थग्राहकत्वात्. ११ आधारापेक्षयाऽसंख्येयत्वेऽपि. * ०यसंभवतो † परि.

राभिहितज्ञानसारूप्यप्रदर्शक एव, अप्रमत्तभावयतिस्वामिसाधर्म्यात् विपर्ययाभावयुक्तत्वाच्चेति गाथासमासार्थः ॥

आह—मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति, † उच्यते, उत्पन्नाविनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानं, श्रुतज्ञानं तु त्रिकालविषयं उत्पन्नविनष्टानुत्पन्नार्थग्राहकमिति, भेदकृतो वा विशेषः, यस्मादवग्रहाद्यष्टाविंशतिभेदभिन्नं मतिज्ञानं, तथाऽङ्गानङ्गादिभेदभिन्नं च श्रुतमिति, अथवाऽऽत्मप्रकाशकं मतिज्ञानं, स्वपरप्रकाशकं च श्रुतमित्यलं प्रसङ्गेन, गमनिकामात्रमेवैतदिति । अत्राह—एषां ज्ञानानामित्थं क्रमोपन्यासे किं प्रयोजनं इति, उच्यते, परोक्षत्वादिसाधर्म्यान्मतिश्रुतसद्भावे च शेषज्ञानसंभवात् आदावेव मतिश्रुतोपन्यासः, मतिज्ञानस्य पूर्वं किमिति चेत्, उच्यते, मतिपूर्वकत्वात् श्रुतस्येति, मतिपूर्वकत्वं चास्य "श्रुतं मतिपूर्वम्" ( ०द्व्यनेकद्वादशभेदम् श्रीतत्त्वार्थे अ० १ सू० २१ ) इति वचनात्, तत्र प्रायो मतिश्रुतपूर्वकत्वात्प्रत्यक्षत्वसाधर्म्याच्च ज्ञानत्रयोपन्यास इति, तत्रापि कालविपर्ययादिसाम्यान्मतिश्रुतोपन्यासानन्तरमेवावधेरुपन्यास इति, तदनन्तरं च छाद्मस्थिकादिसाधर्म्यान्मनःपर्यायज्ञानस्य, तदनन्तरं भावमुनिस्वाम्यादिसाधर्म्यात्सर्वोत्तमत्वाच्च केवलस्येति गाथार्थः ॥ १ ॥

साम्प्रतं 'यथोद्देशं निर्देशः' इति न्यायाद् ज्ञानपञ्चकादावुद्दिष्टस्य आभिनिबोधिकज्ञानस्य स्वरूपमभिधीयते—तच्चाभि-

---

१ न शेषज्ञानानामित्यर्थः २ मत्यादीनामपि तेन स्वरूपनिरूपणात् . ३ संक्षेपविवरणरूपत्वात् . ४ भावश्रुतस्य. ५ मिथ्यादृष्टेस्त्रिज्ञानावाप्तौ न प्राङ् मतिश्रुते स्त इति प्राय इति । ६ ज्ञानत्रयोपन्यासे. ७ लाभादिग्रहः. ८ पुद्गलावलम्बनत्वादिः ९ विपर्ययाभावत्वादिः. † अत्रोच्यते ।

निबोधिकज्ञानं द्विधा, श्रुतनिश्रितमश्रुतनिश्रितं च, यत्पूर्वमेव [1]कृतश्रुतोपकारं इदानीं पुनस्तदनपेक्षमेवानुप्रवर्त्तते तदू अवग्रहादिलक्षणं श्रुतनिश्रितमिति । यत्पुनः पूर्वं तद[2]परिकर्मितमतेः क्षयोपशमपटीयस्त्वात् औत्पत्तिक्यादिलक्षणं उपजायते तदश्रुतनिश्रितमिति । आह—"तिवग्गसुत्तत्थगहियपेयाला" इति वचनात् तत्रापि किञ्चित् श्रुतोपकारादेव जायते, तत्कथमश्रुतनिश्रितमिति, उच्यते,. अवग्रहादीनां श्रुतनिश्रिताभिधानाद् औत्पत्तिक्यादिचतुष्टयेऽपिच अवग्रहादिसद्भावात् यथायोगमश्रुतनिश्रितत्वमवसेयं, न तु सर्वमेवेति, अयमत्र भावार्थः—श्रुतकृतोपकारनिरपेक्षं यदौत्पत्तिक्यादि तदश्रुतनिश्रितं, प्राति[3]भमितिहृदयं, वैनयिकीं विहाये[4]त्यर्थः, बुद्धिसाम्याच्च तस्या अपि निर्युक्तौ उपन्यासोऽविरुद्ध इत्यलं प्रसङ्गेन । तत्र श्रुतनिश्रितमतिज्ञानस्वरूपप्रदर्शनायाह—

**उग्गह ईहाऽवाओ य धारणा एव हुंति चत्तारि । आभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥ २ ॥**

व्याख्या—तत्र सामान्यार्थस्याशेषविशेषनिरपेक्षानिर्देश्यस्य रूपादेरवग्रहणं अवग्रहः, तदर्थविशेषालोचनं ईहा, तथा प्रक्रान्तार्थविशेषनिश्चयोऽवायः, चशब्दः पृथक् पृथक् अवग्रहादिस्वरूपस्वातन्त्र्यप्रदर्शनार्थः, अवग्रहादीनां ईहादयः

१ औत्पत्तिक्यादिविषयकवस्तुसम्बन्धिपरिकर्म न श्रुतकृतमिति । २ परिकर्म विना. ३ "प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता" सैव प्रातिभं, न त्वत्र श्रुतकेवलातिरिक्तं सामर्थ्ययोगजन्यं प्रातिभम्. ४ सकृच्छ्रुतनिश्रितत्वात् त्यागः, बाहुल्यापेक्षया तदननुसरणं त्वश्रुतनिश्रितत्वं, यद्वा पूर्वमशिक्षितशास्त्रार्थस्याश्रुतनिश्रितत्वं वैनयिकी त्वन्यथेति ध्यानं, विमर्शप्राधान्याच्च बुद्धिचतुष्टयान्तर्भावः + श्रुतकृतो०

पर्याया न भवन्तीत्युक्तं भवति, अवगतार्थविशेषधरणं धारणा, एवकारः *क्रमप्रदर्शनार्थः, 'एवं' अनेनैव क्रमेण भवन्ति, चत्वारि, आभिनिबोधिकज्ञानस्य भिद्यन्त इति भेदा विकल्पा अंशा इत्यनर्थान्तरं, त एव वस्तूनि भेदवस्तूनि, कथम् ?, यतो नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यत इति। अथवा काका नीयते—एवं भवन्ति चत्वार्याभिनिबोधिकज्ञानस्य भेदवस्तूनि ?, 'समासेन' संक्षेपेण अविशिष्टावग्रहादिभावस्वरूपापेक्षया, न तु विस्तरत इति, विस्तरतोऽष्टाविंशतिभेदभिन्नत्वात्तस्येति गाथार्थः ॥२॥ इदानीमनन्तरोपन्यस्तानामवग्रहादीनां स्वरूपप्रतिपिपादयिषयेदमाह—

अत्थाणं[1] ओगहणंमि उग्गहो तह वियारणे ईहा। ववसायंमि अवाओ धरणंमि †य धारणं बिंति ॥ ३ ॥

व्याख्या—तत्र अर्यन्ते इत्यर्थाः, अर्यन्ते गम्यन्ते परिच्छिद्यन्त इतियावत्, ते च रूपादयः, तेषां अर्थानां, प्रथमं दर्शनानन्तरं ग्रहणं अवग्रहणं ‡ अवग्रहं ब्रुवत इतियोगः। आह—वस्तुनः सामान्यविशेषात्मकतयाऽविशिष्टत्वात् किमिति प्रथमं दर्शनं न ज्ञानमिति, उच्यते, तस्य प्रबलावरणत्वात्, दर्शनस्य चाल्पावरणत्वादिति। स च द्विधा—व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यञ्जनावग्रहपूर्वकत्वादर्थावग्रहस्य प्रथमं व्यञ्जनावग्रहः प्रतिपाद्यत इति। तत्र व्यञ्जनावग्रह इति कः शब्दार्थः ?, उच्यते, व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्च उपकरणेन्द्रियं शब्दादिपरिणतद्रव्यसंघातो वा, ततश्च व्यञ्जनेन उपकरणेन्द्रियेण शब्दादिपरिणतद्रव्याणां च व्यञ्जनानां अवग्रहो

---

१ ( अत्थाणं ओग्गहणं, उग्गहं तह वियालणं ईहं। ववसायं च अवायं, धरणं पुण धारणं बिंति ॥ ३ ॥ ) * क्रमदर्शनार्थः † धरणं पुण ‡ ग्रहणं अवग्रहं

व्यञ्जनावग्रह इति । अयं च नयनमनोवर्जेन्द्रियाणामवसेय इति, न तु नयनमनसोः, अप्राप्तकारित्वात्, अप्राप्तकारित्वं चानयोः "पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु" इत्यत्र वक्ष्यामः । तथा च व्यञ्जनावग्रहचरमसमयोपात्तशब्दाद्यर्थावग्रहणलक्षणोऽर्थावग्रहः, सामान्यमात्रानिर्देश्यग्रहणमेकसामयिकमिति भावार्थः । 'तथा' इत्यानन्तर्ये 'विचारणं' पर्यालोचनं अर्थानामित्यनुवर्त्तते, ईहनमीहा तां, ब्रुवत इति संबन्धः । एतदुक्तं भवति— अवग्रहादुत्तीर्णः अवायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागाभिमुखश्च प्रायो मधुरत्वादयः शाङ्खशब्दधर्मा अत्र घटन्ते न खरकर्कशनिष्ठुरतादयः शार्ङ्गशब्दधर्मा इति मतिविशेष ईहेति । विशिष्टोऽवसायो व्यवसायः, निर्णयो निश्चयोऽवगम इत्यनर्थान्तरं, तं व्यवसायं च, अर्थानामिति वर्त्तते, अवायं ब्रुवत इति संसर्गः, एतदुक्तं भवति— शाङ्ख एवायं शार्ङ्ग एव वा इत्यवधारणात्मकः प्रत्ययोऽवाय इति, चशब्द एवकारार्थः, स चावधारणे, व्यवसायमेवावायं ब्रुवत इति भावार्थः । धृतिर्धरणं, अर्थानामिति वर्त्तते, परिच्छिन्नस्य वस्तुनोऽविच्युतिस्मृतिवासनारूपं तद्धरणं पुनर्धारणां ब्रुवते, पुनःशब्दोऽप्येवकारार्थः, स चावधारणे, धरणमेव धारणां ब्रुवत इति, अनेन शास्त्रपारतन्त्र्यमाह, इत्थं तीर्थकरगणधरा ब्रुवत इति । एवं शब्दमधिकृत्य श्रोत्रेन्द्रियनिबन्धना † अवग्रहादयः प्रतिपादिताः, शेषेन्द्रियनिबन्धना अपि रूपादिगोचराः स्थाणुपुरुष–कुष्ठोत्पल–संभृतकरिल्लमांस–सर्पोत्पलनालादौ इत्थमेव द्रष्टव्याः, एवं मनसोऽपि स्वप्ने शब्दादिविषया अवग्रहादयोऽवसेया इति, [3]अन्यत्र चेन्द्रियव्यापाराभावेऽभिमन्यमानस्येति । ततश्च व्यञ्जनावग्रहश्चतुर्विधः,

१ गाथा० ५ २ चक्षुरादीनां क्रमशो दृष्टान्तदर्शनात् कोष्ठपुटाख्यो गन्धद्रव्यविशेषः ३ स्वप्नात्. * अप्राप्यकारित्वात् ५ ६ † ०न्धनावग्र०

तस्य नयनमनोवर्जेन्द्रियसंभवात् , अर्थावग्रहस्तु पोढा, तस्य [1]सर्वेन्द्रियसंभवात् । एवमीहादयोऽपि प्रत्येकं पट्प्रकारा एवेति* । एवं संकलिताः सर्वे एव अष्टाविंशतिर्मतिभेदा अवगन्तव्या इति । अन्ये त्वेवं पठन्ति—'अत्थाणं उग्गहणंमि †उग्गहो' तत्र अर्थानामवग्रहणे सति अवग्रहो नाम मतिभेद इत्येवं ब्रुवते, एवं ईहादिष्वपि योज्यं, भावार्थस्तु पूर्ववदिति । अथवा प्राकृतशैल्या 'अर्थवशाद्विभक्तिपरिणाम' इति यथाऽऽचाराङ्गे—"अगणिं च खलु पुट्ठा एगे संघायमावज्जंति" इत्यत्र अग्निना च स्पृष्टाः, अथवा स्पृष्टशब्दः पतितवाची, ततश्चायमर्थः—अग्नौ च पतिता 'एके' शलभादयः 'संघातमापद्यन्ते' अन्योऽन्यगात्रसंकोचमासादयन्तीत्यर्थः,तस्माद् अग्निसमारम्भोऽनेकसत्त्वव्यापत्तिहेतुः इत्यतो न कार्यः इत्यादिविचारे द्वितीया तृतीयार्थे सप्तम्यर्थे च [2]व्याख्यातेति । एवमत्रापि सप्तमी प्रथमार्थे द्रष्टव्येति गाथार्थः ॥ ३ ॥

इदानीमभिहितस्वरूपाणामवग्रहादीनां कालप्रमाणमभिधित्सुराह—

*उग्गह इक्कं समयं ईहावाया ‡मुहुत्तमद्धं तु । कालमसंखं संखं च धारणा होइ णायव्वा ॥ ४ ॥

व्याख्या—तत्र अभिहितलक्षणोऽर्थावग्रहो [3]जघन्यो नैश्चयिकः, स खलु एकं समयं भवतीति संबन्धः, तत्र कालः

---

१ नोइन्द्रियस्यापि ग्रहणमुपलक्षणात् , अन्यथा न स्युर्भेदाः पट् , इन्द्रियत्वं वाभिप्रेतमत्र तस्याभ्यन्तरनिर्वृत्त्यन्वितत्वात्. २ ज्ञायतेऽनेन आचाराङ्गव्याख्या श्रीमतां कालात्प्राक्तनीति ३ अर्थावग्रहो द्विधा जघन्य उत्कृष्टश्च, आद्यो नैश्चयिक एवेतरः सांव्यवहारिक इति जघन्यो नैश्चयिक इति प्रोचुः, व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति न्यायात्. *एवेत्यर्थः, संक० † उवग्गहो. *उग्गहु ( नि० ३ ) ‡ मुहुत्तमन्तं तु ( वृ० )

परमनिकृष्टः समयोऽभिधीयते, स च प्रवचनप्रतिपादितोत्पलपत्रशतव्यतिभेदोदाहरणाद् *जरत्पट्टशाटिकापाटनदृष्टान्ताच्च अवसेयः, तथा सांव्यवहारिकार्थावग्रहव्यञ्जनावग्रहौ तु पृथक् पृथग् अन्तर्मुहूर्त्तमात्रं कालं भवत इति †विज्ञातव्यौ । ईहा चावायश्च ईहावायौ, प्राकृतशैल्या बहुवचनं, उक्तं च—"दुवयणे बहुवयणं छट्ठीविहत्तीएँ ‡भण्णइ चउत्थी । जह हत्था तह पाया, णमोऽत्थु देवाहिदेवाणं[2] ॥१॥" तावीहावायौ मुहूर्तार्धं ज्ञातव्यौ भवतः, तत्र मुहूर्त्तशब्देन घटिकाद्वयपरिमाणः कालोऽभिधीयते, तस्यार्धं तु मुहूर्त्तार्धं, तुशब्दो विशेषणार्थः, किं विशिनष्टि ?—व्यवहारापेक्षया एतद् मुहूर्त्तार्धमुक्तं, तत्त्वतस्तु अन्तमुहूर्त्तमवसेयमिति । अन्ये त्वेवं पठन्ति 'मुहुत्तमन्तं तु' मुहूर्त्तान्तस्तु द्वे पदे, अयमर्थः—अन्तर्मध्यकरणे, तुशब्द एवकारार्थः, स चावधारणे, एतदुक्तं भवति—ईहावायौ मुहूर्त्तान्तः, भिन्नं मुहूर्त्तं ज्ञातव्यौ भवतः, अन्तर्मुहूर्त्तमेवेत्यर्थः । कलनं कालः तं कालं, न विद्यते संख्या इयन्तः पक्षमासर्त्वयनसंवत्सरादय इत्येवंभूता यस्यासावसंख्यः, पल्योपमादिलक्षण इत्यर्थः, तं कालमसंख्यं, तथा संख्यायत इति संख्यः, इयन्तः पक्षमासर्त्वयनादय इत्येवं संख्याप्रमित इत्यर्थः, तं संख्यं च, चशब्दात् अन्तर्मुहूर्त्तं च, धारणा अभिहितलक्षणा भवति ज्ञातव्या, अयमत्र भावार्थः—अवायोत्तरकालं अविच्युतिरूपा—अन्तर्मुहूर्त्तं भवति, एवं स्मृतिरूपाऽपि, वासनारूपा तु तदावरणक्षयोपशमाख्या स्मृतिधारणाया बीजभूता संख्येयवर्षायुषां सत्त्वानां संख्येयं कालं असंख्येयवर्षायुषां पल्योपमादि[3]जीविनां चासंख्येयमिति गाथार्थः ॥ ४ ॥

१ भाष्यकाराद्विव्याख्यानात्. २ बहुवचनं द्विवचने षष्ठीविभक्तौ भण्यते चतुर्थी । यथा हस्तौ तथा पादौ नमोऽस्तु देवाधिदेवेभ्यः. ३ "अद्धाजोगुक्कोसे" इत्यादिवचनादपवर्त्तनासंभवात्तद्रहितानामसंख्येयायुषामितिदर्शनाय पल्योपमेत्यादि. *जीर्णत्० ५-६ † ज्ञातव्यौ १-२-३-४ ५ बहुवयणेण दुवयणं १-२-३-४ ‡ भण्णए ५-६.

इत्थमवग्रहादीनां स्वरूपमभिधाय इदानीं श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयतां प्रतिपिपादयिषुराह—

**पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ ५ ॥**

व्याख्या—आह—ननु व्यञ्जनावग्रहनिरूपणाद्वारेण श्रोत्रेन्द्रियादीनां प्राप्ताप्राप्तविषयता प्रतिपादितैव, किमर्थं पुनरयं प्रयास इति, उच्यते, तत्र प्रक्रान्तगाथा व्याख्यानद्वारेण प्रतिपादिता, साम्प्रतं तु सूत्रतः प्रतिपाद्यत इत्य दोषः। तत्र 'स्पृष्टं' इत्यालिङ्गितं, तनौ रेणुवत्, शृणोति गृह्णाति उपलभत इति पर्यायाः, कम्?—शब्द्यतेऽनेनेति शब्दः तं शब्दप्रायोग्यं द्रव्यसंघातं, इदमत्र हृदयम्—तस्य सूक्ष्मत्वात् भावुकत्वात् प्रचुरद्रव्यरूपत्वात् श्रोत्रेन्द्रियस्य चान्येन्द्रियगणात्प्रायः पटुतरत्वात् स्पृष्टमात्रमेव शब्दद्रव्यनिवहं गृह्णाति। रूप्यत इति रूपं तद्रूपं पुनः, पश्यति गृह्णाति उपलभत इत्येकोऽर्थः, अस्पृष्टमनालिङ्गितं गन्धादिवन्न संबद्धमित्यर्थः, तुशब्दस्त्वेवकारार्थः, स चावधारणे, रूपं पुनः पश्यति अस्पृष्टमेव, चक्षुषः अप्राप्तकारित्वादिति भावार्थः, पुनःशब्दो विशेषणार्थः, किं विशिनष्टि?—अस्पृष्टमपि योग्यदेशावस्थितं, न पुनरयोग्यदेशावस्थितं अमरलोकादि। गन्ध्यते घ्रायत इति गन्धस्तं, रस्यत इति रसस्तं च, स्पृश्यत इति स्पर्शस्तं च, चशब्दौ पूरणार्थौ, 'बद्धस्पृष्टं' इति बद्धमाश्लिष्टं *नवशरावे तोयवदात्मप्रदेशैरात्मीकृतमित्यर्थः, स्पृष्टं पूर्ववत्, प्राकृतशैल्या चेत्थमुपन्यासो 'बद्धपुट्ठं' ति, अर्थतस्तु स्पृष्टं च बद्धं च स्पृष्टबद्धं। आह—यद्बद्धं गन्धादि तत् स्पृष्टं भवत्येव, अस्पृष्टस्य

---

१ चक्षुर्मनसोरसत्यपि व्यञ्जनावग्रहेऽर्थावग्रहसद्भावादस्त्येव पटुतरतेति प्राय इति. २ स्पर्शाभावे बन्धाभावसत्त्वेऽपि स्पष्टत्वार्थमेतत्, घ्राणादीन्द्रियेभ्यो निपुणताख्यानाय वा. * नास्तीदम् १-२-३-४.

बन्धायोगात्, ततश्च स्पृष्टशब्दोच्चारणं गतार्थत्वादनर्थकमिति, उच्यते, सर्वश्रोतृसाधारणत्वाच्छास्त्रारम्भस्यायमदोष इति। त्रिप्रकाराश्च श्रोतारो भवन्ति—केचिद् उद्घाटितज्ञाः, केचित् मध्यमबुद्धयः, तथाऽन्ये प्रपञ्चितज्ञा इति, तत्र प्रपञ्चितज्ञानां अनुग्रहाय गम्यमानस्याप्यभिधानमदोषायैव, अथवा विशेषणसमासाङ्गीकरणाददोषः, स्पृष्टं च तद्बद्धं च स्पृष्टबद्धं, तत्र स्पृष्टं गन्धादि विशेष्यं, बद्धमिति च विशेषणं। आह—एवमपि स्पृष्टग्रहणमतिरिच्यते, यस्माद्यद्बद्धं न तत्स्पृष्टत्वव्यभिचारि, उभयपदव्यभिचारे च विशेषणविशेष्यभावो दृष्टो यथा नीलोत्पलमिति, न चेह उभयपदव्यभिचारः, अत्रोच्यते, नैष दोषः, यस्मादेकपदव्यभिचारेऽपि विशेषणविशेष्यभावो दृष्टो, यथा अब्द्रव्यं पृथिवी द्रव्यमिति, भावना—अब् द्रव्यमेव, न द्रव्यत्वं व्यभिचरति, द्रव्यं पुनरब् *चानब् †चेति व्यभिचारि, अथ च विशेषणविशेष्यभाव इति। प्रकृतभावार्थस्त्वयम्—आलिङ्गितानन्तरमात्मप्रदेशैरागृहीतं गन्धादि बादरत्वाद् अभावुकत्वात् अल्पद्रव्यरूपत्वात् घ्राणादीनां चापटुत्वात् गृह्णाति निश्चिनोति घ्राणेन्द्रियादिगण इत्येवं व्यागृणीयात् प्रतिपादयेदितियावत्।

आह—भवतोक्तं योग्यदेशावस्थितमेव रूपं पश्यति, न पुनरयोग्यदेशावस्थितमिति, तत्र कियान् पुनश्चक्षुषो योग्यविषयः १, कियतो वा देशादागतं श्रोत्रादि शब्दादि गृह्णातीति, उच्यते, श्रोत्रं तावच्छब्दं जघन्यतः खल्वङ्गुलासंख्येयमात्राद्देशात्, उत्कृष्टतस्तु द्वादशभ्यो योजनेभ्य इति, चक्षुरिन्द्रियमपि रूपं जघन्येनाङ्गुलसंख्येयभागमात्रावस्थितं पश्यति, उत्कृष्टतस्तु योजनशतसहस्राभ्यधिकव्यवस्थितं इति, घ्राणरसनस्पर्शनानि तु जघन्येनाङ्गुलासंख्येयभागमात्रा-

१ श्रोत्रापेक्षयाऽपि २ पुनःशब्देन विशेषितेऽस्पृष्टत्वे या भणितिस्तदपेक्षया प्राक् प्रश्नः, समग्रगाथापेक्षया विषयक्षेत्रपरिमाणज्ञानार्थश्च द्वितीय इति.
* वा. † चेति.

देशादागतं गन्धादिकं गृह्णन्ति, उत्कृष्टतस्तु नवभ्यो योजनेभ्य इति। आत्माङ्गुलनिष्पन्नं चेह योजनं ग्राह्यमिति। आह—उक्तप्रमाणं विषयमुल्लङ्घ्य कस्माच्चक्षुरादीनि रूपादिकमर्थं न गृह्णन्तीति, उच्यते, सामर्थ्याभावात्[1], द्वादशभ्यो नवभ्यश्च योजनेभ्यः परतः समागतानां शब्दादिद्रव्याणां तथाविधपरिणामाभावाच्च[2], मनसस्तु न क्षेत्रतो विषयपरिमाणमस्ति[3], पुद्गलमात्रनिबन्धनाभावात्[*][4], इह यत् पुद्गलमात्रनिबन्धननियतं न भवति, न तस्य विषयपरिमाणमस्ति, यथा केवलज्ञानस्य, यस्य च विषयपरिमाणमस्ति, तत्पुद्गलमात्रनिबन्धननियतं[+] दृष्टं, यथाऽवधिज्ञानं मनःपर्यायज्ञानं वेति गाथासमासार्थः ॥

साम्प्रतं यदुक्तमासीत् यथा "नयनमनसोरप्राप्तकारित्वं 'पुट्ठं सुणेइ सद्दं' इत्यत्र वक्ष्यामः, तदुच्यते, नयनं योग्यदेशावस्थिताप्राप्तविषयपरिच्छेदकं, प्राप्तिनिबन्धनतत्कृतानुग्रहोपघातशून्यत्वात्, मनोवत्, स्पर्शनेन्द्रियं विपक्ष इति। आह—जलघृतवनस्पत्यालोकनेष्वनुग्रहसद्भावात् सूर्याद्यालोकनेषु चोपघातसद्भावात् असिद्धो हेतुः, मनसोऽपि प्राप्तविषयपरिच्छेदकत्वात्साध्यविकलो दृष्टान्तः, तथा च लोके वक्तारो भवन्ति—"अमुत्र मे गतं मनः" इति, अत्रोच्यते, प्राप्तिनिबन्धनाख्यहेतुविशेषणार्थनिराकृतत्वाद् अस्याक्षेपस्येत्यदोषः। किं च—यदि हि प्राप्तिनिबन्धनौ विषयकृतावनुग्रहोपघातौ स्यातां, एवं तर्हि अग्निशूल[†]जलाद्यालोकनेषु दाहभे[‡]दक्लेदादयः स्युरिति[5]। किं च—प्राप्तविषयपरिच्छेदकत्वे सति अक्षिअञ्जनमलशलाकादिकमपि गृह्णीयात्। आह—नायना मरीचयो निर्गत्य तमर्थं गृह्णन्ति, ततश्च[6] तेषां तैजसत्वात्

---

१ सर्वेन्द्रियापेक्षया. २ प्राप्यकारीन्द्रियचतुष्कापेक्षया. ३ क्षेत्रेति. ४ विषयेति. ५ विप्रकृष्टे कस्मिंश्चिन्निर्दिश्यमाने स्थले इति. ६ नयनमरीचीनामेव निर्गमात् चक्षुषश्चानिर्गमात्. * निबन्धन. १-२-३-४ + निबन्धन. १-२-३-४ † जलशूला. ‡ क्लेदभेदा.

सूक्ष्मत्वाच्चानलादिसंपर्के सत्यपि दाहाद्यभाव इति, अत्रोच्यते, प्राक् प्रतिज्ञातयोरनुग्रहोपघातयोरप्यभावप्रसङ्गाद् अयुक्तमेतत्, तदस्तित्वस्य उपपत्त्या ग्रहीतुमशक्यत्वाच्च। व्यवहितार्थानुपलब्ध्या तदस्तित्वावसाय इति चेत्, न, तत्रापि तदुपलब्धौ क्षयोपशमाभावात् व्यवहितार्थानुपलब्धिसिद्धेः, आगममात्रमेवैतत् इति चेत्, न, युक्तिरप्यस्ति, आवरणाभावेऽपि परमाण्वादौ दर्शनाभावः, स च तद्विधक्षयोपशमकृतः, यच्चोक्तं–'साध्यविकलो दृष्टान्त' इति, तदप्ययुक्तं, ज्ञेयमनसोः संपर्काभावात्, अन्यथा हि सलिलकर्पूरादिचिन्तनादनुगृह्येत, वह्निशस्त्रादिचिन्तनाच्चोपहन्येत, न चानुगृह्यते उपहन्यते +वेति। आह—मनसोऽनिष्टविषयचिन्तनातिशोकात् दौर्बल्यं आर्त्तध्या†नादुरोऽभिघातश्च उपलभ्यते, तथेष्टविषयचिन्तनात्प्रमोदः, तस्मात्प्राप्तकारिता तस्येति, एतदप्ययुक्तं, द्रव्यमनसा अनिष्टेष्टपुद्गलोपचयलक्षणेन सकर्मकस्य जन्तोरनिष्टेष्टाहारेणेवोपघातानुग्रहकरणात्कथं प्रा‡प्तविषयतेति। किं च—द्रव्यमनो वा बहिः नि§स्सरेत्, मनःपरिणामपरिणतं जीवाख्यं भावमनो वा ?, न तावद्भावमनः, तस्य शरीरमात्रत्वात्, सर्वगतत्वे च नित्यत्वात् बन्धमोक्षाद्यभावप्रसङ्गः। अथ द्रव्यमनः, तदप्ययुक्तं, यस्मान्निर्गतमपि सत् अकिञ्चित्करं तत्, अज्ञत्वात्, उपलवत्। आह—करणत्वाद्द्रव्यमनसस्तेन प्रदीपेनेव प्रकाशितमर्थमात्मा गृह्णातीत्युच्यते, न, यस्मात् शरीरस्थेनैवानेन जानीते, न बहिर्गतेन, अन्तःकरणत्वात्, ¶इह यदात्म-

१ सुवर्णादीनां भेदादिभावात् तैजसत्वेऽपि आह—सूक्ष्मत्वाद्येति. २ शूलजलादिः. ३ प्राप्तिनिबन्धनेत्यादिहेतोरसिद्धतोद्भावने. ४ नायनमरीचीनां. ५ अयुक्तमेतदिति संटङ्कः ६ शरीरप्रमाणत्वात् विहाय तत्र तदवस्थानमित्यर्थः. ७ आकाशादिवत्. ८ यमनियमोच्छेदप्रसङ्गः. ९ द्रव्यमनसा. * त्रमेतत् ४. + चेति. † अति० १–२–३. अर्ति० ४. ‡ प्राप्ति० ५–६. § श्चरेत् ५–६. ¶ नास्तीदम् ५–६.

नोऽन्तःकरणं स तेन शरीरस्थेनैव उपलभते, यथा स्पर्शनेन, प्रदीपस्तु नान्तःकरणमात्मनः, तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यलं विस्तरेण, प्रकृतं प्रस्तुम इति गाथार्थः ॥ ५ ॥

किं च प्रकृतं ?, स्पृष्टं शृणोति शब्दमित्यादि, अत्र किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि गृह्णाति ? उत अन्यान्येव तद्भावितानि ? आहोस्विन्मिश्राणि इति चोदकाभिप्रायमाशङ्क्य, न तावत्केवलानि, तेषां वासकत्वात्, [1]तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, किन्तु मिश्राणि तद्वासितानि वा गृह्णाति इत्यमुमर्थमभिधित्सुराह—

**भासासमसेढीओ, सद्दं जं सुणइ मीसयं सुणई । वीसेढी पुण सद्दं, सुणेइ नियमा पराघाए ॥ ६ ॥**

व्याख्या—भाष्यत इति भाषा, वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समश्रेणयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्युदासार्थं, इह श्रेणयः क्षेत्रप्रदेशपङ्क्तयोऽभिधीयन्ते, ताश्च सर्वस्यैव भाषमाणस्य षट्सु दिक्षु विद्यन्ते, यासूत्सृष्टा सती भाषाऽऽद्यसमय एव लोकान्तमनुधावतीति, ता इतो भाषासमश्रेणीतः, इतो गतः प्राप्तः स्थित इत्यनर्थान्तरम्, एतदुक्तं भवति—भाषासमश्रेणिव्यवस्थित इति । शब्द्यतेऽनेनेति शब्दः—भाषात्वेन परिणतः पुद्गलराशिस्तं शब्दं 'यं' पुरुषाश्वादिसंबन्धिनं शृणोति गृह्णात्युपलभत इति पर्यायाः, यत्तदोर्नित्यसंबन्धात्तं मिश्रं शृणोति, एतदुक्तं भवति—व्युत्सृष्टद्रव्यभावितापान्तरालस्थशब्दद्रव्यमिश्रमिति । विश्रेणिं पुनः इत इति वर्त्तते, ततश्चायमर्थो भवति—विश्रेणिव्यवस्थितः पुनः श्रोता 'शब्दं' इति, पुनः शब्दग्रहणं पराघातवासितद्रव्याणामपि तथाविधशब्दपरिणाम-

---

१ भाषावर्गणाद्रव्येति.

ख्यापनार्थं, शृणोति 'नियमात्' नियमेन पराघाते सति यानि शब्दद्रव्याणि उत्सृष्टाभिष सितानि तान्येव, न पुनरुत्सृष्टानीति भावार्थः । कुतः ?—तेषामनुश्रेणिगमनात् प्रतीघाताभावाच्च, अथवा विश्रेणिस्थित एव विश्रेणिरभिधीयते, पदेऽपि पदावयवप्रयोगदर्शनात् 'भीमसेनः सेनः सत्यभामा भामा' इतिगाथार्थः ॥ ६ ॥ केन पुनर्योगेन एषां वाग्द्रव्याणां ग्रहणमुत्सर्गो वा कथं वेत्येतदाशङ्क्य गुरुराह—

गिण्हइ य काइएणं, निस्सरइ तह वाइएण जोएणं । एगन्तरं च गिण्हइ, णिसिरइ एगंतरं चेव ॥ ७ ॥

व्याख्या—तत्र कायेन निर्वृत्तः कायिकः तेन कायिकेन योगेन, योगो व्यापारः कर्म क्रियेत्यनर्थान्तरं, सर्व एव हि वक्ता कायक्रियया शब्दद्रव्याणि गृह्णाति, चशब्दस्त्वेवकारार्थः, [स] चाप्यवधारणे, तस्य च व्यवहितः संबन्धः, गृह्णाति कायिकेनैव, निसृजत्युत्सृजति मुञ्चतीति पर्यायाः,तथेत्यानन्तर्यार्थः, उक्तिर्वाक् वाचा निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन। कथं गृह्णाति निसृजतीति वा ? किमनुसमयं उत अन्यथेत्याशङ्कासंभवे सति शिष्यानुग्रहार्थमाह—एकान्तरमेव गृह्णाति, निसृजति एकान्तरं चैव, अयमत्र भावार्थः—प्रतिसमयं गृह्णाति मुञ्चति चेति, कथम् ?, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं, पुरुषाद्वा पुरुषोऽनन्तरोऽपि सन्निति, एवमेकैकस्मात्समयाद् एकैक एव एकान्तरोऽनन्तरसमय एवेत्यर्थः । अयं गाथासमुदा- 
यार्थः। अत्र कश्चिदाह—ननु कायिकेनैव गृह्णातीत्येतद् युक्तं, तस्यात्मव्यापाररूपत्वात्, निसृजति तु कथं वाचिकेन ?, को

१ 'दो एगत्ता' इति सूत्रेण पूर्वस्रोतरस्य वा लोपात् पदावयवप्रयोगेण सम्पूर्णपदोपस्थिता तदवबोधः, एवं च समस्तस्थल एवायं न तु व्यस्तस्थले.

वाऽयं वाग्योग इति । किं वागेव व्यापारापन्ना आहोश्चित् तद्विसर्गहेतुः कायसंरम्भ इति ?, यदि पूर्वो विकल्पः, स खल्वयुक्तः, तस्या योगत्वानुपपत्तेः, तथा च न वाक्केवला जीवव्यापारः, तस्याः पुद्गलमात्रपरिणामरूपत्वात्, रसादिवत्, योगश्चात्मनः शरीरवतो व्यापार इति, न च तया भाषया निसृज्यते[1], किन्तु सैव निसृज्यत इत्युक्तं, अथ द्वितीयः पक्षः, ततः स कायव्यापार एवेतिकृत्वा[2] कायिकेनैव निसृजतीत्यापन्नं, अनिष्टं चैतत् इति, अत्रोच्यते, न, अभिप्रायापरिज्ञानात्, इह तनुयोगविशेष एव वाग्योगो मनोयोगश्चेति, कायव्यापारशून्यस्य सिद्धवत् तदभावप्रसङ्गात्, ततश्चात्मनः शरीरव्यापारे सति येन[3] शब्दद्रव्योपादानं करोति स कायिकः, येन तु कायसंरम्भेण तान्येव मुञ्चति स वाचिक इति, तथा येन मनोद्रव्याणि मन्यते स मानस इति, कायव्यापार एवायं व्यवहारार्थं त्रिधा विभक्त इत्यतोऽदोषः । तथा 'एकान्तरं च गृह्णाति, निसृजत्येकान्तरं चैव' इत्यत्र केचिदेकैकव्यवहितं एकान्तरमिति मन्यन्ते, तेषां च विच्छिन्नरत्नावलीकल्पो ध्वनिरापद्यते, सूत्रविरोधश्च[4], यत उक्तं—"अणुसमयमविरहियं निरन्तरं गिण्हइ" त्ति । आह—यत्पुनरिदमुक्तं "संतरं निसरति, नो निरंतरं, एगेणं समएणं गिण्हति, एगेणं णिसरती"त्यादि, तत्कथं नीयते[5] ?, उच्यते, इह ग्रहणापेक्षया निसर्गः सान्तरोऽभिहितः, एतदुक्तं भवति—यथा आदिसमयादारभ्य प्रतिसमयं ग्रहणं, नैवं निसर्ग इति, यस्मादाद्यसमये नास्तीति[6], ग्रहणमपि निसर्गापेक्षया सान्तरमापद्यत इति चेत्[7], न, तस्य[8] स्वतन्त्रत्वात्, निसर्गस्य च ग्रहणपरतन्त्रत्वात्, यतो नागृहीतं निसृ-

१ शब्दद्रव्यसंहतिरूपा भाषा. २ इतिहेतोः. ३ व्यापारविशेषेण. ४ समयस्य सूक्ष्मतमत्वेन आह—सूत्रेत्यादि ५ व्याख्यायत इत्यर्थः, भवद्व्याख्यानेन विरुद्धतमत्वात्. ६ पूर्वमगृहीतत्वात् गृहीतानां च द्वितीयसमये निसर्गात्. ७ गृहीतानां विना निसर्गं ग्रहणाभावात् सान्तरता यथा तथा निसर्जने एव ग्रहणाद्ग्रहणस्यापि सान्तरतेत्यर्थः. ८ ग्रहणस्य—पूर्वसमयेऽनिसर्गेऽपि ग्रहणादित्यर्थः, निसर्जनं तु गृहीतानामेवेति तस्य परतन्त्रत्वं.

सांहेइ, अहं दिट्ठिवातं अज्झाइउं तुज्झ पासं आगतो, आयरिया भणंति—अम्ह दिक्खा अब्भुवगमेण अज्झाइज्जइ, भणइ—पव्वयामि, सोवि परिवाडीए अज्झाइज्जइ, एवं होउ, परिवाडीए अज्झामि, किं तु मम एत्थ न जाइ पव्वइउं, अण्णत्थ वच्चामो, एस राया ममाणुरत्तो, अण्णो य लोगो, पच्छा ममं बलावि नेज्जा, तम्हा अण्णहिं वच्चामो, ताहे तं गहाय अण्णत्थ गता, एस पढमा सेहनिप्फेडिया, एवं तेण अचिरेण कालेण एक्कारस अंगाणि अहिज्जियाणि, जो दिट्ठिवादो तोसलिपुत्ताणं आयरियाणं सोऽवि अणेण गहितो, तत्थ य अज्जवइरा सुव्वंति जुगप्पहाणा, तेसिं दिट्ठिवादो बहुओ अत्थि, ताहे सो तत्थ वच्चइ उज्जेणिं मज्झेणं, तत्थ भद्दगुत्ताण थेराणं अंतियं उवगतो, तेहिंवि अणुवूहितो—धण्णो कतत्थो यत्ति, अहं संलेहियसरीरो, नत्थि ममं निज्जामओ, तुमं निज्जामओ होहित्ति, तेण तहत्ति पडिस्सुयं, तेहिं कालं करेंतेहिं भण्णइ—मा वइरसामिणा समं अच्छिज्जासि, वीसुं पडिस्सए ठितो पढेज्जासि, जो तेहिं समं एगमवि रत्तिं संवसइ

---

१ कथयति, अहं दृष्टिवादमध्येतुं तव पार्श्वमागतः, आचार्या भणन्ति—अस्माकं दीक्षाया अभ्युपगमेन अध्याप्यते, भणति—प्रव्रजामि, सोऽपि परिपाट्याऽध्याप्यते, एवं भवतु, परिपाट्याऽधीये, किन्तु ममात्र न जायते प्रव्रजितुम्, अन्यत्र व्रजामः, एष राजा मय्यनुरक्तः, अन्यश्च लोकः, पश्चात् मां बलादपि नयेत्, तस्मादन्यत्र व्रजाम', तदा तं गृहीत्वा अन्यत्र गताः, एषा प्रथमा शिष्यनिस्फेटिका, एवं तेनाचिरेण कालेनैकादशाङ्गानि अधीतानि, यो दृष्टिवादस्तोसलिपुत्राणामाचार्याणां सोऽप्यनेन गृहीत', तदा चार्यवज्राः श्रूयन्ते युगप्रधानाः, तेषां ( पार्श्वे ) दृष्टिवादो बहुरस्ति, तदा स तत्र व्रजति उज्जयिनीमध्येन, तत्र भद्रगुप्तानां स्थविराणामन्तिकमुपगत', तैरप्यनुबृंहितः—धन्य. कृतार्थश्चेति, अहं संलिखितशरीरः, नास्ति मम निर्यापकः, त्वं निर्यापको भवेति, तेन तथेति प्रतिश्रुतं, तैः कालं कुर्वद्भिः भण्यते—मा वज्रस्वामिना समं स्थाः, विष्वक् प्रतिश्रये स्थितः पठेः, यस्तैः सममेकामपि रात्रिं संवसति

सो तेहिं अणु मरइ, तेण य पडिस्सुतं, कालगए गतो वइरसामिसगासं, बाहिं ठितो, तेऽवि सुविणयं पेच्छंति, तेसिं पुण थोवमवसिट्ठं जातं, तेहिं वि तहेव परिणामियं, आगतो, पुच्छितो–कत्तो ?, तोसलिपुत्ताणं पासातो, अज्जरक्खितो ?, आमं, साहु, सागतं ?, कहिं ठितो ?, बाहिं, ताहे आयरिया भणंति–बाहिंठियाणं किं जाइ अज्झाइउं ?, किं तुमं न याणसि ?, ताहे सो भणइ–खमासमणेहिं अहं भद्दगुत्तेहिं थेरेहिं भणितो–बाहिं ठाएज्जासि, ताहे उवउज्जित्ता जाणंति–सुंदरं, न निक्कारणेण भणंति आयरिया, अच्छह, ताहे अज्झाइउं पवत्तो, अचिरेण कालेण नव पुव्वा अहिज्जिया, दसमं आढत्तो घेत्तुं, ताहे अज्जवइरा भणंति–जविताइं करेहि, एतं परिकम्मं एयस्स, ताणि य सुहुमाणि गाढंताणि य, चउवीसं जवियाणि गहियाणि अणेण, सोऽवि ताव अज्झाइ । इतो य से मायापियरं सोगेण गहियं–उज्जोयं करिस्सामि अंधकारतरं कयं, ताहे ताणि य अप्पाहिंति, तहवि न एइ, ततो डहरतो से भाता फग्गुरक्खिओ, सो पट्ठविओ, एहि सव्वाणिऽवि

---

१ स तानु म्रियते, तेन च प्रतिश्रुतं, कालगते गतो वज्रस्वामिसकाशं, बहिःस्थितः, तेऽपि स्वप्नं पश्यन्ति, तेषां पुनः स्तोकमवशिष्टं जातं (स्थितं), तैरपि तथैव परिणामितम्, आगतः, पृष्टः–कुतः ?, तोसलिपुत्राणां पार्श्वात्, आर्यरक्षितः ?, ओं, साधु, स्वागतम् ?, क्व स्थितः ?, बहिः, तदा आचार्या भणन्ति–बहिःस्थितानां किं जायतेऽध्येतुं (शक्यतेऽध्यापयितुं), किं त्वं न जानीषे ?, तदा स भणति–क्षमाश्रमणैरहं भद्रगुप्तैः स्थविरैर्भणितः–बहिः तिष्ठेः, तदोपयुज्य जानन्ति–सुन्दरं, न निष्कारणं भणन्त्याचार्याः, तिष्ठ, तदाऽध्येतुं प्रवृत्तः, अचिरेण कालेन नव पूर्वाण्यधीतानि, दशममारब्धो ग्रहीतुं, तदा आर्यवज्रा भणन्ति–यविकानि कुरु, एतत् परिकर्मैतस्य, तानि च सूक्ष्माणि गाढान्तानि च, चतुर्विंशतिर्यविकानि गृहीतानि अनेन, सोऽपि तावदध्येति । इतश्च तस्य मातापितरौ शोकेन गृहीतौ–उद्योतं करिष्यामि अन्धकारतरं कृतं, तदा तौ च संदिशतः, तथापि नैति, ततो लघुस्तस्य भ्राता फल्गुरक्षितः, स प्रस्थापितः, एहि सर्वेऽपि

[1]पव्वयंति जइ वच्चह, सो तस्स न पत्तियइ, जइ ताणि पव्वयंति तो तुमं पढमं पव्वज्जाहि, सो पव्वइओ, अज्झाइओ य, अज्जरक्खितो जविएसु अतीव घोलिओ पुच्छइ—भगवं! दसमस्स पुव्वस्स किं सेसं ?, तत्थ विंदुसमुद्दसरिसवमंदरेहिं दिट्ठंतं करेंति, विंदुमेत्तं गतं ते समुद्दो अच्छइ, ताहे सो विसादमावण्णो, कत्तो मम सत्ती एयस्स पारं गंतुं ?, ताहे आपुच्छइ—भगवमहं वच्चामि ?, एस मम भाया आगतो, ते भणंति—अज्झाहि ताव, एवं सो निच्चमेव आपुच्छइ, तओ अज्जवइरा उवउत्ता—किं ममातो चेव एयं वोच्छिज्जंतगं ?, ताहे अणेण नातं—जहा मम थोवं आउं, न य पुणो एस एहिति, अतो मतेहिंतो वोच्छिज्जिहिति दसमपुव्वं, ततोऽणेण विसज्जिओ, पट्ठिओ दसपुरं गतो। वइरसामीऽवि दक्खिणावहे विहरंति, तेसिं सिंभाधियं जातं, ततोऽणेहिं साहू भणिया—ममारिहं सुंठिं आणेह, तेहिं आणीया, सा तेण कण्णे ठविता, जेमेंतो आसादेहामित्ति, तं च पम्हुट्ठं, ताहे वियाले आवस्सयं करेंतस्स मुहपोत्तियाए चालियं पडियं, तेसिं उवओगो जातो-

---

१ प्रव्रजन्ति यदि व्रजसि, स तस्य न प्रत्येति, यदि ते प्रव्रजन्ति तदा त्वं प्रथमं प्रव्रज, स प्रव्रजितः, अधीतश्च, आर्यरक्षितो यविकेषु अतीव घूर्णितः पृच्छति-भगवन्! दशमस्य पूर्वस्य किं शेषं ?, तत्र बिन्दुसमुद्रसर्षपमन्दरैः दृष्टान्तं कुर्वन्ति, बिन्दुमात्रं गतं तव समुद्रस्तिष्ठति, तदा स विषादमापन्नः, कुतो मम शक्तिः एतस्य पारं गन्तुं ?, तदा आपृच्छति—भगवन्! अहं व्रजामि, एष मम भ्राता आगतः, ते भणन्ति—अधीष्व तावत्, एवं स नित्यमेव आपृच्छति, तत आर्यवज्रा उपयुक्ताः—किं मदेवैतत् व्युच्छेत्स्यति ?, तदा अनेन ज्ञातं—यथा ममायुः स्तोकं, न च पुनरेष आयास्यति, अतो मत् व्युच्छेत्स्यति दशमं पूर्वं, ततोऽनेन विसृष्टः, प्रस्थितो दशपुरं गतः। वज्रस्वाम्यपि दक्षिणापथे विहरन्ति, तेषां श्लेष्माधिक्यं जातं, ततोऽमीभिः साधवो भणिताः—ममार्हां सुण्ठीमानयत, तैरानीता, सा तैः कर्णे स्थापिता, जेमन् आस्वादयिष्यामीति, तच्च विस्मृतं, तदा विकाले आवश्यकं कुर्वतो मुखपोतिकया चालिता पतिता, तेषामुपयोगो जातः—

अहो पमत्तो जातोऽहं, पमत्तस्स य नत्थि संजमो, तं सेयं खलु मे भत्तं पच्चक्खाएत्तए, एवं संपेहेति, दुब्भिक्खं च बारसवरिसियं जायं, सवतो समंता छिन्ना पंथा, निराधारं जायं, ताहे वइरसामी विज्जाए आहडपिंडं आणेऊण पवइयाण देइ, भणइ य—एवं बारसवरिसे भोत्तवं, भिक्खा य नत्थि, जइ जाणह उस्सरंति संजमगुणा तो भुंजह, अह जाणह नवि तो भत्तं पच्चक्खामो, ताहे भणंति—किं एरिसेण विज्जापिंडेण भुत्तेणं ?, भत्तं पच्चक्खामो, आयरिएहि य पुवमेव नाऊण सिस्सो वइरसेणो नाम पेसणेण पट्ठवियओ, भणियओ य—जाहे तुमं सतसहस्सनिप्फण्णं भिक्खं लहिहिसि ताहे जाणिज्जासि—जहा नट्ठं दुब्भिक्खंति। तओ वइरसामी समणगणपरिवारिओ एगं पवयं विलग्गिउमारद्धो, एत्थ भत्तं पच्चक्खामोत्ति। एगो य तत्थ खुड्डओ साहूहिं वुच्चइ—तुमं वच्च, सो नेच्छइ, ताहे सो एगंमि गामे तेहिं विमोहिओ, पच्छा गिरि विलग्गा, खुड्डतो ताण य गइमग्गेण गंतूण मा तेसिं असमाही होउत्ति तस्सेव हेट्ठा सिलातले पाओवगतो,

---

१ अहो प्रमत्तो जातोऽहं, प्रमत्तस्य च नास्ति संयमः, तच्छ्रेयः खलु मम भक्तं प्रत्याख्यातुम्, एवं संप्रेक्षते, दुर्भिक्षं च द्वादशवार्षिकं जातं, सर्वतः समन्तात् छिन्नाः पन्थानः, निराधारं जातं, तदा वज्रस्वामी विद्याहृतं पिण्डमानीय प्रव्रजितेभ्यो ददाति, भणति च—एवं द्वादश वर्षाणि भोक्तव्यं, भिक्षा च नास्ति, यदि जानीथ-उत्सर्पन्ति संयमगुणास्तदा भुङ्ध्वं, अथ जानीथ नैव तदा भक्तं प्रत्याख्यामः, तदा भणन्ति—किमीदृशेन विद्यापिण्डेन भुक्तेन ?, भक्तं प्रत्याख्यामः, आचार्यैश्च पूर्वमेव ज्ञात्वा शिष्यो वज्रसेनो नाम प्रेषणा प्रस्थापितः, भणितश्च—यदा त्वं शतसहस्रनिष्पन्नां भिक्षां लभेथास्तदा जानीयाः—यथा नष्टं दुर्भिक्षमिति। ततो वज्रस्वामी श्रमणगणपरिवृत एकं पर्वतं विलगितुमारब्ध', अत्र भक्तं प्रत्याख्याम इति। एकश्च तत्र क्षुल्लकः साधुभिरुच्यते—त्वं व्रज, स नेच्छति, तदा स एकस्मिन् ग्रामे तैर्विमोहितः, पश्चात् गिरिं विलग्नाः, क्षुल्लकः तेषां च गतिमार्गेण गत्वा मा तेषामसमाधिर्भूरिति तस्यैवाधस्तात् शिलातले पादपोपगतः,

[1]ततो सो उण्हेण नवनीतो जहा विरातो अचिरेण चेव कालगतो, देवेहिं महिमा कया, ताहे आयरिया भणंति–खुड्डुएण साहिओ अट्ठो, ततो ते साहूणो दुगुणाणियसद्धासंवेगा भणंति–जइ ताव वालएण होंतएण साहिओ अट्ठो तो किं अम्हे ण सुंदरतरं करेमो ?, तत्थ य देवया पडिणीया, ते साहूणो सावियारूवेण भत्तपाणेण निमंतेइ, अज्ज मे पारणयं, पारेह, ताहे आयरिएहिं नायं–जहा अचियत्तोग्गहोत्ति, तत्थ य अब्भासे अण्णो गिरी तं गया, तत्थ देवताए काउस्सग्गो कतो, सा आगंतूण भणइ–अहो मम अणुग्गहो, अच्छह, तत्थ समाहीए कालगता, ततो इंदेण रहेण वंदिया पदाहिणीकरिंतेण, तरुवरतणगहणादीणि पासल्लाणि कताणि, ताणि अज्जवि तहेव संति, तस्स य पव्वयस्स रहावत्तोत्ति नामं जायं। तंमि य भगवंते अद्धनारायसंघयणं दस पुव्वाणि य वोच्छिण्णा। सो य वइरसेणो जो पेसिओ पेसणेण सो भमंतो सोपारयं पत्तो, तत्थ य साविया अभिगता ईसरी, सा चिंतेइ–किह जीविहामो ? पडिक्कओ, नत्थि, ताहे सयसहस्सेण तद्दिवसं भत्तं

1 ततः स उष्णेन यथा नवनीतं विलीनोऽचिरेण कालेनैव कालगतः, देवैर्महिमा कृतः, तदा आचार्या भणन्ति–क्षुल्लकेन साधितोऽर्थः, ततस्ते साधवो द्विगुणानीतश्रद्धासंवेगा भणन्ति–यदि बालकेन सता तावत् साधितोऽर्थः तदा किं वयं सुन्दरतरं न कुर्मः?, तत्र च देवता प्रत्यनीका, तान् साधून् श्राविकारूपेण भक्तपानेन निमन्त्रयति, अद्य भवतां पारणकं, पारयत, तदा आचार्यैर्ज्ञातं–यथा अप्रीतिकावग्रह इति, तत्र चाभ्यासेऽन्यो गिरिस्तं गताः, तत्र देवतायाः कायोत्सर्गः कृत, साऽऽगत्य भणति–अहो ममानुग्रह, तिष्ठत, तत्र समाधिना कालगताः, ततः इन्द्रेण रथेन वन्दिताः प्रदक्षिणीकुर्वता, तरुवरतृणगहनानि नतपार्श्वानि कृतानि, तान्यद्यापि तथैव सन्ति, तस्य च पर्वतस्य रथावर्त्त इति नाम जातम्। तस्मिंश्च भगवति अर्धनाराचसंहननं दश पूर्वाणि च व्युच्छिन्नानि ( दशमं पूर्वं च व्युच्छिन्नं )। स च वज्रसेनो यः प्रेपितः प्रेपया स भ्राम्यन् सोपारकं प्राप्तः, तत्र च श्राविका अभिगता ( अभिगतजीवाजीवा ) ईश्वरी, सा चिन्तयति–कथं जीविष्यामः ?, प्रतिक्रिया ( आधारो ) नास्ति, तदा शतसहस्रेण तद्दिवसे भक्तं

निंप्फाइयं, चिंतियं–इत्थ अम्हे सवकालं उज्जितं जीविए, मा इदाणिं पत्थेव देहबलियाए वित्तिं कप्पेमो, नत्थि पडिक्कओ तो एत्थ सयसहस्सनिप्फण्णे विसं छोढूण जेमेऊण सनमोक्काराणि कालं करेमो, तं च सज्जितं, नवि ता विसेणं संजोइज्जइ, सो य साहू हिंडंतो संपत्तो, ताहे सा हट्ठतुट्ठा तं साहुं तेण परमण्णेण पडिलाभेति, तं च परमत्थं साहइ, सो साहू भणइ–मा भत्तं पच्चक्खाह, अहं वइरसामिणा भणिओ–जया तुमं सतसहस्सनिप्फण्णं भिक्खं लहिहिसि ततो पए चेव सुभिक्खं भविस्सइ, ताहे पवइस्सह, ताहे सा वारिया ठिता। इओ य तद्दिवसं चेव वाहणेहिं तंदुला आणिता, ताहे पडिक्कओ जातो, सो साहू तत्थेव ठितो, सुभिक्खं जातं, ताणि सावयाणि तस्संतिए पवइयाणि, ततो वइरसामितस्स पउप्पयं जायं वंसो अवट्ठिओ। इतो य अज्जरक्खिएहिं दसपुरं गंतूण सवो सयणवग्गो पवावितो माता भगिणीओ, जो सो तस्स खंतओ सोऽवि तेसिं अणुराएण तेहिं चेव समं अच्छइ, न पुण लिंगं गिण्हइ लज्जाए, किह समणो पवइस्सं ?, एत्थ मम धूताओ

१ निष्पादितं, चिन्तितम्–अत्र वयं सर्वकालमूर्जितं जीविताः, मेदानीं अत्रैव देहबलिकया वृत्तिं कल्पयामः, नास्ति आधारस्ततोऽत्र शतसहस्रनिष्पन्ने विषं क्षिप्त्वा जिमित्वा सनमस्काराः कालं कुर्मः, तच्च सज्जितं, नैव तावद्विषेण सयुज्यते, स च साधुर्हिण्डमानः संप्राप्तः, तदा स हृष्टतुष्टा तं साधुं तेन परमान्नेन प्रतिलाभयति, तं च परमार्थं साधयति, स साधुर्भणति–मा भक्तं प्रत्याख्यासिष्ट, अहं वज्रस्वामिना भणितः–यदा त्वं शतसहस्रनिष्पन्नां भिक्षां लप्स्यसे ततः प्रभात एव सुभिक्षं भविष्यति, तदा प्रव्रजिष्यथ, तदा सा वारिता स्थिता। इतश्च तद्दिवस एव प्रवहणैस्तन्दुला आनीताः, तदाऽऽधारो जातः, स साधुस्तत्रैव स्थितः, सुभिक्षं जातं, ते सर्वे श्रावकाः तस्यान्तिके प्रव्रजिताः, ततो वज्रस्वामिनः पदोत्पतनं जातं वंशोऽवस्थितः। इतश्चार्यरक्षितैर्दशपुरं गत्वा सर्वः स्वजनवर्गः प्रव्राजितः माता भगिन्यो, यस्तस्य स पिता सोऽप्यनुरागेण तेषां तैः सममेव तिष्ठति, न पुनर्लिङ्गं गृह्णाति लज्जया, कथं श्रमणः प्रव्रजिष्यामि ?, अत्र मम दुहितरः

सुण्[1]हातो नत्तुइओ य, किह तासिं पुरओ नग्गओ अच्छिस्सं ?, आयरिया य तं वहुसो २ भणंति–पव्वयसु, सो भणइ–जइ समं जुयलेणं कुंडियाए छत्तएणं उवाहणेहिं जन्नोवइएण य तो पव्वयामि, आमंति पडिस्सुतं, पव्वइओ, सो पुण चरणकरणसज्झायं अणुयत्तंतेहिं गेण्हावितव्वोत्ति, ततो सो कडिपट्टगच्छत्तवाणहकुंडियवंभसुत्ताणि न मुयइ, सेसं सव्वं परिहरइ । अण्णया चेइयवंदया गया, आयरिएहिं पुव्वं चेडरूवाणि गहियाणि भणंति–सव्वे वंदामो छत्तइल्लं मोत्तुं, ताहे सो चिंतेइ—एते मम पुत्ता नतुगा य वंदिज्जंति अहं कीस न वंदिज्जामि ?, ततो सो भणइ–अहं किं न पव्वइओ ?, ताणि भणंति–कुंतो पव्वइयाण छत्तयाणि भवंति ?, ताहे सो चिंतेइ–एताणि वि ममं पडिचोदेंति, ता छड्डेमि, ताहे पुत्तं भणइ–अलाहि, पुत्ता ! छत्तएण, ताहे सो भणति–अलाहि, जाहे उण्हं होहिति ताहे कप्पो उवरिं कीरहिति, ततो पुणो भणंति–मोत्तूण कुंडइल्लं, ताहे पुत्तेण भणिओ—मत्तएण चेव सन्नाभूमिं गम्मइ, एवं जंनोवइयंपि मुयइ, आयरिया भणंति—

---

१ स्नुपा नप्तारश्च, कथं तासां पुरतो नग्नः स्थास्यामि, आचार्याश्च तं वहुशो २ भणन्ति–प्रव्रज, स भणति–यदि समं युगलेन कुण्डिकया छत्रकेणोपानद्भ्यां यज्ञोपवीतेन च तदा प्रव्रजामि, ओमिति प्रतिश्रुतं, प्रव्रजितः, स पुनश्चरणकरणस्वाध्यायमनुवर्त्तयद्भिर्ग्राहयितव्य इति, ततः स कटीपट्टकच्छत्रोपानत्कुण्डिकाब्रह्मसूत्राणि न मुञ्चति, शेषं सर्वं परिहरति । अन्यदा चैत्यवन्दका गताः, आचार्यैः पूर्वं डिम्भरूपाणि ग्राहितानि भणन्ति–सर्वान् वन्दामहे छत्रिणं मुक्त्वा, तदा स चिन्तयति–एते मम पुत्रा नप्तारश्च वन्द्यन्ते अहं कथं न वन्द्ये ?, ततः स भणति–अहं किं न प्रव्रजितः ?, तानि भणन्ति–कुतः प्रव्रजितानां छत्राणि भवेयुः ?, तदा स चिन्तयति–एतान्यपि मां प्रति नोदयन्ति, ततस्त्यजामि, तदा पुत्रं भणति–अलं पुत्र ! छत्रेण, तदा स भणति–अलं, यदोष्णं भविष्यति तदा कल्प उपरि करिष्यते, ततः पुनर्भणन्ति–मुक्त्वा कुण्डिकावन्तं, तदा पुत्रेण भणितः–मात्रकेणैवसंज्ञाभूमिं गम्यते, एवं यज्ञोपवीतमपि मुञ्चति, आचार्या भणन्ति-

को वा अम्हे न याणइ जहा बंभणा ?, एवं तेण ताणि सवाणि मुक्काणि, पच्छा ताणि भणंति–सबे वंदामो मोत्तूण कडिपट्टइल्लं, ताहे सो भणइ–सह अज्जयपज्जएहिं मा वंदह, अण्णो वंदिहिति ममं, न मुयइ कडिपट्टयं। तत्थ य साहू भत्तपच्चक्खातो, ततो कडिपट्टयवोसिरणट्ठयाए आयरिया वण्णेंति–एयं मडयं जो वहइ तस्स महल्लं फलं भवति, पुवं च साहू सण्णिएल्लगा चेव भणंति–अम्हे एतं वहामो, ततो आयरियसयणवग्गो भणइ—अम्हे वहामो, ते भण्डंता आयरियसगासं पत्ता, आयरिएहिं भणिया–अम्हं सयणवग्गो किं मा निज्जरं पावउ ?, तुम्हे चेव भणह–अम्हे वहामो, ताहे सो थेरो भणइ-किं एत्थ पुत्ता ! बहुया निज्जरा ?, आयरिया भणंति–आमंति, ततो सो भणइ—अहं वहामि, आयरिया भणंति–एत्थ उवसग्गा उप्पज्जंति, चेडरूवाणि नग्गेंति, जइ तरसि अहियासेउं तो वहाहि, अह नाहियासिहि ताहे अम्ह न सुंदरं होइ, सो भणइ–अहियासेस्सं, जाहे सो उक्खित्तो ताहे तस्स मग्गतो पवइया उट्ठिया, ताहे खुड्डुगा भणंति–मुयह कडिपट्टयं,

१ को वाऽस्मान्न जानाति यथा ब्राह्मणा ( इति ), एवं तेन तानि सर्वाणि मुक्तानि, पश्चात्तानि भणन्ति–सर्वान् वन्दामहे मुक्त्वा कटीपट्टकवन्तं, तदा स भणति–सह पितृपितामहैर्मा वन्दिढ्वम्, अन्यो वन्दिष्यते मां, न मुञ्चति कटीपट्टं। तत्र च साधुः प्रत्याख्यातभक्तः, ततः कटीपट्टकव्युत्सर्जनायाचार्या वर्णयन्ति–एतन् मृतकं यो वहति तस्य महत्फलं भवति, पूर्वं च साधवः सञ्ज्ञिता एव भणन्ति–वयमेतत् वहामः, तत आचार्यस्वजनवर्गो भणति–वयं वहामः, ते कलहायमाना आचार्यसकाशं प्राप्ताः, आचार्यैर्भणिताः–अस्माकं स्वजनवर्गः किं मा निर्जरां प्रापत् ?, यूयमेव भणथ–वयं वहामः, तदा स स्थविरो भणति–किमत्र पुत्र ! बह्वी निर्जरा ?, आचार्या भणन्ति–ओमिति, ततः स भणति–अहं वहामि, आचार्या भणन्ति–अत्रोपसर्गा उत्पद्यन्ते, चेटरूपाणि नग्नयन्ति, यदि शक्तोऽध्यासितुं तदा वह, अथ नाध्यासयसि तदा अस्माकं न सुन्दरं भवति, स भणति–अध्यासिष्ये, यदा स उत्क्षिप्तस्तदा तस्य पृष्ठतः प्रव्रजिता उत्थिताः, तदा क्षुल्लका भणन्ति–मुञ्च कटीपट्टं,

[1] सो मोत्तूण पुरतो कतो दोरेण वद्धो, ताहे सो लज्जंतो तं वहइ, मग्गतो मम सुण्हादी पेच्छंति, एवं तेण उवसग्गो उट्ठितो अहितासेतव्वोत्ति काऊण वूढो, पच्छा आगतो तहेव, ताहे आयरिया भणंति–किं खंत ! इमं ?, सो भणइ–उवसग्गो उट्ठिओ, आयरिया भणंति–आणेह साडयं, ताहे भणइ–किं एत्थ साडएण ?, दिट्ठं जं दिट्ठवं, चोलपट्टओ चेव भवउ, एवं ता सो चोलपट्टयं गिण्हावितो । पच्छा भिक्खं न हिंडइ, ताहे आयरिया चिंतेंति–एस जइ भिक्खं न हिंडइ तो को जाणइ कयादि किंचि भवेज्ज ?, पच्छा एकल्लओ किं काहिति ?, अवि य–एसो निज्जरं पावेयव्वो, तो तहा कीरउ जह भिक्खं हिंडइ, एवं चेव आयवेयावच्चं, पच्छा परवेयावच्चंपि काहिति, ततोऽणेण सव्वे साहूणो अप्पसागारियं भणिया— अहं वच्चामि, तुम्हे एक्कल्लया समुदिसेज्जाह पुरतो खंतस्स, तेहिं पडिस्सुतं, ततो आयरिया भणंति–तुब्भे सम्मं वट्टेज्जह खंतस्स अहं गामं वच्चामित्ति, गता आयरिया, तेऽवि भिक्खं हिंडेऊण सव्वे एगल्लया समुदिसंति, सो चिंतेइ–मम एस दाहिति

---

१ स मुक्त्वा पुरतः कृतः दवरकेन बद्धः, तदा स लज्जन् तं वहति, पृष्ठतो मम स्नुषाद्याः पश्यन्ति, एवं तेनोपसर्ग उत्थितोऽध्यासितव्य इतिकृत्वा व्यूढम्, पश्चात् आगतस्तथैव, तदा आचार्या भणन्ति–किं वृद्ध ! इदं ?, स भणति–उपसर्ग उत्थितः, आचार्या भणन्ति–आनय शाटकं, तदा भणति–किमत्र शाटकेन ?, दृष्टं यद्द्रष्टव्यं, चोलपट्ट एव भवतु, एवं तावत्स चोलपट्टकं ग्राहितः । पश्चात् भिक्षां न हिण्डते, तदा आचार्याश्चिन्तयन्ति–एष यदि भिक्षां न हिण्डते तदा को जानाति कदाचित् किञ्चित् भवेत् ?, पश्चादेकाकी किं करिष्यति ?, अपि च–एष निर्जरां प्रापयितव्यस्ततस्तथा क्रियतां यथा भिक्षां हिण्डते, एवमेवात्मवैयावृत्त्यं, पश्चात्परवैयावृत्त्यमपि करिष्यति, ततोऽनेन सर्वे साधवोऽल्पसागारिकं भणिताः–अहं व्रजामि यूयमेकाकिनः समुद्दिशेत पुरतः पितुः, तैः प्रतिश्रुतं, तत आचार्या भणन्ति–यूयं सम्यक् वृद्धस्य वर्त्तिताध्वे अहं ग्रामं व्रजामीति, गता आचार्याः, तेऽपि भिक्षां हिण्डित्वा सर्वे एकाकिनः समुद्दिशन्ति, स चिन्तयति–मह्यमेष दास्यति

ईमो दाहि, एक्कोवि तस्स न देइ, अण्णो दाहिति, एस वराओ किं लभइ ?, अण्णो दाहिति, एवं तस्स न केणइ किंचिवि दिन्नं, ताहे आसुरुत्तो न किंचिवि आलवेइ, चिंतेइ–कल्लं ताव एउ पुत्तो मम, तो पेक्ख एए जं पावेमि, ताहे बीयदिवसे आगता, आयरिया भणंति–किह खन्ता ! वट्टियं भे ?, ताहे भणइ–पुत्त ! जइ तुमं न होंतो तोऽहं एक्कंपि दिवसं न जीवंतो, एतेवि जे अण्णे मम पुत्ता नत्तुगा य तेऽवि न किंचि दिन्ति, ताहे ते आयरिएण तस्समक्खं अंबाडिया, तेविय अब्भुवगया, ताहे आयरिया भणंति–आणेह भायणाणि जाऽहं अप्पणा खन्तस्स पारणयं आणेमि, ताहे सो खंतो चिंतेइ–कह मम पुत्तो हिंडइ ?, लोगप्पगासो न कयाइ हिंडियपुव्वो, भणइ–अहं चेव हिंडामि, ताहे सो अप्पणा खंतो निग्गतो, सो य पुण लद्धिसंपुण्णो चिरावि गिहत्थत्तणे, सो य अहिंडंतो न याणइ–कतो दारं वा अवदारं वा, ततो सो एगं घरं अवद्दारेण अतिगतो, तत्थ तद्दिवसं पगतं वत्तेल्लयं, तत्थ घरसामिणा भणितो–कतो अवद्दारेण पव्वइयओ अइयओ ?,

---

१ अयं दास्यति, एकोऽपि तस्मै न ददाति, अन्यो दास्यति एष वराकः किं लभते ?, अन्यो दास्यति, एवं तस्मै न केनचित्किञ्चिदपि दत्तं, तदा क्रुद्धो न किञ्चिदप्यलपति, चिन्तयति–कल्ये तावदायातु पुत्रो मम, तर्हि प्रेक्षध्वमेतान् यत्प्रापयामि, तदा द्वितीयदिवसे आगताः, आचार्या भणन्ति–कथं पितर्वृत्तं तव?, तदा भणति–पुत्र ! यदि त्वं नाभविष्यत्तर्ह्यहमेकमपि दिवसं नाजीविष्यमेतेऽपि येऽन्ये मम पुत्रा नप्तारश्च तेऽपि न किञ्चिद्ददति, तदा ते आचार्येण तत्समक्षं निर्भर्त्सिताः, तेऽप्यभ्युपगतवन्तः, तदा आचार्या भणन्ति–आनयत पात्राणि यावदहमात्मना पितुः पारणमानयामि, तदा स वृद्धश्चिन्तयति–कथं मम पुत्रो हिण्डेत ?, लोकप्रकाशो न कदाचित् हिण्डितपूर्वः, भणति–अहमेव हिण्डे, तदा स आत्मना वृद्धो निर्गतः, स च पुनर्लब्धिसंपूर्णः चिरादपि गृहस्थत्वे, स चाहिण्डमानो न जानाति–कुतो द्वार वाऽपद्वारं वा?, ततः स एकं गृहमपद्वारेणातिगतः, तत्र तद्दिवसे प्रकृतं वर्तते, तत्र गृहस्वामिना भणितः–कुतोऽपद्वारेण प्रव्रजित आयातः, [*]अन्नदिवसं

खंतेण भणितो–सिरीए आयंतीए कओ दारं वा अवदारं वा ?, यतो अतीति ततो सुंदरा, गिहसामिणा भणियं–देह से भिक्खं, तत्थ लड्डुगा लद्धा वत्तीसं, सो ते घेत्तूण आगतो, आलोइयं अणेण, पच्छा आयरिया भणंति–तुज्झं वत्तीसं सीसा होहिंति परंपरेण आवलियाठावगा, ततो आयरिएहिं भणिता–जाहे तुब्भे किंचि राउलातो लहह विसेसं तं कस्स देह ?, भणइ–बंभणाणं, एवं चेव अम्ह साहूणो पूयणिज्जा, एतेसिं चेव एस पढमलाभो दिज्जउ, सव्वे साहूण दिण्णा, ताहे पुणो अप्पणो अट्ठाए उत्तिण्णो, पच्छा अणेण परमन्नं घतमहुसंजुत्तं आणितं, पच्छा सयं समुद्दिट्ठो, एवं सो अप्पणा चेव पहिंडितो लद्धिसंपुण्णो वहूणं वालदुव्वलाणं आहारो जातो । तत्थ य गच्छे तिण्णि पूसमित्ता–एगो दूव्वलियापूसमित्तो, एगो घयपुस्समित्तो एगो वत्थपुस्समित्तो, जो दुव्वलिओ सो झरओ, घयपूसमित्तो घतं उप्पादेति, तस्सिमा लद्धी–दव्वओ ४ दव्वतो घतं उप्पादेयव्वं, खेत्तओ उज्जेणीए, कालतो जेट्ठासाढेसु मासेसु, भावतो एगा धिज्जाइणि गुव्विणी, तीसे भत्तुणा

---

१ वृद्धेन भणितः–श्रिया आयान्त्याः कुतो द्वारं वा अपद्वारं वा, यत आयाति ततः सुन्दरा, गृहस्वामिना भणितं–देहि अस्मै भिक्षां, तत्र मोदका लब्धा द्वात्रिंशत्, स तान् गृहीत्वाऽऽगतः, आलोचितमनेन, पश्चादाचार्या भणन्ति–युष्माकं द्वात्रिंशच्छिष्या भविष्यन्ति परम्परकेणावलिकास्थापका', तत आचार्यैर्भणिताः–यदा यूयं कञ्चिद् राजकुलात् लभध्वं विशेषं तं कस्मै दत्त ?, भणति–ब्राह्मणेभ्यः, एवमेवास्माकं साधवः पूजनीयाः, एतेभ्य एवैष प्रथमलाभो दीयतां, सर्वे साधुभ्यो दत्ताः, तदा पुनरात्मनोऽर्थायोत्तीर्णः, पश्चादनेन परमान्नं घृतमधुसंयुक्तमानीतं, पश्चात्स्वयं समुद्दिष्टः, एवं स आत्मनैव प्रहिण्डितो लब्धिसंपूर्णो वहूनां बालदुर्वलानामाधारो जातः । तत्र च गच्छे त्रयः पुष्पमित्राः–एको दुर्वलिकापुष्पमित्र एको घृतपुष्पमित्र एको वस्त्रपुष्पमित्रः, यो दुर्वलिकः स स्मारकः, घृतपुष्पमित्रो घृतमुत्पादयति, तस्येयं लब्धिः–द्रव्यतो ४ द्रव्यतो घृतमुत्पादयितव्यं क्षेत्रत उज्जयिन्यां कालतो ज्येष्ठाषाढयोर्मासयोः, भावत एका धिग्जातीया गुर्वी, तस्या भर्त्रा

थोवं थोवं पिंडंतेण छहिं मासेहिं वारओ घतस्स उप्पाइतो, वरं से वियाइयाए उवजुज्जिहितित्ति, तेण य जाइयं, अन्नं नत्थि, तंपि सा हट्ठतुट्ठा दिज्जा, परिमाणतो जत्तियं गच्छस्स उवजुज्जइ, सो य णिंतो चेव पुच्छइ–कस्स कित्तिएणं घएणं कज्जं ?, जत्तियं भणति तत्तियं आणेइ । वत्थपुस्समित्तस्स पुण एसेव लद्धी वत्थेसु उप्पाइयव्वएसु, दव्वतो वत्थं, खेत्ततो वइदिसे महुराए वा, कालतो वासासु सीतकाले वा, भावओ जहा एक्का कावि रंडा तीए दुक्खदुक्खेण छुहाए मरंतीए कत्तिऊण एक्का पोत्ती वुणाविया कल्लं नियंसेहामित्ति, एत्थंतरे सा पुस्समित्तेण जाइया हट्ठतुट्ठा दिज्जा, परिमाणओ सव्वस्स गच्छस्स उप्पाएति । जो दुब्बलियपुस्समित्तो तेण नववि पुव्वा अहिज्जिया, सो ताणि दिवा य रत्ती य झरति, एवं सो झरणाए दुब्बलो जातो, जइ सो न झरेज्ज ताहे तस्स सव्वं चेव पम्हुसइ, तस्स पुण दसपुरे चेव नियल्लगाणि, ताणि पुण रत्तवडोवासगाणि, आयरियाण पासं अल्लियंति, ततो ताणि भणंति–अम्ह भिक्खुणो झाणपरा, तुब्भं झाणं नत्थि,

---

१ स्तोकं स्तोकं पिण्डयता षड्भिर्मासैर्वारो घृतस्य उत्पादितः, वरं तस्याः प्रसूताया उपयुज्यते घृति, तेन च याचितम्, अन्यन्नास्ति, तदपि सा हृष्टतुष्टा दद्यात्, परिमाणतो यावद्गच्छस्योपयुज्यते, स च निर्गच्छन्नेव पृच्छति–कस्य कियता घृतेन कार्यम् ?, यावद्भणति तावदानयति । वस्त्रपुष्पमित्रस्य पुनरेषैव लब्धिः वस्त्रेषूत्पादयितव्येषु, द्रव्यतो वस्त्रं क्षेत्रतो वैदेशे मथुरायां वा, कालतो वर्षासु शीतकाले वा, भावतो यथा एका काऽपि विधवा तया अतिदुःखेन क्षुधा म्रियमाणया कर्तयित्वा एकं वस्त्रं वायितं कल्ये परिधास्य इति, अत्रान्तरे सा पुष्पमित्रेण याचिता हृष्टतुष्टा दद्यात्, परिमाणतो यावद्गच्छस्य सर्वस्य उत्पादयति । यो दुर्बलिकापुष्पमित्रस्तेन नवापि पूर्वाणि अधीतानि, स तानि दिवा रात्रौ च स्मरति, एवं स स्मरणेन दुर्बलो जातः, यदि स न स्मरेत् तदा तस्य सर्वमेव विस्मरति, तस्य पुनर्दशपुरे एव निजकाः, ते पुना रक्तपटोपासकाः, आचार्याणां पार्श्वे आगच्छन्ति ( पार्श्वमाश्रयन्ति ) ततस्ते भणन्ति–अस्माकं भिक्षवो ध्यानपराः, युष्माकं ध्यानं नास्ति,

आयरिया भणंति–अम्ह झाणं, एस तुब्भ जो निएल्लओ दुब्बलियपुस्समित्तो एस झाणेण चेव दुब्बलो, ताणि भणंति— एस गिहत्थत्तणे निद्धाहारेहिं बलिओ, इयाणिं नत्थि, तेण दुब्बलो, आयरिओ भणइ–एस नेहेण विणा न कयाइ जेमेइ, ताणि भणंति–कतो तुब्भं नेहो ?, आयरिया भणंति–घतपूसमित्तो आणेइ, ताणि न पत्तियंति, ताहे आयरिया भणंति– एस तुम्ह मूले किं आहारेत्ताइतो ?, ताणि भणंति–निद्धपेसलाणि आहारेत्ताइतो, तेसिं संबोहणाए घरं ताणं विसज्जिओ, एत्ताहे देह, तहेव दाउं पयत्ताणि, सोऽवि झरइ, तंपि नज्जइ छारे छुब्भइ, ताणि गाढयरं देंति, ततो निव्विण्णाणि, ताहे भणिओ–एत्ताहे मा झरउ, अंतपंतं च आहारेइ, ताहे सो पुणोऽवि पोराणसरीरो जातो, ताहे ताण उवगतं, धम्मो कहिओ, सावगाणि जायाणि । तत्थ य गच्छे इमे चत्तारि जणा पहाणा तंजहा–सो चेव दुब्बलियपूसमित्तो विंझो फग्गुरक्खितो गोट्ठामाहिलोत्ति, जो विंझो सो अतीव मेहावी, सुत्तत्थतदुभयाणं गहणधारणासमत्थो, सो पुण सुत्तमंडलीए

---

१ आचार्या भणन्ति–अस्माकं ध्यानम्, एष युष्माकं यो निजको दुर्बलिकापुष्पमित्र एष ध्यानेनैव दुर्बलः, ते भणन्ति–एष गृहस्थत्वे स्निग्धाहारैर्बलिकः, इदानीं नास्ति, तेन दुर्बलः, आचार्यो भणति–एष स्नेहेन विना न कदाचित् जेमति, ते भणन्ति–कुतो युष्माकं स्नेहः?, आचार्या भणन्ति–घृतपुष्पमित्र आनयति, ते न प्रतियन्ति, तदा आचार्या भणन्ति–एष युष्माकं मूले किमाहृतवान्?, ते भणन्ति–स्निग्धपेशलानि आहृतवान्, तेषां संबोधनाय गृहे तेषां विसृष्टः, अधुना दत्त, तथैव दातुं प्रवृत्ताः, सोऽपि स्मरति, तदपि ज्ञायते क्षारे क्षिप्यते ( यथा ), ते गाढतरं ददति, ततो निर्विण्णानि, तदा भणितः–अधुना मा स्मार्षीः, अन्तप्रान्तं चाहारयति, तदा स पुनरपि पुराणशरीरो जातः, तदा तेषामुपगतं, धर्मः कथितः, श्रावका जाताः । तत्र च गच्छे इमे चत्वारो जनाः प्रधानास्तद्यथा– स एव दुर्बलिकापुष्पमित्रः विन्ध्यः फल्गुरक्षितः गोष्ठमाहिल इति, यो विन्ध्यः सोऽतीव मेधावी, सूत्रार्थतदुभयानां ग्रहणधारणासमर्थः, स पुनः सूत्रमण्डल्यां

विसूरइ जाव परिवाडी आलावगस्स एइ ताव पलिभज्जइ, सो आयरिए भणइ–अहं सुत्तमंडलीए विसूरामि, जओ चिरेण आलावगो परिवाडीए एइ, तो मम वायणायरियं देह, ततो आयरिएहिं दुब्बलियपुस्समित्तो तस्स वायणायरिओ दिण्णो, ततो सो कइवि दिवसे वायणं दाऊण आयरियमुवट्ठितो भणइ–मम वायणं देंतस्स नासति, जं च सण्णायघरे नाणुप्पेहियं, अतो मम अज्झरंतस्स नवमं पुव्वं नासिहिति, ताहे आयरिया चिंतेति–जइ ताव एयस्स परममेहाविस्स एवं झरंतस्स नासइ अन्नस्स चिरनट्ठं चेव–अतिसयकओवओगो मतिमेहाधारणाइपरिहीणे। नाऊण सेसपुरिसे खेत्तं कालाणुभावं च ॥ १ ॥ सोऽणुग्गहाणुओगे वीसुं कासी य सुयविभागेण। सुहगहणादिनिमित्तं णए य सुणिगूहियविभाए ॥ २ ॥ सविसयमसद्दहंता नयाण तंमत्तयं चं गेण्हंता। मन्नंता य विरोहं अप्परिणामाइपरिणामा ॥ ३ ॥ गच्छिज्ज मा हु मिच्छं परिणामा य सुहमाऽइबहुभेया। होज्जाऽसत्ता घेत्तूं ण कालिए तो नयविभागो ॥ ४ ॥' यदुक्तम्—'अनुयोगस्ततः कृतश्चतुर्द्धे' ति, तत्रानुयोगचातुर्विध्यमुपदर्शयन्नाह मूलभाष्यकारः—

१ विषीदति यावत् परिपाट्यालापक आयाति तावत्प्रतिभज्यते, स आचार्यान् भणति–अहं सूत्रमण्डल्यां विषीदामि, यतश्चिरेणालापकः परिपाट्याऽऽयाति, तन्मह्यं वाचनाचार्यं दत्त, तत आचार्यैर्दुर्बलिकापुष्पमित्रस्तस्मै वाचनाचार्यो दत्तः, ततः स कतिचिदपि दिवसान् वाचनां दत्त्वाऽऽचार्यमुपस्थितो भणति–मम वाचनां ददतो नश्यति, यच्च सञ्ज्ञातीयगृहे नानुप्रेक्षितम्, अतो ममाक्षरतो नवमं पूर्वं नङ्क्ष्यति, तदा आचार्याश्चिन्तयन्ति–यदि तावदेतस्य परममेधाविन एवं क्षरतो नश्यति अन्यस्य चिरनष्टमेव। कृतातिशयोपयोगो मतिमेधाधारणाभिः परिहीणान्। ज्ञात्वा शेषपुरुषान् क्षेत्रं कालानुभावं च ॥ १ ॥ सोऽनुग्रहाय अनुयोगान् पृथक् अकार्षीत् श्रुतविभागेन। सुखग्रहणादिनिमित्तं नयांश्च सुनिगूहितविभागान् ॥ २ ॥ सविषयमश्रद्दधतो नयानां तन्मात्रं च गृह्णन्तः। मन्यमानाश्च विरोधमपरिणामा अतिपरिणामाः (च)॥ ३ ॥ गमत मा मिथ्यात्वं परिणामाश्च सूक्ष्मा अतिबहुभेदाः। भवेयुरशक्ता ग्रहीतुं न कालिके ततो नयविभागः ॥४॥

कालियसुयं च इसिभासियाइं तइओ य सूरपण्णत्ती।सव्वो य दिट्ठिवाओ चउत्थओ होइ अणुओगो १२४(मू.भा)

व्याख्या—कालिकश्रुतं चैकादशाङ्गरूपं, तथा ऋषिभाषितानि—उत्तराध्ययनादीनि, 'तृतीयश्च' कालानुयोगः, स च सूर्यप्रज्ञप्तिरिति, उपलक्षणात् चन्द्रप्रज्ञप्त्यादि, कालिकश्रुतं चरणकरणानुयोगः, ऋषिभाषितानि धर्मकथानुयोग इति गम्यते, सर्वश्च दृष्टिवादश्चतुर्थो भवत्यनुयोगः, द्रव्यानुयोग इति हृदयमिति गाथार्थः ॥ तत्र ऋषिभाषितानि धर्मकथानुयोग इत्युक्तं, ततश्च महाकल्पश्रुतादीनामपि ऋषिभाषितत्वाद् दृष्टिवादादुद्धृत्य तेषां प्रतिपादितत्वाद् धर्मकथानुयोगत्वप्रसङ्ग इत्यतस्तदपोद्धारचिकीर्षयाऽऽह—

जं च महाकप्पसुयं जाणि य सेसाणि छेयसुत्ताणि । चरणकरणाणुओगोत्ति कालियत्थे उवगयाइं ॥ ७७७ ॥

व्याख्या—यच्च महाकल्पश्रुतं यानि च शेषाणि छेदसूत्राणि कल्पादीनि चरणकरणानुयोग इतिकृत्वा कालिकार्थे उपगतानीति गाथार्थः ॥

इयाणिं जहा देविंदवंदिया अज्जरक्खिया तहा भण्णइ—ते विहरंता महुरं गया, तत्थ भूतगुहाए वाणमंतरघरे ठिता । इतो य सक्को देवराया महाविदेहे सीमंधरसामिं पुच्छइ निगोदजीवे, जाहे निओयजीवा भगवया वागरिया ताहे

---

१ इदानीं यथा देवेन्द्रवन्दिता आर्यरक्षितास्तथा भण्यते—ते विहरन्तो मथुरां गताः, तत्र भूतगुहायां व्यन्तरगृहे स्थिताः । इतश्च शक्रो देवराजो महाविदेहेषु सीमन्धरस्वामिनं पृच्छति निगोदजीवान्, यदा निगोदजीवा भगवता व्याकृतास्तदा

भणइ–अत्थि पुण भारहे वासे कोइ जो निओए वागरेज्जा ?, भगवता भणितं–अत्थि अज्जरक्खितो, ततो माहणरूवेण सो आगतो, तं च थेररूवं करेऊण पव्वइएसु निग्गएसु अतिगतो, ताहे सो वंदित्ता पुच्छइ–भगवं ! मज्झ सरीरे महल्लवाही इमो, अहं च भत्तं पच्चक्खाएज्ज ततो जाणह मम केत्तियं आऊयं होज्जा ?, जविएहिं किर भणिया आऊसेढी, तत्थ उवउत्ता आयरिया जाव पेच्छंति आउं वरिससतमहियं दो तिन्नि वा, ताहे चिंतेइ–भारहो एस मणुस्सो न भवइ, विज्जाहरो वा वाणमंतरो वा, जाव दो सागरोवमाइं ठिती, ताहे भमुहाओ हत्थेहिं उक्खिवित्ता भणइ–सक्को भवाणं, ताहे सव्वं साहइ–जहा महाविदेहे मए सीमंधरसामी पुच्छितो, इहं चम्हि आगतो, तं इच्छामि सोउं निओयजीवे, ताहे से कहिया, ताहे तुट्ठो आपुच्छइ—वच्चामि ?, आयरिया भणंति–अच्छह मुहुत्तं, जाव संजता एन्ति, एत्ताहे दुक्कहा संजाता, थिरा भवंति जे चला, जहा एत्ताहेऽवि देविंदा एन्तित्ति, ततो सो भणति–जइ ते ममं पेच्छंति

---

१ भणति–अस्ति पुनर्भारते वर्षे कश्चित् यो निगोदान् व्याकुर्यात् ?, भगवता भणितम्–अस्ति आर्यरक्षितः, ततो ब्राह्मणरूपेण स आगतः, तच्च स्थविररूपं कृत्वा प्रव्रजितेषु निर्गतेषु अतिगतः, तदा स वन्दित्वा पृच्छति—भगवन् ! मम शरीरे महान् व्याधिरयम्, अहं च भक्तं प्रत्याख्यायां ततो ज्ञापयत मम कियदायुरस्ति ?, यविकैषु किल भणिता आयुःश्रेणिः, तत्रोपयुक्ता आचार्या यावत्पश्यन्ति आयुर्वर्षशतमधिकं द्वे त्रीणि वा, तदा चिन्तयति–भारत एष मनुष्यो न भवति, विद्याधरो वा व्यन्तरो वा, यावत् द्वे सागरोपमे स्थितिः, तदा भ्रुवौ हस्ताभ्यामुत्क्षिप्य भणति–शक्रो भवान्, तदा सर्वं कथयति–यथा महाविदेहेषु मया सीमन्धरस्वामी पृष्टः, इह चास्म्यागतः, तदिच्छामि श्रोतुं निगोदजीवान्, तदा तस्मै कथिताः, तदा तुष्ट आपृच्छति–व्रजामि ?, आचार्या भणन्ति–तिष्ठत मुहूर्तं, यावत्संयता आयान्ति, अधुना दुष्कृशा संजाता, स्थिरा भवन्ति ये चलाः, यथाऽधुनाऽपि देवेन्द्रा आयान्तीति, ततः स भणति–यदि ते मां पश्यन्ति.

तेणं चेव अप्पसत्तत्तणेण निदाणं काहिंति तो वच्चामि, ततो चिन्धं काउं वच्च, ततो सक्को तस्स उवस्सयस्स अण्णहुत्तं काउं दारं गतो, ततो आगता संजया पेच्छंति, कतो एयस्स दारं ?, आयरिएहिं वाहिरित्ता—इतो एह, सिठ्ठं च जहा सक्को आगतो, ते भणंति—अहो अम्हेहिं न दिट्ठो, कीस न मुहुत्तं धरितो ?, तं चेव साहइ—जहा अप्पसत्ता मणुया निदाणं काहिन्ति तो पाडिहेरं काऊण गतो, एवं ते देविंदवंदिया भवंति । ते कयाइ विहरंता दसपुरं गया, महुराए अकिरियावादी उट्ठितो, नत्थि माया नत्थि पिया एवमादिनाहियवादी, तहियं च नत्थि वाई, ताहे संघेण संघाडओ अज्जरक्खियसगासं पेसिओ, जुगप्पहाणा ते, ते आगंतूण तेसिं साहिंति, ते य महल्ला, ताहे तेहिं माउलो गोट्ठामहिलो पेसिओ, तस्स वादलद्धी अत्थि, तेण गंतूण सो वादी विणिग्गिहितो, पच्छा सावगेहिं गोट्ठामाहिलो धरितो, तत्थेव वासारत्तं ठितो । इतो य आयरिया चिंतंति—को गणहरो भवेज्जा ?, ताहे णेहिं दुब्बलियपूसमित्तो समक्खितो, जो पुण से सयणवग्गो तेसिं

---

१ तेनैवाल्पसत्त्वत्वेन निदानं करिष्यन्ति ततो व्रजामि, ततश्चिह्नं कृत्वा व्रज, ततः शक्रस्तस्य उपाश्रयस्यान्यतः कृत्वा द्वारं गतः, तत आगता. संयताः पश्यन्ति, कुतो द्वारमेतस्य ?, आचार्यैर्व्याहृताः—इत आयात, शिष्टं च यथा शक्र आगतवान्, ते भणन्ति—अहो अस्माभिर्न दृष्टः, कथं न मुहूर्त्तं धृतः, तदेव कथयति—यथाऽल्पसत्त्वा मनुजा निदानं करिष्यन्ति तत् प्रातीहार्यं कृत्वा गतः, एवं ते देवेन्द्रवन्दिता भवन्ति । ते कदाचित् विहरन्तो दशपुरं गताः, मथुरायामक्रियावादी उत्थितः, नास्ति माता नास्ति पिता एवमादिनास्तिकवादी, तत्र च नास्ति वादी, तदा संघेन संघाटक आर्यरक्षितसकाशं प्रेपितो, युगप्रधानास्ते, तौ आगत्य तेभ्यः कथयतः, ते च वृद्धाः, तदा तैर्मातुलो गोष्ठमाहिलः प्रेपितः, तस्य वादलब्धिरस्ति, तेन गत्वा स वादी विनिगृहीतः, पश्चात् श्रावकैः गोष्ठमाहिलो धृतः, तत्रैव वर्षारात्रं स्थितः । इतश्चाचार्याश्चिन्तयन्ति—को गणधरो भवेत् ?, तदा तैर्दुर्बलिकापुष्पमित्रः समाख्यातः ( निर्धारितः ), यः पुनस्तेषां स्वजनवर्गस्तस्य

गोट्ठामाहिलो फग्गुरक्खितो वाऽभिमतो, ततो आयरिया सब्बे सद्दावित्ता दिट्ठंतं करिंति–जहा तिण्णि कुडगा–निप्फावकुडो तेल्लकुडो घयकुडोत्ति, ते तिन्निवि हेट्ठाहुत्ता कता निप्फावा सव्वेऽवि णिंति, तेल्लमवि नीति, तत्थ पुण अवयवा लग्गंति, घतकुडे बहुं चेव लग्गइ, एवमेव अज्जो! अहं दुब्बलियपूसमित्तं प्रति सुत्तत्थतदुभएसु निप्फावकुडसमाणो जातो, फग्गुरक्खितं प्रति तेल्लकुडसमाणो, गोट्ठामाहिलं प्रति घतकुडसमाणो, अतो एस सुत्तेण य अत्थेण य उवगतो दुब्बलियपूसमित्तो तुब्भ आयरिओ भवउ, तेहिं पडिच्छितो, इयरोवि भणिओ–जहाऽहं वट्टिओ फग्गुरक्खियस्स गोट्ठामाहिलस्स य तहा तुम्हेहिं वट्टियव्वं, ताणिवि भणियाणि–जहा तुब्भे मम वट्टियाणि तहा एयस्स वट्टेज्जह, अविय–अहं कए वा अकए वा न रूसामि, एस न खमहित्ति, तो सुतरामेव एयस्स वट्टेज्जाह, एवं दोवि वग्गे अप्पाहेत्ता भत्तं पच्चक्खाइउं देवलोगं गता। गोट्ठामाहिलेणवि सुतं जहा–आयरिया कालगता, ताहे आगतो पुच्छइ–को गणहरो ठविओ?, कुडगदिट्ठंतो य सुतो, तओ सो वीसुं पडिस्सए ठाइऊणागतो

१ गोष्ठमाहिलः फल्गुरक्षितो वाऽभिमतः, तत आचार्याः सर्वान् शब्दयित्वा दृष्टान्तं कुर्वन्ति–यथा त्रयः कुटाः–निष्पावकुटस्तैलकुटो घृतकुट इति, ते त्रयोऽपि अर्वाङ्मुखीकृता निष्पावाः सर्वेऽपि निर्गच्छन्ति, तैलमपि निर्गच्छति, तत्र पुनरवयवा लगन्ति, घृतकुटे बह्वेव लगति, एवमेवार्याः! अहं दुर्बलिकापुष्पमित्रं प्रति सूत्रार्थतदुभयेषु निष्पावकुटसमानो जातः, फल्गुरक्षितं प्रति तैलकुटसमानः, गोष्ठमाहिलं प्रति घृतकुटसमानः, अत एव सूत्रेण चार्थेन चोपगतो दुर्बलिकापुष्पमित्रो युष्माकमाचार्यो भवतु, तैः प्रतीप्सितः, इतरोऽपि भणितः–यथाऽहं वृत्तः फल्गुरक्षिते गोष्ठमाहिले च तथा त्वयाऽपि वर्त्तितव्यं, तेऽपि भणिताः–यथा यूयं मयि वृत्तास्तथैतस्मिन् वर्त्तध्वम्, अपिच–अहं कृते वा अकृते वा नारुषमेव न क्षमिष्यते, ततः सुतरामेवैतस्मिन् वर्त्तध्वम्, एवं द्वावपि वर्गौ संदिश्य भक्तं प्रत्याख्याय देवलोकं गताः। गोष्ठमाहिलेनापि श्रुतं–यथा आचार्याः कालगताः, तदा आगतः पृच्छति–को गणधरः स्थापितः?, कुटदृष्टान्तश्च श्रुतः, ततः स पृथग् प्रतिश्रये स्थित्वा आगतः

तेसिं[1] सगासं, ताहे तेहिं सव्वेहिं अब्भुट्ठितो भणिओ य–इह चेव ठाहि, ताहे नेच्छइ, ताहे सो बाहिंठितो अण्णे वुग्गाहेइ, ते न सक्कंति वुग्गाहेउं। इतो य आयरिया अत्थपोरुसिं करेंति, सो न सुणइ, भणइ य–तुब्भेऽत्थ निप्पावयकुडगा, ताहे तेसु उट्ठिएसु विंझो अणुभासइ तं सुणेइ, अट्ठमे कम्मप्पवायपुव्वे कम्मं वण्णिज्जइ, जहा कम्मं वज्झइ, जीवस्स य कम्मस्स य कहं बंधो ?, एत्थ विचारे सो अभिनिवेसेण अन्नहा मन्नंतो परूविंतो य निण्हओ जाओत्ति ॥ अनेन प्रस्तावेन क एते निह्नवा इत्याशङ्काऽपनोदाय तान् प्रतिपिपादयिषुराह—

**बहुरय पएस अव्वत्तसमुच्छादुगतिगअबद्धिया चेव। सत्तेए णिण्हगा खलु तित्थंमि उ वद्धमाणस्स ॥७७८॥**

व्याख्या—'बहुरय'त्ति एकसमयेन क्रियाध्यासितरूपेण वस्तुनोऽनुत्पत्तेः प्रभूतसमयैश्चोत्पत्तेर्बहुषु समयेषु रताः—सक्ताः बहुरताः, दीर्घकालद्रव्यप्रसूतिप्ररूपिण इत्यर्थः १। 'पदेस' त्ति पूर्वपदलोपात् जीवप्रदेशाः प्रदेशाः, यथा महावीरो वीर इति, जीवः प्रदेशो येषां ते जीवप्रदेशाः निह्नवा, चरमप्रदेशजीवप्ररूपिण इति हृदयम् २। 'अवत्त' त्ति उत्तरपदलोपादव्यक्तमता अव्यक्ताः, यथा भीमसेनो भीम इति, व्यक्तं–स्फुटं, न व्यक्तमव्यक्तम्–अस्फुटं मतं येषां तेऽव्यक्तमताः, संयताद्यवगमे सन्दिग्धबुद्धय इति भावना ३। 'समुच्छेद' त्ति प्रसूत्यनन्तरं सामस्त्येन प्रकर्षच्छेदः समुच्छेदः–विनाशः, समुच्छे-

---

१ तेषां सकाशं, तदा नतैः सर्वैरभ्युत्थितो भणितश्च–इहैव तिष्ठ, तदा नेच्छति, तदा स बहिःस्थितोऽन्यान् व्युद्ग्राहयति, तान् न शक्नोति व्युद्ग्राहयितुम्। इतश्चाचार्या अर्थपौरुषीं कुर्वन्ति, स न शृणोति, भणति च–यूयमत्र निष्पावकुटसमानाः, तदा तेषूत्थितेषु विन्ध्योऽनुभाषते तत् शृणोति, अष्टमे कर्मप्रवादपूर्वे कर्म वर्ण्यते, यथा कर्म बध्यते, जीवस्य च कर्मणश्च कथं बन्धः ?, अत्र विचारे सोऽभिनिवेशेनान्यथा मन्यमानः प्ररूपयंश्च निह्नवो जातः इति।

दमधीयते तद्वेदिनो वा 'तदधीते तद्वेत्ती' ( पा० ४-२-५९ ) त्यण् सामुच्छेदाः, क्षणक्षयिभावप्ररूपका इति भावार्थः ४। 'दुग'त्ति उत्तरपदलोपादेकसमये द्वे क्रिये समुदिते द्विक्रियं तदधीयते तद्वेदिनो वा द्वैक्रियाः, कालाभेदेन क्रियाद्वयानुभवप्ररूपिण इत्यर्थः ५। 'तिग' त्ति त्रैराशिका जीवाजीवनोजीवभेदास्त्रयो राशयः समाहृताः त्रिराशि तत्प्रयोजनं येषां ते त्रैराशिकाः, राशित्रयख्यापका इति भावना ६। 'अबद्धिगा चेव' त्ति स्पृष्टं जीवेन कर्म न स्कन्धवद् बद्धमबद्धम्, अबद्धमेषामस्ति विदन्ति वेत्यबद्धिकाः, स्पृष्टकर्मविपाकप्ररूपका इति हृदयम् ७। 'सत्तेते निण्हया खलु तित्थंमि उ वद्धमाणस्स' त्ति सप्तैते निह्नवाः खलु, निह्नव इति कोऽर्थः ?—स्वप्रपञ्चतस्तीर्थकरभाषितं निह्नुतेऽर्थं पचाद्यचि ( नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः पा० ३-१-१३४ ) ति निह्नवो—मिथ्यादृष्टिः, उक्तं च—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥" खल्विति विशेषणे, किं विशिनष्टि ?—अन्ये तु द्रव्यलिङ्गतोऽपि भिन्ना बोटिकाख्या इति, तीर्थे वर्द्धमानस्य, पाठान्तरं वा—'एतेसिं निग्गमणं वोच्छामि अहाणुपुव्वीए' त्ति गाथार्थः ॥ साम्प्रतं येभ्यः समुत्पन्नास्तान् प्रतिपादयन्नाह—

**बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ। अव्वत्ताऽऽसाढाओ सामुच्छेयाऽऽसमित्ताओ ॥७७९॥**

व्याख्या—बहुरताः जमालिप्रभवाः, जमालेराचार्यात् प्रभवो येषां ते तथाविधाः, जीवप्रदेशाश्च तिष्यगुप्तादुत्पन्नाः, अव्यक्ता आषाढात्, सामुच्छेदाः अश्वमित्रादिति गाथार्थः ॥

**गंगाओ दोकिरिया छलुगा तेरासियाण उप्पत्ती। थेरा य गोट्ठमाहिल पुट्ठमबद्धं परूविंति ॥ ७८० ॥**

व्याख्या—गङ्गात् द्वैक्रियाः, षडुलूकात् त्रैराशिकानामुत्पत्तिः, स्थविराश्च गोष्ठामाहिलाः स्पृष्टमबद्धं प्ररूपयन्ति, कर्मेति गम्यते, 'पुट्ठमबद्धं परूविंसु' वा पाठान्तरं, ततश्चाबद्धिका गोष्ठामाहिलात् सञ्जाता इति गाथार्थः ॥ साम्प्रतं येषु पुरेषूत्पन्नास्त एते निह्नवास्तानि प्रतिपादयन्नाह—

**सावत्थी उसभपुरं सेयविया मिहिल उल्लुगातीरं । पुरिमंतरंजि दसपुर रहवीरपुरं च नगराइं ॥ ७८१ ॥**

व्याख्या—श्रावस्ती ऋषभपुरं श्वेतविका मिथिला, उल्लुकातीरं पुरमन्तरञ्जि दशपुरं रथवीरपुरं च नगराणि, निह्नवानां यथायोगं प्रभवस्थानानि, वक्ष्यमाणभिन्नद्रव्यलिङ्गमिथ्यादृष्टिबोटिकप्रभवस्थानरथवीरपुरोपन्यासो लाघवार्थ इति गाथार्थः ॥ भगवतः समुपजातकेवलस्य परिनिर्वृतस्य च कः कियता कालेन निह्नवः समुत्पन्न इति प्रतिपादयन्नाह—

**चोद्दस सोलस वासा चोद्दसवीसुत्तरा य दोण्णि सया । अट्ठावीसा य दुवे पंचेव सया उ चोयाला ॥ ७८२ ॥**

व्याख्या—चतुर्दशषोडशवर्षाणि तथा 'चोद्दसवीसुत्तरा य दोन्नि सय' त्ति चतुर्दशाधिके द्वे शते विंशत्युत्तरे च द्वे शते, वर्षाणामिति गम्यते, तथाऽष्टाविंशत्यधिके च द्वे शते, तथा पञ्चैव शतानि चतुश्चत्वारिंशदधिकानि, इति गाथार्थः ॥ अवयवार्थं तु भाष्यकार एव प्रतिपादयिष्यति ॥

**पंच सया चुलसीया छच्चेव सया णवोत्तरा होंति । णाणुप्पत्तीय दुवे उप्पण्णा णिव्वुए सेसा ॥ ७८३ ॥**

व्याख्या—पञ्च शतानि चतुरशीत्यधिकानि षट् चैव शतानि नवोत्तराणि भवन्ति । ज्ञानोत्पत्तेरारभ्य चतुर्दशषोडशवर्षाणि यावदतिक्रान्तानि तावदत्रान्तरे द्वावाद्यावुत्पन्नौ, उत्पन्ना निर्वृते भगवति, यथोक्तकाले चातिक्रान्ते शेषाः

खल्वव्यक्तादय इति, बोटिकप्रभवकालाभिधानं लाघवार्थमेवेति गाथार्थः ॥ अधुना सूचितमेवार्थं मूलभाष्यकृद् यथाक्रमं स्पष्टयन्नाह—

**चोद्दस वासाणि तया जिणेण उप्पाडियस्स णाणस्स। तो बहुरयाण दिट्ठी सावत्थीए समुप्पण्णा॥१२५॥(मू०भा०)**

व्याख्या—चतुर्दशवर्षाणि तदा 'जिनेन' वीरेणोत्पादितस्य ज्ञानस्य ततोऽत्रान्तरे बहुरतानां दृष्टिः श्रावस्त्यां नगर्यां समुत्पन्नेति गाथार्थः ॥ यथोत्पन्ना तथोपदर्शयन् सङ्ग्रहगाथामाह—

**जेट्ठा सुदंसण जमालिऽणोज्ज सावत्थितेंदुगुज्जाणे। पंचसया य सहस्सं ढंकेण जमालि मोत्तूणं॥१२६॥(मू०भा०)**

व्याख्या—कुंडपुरं नगरं, तत्थ जमाली सामिस्स भाइणिज्जो, सो सामिस्स मूले पंचसयपरिवारो पव्वइओ, तस्स भज्जा सामिणो दुहिता, तीसे नामाणि जेट्ठत्ति वा सुदंसणत्ति वा अणोज्जत्ति वा, सावि सहस्सपरिवारा अणुपव्वइया, जहा पण्णत्तीए तहा भाणियव्वं, एक्कारसंगा अहिज्जिया, सामिं आपुच्छिऊण पंचसयपरिवारो जमाली सावत्थीं गतो, तत्थ तेंदुगे उज्जाणे कोट्ठए चेइए समोसढो, तत्थ से अंतपंतेहिं रोगो उप्पन्नो, न तरइ निसन्नो अच्छिउं, तो समणे भणियाइओ—सेज्जासंथारयं करेह, ते काउमारद्धा ॥ अत्रान्तरे जमालिर्दाहज्वराभिभूतस्तान् विनेयान् पप्रच्छ—संस्तृतं न

१ कुण्डपुरं नगरं, तत्र जमालिः स्वामिनो भागिनेयः, स स्वामिनो मूले पञ्चशतपरीवारः प्रव्रजितः, तस्य भार्या स्वामिनो दुहिता, तस्या नामानि—ज्येष्ठेति वा सुदर्शनेति वा अनवद्येति वा, साऽपि सहस्रपरिवारा अनुप्रव्रजिता, यथा प्रज्ञप्तौ तथा भणितव्यम्, एकादशाङ्गान्यधीतानि, स्वामिनमापृच्छ्य पञ्चशतपरीवारो जमालिः श्रावस्तीं गतः, तत्र तिन्दुक उद्याने कोष्ठके चैत्ये समवसृतः, तत्र तस्यान्तप्रान्तै रोग उत्पन्नः, न शक्नोति निषण्णः स्थातुं, ततः श्रमणान् भणितवान्—शय्यासंस्तारकं कुरुत, ते कर्तुमारब्धाः.

वेति ?, ते उक्तवन्तः—संस्तृतमिति, स चोत्थितो जिगमिषुरर्धसंस्तृतं दृष्ट्वा क्रुद्धः, सिद्धान्तवचनं स्मृत्वा 'क्रियमाणं कृत'-मित्यादि कर्मोदयतो वितथमिति चिन्तयामास, 'क्रियमाणं कृत' मित्येतद् भगवद्वचनं वितथं, प्रत्यक्षविरुद्धत्वात्, अश्रावणशब्दवचनवत्, प्रत्यक्षविरुद्धता चास्यार्धसंस्तृतसंस्तारासंस्तृतदर्शनात्, ततश्च क्रियमाणत्वेन प्रत्यक्षसिद्धेन कृतत्वधर्मोऽपनीयत इति भावना, ततो यद् भगवानाह तदनृतं, किन्तु कृतमेव कृतमिति, एवं पर्यालोच्यैवमेव प्ररूपणां चकारेति, स चेत्थं प्ररूपयन् स्वगच्छस्थविरैरिदमुक्तः—हे आचार्य ! 'क्रियमाणं कृत' मित्यादि भगवद्वचनमवितथमेव, नाध्यक्षविरुद्धं, यदि क्रियमाणं क्रियाविष्टं कृतं नेष्यते ततः कथं प्राक् क्रियाऽनारम्भसमय इव पश्चादपि क्रियाऽभावे तदिष्यत इति, सदा प्रसङ्गात्, क्रियाऽभावस्याविशिष्टत्वात्, तथा यच्चोक्तं भवता 'अर्द्धसंस्तृतसंस्तारासंस्तृतदर्शनात्' तदप्ययुक्तं, यतो यद् यदा यत्राकाशदेशे वस्त्रमास्तीर्यते तत्तदा तत्रास्तीर्णमेव, एवं पाश्चात्यवस्त्रास्तरणसमये खल्वसावास्तीर्ण एव, विशिष्टसमयापेक्षीणि च भगवद्वचनानि, अतोऽदोष इति ॥ [1]एवं सो जाहे न पडिवज्जइ ताहे केइ असद्दहंता तस्स वयणं गया सामिसगासं, अण्णे तेणेव समं ठिया, पियदंसणावि, तत्थेव ढंको नाम कुंभगारो समणोवासओ, तत्थ ठिया, सा वंदितुं आगया, तंपि तहेव पण्णवेइ, सा य तस्साणुराएण मिच्छत्तं विपडिवण्णा, अज्जाणं परिकहेइ, तं च ढंकं भणति, सो जाणति—एसाऽवि विप्पडिवण्णा नाहवएणं, ताहे सो भणति—सम्मं अहं न याणामि एयं विसेसतरं, अण्णया

---

१ एवं स यदा न प्रतिपद्यते तदा केचिदश्रद्दधतस्तस्य वचनं स्वामिसकाशं गताः, अन्ये तेनैव समं स्थिताः, प्रियदर्शनाऽपि, तत्रैव ढङ्को नाम कुम्भकारः श्रमणोपासकः, तत्र स्थिता, सा वन्दितुमागता, तामपि तथैव प्रज्ञापयति, सा च तस्यानुरागेण मिथ्यात्वं विप्रतिपन्ना, आर्याभ्यः परिकथयति, तं च ढङ्कं भणति, स जानाति—एषाऽपि विप्रतिपन्ना नाथवचनेन, तदा स भणति—सम्यगहं न जानामि एतद् विशेषतरम्, अन्यदा

कयाई सज्झायपोरुसिं करेइ, ततो ढंकेण भायणाणि उवत्तंतेण ततोहुत्तो इंगालो छूढो, ततो तीसे संघाडीए एगदेसो दड्ढो, सा भणइ–सावय! किं ते संघाडी दड्ढा?, सो भणइ–तुब्भे चेव पण्णवेह जहा–दज्झमाणे अडड्ढे, केण तुब्भ संघाडी दड्ढा?, ततो सा संबुद्धा भणइ–इच्छामि संमं पडिचोयणा, ताहे सा गंतूण जमालिं पण्णवेइ बहुविहं, सो जाहे न पडिवज्जइ ताहे सा सेससाहुणो य सामिं चेव उवसंपण्णाइं, इतरोऽवि एगागी अणालोइयपडिक्कंतो कालगतो॥ एष सङ्ग्रहार्थः, अक्षराणि त्वेवं नीयन्ते, जेट्ठा सुदंसणा अणोज्जति जमालिघरणीए नामाइं, सावत्थीए नयरीए तेंदुगुज्जाणे जमालिस्स एसा दिट्ठी उप्पण्णा, तत्थ पंचसया य साहूणं सहस्सं च संजईणं, एतेसिं जे सतं ण पडिबुद्धं तं ढंकेण पडिबोहियंति वक्कसेसं, जमालिं मोत्तूणंति॥ अन्ये त्वेवं व्याचक्षते–जेट्ठा महत्तरिगा सुदंसणाऽभिहाणा भगवतो भगिणी, तीसे जमाली पुत्तो, तस्स अणोज्जा नाम भगवतो दुहिता भारिया॥ शेषं पूर्ववत्। गतः प्रथमो निह्नवः, साम्प्रतं द्वितीयं प्रतिपादयन्नाह—

---

१ कदाचित्स्वाध्यायपौरुषीं करोति, ततो ढङ्केन भाजनान्युद्वर्त्तयता ततोऽङ्गारः क्षिप्तः, ततस्तस्याः संघाट्या एकदेशो दग्धः, सा भणति–श्रावक! किं त्वया संघाटी दग्धा?, स भणति–यूयमेव प्रज्ञापयत यथा–दह्यमानमदग्धं, केन युष्माकं संघाटी दग्धा?, ततः सा संबुद्धा भणति–इच्छामि सम्यक् प्रतिचोदनां, तदा सा गत्वा जमालिं प्रज्ञापयति बहुविधं, स यदा न प्रतिपद्यते तदा सा शेषसाधवश्च स्वामिनमेवोपसंपन्नाः, इतरोऽपि एकाक्यनालोचितप्रतिक्रान्तः कालगतः। २ ज्येष्ठा सुदर्शना अनवद्येति जमालिगृहिण्या नामानि, श्रावस्त्यां नगर्यां तिन्दुकोद्याने जमालेरेषा दृष्टिरुत्पन्ना, तत्र पञ्चशतानि च साधूनां सहस्रं च संयतीनां, एतेषां ये स्वयं न प्रतिबुद्धास्ते ढङ्केन प्रतिबोधिता इति वाक्यशेषः, जमालिं मुक्त्वेति। अन्ये त्वेवं व्याचक्षते–ज्येष्ठा–महत्तरा सुदर्शनाभिधाना भगवतो भगिनी, तस्या जमालिः पुत्रः, तस्य अनवद्या नाम भगवतो दुहिता भार्या।

सोलस वासाणि तया जिणेण उप्पाडियस्स णाणस्स । जीवपएसियदिट्ठी उसभपुरंमी समुप्पण्णा ॥१२७॥ (भा०)

व्याख्या—षोडश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य जीवप्रदेशिकदृष्टिस्तत ऋषभपुरे समुत्पन्ना इति गाथार्थः ॥ कथमुत्पन्ना ? रायगिहं नगरं गुणसिलयं चेइयं, तत्थ वसू नामायरिओ चोद्दसपुव्वी समोसढो, तस्स सीसो तीसगुत्तो नाम, सो आयप्पवायपुव्वे इमं आलावयं अज्झावेइ—एगे भंते ! जीवपएसे जीवेत्ति वत्तव्वं सिया ?, नो इणमट्ठे समट्ठे, एवं दो जीवपएसा तिण्णि संखेज्जा असंखेज्जा वा, जाव एगेणावि पदेसेण ऊणो णो जीवोत्ति वत्तव्वं सिया, जम्हा कसिणे पडि-पुण्णे लोगागासपदेसतुल्लपएसे जीवेत्ति वत्तव्व' मित्यादि, एवमज्झाविंतो मिथ्यात्वोदयतो व्युत्थितः सन्नित्थमभिहितवान्—यद्येकादयो जीवप्रदेशाः खल्वेकप्रदेशहीना अपि न जीवाख्यां लभन्ते, किन्तु चरमप्रदेशयुक्ता एव लभन्त इति, ततः स एवैकः प्रदेशो जीव इति, तद्भावभावित्वात् जीवत्वस्येति, स खल्वेवं प्रतिपादयन् गुरुणोक्तो—नैतदेवं, जीवाभावप्रस-ङ्गात्, कथम् ?, भवदभिमतोऽन्त्यप्रदेशोऽप्यजीवः, अन्यप्रदेशतुल्यपरिमाणत्वात्, प्रथमादिप्रदेशवत्, प्रथमादिप्रदेशो वा जीवः, शेषप्रदेशतुल्यपरिमाणत्वाद्, अन्त्यप्रदेशवत्, न च पूरण इतिकृत्वा तस्य जीवत्वं युज्यते, एकैकस्य पूरणत्वा-विशेषाद्, एकमपि विना तस्यासम्पूर्णत्वमित्येवमप्युक्तो यदा न प्रतिपद्यते ताहे से काउस्सग्गो कतो, एवं सो बहूहिं

१ राजगृहं नगरं गुणशीलं चैत्यं, तत्र वसुनामा आचार्यश्चतुर्दशपूर्वी समवसृतः, तस्य शिष्यस्तिष्यगुप्तो नाम, स आत्मप्रवादपूर्वे इममालापकं अध्येति—एको भदन्त ! जीवप्रदेशो जीव इति वक्तव्यं स्यात् ?, नैषोऽर्थः समर्थः, एवं द्वौ जीवप्रदेशौ त्रयः संख्येया असंख्येया वा, यावदेकेनापि प्रदेशेनोनो न जीव इति वक्तव्यं स्यात्, यस्मात् कृत्स्नप्रतिपूर्णलोकाकाशप्रदेशतुल्यप्रदेशो जीव इति वक्तव्यं" एवमधीयानः । २ तदा तस्य कायोत्सर्गः कृतः, एवं स बहुभिर-

असब्भावुब्भावणाहिं मिच्छत्ताभिनिवेसेण य अप्पाणं च परं च तदुभयं च वुग्गाहेमाणो वुप्पाएमाणो गतो आमलकप्पं नगरिं, तत्थ अंबसालवणे ठितो, तत्थ मित्तसिरी नाम समणोवासओ, सो जाणइ–जहेस निण्हओ, अण्णया कयाइ तस्स संखडी जाता, ताहे तेण निमंतिओ–तुब्भेहिं सयमेव घरं आगंतव्वं, ते गता, ताहे तस्स निविट्ठस्स विउला खज्जगविही नीणिता, ताहे सो ताओ एक्केक्काओ खंडं खंडं देइ, एवं कूरस्स कुसणस्स वत्थस्स, पच्छा पादेसु पडितो, सयणं च भणइ–एह वंदह, साहू पडिलाभिया, अहो अहं धण्णो सपुण्णो जं तुब्भे मम घरं सयमेवागता, ताहे ते भणंति–किं धरिसियाओ अम्हे एवं तुमे ?, सो भणति–ससिद्धंतेण तुम्हे मया पडिलाभिया, जइ नवरं वद्धमाणसामिस्स तणएण सिद्धंतेण पडिलाभेमि, तत्थ सो संबुद्धो भणइ–इच्छामि अज्जो ! सम्मं पडिचोयणा, ताहे पच्छा सावएण विहिणा पडिलाभितो, मिच्छामि दुक्कडं च कतं, एवं ते सव्वे संबोहिया, आलोइय पडिक्कंता विहरंति ॥ अमुमेवार्थमुपसंजिहीर्षुराह—

---

1 असद्भावोद्भावनाभिर्मिथ्यात्वाभिनिवेशेन चात्मानं परं च तदुभयं च व्युद्ग्राहयन् व्युत्पादयन् गत आमलकल्पां नगरीं, तत्र आम्रशालवने स्थितः, तत्र मित्रश्रीर्नाम श्रमणोपासकः, स जानाति–यथैष निह्नवः, अन्यदा कदाचित् तस्य (गृहे) संखडी जाता, तदा तेन निमन्त्रितः–युष्माभिः स्वयमेव गृहमागन्तव्यं, ते गताः, तदा तस्य निविष्टस्य विपुलः खाद्यकविधिरानीतः, तदा स तस्मात् एकैकस्मात् खण्डं खण्डं ददाति, एवं कूरस्य कुशिकस्य (व्यञ्जनस्य) वस्त्रस्य, पश्चात्पादयोः पतितः, स्वजनं च भणति–आगत वन्दध्वं, साधवः प्रतिलाभिताः, अहो अहं धन्यः सपुण्यो यद्यूयं स्वयमेव मम गृहमागताः, तदा ते भणन्ति–किं धर्षिताः स्मो वयमेवं त्वया ?, स भणति–स्वसिद्धान्तेन यूयं मया प्रतिलाभिताः, यदि परं वर्धमानस्वामिसत्केन सिद्धान्तेन प्रतिलम्भयामि, तत्र स सम्बुद्धो भणति–इच्छाम्यार्य ! सम्यक् प्रतिचोदना, तदा पश्चात् श्रावकेन विधिना प्रतिलम्भितो, मिथ्या मे दुष्कृतं च कृतम्, एवं ते सर्वे संबोधिताः, आलोचितप्रतिक्रान्ता विहरन्ति।

रायगिहे गुणसिलए वसु चोद्दसपुव्वि तीसगुत्ताओ। आमलकप्पा णयरी मित्तसिरी कूरपिंडाई ॥ १२८॥(भा०)

व्याख्या—अस्याः प्रपञ्चार्थ उक्त एव, अक्षरगमनिका तु उसभंपुरंति वा रायगिहंति वा एगट्ठा, तत्थ रायगिहे गुणसिलए उज्जाणे वसु चोद्दसपुव्वी आयरिओ समोसढो, तस्स सीसाओ तीसगुत्ताओ एसा दिट्ठी समुप्पण्णा, सो मिच्छत्ताभिभूओ आमलकप्पा नाम नयरी तं गओ, मित्तसिरी सावओ, तेण कूरपुवगादि [देशीयवचनत्वात् कूरसिक्थादिनेत्यर्थः] दिट्ठंतेहिं पडिवोहिउत्ति ॥ गतो द्वितीयो निह्नवः, साम्प्रतं तृतीयं प्रतिपादयन्नाह—

चोद्दा दोवाससया तइया सिद्धिं गयस्स वीरस्स। अव्वत्तयाण दिट्ठी सेयवियाए समुप्पन्ना ॥ १२९ ॥ ( भा० )

व्याख्या—चतुर्दशाधिके द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य ततोऽव्यक्तकदृष्टिः श्वेतव्यां नगर्यां समुत्पन्नेति गाथार्थः ॥ कथमुत्पन्ना ?—सेयवियाए नयरीए पोलासे उज्जाणे अज्जासाढा नामायरिया समोसढा, तेसिं सीसा वहवे आगाढजोगं पडिवन्ना, स एवायरिओ तेसिं वायणायरिओ, अन्नो तत्थ नत्थि, ते य रत्तिं हिययसूलेण मया सोहम्मे नलिणिगुम्मे विमाणे देवा उववन्ना, ओहिं पउंजंति, जाव पेच्छंति तं सरीरगं, ते य साहू आगाढजोवाही, तेवि न

---

१ ऋषभपुरमिति वा राजगृहमिति वा एकार्थौ, तत्र राजगृहे गुणशील उद्याने वसुश्चतुर्दशपूर्वी आचार्यः समवसृतः, तस्य शिष्यात्तिष्यगुप्तात् एषा दृष्टिः समुत्पन्ना, स मिथ्यात्वाभिभूत आमलकल्पा नाम नगरी तां गतः, मित्रश्रीः श्रावकः, तेन कूरसिक्थादिदृष्टान्तैः प्रतिबोधित इति। २ श्वेतविकायां नगर्यां पोलासमुद्यानमार्याषाढा नाम आचार्याः समवसृताः, तेषां शिष्या बहव आगाढयोगं प्रतिपन्नाः, स एवाचार्यस्तेषां वाचनाचार्यः, अन्यस्तत्र नास्ति, ते च रात्रौ हृदयशूलेन मृताः सौधर्मे नलिनीगुल्मे विमाने देवा उत्पन्नाः, अवधिं प्रयुञ्जन्ति, यावत्प्रेक्षन्ते तच्छरीरकं, ते च साधव आगाढयोगवाहिनस्तेऽपि न

थाणंति–जहा आयरिया कालगता, ताहे तं चेव सरीरगं अणुप्पविसित्ता ते साहुणो उट्ठवेंति, वेरत्तियं करेह, एवं तेण तेसिं दिव्वप्पभावेण लहुं चेव सारियं, पच्छा सो ते भणइ–खमह भंते ! जं भे मए अस्संजएण वंदाविया, अहं अमुगदिवसे कालगतो, तुज्झं अणुकंपाए आगतो, एवं सो खामेत्ता पडिगतो, तेवि तं सरीरगं छड्डेऊण चिंतेंति–एच्चिरं कालं अस्संजतो वंदितो, ततो ते अवत्तभावं भावेंति–को जाणइ किं साहू देवो वा ? तो न वंदणिज्जोत्ति । होज्जासंजतनमणं होज्ज मुसावायममुगोत्ति ॥ १ ॥ थेरवयणं जदि परे संदेहो किं सुरोत्ति । साहुत्ति देवे कहं न संका किं सो देवो अदेवोत्ति ॥ २ ॥ तेण कहिएत्ति व मती देवोऽहं रूवदरिसणाओ य । साहुत्ति अहं कहिए समाणरूवंमि किं संका ? ॥ ३ ॥ देवस्स व किं वयणं सच्चंति न साहुरूवधारिस्स । न परोप्परंपि वंदह जं जाणंतावि जययोत्ति ॥ ४ ॥ एवं भणणमाणावि जाहे ण पडिवज्जंति ताहे उग्घाडिया, ततो विहरंता रायगिहं गया, तत्थ मोरियवंसपसूओ बलभद्दो नाम राया समणोवासओ,

१ जानन्ति–यथा आचार्याः कालगताः, तदा तदेव शरीरमनुप्रविश्य तान् साधूनुत्थापयन्ति, वैरात्रिकं कुरुत, एवं तेन तेषां दिव्यप्रभावेण लघ्वेव सारितं, पश्चात्स तान् भणति–क्षमध्वं भदन्ताः ! यन्मया भवन्तोऽसंयतेन वन्दिताः, अहममुकस्मिन् दिवसे कालगतः, युष्माकमनुकम्पया आगतः, एवं स क्षमयित्वा प्रतिगतः, तेऽपि तच्छरीरकं त्यक्त्वा चिन्तयन्ति–इयच्चिरं कालमसंयतो वन्दितः, ततस्तेऽव्यक्तभावं भावयन्ति–को जानाति किं साधुर्देवो वा ?, ततो न वन्दनीय इति । भवेदसंयतनमनं भवेन्मृषावादोऽमुक इति ॥ १ ॥ स्थविरवचनं यदि परस्मिन् संदेहः किं सुर इति ॥ साधुरिति देवे कथं न शङ्का ? किं स देवोऽदेव इति ॥ २ ॥ तेन कथित इति च मतिर्देवोऽहं रूपदर्शनाच्च । साधुरहमिति कथिते समानरूपे का शङ्का ? ॥ ३ ॥ देवस्यैव किं वचनं सत्यमिति न साधुरूपधारिणः । न परस्परमपि वन्दध्वं यज्जानाना अपि यतय इति ॥ ४ ॥ एवं भण्यमाना अपि यदा न प्रतिपद्यन्ते तदोद्घाटिताः, ततो विहरन्तो राजगृहं गताः, तत्र मौर्यवंशप्रसूतो बलभद्रो नाम राजा श्रमणोपासकः,

तेण ते आगमिया—जहा इहमागतत्ति, ताहे तेण गोहा आणत्ता—वच्चह गुणसिलगातो पव्वइयए आणेह, तेहिं आणीता, रण्णा पुरिसा आणत्ता—सिग्घं एते कडगमद्देण मारेह, ततो हत्थी कडगेहि य आणीएहिं ते पभणिया—अम्हे जाणामो जहा तुमं सावओ, तो कहं अम्हे माराविहि ?, राया भणइ—तुम्हे चोरा णु चारिया णु अभिमरा णु ?, को जाणइ ?, ते भणंति—अम्हे साहुणो, राया भणइ—किह तुब्भे समणा ?, जं अवत्ता परोप्परस्सवि न वंदह, तुब्भे समणा वा चारिया वा ?, अहंपि सावगो वा न वा ?, ताहे ते संवुद्धा लज्जिया पडिवन्ना निस्संकिया जाया, ताहे अंबाडिया खरेहिं मउएहि य, संबोहणट्ठाए तुब्भं इमं मए एयाणुरूवं कयं, मुक्का खामिया य ॥ अमुमेवार्थमुपसंहरन्नाह—

**सेयवि पोलासाढे जोगे तद्दिवसहिययसूले य । सोहंमि णलिणिगुम्मे रायगिहे मुरिय बलभद्दे ॥ १३० ॥ (भा०)**

व्याख्या—श्वेतव्यां नगर्यां पोलासे उद्याने आषाढाख्य आचार्यः, योग उत्पादिते सति तद्दिवस एव हृदयशूले च, उत्पन्ने मृत इति वाक्यशेषः, स च सौधर्मे कल्पे नलिनिगुल्मे विमाने, समुत्पद्यावधिना पूर्ववृत्तान्तमवगम्य विनेयानां

---

१ तेन ते ज्ञाता—यथेहागता इति, तदा तेन आरक्षा आज्ञप्ता—व्रजत गुणशीलात् प्रव्रजितान् आनयत, तैरानीताः, राज्ञा पुरुषा आज्ञप्ताः—शीघ्रमेतान् कटकमर्देन मर्दयत, ततो हस्तिषु कटकेषु चानीतेषु ते प्रभणिताः—वयं जानीमो यथा त्वं श्रावकः, तत् कथं अस्मान् मारयिष्यसि ?, राजा भणति—यूयं चौरा नु चारिका नु अभिमरा नु ?, को जानाति ?, ते भणन्ति—वयं साधवः, राजा भणति—कथं यूयं श्रमणाः ?, यदव्यक्ताः परस्परमपि न वन्दध्वं, यूयं श्रमणा वा चारिका वा ? अहमपि श्रावको वा न वा ?, तदा ते संवुद्धा लज्जिताः प्रतिपन्ना निश्शङ्किता जाताः, तदा निर्भर्त्सिताः खरैर्मृदुभिश्च, संबोधनार्थाय युष्माकं मयेदमेतदनुरूपं कृतं, मुक्ताः क्षामिताश्च.

योगान् सारितवानिति वाक्यशेषः, सुरलोकगते तस्मिन्नव्यक्तमतास्तद्विनेया विहरन्तो राजगृहे नगरे मौर्ये बलभद्रो राजा, तेन सम्बोधिता इति वाक्यशेषः, एवमन्या अपि सङ्ग्रहगाथा स्वबुद्ध्या व्याख्येया इति। उक्तस्तृतीयो निह्नवः, चतुर्थव्याचिख्यासयाऽऽह—

**वीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स। सामुच्छेइयदिट्ठी मिहिलपुरीए समुप्पण्णा ॥ १३१ ॥ (भा०)**

व्याख्या—विंशत्युत्तरे द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य ततोऽत्रान्तरे सामुच्छेदिकदृष्टिः मिथिलापुर्यां समुत्पन्नेति गाथार्थः ॥ यथोत्पन्ना तथा प्रदर्शयन्नाह—

**मिहिलाए लच्छिघरे महगिरिकोडिण्ण आसमित्ते य। णेउणियाणुप्पवाए रायगिहे खंडरक्खा य ॥१३२॥ (भा०)**

व्याख्या—मिहिलाए नयरीए लच्छिहरे चेतिए महागिरीआयरियाण कोडिण्णो नाम सीसो ठितो, तस्स आसमित्तो सीसो, सो अणुप्पवादपुव्वे नेउणियं वत्थुं पढति, तत्थ छिण्णछेदणयवत्तव्वयाए आलावगो जहा पडुप्पन्नसमयनेरइया वोच्छिज्जिस्संति, एवं जाव वेमाणियत्ति, एवं बिइयादिसमएसु वत्तव्वं, एत्थ तस्स वितिगिच्छा जाया—जहा सव्वे पडुप्पन्नसमयसंजाता वोच्छिज्जिस्संति—'एवं च कतो कम्माणुवेयणं सुकयदुक्कयाणंति ?। उप्पादाणंतरतो सव्वस्स विणाससब्भावा ॥१॥

---

१ मिथिलायां नगर्यां लक्ष्मीगृहे चैत्ये महागिर्याचार्याणां कौण्डिन्यो नाम शिष्यः स्थितः, तस्याश्वमित्रः शिष्यः, सोऽनुप्रवादपूर्वे नैपुणिकं वस्तु पठति, तत्र छिन्नच्छेदनकवक्तव्यतायामालापको यथा—प्रत्युत्पन्नसमयनैरयिका व्युच्छेत्स्यन्ति, एवं यावद्वैमानिका इति, एवं द्वितीयादिसमयेष्वपि वक्तव्यम्, अत्र तस्य विचिकित्सा जाता—यथा सर्वे प्रत्युत्पन्नसमयसंजाता व्युच्छेत्स्यन्ति—एवं च कुतः कर्मानुवेदनं सुकृतदुष्कृतानामिति। उत्पादानन्तरं सर्वस्य विनाशसद्भावात् ॥ १ ॥

तंमि गुडसत्थे णयरे वड्डुकरओ वाणमंतरो जाओ, तेण तत्थ साहूणो सवे पारद्धा, तण्णिमित्तं अज्जखउडा तत्थ गया, तेण गंतूण तस्स कण्णेसु उवाहणाओ ओलइयाओ, देवकुलिओ आगओ पेच्छइ, गओ, जणं घेत्तूण आगओ, जओ जओ उग्घाडिज्जति तओ तओ अहिट्ठाणं, रण्णो कहियं, तेणवि दिट्ठं, कट्ठलट्ठीहिं पहओ, सो अंतेउरे संकामेइ, मुक्को, पट्टियओ, वड्डुकरओ अन्नाणि य वाणमंतराणि पच्छओ उप्फिडंताणि भमंति, लोगो पायपडिओ विन्नवेइ—मुयाहित्ति, तस्स देवकुले महाविस्संदा दोन्नि महइमहालियाओ पाहाणमईओ दोणीओ, ताओ सो वाणमंतराणि य खडखडाविंताणि पच्छओ हिंडंति, जणेण विन्नविओ, सो वाणमंतराणि य मुक्काणि, ताओ दोणीओवि आरओ आणित्ता छड्डियाणि, जो मम सरिसो आणेहितित्ति मुक्काओ। सो य से भाइणिज्जो आहारगेहीए भरुयकच्छे तच्चणिओ जाओ, तस्स विज्जापहावेण पत्ताणि आगासेणं उवासगाणं घरेसु भरियाणि एंति, लोगो बहुओ तम्मुहो जाओ, संघेण अज्जखउडाण पेसियं, आगआ, अक्खायं

---

१ तस्मिन् गुडशस्त्रे नगरे वृद्धकरो व्यन्तरो जातः, तेन तत्र साधवः सर्वे प्रारब्धाः (उपसर्गयितुं), तन्निमित्तमार्यखपुटास्तत्र गताः, तेन गत्वा तस्य कर्णयोरुपानहाववलगितौ, देवकुलिक आगतः पश्यति, गतः, जनं गृहीत्वाऽऽगतः, यतो यत उद्घाट्यते ततस्ततोऽधिष्ठानं, राज्ञे कथितं, तेनापि दृष्टं, काष्ठयष्टिभिः प्रहृतः, सोऽन्तःपुरे संक्रमयति, मुक्तः, पृष्ठतो वृद्धकरोऽन्ये च व्यन्तराः पृष्ठत उत्स्फिटन्तो भ्राम्यन्ति, लोकः पादपतितो विज्ञपयति—मुञ्चेति, तस्य देवकुले महाविस्यन्दे द्वे द्रोण्यौ अतिमहत्यौ पाषाणमय्यौ, ते स व्यन्तराश्च खटत्कारं कुर्वन्तः पश्चात् हिण्डन्ते, जनेन विज्ञप्तः, स व्यन्तराश्च मुक्ताः, ते द्रोण्यौ अपि अर्वाक् आनीय त्यक्ते, यो मम सदृश आनेष्यतीति मुक्ते। स च तस्य भागिनेय आहारगृद्ध्या भृगुकच्छे तच्चनीको जातः, तस्य विद्याप्रभावेण पात्राणि आकाशेनोपासकानां गृहेषु भृतान्यायान्ति, लोको बहुस्तन्मुखो जातः, संघेनार्यखपुटेभ्यः प्रेषितम्, आगताः, आख्यातम्.

एरिसी अकिरिया उद्वितत्ति, तेसिं कप्पराणं अग्गतो मत्तओ सो तेण वत्थेण उच्छाइयओ जाइ, टोप्परिया गया, सव्वपवरे आसणे ठिया, अन्नत्थ कयाइ एइ, भरिया २ आगया, आयरिएहिं अंतरा आगासे पहाणो ठविओ, सव्वाणि भिण्णाणि, सो चेल्लओ भीओ नट्ठो, आयरिया तत्थ आगया, तच्चणिया भणंति–एहि बुद्धस्स पाए पडिहित्ति, आयरिया भणंति–एहि पुत्ता! सुद्धोदणसुया वंद ममं, बुद्धो निग्गओ, पाएसु पडिओ, तत्थ थूभो दारे, सोऽवि भणिओ–एहि पाएहिं पडाहित्ति पडिओ, उट्ठेहित्ति भणिओ अद्धोणओ ठिओ, एवं चेव अच्छहित्ति भणिओ ठ्ठिओ पासल्लिओ, नियंठणामिओ नामेण सो जाओ। एस एवंविहो विज्जासिद्धोत्ति ॥ साम्प्रतं मन्त्रसिद्धं सनिदर्शनमेवोपदर्शयति—

**साहीणसव्वमंतो बहुमंतो वा पहाणमंतो वा। नेओ समंतसिद्धो खंभागरिसुव्व साइसओ ॥ ९३३ ॥**

व्याख्या—स्वाधीनसर्वमन्त्रो बहुमन्त्रो वा मन्त्रेषु सिद्धो मन्त्रसिद्धः, प्रधानमन्त्रो वेति प्रधानैकमन्त्रो वेति ज्ञेयः, स मन्त्रसिद्धः, क इव?–स्तम्भाकर्षवत् सातिशय इति गाथाक्षरार्थः ॥ ९३३ ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—

---

१ एतादृशी अक्रियोत्थितेति, तेषां कर्पराणामग्रतो मात्रकः स तेन वस्त्रेणाच्छादितो याति, टोप्परिका गता, सर्वप्रवरे आसने स्थिता, अन्यत्र कदाचिदायाति, भृतानि२आगतानि, आचार्यैरन्तराऽऽकाशे पाषाणः स्थापितः, सर्वाणि भिन्नानि, स क्षुल्लकः (शिष्यः) भीतो नष्टः, आचार्यास्तत्रागताः, तच्चनीका भणन्ति–आयात बुद्धस्य पादयोः पततेति, आचार्या भणन्ति–आयाहि पुत्र! शुद्धोदनसुत! वन्दस्व मां, बुद्धो निर्गतः, पादयोः पतितः, तत्र स्तूपो द्वारे, सोऽपि भणितः–एहि पादयोः पतेति पतितः, उत्तिष्ठेति भणितः अर्धावनतः स्थितः, एवमेव तिष्ठेति भणितः स्थितः पार्श्वावनतो, निर्ग्रन्थनामित इति नाम्ना स जातः। एष एवंविधो विद्यासिद्ध इति।

एगंमि णयरे उक्किट्ठसरीरा रण्णा विसयलोलुएण संयई गहिया, संघसमवाए एगेण मंतसिद्धेण रायंगणे खंभा अन्छंति ते अभिमंतिया, आगासेणं उप्पाइया खडखडिंति, पासायखंभावि चलिया, भीएण मुक्का, संघो खामिओ। एसेवंविहो मंतसिद्धोत्ति भण्णइ ॥ साम्प्रतं सदृष्टान्तं योगसिद्धं प्रतिपिपादयिषुराह—

सव्वेवि दव्वजोगा परमच्छेरयफलाऽहवेगोऽवि। जस्सेह हुज्ज सिद्धो स जोगसिद्धो जहा समिओ ॥ ९३४ ॥

व्याख्या—'सर्वेऽपि' कार्त्स्न्येन द्रव्ययोगाः 'परमाश्चर्यफलाः' परमाद्भुतकार्याः, अथवैकोऽपि यस्येह भवेत् सिद्धः स योगसिद्धः, योगेषु योगे वा सिद्धो योगसिद्ध इति, सातिशय एव, (यथा) समिता इति गाथाक्षरार्थः ॥ ९३४ ॥ भावार्थः कथानकगम्यः, तच्चेदम्—आभीरविसए कण्हा(ण्णा)ए बेन्नाए य णईए अंतरे तावसा परिवसंति, तत्थेगो पादुगालेवेणं पाणिये चक्कमंतो भमइ एति जाइ य, लोगो आउट्टो, सड्ढा हीलिज्जंति, अज्जसमिया वइरसामिस्स माउलगा विहरंता आगया, सड्ढा उवट्ठिया अकिरियत्ति, आयरिया नेच्छंति, भणंति—अज्जो! किन्न ठाह?, एस जोगेण केणवि मक्खेइ, तेहिं अट्ठापयं लद्धं, आणीओ, अम्हेऽवि दाणं देमुत्ति, अह सो सावगो भणइ—भगवं! पाया धोवंतु, अम्हेवि अणुग्गहिया होमो

१ एकस्मिन् नगरे उत्कृष्टशरीरा राज्ञा विषयलोलुपेन संयती गृहीता, संघसमवाये एकेन सिद्धमन्त्रेण राजाङ्गणे स्तम्भास्तिष्ठन्ति तेऽभिमन्त्रिताः आकाशेनोत्पाटिताः खटत्कारं कुर्वन्ति, प्रासादस्तम्भा अपि चलिताः, भीतेन मुक्ता संघः क्षामितः। एष एवंविधो मन्त्रसिद्ध इति भण्यते। २ आभीरविषये कृष्णा(कन्या)या बेन्नायाश्च नद्योरन्तरा तापसाः परिवसन्ति, तत्रैकः पादुकालेपेन पानीये चंक्रम्यमाणो भ्रमति आयाति याति च, लोक आवर्जितः, श्राद्धा हील्यन्ते, आर्यसमिता वज्रस्वामिनो मातुला विहरन्त आगताः, श्राद्धा उपस्थिता अक्रियेति, आचार्या नेच्छन्ति, भणन्ति—आर्याः! किं न प्रतीक्षध्वम्?, एष योगेन केनापि म्रक्षयति, तैरर्थपदं लब्धम्, आनीतः, वयमपि दानं दद्म इति, अथ स श्रावको भणति—भगवन्! पादौ प्रक्षालयतां, वयमप्यनुगृहीता भवामः,

[1]अनिच्छंतस्स पाया पाउगाओ य धोयाओ, गओ पाणिए निव्वुड्डो, *उक्किट्ठी कया, एवं डंभएहिं लोगो खज्जइत्ति, आयरिया निग्गया, जोगं पक्खित्ता णई भणिया—हे विन्ने ! तटा देहि एहि पुत्ता ! परिमं कूलं जामि, दोवि तडा मिलिया, गया, ते तावसा पव्वइया वंभद्दीवगत्तत्थवा वंभदीवगा जाया। एस एवंविहो जोगसिद्धोत्ति ॥ अधुनाऽऽगमार्थसिद्धौ प्रतिपादयति—

आगमसिद्धो सव्वंगपारओ गोअमुव्व गुणरासी। पउरत्थो अत्थपरो व मम्मणो अत्थसिद्धत्ति ॥९३५॥

व्याख्या—आगमसिद्धः 'सर्वाङ्गपारगः' द्वादशाङ्गविदितभावः, अयं च महातिशयवानिति, यत उक्तं—'संखाइए[2] उ भवे साइइ जं वा परो उ पुच्छिज्जा। न य णं अणाइसेसी वियाणई एस छउमत्थो ॥ १ ॥' इत्यादि, अयं च गौतम इव गुणराशिरिति। अत्र च भूयांसि सातिशयचेष्टितान्युदाहरणानीति, तथा 'प्रचुरार्थः' प्रभूतार्थः अर्थपरो वा, तन्निष्ठ इत्यर्थः, अर्थसिद्ध इति तदतिशययोगादेव, मम्मणवदिति गाथाक्षरार्थः ॥ ९३५ ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्—[3]तत्थागमसिद्धो किर सयंभुरमणेऽवि मच्छगाईया। जं चिट्ठंति स भगवं उवउत्तो जाणई तयंपि ॥ १ ॥ अत्थसिद्धो पुण रायगिहे

---

१ अनिच्छतः पादौ पादुके च धौते, गतः पानीये निब्रूडितः, उत्कृष्टिः (निन्दा) कृता, एवं दम्भैः लोकः खाद्यत इति, आचार्या निर्गताः, योगं प्रक्षिप्य नदी भणिता—हे वेन्ने ! तटमर्पय एहि पुत्रि ! पूर्वं कूलं यामि, द्वावपि तटौ मिलितौ, गताः, ते तापसाः प्रव्रजिताः ब्रह्मद्वीपवास्तव्या ब्रह्मद्वीपका जाताः। एष एवंविधो योगसिद्ध इति। २ संख्यातीतांस्तु भवान्कथयति यद्वा परस्तु पृच्छेत्। नैवानतिशयी विजानाति एष छद्मस्थ. ॥ १ ॥ ३ तत्रागमसिद्धः किल स्वयम्भूरमणेऽपि मत्स्याद्याः। यच्चेष्टयन्ति स भगवानुपयुक्तो जानाति तकदपि ॥ १ ॥ अर्थसिद्धः पुना राजगृहे. * कलकलः + देहीत्यन्तं न प्र०

णयरे मम्मणोत्ति, तेण महया किलेसेण अइबहुगं दविणजायं मेलियं, सो तं ण खायइ ण पिवइ, पासाउवरिं चडणेण अणेगकोडिनिम्मायगब्भसारो कंचणमओ दिव्वरयणपज्जत्तो वरवइरसिंगो महंतो एगो बलद्दो काराविओ, बीओ य आढत्तो, सोऽवि बहुनिम्माओ, एत्थंतरंमि वासारत्ते तस्स निम्मावणनिमित्तं सो कच्छोट्टगबिइज्जो णईपूराओ कट्ठविरूढगो कट्ठाणि य उत्तारेइ । इओ य राया देवीए सह ओलोयणगओ अच्छइ, सो तहाविहो अईव करुणालंबणभूओ देवीए दिट्ठो, तओ तीए सामरिसं भणियं—सच्चं सुव्वइ एयं मेहनइसमा हवंति रायाणो । भरियाइं भरेंति दढं रित्तं जत्तेण वज्जेइ ॥ १ ॥ रण्णा भणियं—किह वा ?, तीए भणियं—जं एस दमगो किलिस्सइ, रण्णा सद्दाविओ भणिओ य—किं किलिस्ससि ?, तेण भणियं—बलद्दसंघाडगो मे ण पूरिज्जइ, रण्णा भणियं—बलद्दसयं गेण्ह, तेण भणियं—ण मे तेहिं कज्जं, तस्सेव बितिज्जं पूरेह, केरिसो सोत्ति घरं नेऊण दरिसिओ, रण्णा भणियं—सव्वभंडारेणवि न पूरिज्जइ इमो, ता एत्तिगस्स विभवस्स अलं ते तिण्हाएत्ति,

---

१ नगरे मम्मण इति, तेन महता क्लेशेनातिबहुकं द्रव्यजातं मिलितं, स तत् खादति न पिबति, प्रासादस्योपरि चानेनानेककोटीनिर्मितगर्भसारः काञ्चनमयो दिव्यरत्नपर्याप्तो वरवज्रशृङ्गो महान् एको बलीवर्दः कारितः, द्वितीयश्चारब्धः, सोऽपि बहुनिर्मितः, अत्रान्तरे वर्षारात्रे तस्य निर्माणनिमित्तं स कच्छोट्टकद्वितीयो नदीपूरात् काष्ठविरूढः काष्ठान्युत्तारयति । इतश्च राजा देव्या सहावलोकनगतस्तिष्ठति, स तथाविधोऽतीव करुणालम्बनभूतो देव्या दृष्टः, ततस्तया सामर्षं भणितं—सत्यं श्रूयते एतत्—मेघनदीसमा भवन्ति राजानः । भृतानि भरन्ति दृढं रिक्तं यत्नेन वर्जयन्ति ॥ १ ॥ राज्ञा भणितं—कथं वा ?, तया भणितं—यदेष द्रमकः क्लिश्यते, राज्ञा शब्दितो भणितश्च—किं क्लिश्यसे ?, तेन भणितं—बलीवर्दसंघाटको मे न पूर्यते, राज्ञा भणितं—बलीवर्दशतं गृहाण, तेन भणितं—न मे तैः कार्यं, तस्यैव द्वितीयं पूरय, कीदृशः स इति गृहं नीत्वा दर्शितः, राज्ञा भणितं—सर्वभाण्डागारेणापि न पूर्यते अयं, तावदेतावतो विभवस्य ( स्थानं ), अलं तव तृष्णयेति.

तेणं[1] भणियं–जावेसो न पूरिओ ताव मे न सुहं, आरद्धो य उवाओ पेसियाणि दिसासु भंडाणि आढत्ताओ किसीओ आढत्ताणि गयतुरयसंडपोसणाणि, रण्णा भणियं–जइ एवं ता किं थेवस्स कए किलिस्ससि ?, तेण भणियं–किलेससहं मे सरीरं वावारंतरं चेयाणि नत्थि महग्घाणि य वासारत्ते दारुगाणित्ति निवहियव्वा य पइण्णत्ति अओ करेमित्ति, रण्णा भणियं–पुज्जंतु ते मणोरहा, तुमं चेव वितिज्जगं पूरिउं समत्थो न पुण अहंति निग्गओ, तेण कालेण पूरिओ। एस एवंविहो अत्थसिद्धोत्ति ॥ साम्प्रतं यात्रादिसिद्धप्रतिपादनायाऽऽह—

जो निच्चसिद्धजत्तो लद्धवरो जो व तुंडियाइव्व। सो किर जत्तासिद्धोऽभिप्पाओ बुद्धिपज्जाओ ॥ ९३६ ॥

व्याख्या—यो नित्यसिद्धयात्रः, किमुक्तं भवति ?–स्थलजलचारिपथेषु सदैवाविसंवादितयात्र इति, लब्धवरो यो वा तुण्डिकादिवत्, स किल यात्रासिद्ध इति। उत्तरद्वारानुसम्बन्धनायाऽह–अभिप्रायः बुद्धिपर्याय इति गाथाक्षरार्थः ॥९३६४ भावार्थस्त्वाख्यानगोचरः, तच्चेदम्–पढमं[2] ताव जो किर बारस वाराओ समुद्दं ओग्गाहित्ता कयकज्जो आगच्छइ सो जत्तासिद्धो, तं अन्नेऽवि जन्तगा जत्तासिद्धिनिमित्तं पेच्छंति। एगंमि य गामे तुंडिगो वाणियगो, तस्स

---

१ तेन भणितं–यावदेष न पूर्यते तावन्न मे सुखं, आरब्धश्चोपायः प्रेषितानि दिक्षु भाण्डानि आरब्धाः कृषयः आरब्धानि गजतुरगषण्डपोषणानि, राज्ञा भणितं–यद्येवं तत्किं स्तोकस्य कृते क्लिश्यसि?, तेन भणितं–क्लेशक्षमं मे शरीरं व्यापारान्तरं चेदानीं नास्ति महार्घाणि च वर्षारात्रे दारूणीति निर्यूहितव्याऽपि च प्रतिज्ञेत्यतः करोमि, राज्ञा भणितं–पूर्यन्तां ते मनोरथाः, त्वमेव द्वितीयकः पूरयितुं समर्थः न पुनरहमिति निर्गतः, तेन कालेन पूरितः। एष एवंविधोऽर्थसिद्ध इति। २ प्रथमं तावद्यः किल द्वादश वाराः समुद्रमवगाह्य कृतकार्य आगच्छति स यात्रासिद्धः, तमन्येऽपि यान्तः यात्रासिद्धिनिमित्तं पश्यन्ति। एकस्मिंश्च ग्रामे तुण्डिको वणिक्, तस्य

संयसहस्सवाराओ वहणं फुट्टं, तहावि न भज्जइ, भणइ य-जले नट्ठं जले चेव लब्भइ, सयणाइएहिंपि दिज्जमाणं नेच्छइ, पुणो पुणो तं तं भंडं गहाय गच्छइ, निच्छएण से देवया पसन्ना, खद्धं खद्धं दव्वं दिन्नं, भणिओ य-अन्नंपि किं ते करेमि ?, तेण भणियं-जो मम नामेण समुद्दं ओगाहइ सो अवियन्नो एउ, तहत्ति पडिसुयं, एवेस जत्तासिद्धो । अन्ने भणंति-किर निज्जामगस्स वासुलओ समुद्दे पडिओ, सो तस्स कए समुद्दं उलंचिउमाढत्तो, तओ अनिव्विण्णस्स देवयाए वरो दिन्नोत्ति ॥ कृतं प्रसङ्गेन, साम्प्रतमभिप्रायसिद्धं प्रतिपादयन्नाह—

**विउला विमला सुहुमा जस्स मई जो चउव्विहाए वा । बुद्धीए संपन्नो स बुद्धिसिद्धो इमा सा य ॥ ९३७ ॥**

व्याख्या—'विपुला' विस्तारवती एकपदेनानेकपदानुसारिणी 'विमला' संशयविपर्ययानध्यवसायमलरहिता 'सूक्ष्मा' अत्यन्तदुःखावबोधसूक्ष्मव्यवहितार्थपरिच्छेदसमर्था 'यस्य मतिः' इति यस्यैवंभूता बुद्धिः स बुद्धिसिद्ध इति, यश्चतुर्विधया वा औत्पत्तिक्यादिभेदभिन्नया बुद्ध्या सम्पन्नः स बुद्धिसिद्धो वर्तते, इयं च सा चतुर्विधा बुद्धिरिति गाथार्थः ॥ ९३७ ॥

**उप्पत्तिआ १ वेणइआ २, कंमिया ३ पारिणामिआ ४ । बुद्धी चउव्विहा वुत्ता, पंचमा नोवलब्भए ॥ ९३८ ॥**

---

१ शतसहस्रवाराः प्रवहणं भग्नं, तथाऽपि न विरमति, भणति च-जले नष्टं जले चैव लभ्यते, स्वजनादिभिरपि दीयमानं नेच्छति, पुनः पुनस्तत्तद्भाण्डं गृहीत्वा गच्छति, निश्चयेन तस्य देवता प्रसन्ना, प्रचुरं प्रचुरं द्रव्यं दत्तं, भणितश्च-अन्यदपि किं तव करोमि ?, तेन भणितं-यो मम नाम्ना समुद्रमवगाहते सोऽविपन्न आयातु, तथेति प्रतिश्रुतं, एवमेष यात्रासिद्धः । अन्ये भणन्ति-किल निर्यामकस्य वासुलः समुद्रे पतितः, स तस्य कृते समुद्रं रिक्तीकर्तुमारब्धः, ततोऽनिर्विण्णाय देवतया वरो दत्त इति ।

व्याख्या—उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी, आह–क्षयोपशमः प्रयोजनमस्याः, सत्यं, किन्तु स खल्वन्तरङ्गत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रकर्माभ्यासादिकमपेक्षत इति १, विनयः–गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी २, अनाचार्यकं कर्म साचार्यकं शिल्पं, कादाचित्कं वा कर्म शिल्पं नित्यव्यापारः, 'कर्मजा' इति कर्मणो जाता कर्मजा ३, परिः–समन्तान्नमनं परिणामः–सुदीर्घकालपूर्वापरार्थावलोकनादिजन्य आत्मधर्म इत्यर्थः स कारणमस्यास्तत्प्रधाना वा पारिणामिकी ४, बुध्यतेऽनयेति–बुद्धिः–मतिरित्यर्थः, सा च चतुर्विधोक्ता तीर्थकरगणधरैः, किमिति?, यस्मात् पञ्चमी नोपलभ्यते केवलिनाऽप्यसत्त्वादिति गाथार्थः ॥ औत्पत्तिक्या लक्षणं प्रतिपादयन्नाह—

पुव्वमदिट्ठमस्सुअमवेइअ तक्खणविसुद्धगहिअत्था । अव्वाहयफलजोगिणि बुद्धी उप्पत्तिआ नाम ॥ ९३९ ॥

व्याख्या—'पूर्वम्' इति बुद्ध्युत्पादात् प्राक् स्वयमदृष्टोऽन्यतश्चाश्रुतः 'अवेदितः' मनसाऽप्यनालोचितः तस्मिन्नेव क्षणे विशुद्धः–यथावस्थितः गृहीतः–अवधारितः अर्थः–अभिप्रेतपदार्थो यया सा तथा, इहैकान्तिकमिहपरलोकाविरुद्धं फलान्तराबाधितं वाऽव्याहतमुच्यते, फलं–प्रयोजनम्, अव्याहतं च तत्फलं च अव्याहतफलं योगोऽस्या अस्तीति योगिनी अव्याहतफलेन योगिनी अव्याहतफलयोगिनी, अन्ये पठन्ति–अव्याहतफलयोगा, अव्याहतफलेन योगो यस्याः साऽव्याहतफलयोगा बुद्धिः औत्पत्तिकी नामेति गाथार्थः ॥ साम्प्रतं विनेयजनानुग्रहायास्या एव स्वरूपप्रतिपादनार्थमुदाहरणानि प्रतिपादयन्नाह—

भरहसिल १ पणिअ २ रुक्खे ३ खुड्डुग[*] ४ पड ५ सरड ६ काग ७ उच्चारे ८ ।
गय ९ घयण १० गोल ११ खंभे १२, खुड्डुग १३ मग्गित्थि १४ पइ १५ पुत्ते १६ ॥ ९४० ॥

---

[*] पणः + मुद्रिका.

भरहसिल १ मिंढ २ कुक्कुड ३ तिल ४ वालुअ ५ हत्थि ६ अगड ७ वणसंडे ८।
पायस ९ अइआ १० पत्ते ११ खाडहिला १२ पंचपिअरो अ १३ ॥ ९४१ ॥
महुसित्थ १७ मुद्दि १८ अंके १९ अ नाणए २० भिक्खु २१ चेडगनिहाणे २२।
सिक्खा य २३ अत्थसत्थे २४ इच्छा य महं २५ सयसहस्से २६ ॥ ९४२ ॥

व्याख्या—आसामर्थः कथानकेभ्य एवावसेयः, तानि चामूनि—उज्जेणीए णयरीए आसन्नो गामो णडाणं, तत्थेगस्स णडस्स भज्जा मया, तस्स य पुत्तो डहरओ, तेण अन्ना आणीया, सा तस्स दारगस्स न वट्टइ, तेण दारएण भणियं—मम लट्ठं न वट्टसि, तहा ते करेमि जहा मे पाएसु पडिसित्ति, तेण रत्तिं पिया सहसा भणिओ—एस गोहो एस गोहोत्ति, तेण नायं—मम महिला विणट्ठत्ति सिढिलो रागो जाओ, सा भणइ—मा पुत्ता ! एवं करेहि, सो भणइ—मम लट्ठं न वट्टसि, भणइ—वट्टीहामि, ता लट्ठं करेमि, सा वट्टिउमारद्धा, अन्नया छाहीए चेव एस गोहो एस गोहोत्ति भणित्ता कहिंति पुट्ठो य छाहिं दंसेइ, तओ से पिया लज्जिओ, सोऽवि एवंविहोत्ति तीसे घणरागो जाओ, सोऽवि विसभीओ पियाए समं जेमेइ। अन्नया

१ उज्जयिन्या नगर्या आसन्नो ग्रामो नटानां, तत्रैकस्य नटस्य भार्या मृता, तस्य च पुत्रो लघुः, तेनान्याऽऽनीता, सा तस्मिन् दारके न (सुष्ठु) वर्त्तते, तेन दारकेण भणितं—मयि लष्टा न वर्त्तसे, तथा तव करिष्यामि यथा मे पादयोः पतिष्यसीति, तेन रात्रौ पिता सहसा भणितः—एषोऽधम एषोऽधमः (गोधः), तेन ज्ञातं—मम महिला विनष्टेति श्लथो रागो जातः, सा भणति—मा पुत्र ! एवं कार्षीः, स भणति—मयि सुन्दरा न वर्त्तसे, भणति—वर्त्स्ये, तदा लष्टं करोमि, सा वर्त्तितुमारब्धा, अन्यदा छायायामेवैष गोध एष गोध इति भणित्वा केति पृष्टश्च छायां दर्शयति, ततस्तस्य पिता लज्जितः, सोऽपि एवंविध इति तस्यां घनरागो जातः, सोऽपि विषभीतः पित्रा समं जेमति। अन्यदा

पियरेण समं उज्जेणिं गओ, दिट्ठा णयरी, निग्गया पियापुत्ता, पिया से पुणोऽवि अइगओ ठवियगस्स कस्सइ, सोवि सिप्पाणईए पुलिणे उज्जेणीणयरीं आलिहइ, तेण णयरी सचच्चरा लिहिया, तओ राया एइ, राया वारिओ, भणइ–मा राउलघरस्स मज्झेणं जाहि, तेण कोउहल्लेण पुच्छिओ–¹सचच्चरा कहिया, कहिं वससि ?, गामेत्ति, पिया से आगओ । राइणो य एगूणगाणि पंचमंतिसयाणि, एक्कं मग्गइ, जो य सव्वप्पहाणो होज्जत्ति, तस्स परिक्खणनिमित्तं तं गामं भणावेइ, जहा–तुब्भं गामस्स वहिया महल्ली सिला तीए मंडवं करेह, ते अद्दण्णा, सो दारओ रोहओ छुहाइओ, पिया से अच्छइ गामेण समं, ओसूरे आगओ रोयइ–अम्हे छुहाइया अच्छामो, सो भणइ–सुहिओऽसि, किह ?, कहियं, भणइ–वीसत्था अच्छह, हेट्ठओ खणह खंभे य देह थोवं थोवं भूमी कया, तओ उवलेवणकओवयारे मंडवे कए रण्णो निवेइयं, केण कयं ?, रोहएण भरहदारएणं । एसा एयस्स उप्पत्तिया बुद्धी । एवं सव्वेसु जोएज्जा । तओ तेसिं रण्णा मेढओ पेसिओ, भणिया य–एस पक्खेण

---

१ पित्रा सममुज्जयिनीं गत, दृष्टा नगरी, निर्गतौ पितापुत्रौ, पिता तस्य पुनरपि अतिगतो विस्मृताय कस्मैचित्, सोऽपि शिप्रानद्याः पुलिने उज्जयिनीं नगरीमालिखति, तेन नगरी स चत्वरा (सान्तःपुरा) आलिखिता, तत राजाऽऽयातः, राजा निवारितः, भणति–मा राजकुलगृहस्य मध्येन यासीः, तेन कौतूहलेन पृष्टः–स चत्वरा कथिता, क वससि ?, ग्राम इति, पिता तस्यागतः । राज्ञश्चैकोनानि पञ्चमन्त्रिशतानि एकं मार्गयति, यश्च सर्वप्रधानो भवेदिति, तस्य परीक्षणनिमित्तं तं ग्रामं भाणयति–यथा युष्माकं ग्रामस्य वहिष्टात् महती शिला तस्या मण्डपं कुरुत, तेऽधृतिमुपगताः, स दारको रोहकः क्षुधितः, पिता तस्य तिष्ठति ग्रामेण समं, उत्सूर्ये आगतो रोदिति–वयं क्षुधितास्तिष्ठामः, स भणति–सुखितोऽसि, कथं ?, कथितं, भणति–विश्वस्तास्तिष्ठत, अधस्तात् खनत स्तम्भांश्च दत्त स्तोकं स्तोकं भूमिः कृता, ततः कृतोपलेपनोपचारे मण्डपे कृते राज्ञे निवेदितं, केन कृतं ?, रोहकेण भरतदारकेन । एषैतस्यौत्पत्तिकी बुद्धिः । एवं सर्वेषु योजयेत् । ततस्तेषां राज्ञा मेषः प्रेषितः, भणिताश्च–एष पक्षेणे–² किमेयं तए आलिहियं ?, किं वा राउलं ?, तेण णगरी ( प्रत्य० अधिकं )

एत्तिओ चेव पच्चप्पिणेयव्वो ण दुब्बलयरो नावि बलियतरोत्ति, तेहिं भरहो पुच्छिओ-तेण विरूवेण समं बंधाविओ जवसं दिन्नं, तं चरन्तस्स ण हायइ बलं विरूवं च पेच्छंतस्स भएण ण वड्ढइ। एवं कुक्कुडओ अद्दाएण समं जुज्झाविओ। तिलसमं तेल्लं दायव्वंति तिला अद्दाएण मविया। वालुगावरहओ-पडिच्छंदं देह। हत्थिमि जुन्नहत्थी गामे छूढो, हत्थी अप्पाउओ मरिहितित्ति अप्पिओ मउत्ति ण निवेइयव्वं, दिवसदेवसिया य से पउत्ती दायवत्ति, अदाणेवि निग्गहो, सो मओ, ते अद्दण्णा, भरहसुयवयणेण निवेइयं जहा-सो अज्ज हत्थी ण उट्ठेइ न णिसीयइ ण आहारेइ ण णीहारेइ ण ऊससइ ण नीससइ एवमाई, रण्णा भणियं-किं मओ?, तुब्भे भणहत्ति। अगडे आरण्णओ आगंतु ण तीरइ नागरं देह। वणसंडे पुव्वं पासं गओ गामो। परमन्नं करीसओण्हाए पलालुण्हाए यत्ति। तओ रण्णा एवं परिक्खिऊण पच्छा समाइट्ठं, जहा तेणेव दारएणागंतव्वं, तं पुण ण सुक्कपक्खे ण कण्हपक्खे ण राइं न दिवसे ण छायाए ण उण्हेणं ण छत्तेणं ण आगासेणं ण पाएहिं ण जाणेणं ण

---

१. यस्मात् एव प्रत्यर्पणीयो न दुर्बलतरो नापि बलिष्ठ इति, तैर्भरतः पृष्टः-तेन विरूवेण (वृकेण) समं बन्धितो यवसं दत्तं, तं चरतो न हीयते बलं वृकं च पश्यतो भयेन न वर्धते। एवं कुर्कुट आदर्शेन समं योधितः। तिलसमं तैलं दातव्यमिति तिला आदर्शेन मापिताः। वालुकादवरकः-प्रतिच्छन्दं दत्त। हस्तिनि-जीर्णहस्ती ग्रामे क्षिप्तः, हस्ती अल्पायुरिति मरिष्यतीत्यर्पितः मृत इति न निवेदितव्यं, दिवसदैवसिकी च तस्य प्रवृत्तिर्दातव्येति, अदानेऽपि निग्रहः, स मृतः, ते अधृतिमुपगताः, भरतसुतवचनेन निवेदितं यथा-सोऽद्य हस्ती नोत्तिष्ठते न निषीदति नाहारयति न नीहारयति नोच्छ्वसिति न निःश्वसिति एवमादि, राज्ञा भणितं-किं मृतः?, यूयं भणतेति। अवट आरण्यको नागन्तुं शक्नोति नागरं दत्त। वनखण्डे पूर्वस्मिन् पार्श्वे गतो ग्रामः। परमान्नं करीषोष्मणा पलालोष्मणा चेति। ततो राज्ञा एवं परीक्ष्य पश्चात्समादिष्टं यथा-तेनैव दारकेणागन्तव्यं, तत्पुनर्न शुक्लपक्षे न कृष्णपक्षे न रात्रौ न दिवा न छायया नोष्णेन न छत्रेण नाकाशेन न पादाभ्यां न यानेन न

[1]पंथेणं ण उप्पहेणं ण ण्हाएणं ण मलिणेणंति, तओ तस्स निवेइयं, पच्छा अंगोहलिं काऊण चक्कमज्झभूमीए एडगारूढो चालणीनिमिउत्तिमंगो, अण्णे भणंति–सगडलट्टणीपएसवद्धओ छाइयपडगेणं संझासमयंमि अमावासाए सन्धीए आगओ नरिंदपासं, रण्णा पूइओ, आसन्नो य सो ठिओ, पढमजामविवुद्धेण य रण्णा सद्दाविओ, भणिओ य–सुत्तो ? जग्गसि ?, भणइ–सामि ! जग्गामि, किं चिंतेसि ?, भणइ–असोत्थपत्ताणं किं दंडो महल्लो उयाहु से सिहत्ति ? रण्णा चिंतियं–साहु, एवं पच्छा पुच्छिओ भणइ–दोवि समाणि, एवं वीयजामे छगलियाओ लेंडियाओ वाएण, ततिए खाडहिलाए जत्तिया पंडरारेहा तत्तिया कालगा जत्तियं पुच्छं तद्दहमित्तं सरीरं, चउत्थे जामे सद्दाविओ वायं न देइ, तेण कंवियाए छिक्को, उट्ठिओ, राया भणइ–जग्गसि सुयसि ?, भणइ–जग्गामि, किं करेसि ?, चिंतेमि, किं ?, कइहिं सि जाओ, कइहिं ?, पंचहि, केण केण ?, रण्णा वेसमणेणं चंडालेणं रयएणं विच्छुएणं, मायाए निव्वंधेण पुच्छिए कहियं, सो पुच्छिओ भणइ–यथा न्यायेन

---

१ पथा नोत्पथेन न स्नातेन न मलिनेनेति, ततस्तस्मै निवेदितं, पश्चादङ्गरूक्षणं ( देशस्नानं ) कृत्वा चक्रमध्यभूमावेडकारूढश्चालनीनिर्मितोत्तमाङ्गः, अन्ये भणन्ति–शाकटलट्टनी ( कट ) प्रदेशवद्ध. छादितः पटेन संध्यासमयेऽमावास्यायाः सन्ध्यायामागतो नरेन्द्रपार्श्वे, राज्ञा पूजितः, आसन्नश्च स स्थितः, प्रथमयामविवुद्धेन च राज्ञा शब्दित॰, भणितश्च–सुप्तो जागर्षि ?, भणति–स्वामिन् ! जागर्मि, किं चिन्तयसि ?, भणति–अश्वत्थपत्राणां किं दण्डो महान् उत तस्य शिखेति, राज्ञा चिन्तितं–साधु, एवं पश्चात्पृष्टो भणति–द्वे अपि समे, एवं द्वितीययामे छागलिका लिण्डिका वातेन, तृतीये खाडहिलाया यावत्यः पाण्डुरारेखाः तावत्यः कृष्णा यावन्मात्रं पुच्छं तावन्मात्रं शरीरं, चतुर्थे यामे शब्दितो वाचं न ददाति, तेन कम्बिकया हतः, उत्थितो, राजा भणति–जागर्षि स्वपिषि ?, भणति–जागर्मि, किं करोषि ?, चिन्तयामि, किं ?, कतिभिर्जातोऽसि ?, कतिभिः ?, पञ्चभिः, केन केन ?, राज्ञा वैश्रमणेन चाण्डालेन रजकेन वृश्चिकेन, मात्रा निर्बन्धेन पृष्टया कथितं, स पृष्टो भणति–यथा न्यायेन

रज्यं पालयसि तो णज्जसि जहा रायपुत्तोत्ति, वेसमणो दाणेणं, रोसेणं चंडालो, सव्वस्सहरणेणं रयओ, जं च वीसत्थ-सुत्तंपि कंबियाए उट्ठवेसि तेण विच्छुओत्ति, तुट्ठो राया, सव्वेसिं उवरिं ठविओ, भोगा य से दिण्णा । एयस्स उप्पत्तिया बुद्धित्ति ॥ पणियए दोहिं पणियगं बद्धं, एगो भणइ–जो एयाओ लोमसियाओ खाइ तस्स तुमं किं करेसि?, इयरो भणइ–जो णयरदारेण मोयगो ण णीति तं देमि, तेण चक्खिय चक्खिय सव्वाओ मुक्काओ, जिओ मग्गइ, इयरो रूवगं देइ, सो नेच्छइ, दोन्नि य जाव सएणऽवि ण तूसइ, तेण जूयारा ओलग्गिया, दिन्ना बुद्धी, एगं पुवियावणे मोयगं गहाय इंदखीले ठवेहि, पच्छा भणेज्जासि–निग्गच्छ भो मोयगा! णिगच्छ, सो ण णिगच्छिहिति, तहा कयं पडिजिओ सो । एसा जूइ-कराणमुप्पत्तिया बुद्धी ॥ रुक्खे फलाणि मक्कडा न देंति, पाहाणेहिं हया अम्बया दिन्ना, एसावि लेट्ठुगघेत्तयाणमुप्पत्ति-यत्ति ॥ खुड्डुगे पसेणई राया सुओ से सेणिओ रायलक्खणसंपुण्णो, तस्स किंचिवि ण देइ मा मारिज्जिहित्ति, अद्धितीए

१ राज्यं पालयसि ततो ज्ञायसे यथा राजपुत्र इति, वैश्रमणो दानेन, रोषेण चाण्डालः, सर्वस्वहरणेन रजकः, यच्च विश्वस्तसुप्तमपि कम्बिकया (अग्रेण) उत्थापयसि तेन वृश्चिक इति, तुष्टो राजा, सर्वेषामुपरि स्थापितः, भोगाश्च तस्मै दत्ताः । एषौत्पत्तिकी बुद्धिरिति । पणो–द्वाभ्यां पणो बद्धः, एको भणति–य एता-श्चिर्भटिकाः खादति तस्मै त्वं किं करोषि?, इतरो भणति–यो नगरद्वारेण मोदको न निर्गच्छति तं ददामि, तेन दष्ट्वा दष्ट्वा सर्वा मुक्ताः, जितो मार्गयति, इतरो रूप्यकं ददाति, स नेच्छति, द्वे च यावच्छतेनापि न तुष्यति, तेन द्यूतकारा अवलगिताः, दत्ता बुद्धिः, एकं कान्दविकापणान्मोदकं गृहीत्वा इन्द्रकीले स्था-पय, पश्चाद् भणेः–निर्गच्छ भो मोदक! निर्गच्छ, स न निर्गमिष्यति, तथा कृतं, प्रतिजितः सः । एषा द्यूतकाराणामौत्पत्तिकी बुद्धिः ॥ वृक्षे फलानि मर्कटा न ददति, पाषाणैर्हता आम्रा दत्ताः, एषापि लेष्टुकक्षेपकाणामौत्पत्तिकीति । क्षुल्लके–प्रसेनजित् राजा सुतस्तस्य श्रेणिको राजलक्षणसंपूर्णः, तस्मै न किञ्चिदपि ददाति मा मीमरत (मारयेत) इति, अधृत्या

निंग्गओ वेन्नायडमागओ कइवयसहाओ, खीणविभवसेट्ठिस्स वीहीए उवविट्ठो, तस्स य तप्पुण्णपच्चयं तद्दिवसं वासदेय-भंडाणं विक्कओ जाओ खद्धं खद्धं विढत्तं, अन्ने भणंति–सेट्ठिणा रयणायरो सुमिणंमि घरमागओ नियकण्णं परिणेंतगो दिट्ठो, तओऽणेण चिंतियं–एईए पसाएण महई विभूई भविस्सति, पच्छा सो वीहीए उवविट्ठो, तेण तमणण्णसरिसाए आगईए दट्ठूण चिंतियं एसो सो रयणायरो भविस्सइ, तप्पहावेण याणेण मिलक्खुहत्थाओ अणग्घेज्जा रयणा पत्ता, पच्छा पुच्छिओ–कस्स तुब्भे पाहुणगा ?, तेण भणियं–तुज्झंति, घरं णीओ, कालेण धूया से दिण्णा, भोगे भुंजइ, कालेण य नंदाए सुमिणंमि धवलगयपासणं, आवण्णसत्ता जाया, पच्छा रण्णा से उट्टवामा विसज्जिया, सिग्घं एहित्ति, आपुच्छइ, अम्हे रायगिहे पंडरकुड्डगा पसिद्धा गोवाला, जइ कज्जं एहित्ति, गओ, तीए दोहलओ देवलोगचुयगब्भाणुभावेण वरहत्थिखंधगया अभयं सुणेज्जामित्ति, सेट्ठी दव्वं गहाय रण्णो उवट्ठिओ, रायाणएण गहियं, उग्घोसावियं च, जाओ, अभयओ णामं कयं, पुच्छइ–

१ निर्गतः वेन्नातटमागतः कतिपयसहायः, क्षीणविभवश्रेष्ठिनो वीथ्यामुपविष्टः, तस्य च तत्पुण्यप्रत्ययं तद्दिवसे वर्पदेयभाण्डानां विक्रयो जातः,प्रचुरं प्रचुरमर्जितं, अन्ये भणन्ति–श्रेष्ठिना रत्नाकरः स्वप्ने गृहमागतो निजकन्यां परिणयन् दृष्ट॰, ततोऽनेन चिन्तितम्–एतस्याः प्रसादेन महती विभूतिर्भविष्यति, पश्चात् स वीथ्यामुपविष्टः, तेन तमनन्यसदृशयाऽऽकृत्या दृष्ट्वा चिन्तितं एष स रत्नाकरो भविष्यति, तत्प्रभावेण चानेन म्लेच्छहस्तात् अनर्घ्याणि रत्नानि प्राप्तानि, पश्चात्पृष्टः–कस्य यूयं प्राघूर्णकाः ?, तेन भणितं–युष्माकमिति, गृहं नीतः, कालेन दुहिता तस्मै दत्ता, भोगान् भुनक्ति, कालेन च नन्दया स्वप्ने धवलगजदर्शनं, आपन्नसत्त्वा जाता, पश्चात् राज्ञा तस्मै उष्ट्री प्रेपिता, शीघ्रमेहीति, आपृच्छति, वयं राजगृहे पाण्डुरकुड्याः प्रसिद्धा गोपालाः, यदि कार्यमागच्छेरिति, गतः, तस्या दोहदो देवलोकच्युतगर्भानुभावेन वरहस्तिस्कन्धगता अभयं शृणोमीति, श्रेष्ठी द्रव्यं गृहीत्वा राज्ञ उपस्थितः, राज्ञा गृहीतं, उद्घोषितं च, जातः, अभयो नाम कृतं, पृच्छति–

[1]मम पिया कहिंति ?, कहियं तीए, तत्थ वच्चामोत्ति सत्थेण समं (१०५००) वच्चंति, रायगिहस्स बहिया ठियाणि, गवेसओ गओ, राया मंतीं मग्गइ, कूवे खुड्ड (खुंड) गं पाडियं, जो गेण्हइ हत्थेण तडे संतो तस्स राया वित्तिं देइ, अभएण दिट्ठं, छाणेण आहयं, सुक्के पाणियं मुक्कं, तडे संतएण गहियं, रायाए समीवं गओ, पुच्छिओ–को तुमं ?, भणइ–तुज्झ पुत्तो, किह व किं वा ?, सव्वं परिकहियं, तुट्ठो उच्छंगे कओ, माया पवेसिज्जंती मंडेई, वारिया, अमच्चो जाओ, एसा एतस्स उप्पत्तिया बुद्धी ॥ पडे–दो जणा ण्हायंति, एगस्स दढो एगस्स जुन्नो, जुन्नइत्तो दढं गहाय पट्ठिओ, इयरो मग्गेइ, ण देइ, राउले ववहारो, महिलाओ कत्ताविया‌ओ, "दिन्नो जस्स सो, अण्णे भणंति–सीसाणि ओलिहियाणि, एगस्स उन्नामओ एगस्स सोत्तिओ । कारणियाणमुप्पत्तिया बुद्धी ॥ सरडो–सन्नं वोसिरंतस्स सरडाण भंडंताण एगो तस्स अहिट्ठाणस्स हेट्ठा बिलं पविट्ठो पुंछेण य छिक्को, घरं गओ, अद्धिईए दुब्बलो जाओ, विज्जो पुच्छिओ, जइ सयं देह, घडए सरडो छूढो लक्खाए

१ मम पिता क्वेति, कथितं तया, तत्र व्रजाम इति सार्थेन समं व्रजन्ति, राजगृहस्य बहिः स्थितानि, गवेषको गतः, राजा मन्त्रिणं मार्गयति, कूपे मुद्रिका पातिता, यो गृह्णाति हस्तेन तटे सन् तस्मै राजा वृत्तिं ददाति, अभयेन दृष्टं, छगणेन (गोमयेन) आहतं, शुष्के पानीयं मुक्तं, तटे सता गृहीतं राज्ञः समीपं गतः, पृष्टः–कस्त्वं ?, भणति–तव पुत्रः, कथं वा किं वा ?, सर्वं परिकथितं, तुष्ट उत्सङ्गे कृतः, माता प्रविशन्ती मण्डयति, वारिता, अमात्यो जातः, एषैतस्यौत्पातिकी बुद्धिः ॥ पटः–द्वौ जनौ स्नातः, एकस्य दृढ एकस्य जीर्णः, जीर्णवान् दृढं गृहीत्वा प्रस्थितः, इतरो मार्गयति, न ददाति, राजकुले व्यवहारः, महिलाभ्यां कर्त्तनं कारितं, दत्तो यस्य यः, अन्ये भणन्ति–शीर्षे अवलिखिते, एकस्योर्णामय एकस्य सौत्रिकः । कारणिकाणामौत्पत्तिकी बुद्धिः । सरटः–संज्ञां व्युत्सृजतः सरटयोः कलहायमानयोः एकस्तस्याधिष्ठानस्याधस्तात् बिलं प्रविष्टः, पुच्छेन च स्पृष्टः, गृहं गतः, अधृत्या दुर्बलो जातः, वैद्यः पृष्टः, यदि शतं ददासि, घटे सरटः क्षिप्तः लाक्षया * सुत्ताणुसारेण जो जस्स पडो सो तस्स दिण्णो ( प्र. अधिकं ) । जस्स उण्णामओ पडो तस्स सीसा उण्णातन्तू विणिग्गया जस्स सोत्तिओ तस्स सुत्ततन्तू ( प्र. अधिकं )

विलिंपित्ता, विरेयणं दिन्नं, वोसिरियं, लट्ठो हूओ, वेज्जस्स उप्पत्तिया वुद्धी ॥ वितिओ सरडो–भिक्खुणा खुड्डगो पुच्छिओ–एस किं सीसं चालेइ?, सो भणइ–किं भिक्खू भिक्खुणी वा ?, खुड्डगस्स उप्पत्तिया वुद्धी ॥ कागे–तच्चणिएण चेल्लओ पुच्छिओ–अरहंता सव्वण्णू ?, वाढं, केत्तिया इहं काका ?, 'सट्ठिं काकसहस्साइं जाइं वेन्नायडे परिवसंति । जइ ऊणगा पवसिया अब्भहिया पाहुणा आया ॥ १ ॥' खुड्डगस्स उप्पत्तिया वुद्धी ॥ वितिओ–वाणियओ निहिंमि दिट्ठे महिलं परिक्खइ–रहस्सं धरेइ न वत्ति, सो भणइ–पंडुरओ मम काको अहिट्ठाणं पविट्ठो, ताए सहज्जियाण कहियं, जाव रायाए सुयं, पुच्छिओ, कहियं, रन्ना से मुक्कं मंती य निउत्तो, एयस्स उप्पत्तिया वुद्धी ॥ ततिओ–विट्ठं विक्खरइ काओ, भागवओ खुड्डगं पुच्छइ–किं कागो विक्खरइ ?, सो भणइ–एस चिंतेति–किं एत्थ विण्हू अत्थि नत्थित्ति ?, खुड्डगस्स उप्पत्तिया वुद्धी ॥ उच्चारे—धिज्जाइयस्स भज्जा तरुणी गामंतरं निज्जमाणी धुत्तेण समं संपलग्गा, गामे ववहारो, विभत्ताणि

---

१ विलिप्य, विरेचनं दत्तं,व्युत्सृष्टं लष्टो जातः, वैद्यस्य औत्पत्तिकी वुद्धिः ॥ द्वितीयः सरटः–भिक्षुणा क्षुल्लकः पृष्टः–एष किं शीर्षं चालयति ?, स भणति–किं भिक्षुः भिक्षुकी वा ?, क्षुल्लकस्यौत्पत्तिकी वुद्धिः ॥ काकः–तच्चनीकेन क्षुल्लकः पृष्टः–आर्हताः सर्वज्ञाः ?, वाढं, कियन्त इह काकाः ?,–'षष्टिः काकसहस्रा ये वेन्नातटे परिवसन्ति । यदि न्यूनाः प्रोषिता अभ्यधिकाः प्राघूर्णका आयाताः ॥ १ ॥' क्षुल्लकस्यौत्पत्तिकी वुद्धिः । द्वितीयो–वणिक् निधौ दृष्टे महिलां परीक्षते–रहस्यं बिभर्त्ति नवेति, स भणति–श्वेतः मम काकोऽधिष्ठाने प्रविष्टः, तया सखीनां कथितं, यावद्राज्ञा श्रुतं, पृष्टः, कथितं, राज्ञा तस्मै आर्पितः मन्त्री च नियुक्तः, एतस्यौत्पत्तिकी वुद्धिः ॥ तृतीयः–विष्ठां विकिरति काकः, भागवतः क्षुल्लकं पृच्छति–किं काको विकिरति ?, स भणति–एष चिन्तयति–किमत्र विष्णुरस्ति नास्तीति, क्षुल्लकस्यौत्पत्तिकी वुद्धिः ॥ उच्चारः–धिग्जातीयस्य भार्या तरुणी ग्रामान्तरं नीयमाना धूर्त्तेन समं संप्रलग्ना, ग्रामे व्यवहारः, विभक्तौ

पुच्छियाणि आहारं, विरेयणं दिण्णं, तिलमोयगा, इयरो धाडिओ, कारणियाण उप्पत्तिया बुद्धी ॥ गए—वसंतपुरे राया-
मंतिं मग्गइ, पायओ लंबिओ—जो हत्थिं महइमहालयं तोलेइ तस्स य सयसहस्सं देमि, सो एगेणं णावाए छोढुं अत्थग्घे
जले धरिओ जेण छिद्देण तीसे णावाए पाणियं तत्थ रेहा कड्ढिया, उत्तारिओ हत्थी, कट्ठपाहाणाइणा भरिया णावा जाव रेखा,
उत्तारेउं तोलियाणि, पूजिओ मन्ती कओ, एयस्स उप्पत्तिया बुद्धी । अण्णे भणंति—गाविमग्गो सिलाए णट्ठो, पेढे(पोट्ट)पडिएण
णीणिओ, एयस्स उप्पत्तिया बुद्धी ॥ घयणो—भंडो सव्वरहस्सिओ, राया देवीए गुणे लएइ निरामयत्ति, सो भणइ—न भव-
इत्ति, किह ?, जया पुप्फाणि केसराणि वा ढोएइ, तं तहत्ति विण्णासियं, णाए हसियं, निब्बंधे कहियं, निघिसओ आणत्तो,
उवाहणाणं भारेणं उवट्ठिओ, उड्डाहभीयाए रुद्धो, घयणस्स उप्पत्तिया बुद्धी । गोलगो नक्कं पविट्ठो, सलागाए तावेत्ता जउ-
मओ कड्ढिओ, कड्ढंतस्स उप्पत्तिया बुद्धी ॥ खंभे—राया मंतिं गवेसइ, पायओ लंबिओ, खंभो तडागमज्झे, जो तडे संतओ बंधइ

१ पृष्टौ आहारं, विरेचनं दत्तं, तिलमोदकाः, इतरो निर्घाटितः, कारणिकानामौत्पत्तिकी बुद्धिः ॥ गजः—वसन्तपुरे राजा मन्त्रिणं मार्गयति, घोषणा कारिता—यो हस्तिनं महातिमहालयं तोलयति तस्मै च शतसहस्रं ददामि, स एकेन नावि क्षिप्त्वा अस्ताघे जले धृतो यस्मिन् भागे तस्या नावः पानीयं तत्र रेखा कृता, उत्तारितो हस्ती, काष्ठपाषाणादिना भृता नौर्यावद्रेखा, उत्तार्य तोलितानि, पूजितो मन्त्री कृतः, एतस्यौत्पत्तिकी बुद्धिः । अन्ये भणन्ति—गोमार्गः शिलया नष्टः, पीठे पतितेन नीतः, एतस्यौत्पत्तिकी बुद्धिः ॥ घृताशः—सर्वरहस्यिको भाण्डो, राजा देव्या गुणान् लाति—निरामयेति, स भणति—न भवतीति कथं ?, यदा पुष्पाणि केसराणि वा ढौकयति, तत्तथेति विज्ञासितं, ज्ञाते हसितं, निर्बन्धे कथितं, निर्विषय आज्ञप्तः, उपानहां भारेणोपस्थितः, उड्डाहभीतया रुद्धः, घृताश-स्यौत्पत्तिकी बुद्धिः ॥ गोलकः—नासिकां प्रविष्टः, शलाकया तापयित्वा जतुमयः कर्षितः, कर्षत औत्पत्तिकी बुद्धिः ॥ स्तम्भः—राजा मन्त्रिणं गवेषयति, घोषणा कारिता, स्तम्भस्तटाकमध्ये, यस्तटे सन् बध्नाति

तस्स[1] सयसहस्सं दिज्जइ, तडे खीलगं वंधिऊण परिवेढेण वद्धो जिओ, मंती कओ, एयस्स उप्पत्तिया वुद्धी ॥ खुड्डुए—परिवाइया भणइ–जो जं करेइ तं मए कायवं कुसलकम्मं, खुड्डगो भिक्खट्ठियओ सुणेइ, पडहओ वारिओ, गओ राउलं, दिट्ठो, सा भणइ–कओ गिलामि ?, तेण सागारियं दाइयं, जिया, काइयाए य पउमं लिहियं, सा न तरइ, जिया, खुड्डगस्स उप्पत्तिया वुद्धी ॥ मग्गित्थी–एगो भज्जं गहाय पवहणेण गामंतरं वच्चइ, सा सरीरचिंताए उइन्ना, तीसे रूवेण वाणमंतरी विलग्गा, इयरी पच्छा आगया रडइ, ववहारो, हत्थो दूरं पसारिओ, णायं वंतरित्ति, कारणियाणमुप्पत्तियत्ति ॥ मग्गे–मूलदेवो कंडरिओ य पंथे वच्चंति, इओ एगो पुरिसो समहिलो दिट्ठो, कंडरिओ तीसे रूवेण मुच्छिओ, मूलदेवेण भणियं–अहं ते घडेमि, तओ मूलदेवो तं एगंमि वणनिडंजे ठविऊण पंथे अच्छइ, जाव सो पुरिसो समहिलो आगओ, मूलदेवेण भणिओ–एत्थ मम महिला पसवइ, एयं महिलं विसज्जेहि, तेण विसज्जिया, सा तेण समं अच्छिऊण आगया

---

१ तस्मै शतसहस्रं दीयते, तटे कीलकं बद्ध्वा परिवेष्टेन वद्धो जित', मन्त्री कृतः,एतस्यौत्पत्तिकी बुद्धिः ॥ क्षुल्लकः–परिव्राजिका भणति–यो यत् करोति तन्मया कर्त्तव्यं कुशलकर्म, क्षुल्लको भिक्षार्थिकः शृणोति, पटहको वारितः, गतो राजकुलं, दृष्टः, सा भणति–कुतो गिलामि ?, तेन सागारिकं (मेहनं) दर्शितं, जिता, कायिक्या च पद्मं लिखितं, सा न शक्नोति, जिता, क्षुल्लकस्यौत्पत्तिकी बुद्धिः । मार्गस्त्री–एको भार्यां गृहीत्वा प्रवहणेन ( यानेन ) ग्रामान्तरं व्रजति, सा शरीरचिन्तायै उत्तीर्णा, तस्या रूपेण व्यन्तरी विलग्ना, इतरा पश्चादागता रोदिति, व्यवहारः, हस्तो दूरं प्रसारितः, ज्ञातं व्यन्तरीति, कारणिकानामौत्पत्तिकीति ॥ मार्गः–मूलदेवः कण्डरीकश्च पथि व्रजतः, इत एकः पुरुषः समहिलो दृष्टः, कण्डरीकः तस्या रूपेण मूर्छितो, मूलदेवेन भणितं–अहं तव घटयामि, ततो मूलदेवस्तं एकस्मिन् वननिकुञ्जे स्थापयित्वा तिष्ठति, यावत्स पुरुषः समहिल आगतः, मूलदेवेन भणितः–अत्र मम महिला प्रसूते, एतां महिलां विसृज, तेन विसृष्टा, सा तेन समं स्थित्वाऽऽगता,

[1]आगंतूण य तत्तो पडयं घेत्तूण मूलदेवस्स धुत्ती भणइ हसंती–पियं खु णे दारओ जाओ, दोण्हवि उप्पत्तिया ॥ पइत्ति— दोण्हं भाउगाण एगा भज्जा, लोगे कोड्डं दोण्हवि समा, रायाए सुयं, परं विम्हयं गओ, अमच्चो भणइ–कओ एवं होति?, अवस्सं विसेसो अत्थि, तेण तीसे महिलाए लेहो दिन्नो जहा–एएहिं दोहिवि गामं गंतवं, एगो पुव्वेण अवरो अवरेण, तद्दिवसं चेव आगंतवं, ताए महिलाए एगो पुव्वेण पेसिओ, एगो अवरेण जो वेस्सो, तस्स पुव्वेण एंतस्सवि जंतस्सवि निडाले सूरो, एवं णायं, असद्दहंतेसु पुणोऽवि पट्ठविऊण समगं पुरिसा से पेसिया, ते भणंति–ते दढं अपडुगा, एसो मंद-संघयणोत्ति भणियं, तं चेव पवण्णा, पच्छा उवगयं, मंतिस्स उप्पत्तिया बुद्धी ॥ पुत्ते–एगो वणियगो दोहि भज्जाहि समं अण्णरज्जं गओ, तत्थ मओ, तस्स एगाए भज्जाए पुत्तो, सो विसेसं ण जाणइ, एगा भणइ–मम पुत्तो, बिइया भणइ— मम, ववहारो न छिज्जइ, अमच्चो भणइ–दव्वं विरिंचिऊण दारगं दोभागे करेह करकयेण, माया भणइ–एतीसे पुत्तो मा

---

१ आगत्य च ततः पटं गृहीत्वा मूलदेवस्य धूर्त्ता भणति हसन्ती–प्रियं नो दारको जातः, द्वयोरप्यौत्पत्तिकी । पतिरिति–द्वयोर्भ्रात्रोरेको भार्या, लोके स्फुटं द्वयोरपि समा, राज्ञा श्रुतं, परं विस्मयं गतः, अमात्यो भणति–कुत एवं भवति ?, अवश्यं विशेषोऽस्ति, तेन तस्यै महिलायै लेखो दत्तो यथा–एताभ्यां द्वाभ्यामपि ग्रामं गन्तव्यं, एकः पूर्वेणापरः पश्चिमेन, तद्दिवस एवागन्तव्यं, तया महिलयकः पूर्वेण प्रेपितोऽपरोऽपरेण यो द्वेष्यः, तस्य पूर्वेण आगच्छतोऽपि गच्छतोऽपि ललाटे सूर्यः, एवं ज्ञातं, अश्रद्दधत्सु पुनरपि प्रस्थाप्य समकं ( युगपत् ) पुरुषौ तस्यै प्रेपितौ, तौ भणतः–तौ दृढमपटुकौ, एप मन्दसंहनन इति भणितं ( भणित्वा ) तमेव प्रपन्ना, पश्चादुपगतं, मन्त्रिण औत्पत्तिकी बुद्धिः ॥ पुत्रः–एको वणिग् द्वाभ्यां भार्याभ्यां सममन्यराज्यं गतः, तत्र मृतः, तस्यैकस्या भार्यायाः पुत्रः, स विशेपं न जानाति, एका भणति–मम पुत्रः, द्वितीया भणति–मम, व्यवहारो न छिद्यते, अमात्यो भणति–द्रव्यं विभज्य दारकं द्वौ भागौ कुरुत क्रकचेन, माता भणति–एतस्याः पुत्रो मा

[1]मारिज्जउ, दिण्णो तीसे चेव, मंतिस्स उप्पत्तिया वुद्धी ॥ महुसित्थे–सित्थगकरो, कोलगिणी उब्भामिया, तीए य जालीए निहुवणट्ठियाए उवरिं भामरं पड्डुप्पाइयं, पच्छा भत्तारो किणंतो वारिओ–मा किणिहिसि, अहं ते भामरं दंसेमि, गयाणि जालिं, न दीसइ, तओ तंतुवायपुत्तीए तेणेव विहिणा ठाइऊण दरिसियं, णाया यऽणेण जहा–उब्भामियत्ति, कहमन्नहे-यमेवं भवइत्ति, तस्स उप्पत्तिया वुद्धी ॥ मुद्दिया–पुरोहिओ निक्खेवए घेत्तूण अन्नेसिं देइ, अन्नया दमएण ठवियं, पडिआगयस्स ण देइ, पिसाओ जाओ, अमच्चो विहीए जाइ, भणइ–देहि भो पुरोहिया! तं मम सहस्संति, तस्स किवा जाया, रण्णो कहियं, राइणा पुरोहिओ भणिओ–देहि, भणइ–न देमी, न गेण्हामि, रण्णा दमगो सव्वं सपच्चयं दिवसमुहुत्तठवणपासपरिवत्तिमाइ पुच्छिओ, अन्नया जूयं रमइ रायाए समं, णाममुद्दागहणं, रायाए अलक्खं गहाय मणुस्सस्स हत्थे दिण्णा, अमुगंमि काले साहस्सो नउलगो दमगेण ठविओ तं देहि, इमं अभिन्नाणं, दिन्नो आणिओ, अन्नेसिं

---

१ मारयतु, दत्तस्तस्या एव, मन्त्रिण औत्पत्तिकी वुद्धि. ॥ मधुसिक्थम्–सिक्थकरः, कोलिकी उद्भ्रामिका, तया च जाल्यां निधुवनस्थितयोपरि भ्रामरं ज्ञातं, पश्चाद्भर्त्ता क्रीणन् वारित.–मा क्रीणाहीति, अहं ते भ्रामरं दर्शयामि, गतौ जाल्यां, न दृश्यते, ततः तन्तुवायपुत्र्या तेनैव विधिना स्थित्वा दर्शितं, ज्ञाता चानेन यथोद्भ्रामिकेति, कथमन्यथा एतदेवं भवेदिति, तस्यौत्पत्तिकी बुद्धिः । मुद्रिका–पुरोहितो न्यासान् गृहीत्वाऽन्येषां न ददाति, अन्यदा द्रमकेण स्थापितं, प्रत्यागताय न ददाति, विह्वलो जातः, अमात्यो वीथ्यां याति, भणति–दापय भोः! पुरोहितात्तन्मम सहस्रमिति, तस्य कृपा जाता, राज्ञे कथितं, राज्ञा पुरोहितो भणितः–देहि, भणति–न ददामि, न गृह्णामि, राज्ञा द्रमकः सर्वं सप्रत्ययं दिवसमुहूर्त्तस्थापनापार्श्ववर्त्यादि पृष्टः, अन्यदा द्यूतं रमते राज्ञा समं, नाममुद्राग्रहणं, राज्ञाऽलक्षं गृहीत्वा मनुष्यस्य हस्ते दत्ता, अमुष्मिन् काले साहस्रो नकुलको द्रमकेण स्थापितस्तं देहि, इदमभिज्ञानं, दत्त आनीतः, अन्येषां

नउलगाणं मज्झे कओ, सद्दाविओ, पच्चभिन्नाओ, पुरोहियस्स जिब्भा छिन्ना, रण्णो उप्पत्तिया बुद्धी ॥ अंके–तहेव एगेण निक्खित्ते लंछेऊण उस्सीवेत्ता कूडरूवगाण भरिओ तहेव सिव्वियं, आगयस्स अल्लिविओ, सा मुद्दा उग्घाडिया, कूडरूवगा, ववहारो, पुच्छिओ–कित्तियं?, सहस्सं, गणेऊण गंठी तडिओ, तओ न तीरइ सिवेउं, कारणिगाणमुप्पत्तिया बुद्धी ॥ णाणए–तहेव निक्खेवओ पणा छूढा, आगयस्स नउलओ दिण्णो, पणे पुच्छा, राउले ववहारो, कालो को आसि?, अमुगो, अहुणोत्तणा पणा, सो चिराणओ कालो, डंडिओ, कारणिगाणमुप्पत्तिया ॥ भिक्खुंमि–तहेव निक्खेवओ, सो न देइ, जूतिकरा ओलग्गिया, तेहिं पुच्छिएण य सब्भावो कहिओ, ते रत्तपडवेसेण भिक्खुसगासं गया सुवण्णस्सखोडीओ गहाय, अम्हे वच्चामो चेइयवंदगा, इमं अच्छउ, सो य पुव्वं भणिओ, एयंमि अंतरे आगएणं मग्गियं, तीए लोलयाए दिण्णं, अन्नेविय भिक्खंतगा एताए मंजूसाए कज्जिहित्ति निग्गया, जूइकाराणमुप्पत्तिया बुद्धी ॥ चेडगणिहाणे–दो मित्ता, तेहिं निहाणगं

---

१ नकुलकानां मध्ये कृतः, शब्दितः, प्रत्यभिज्ञातः, पुरोहितस्य जिह्वा छिन्ना, राज्ञ औत्पत्तिकी बुद्धिः ॥ अङ्कः–तथैवैकेन निक्षिप्ते लाञ्छयित्वोत्सीव्य कूटरूपकैर्भृतः तथैव सीवितः, आगतायार्पितः, सा मुद्रोद्घाटिता, कूटरूप्यकाः, व्यवहारः, पृष्टः–कियत्?, सहस्रं, गणयित्वा ग्रन्थिर्बद्धः, ततो न शक्यते सीवितुं, कारणिकाणामौत्पत्तिकी बुद्धिः ॥ नाणके–तथैव निक्षेपः पणा (द्रम्माः) क्षिप्ताः, आगताय नकुलको दत्तः, पणविषये पृच्छा, राजकुले व्यवहारः, कालः क आसीत्?, अमुकः, अधुनातनाः पणाः, स चिरन्तनः कालः, दण्डितः, कारणिकानामौत्पत्तिकी बुद्धिः ॥ भिक्षौ–तथैव निक्षेपः, स न ददाति, द्यूतकारा अवलगिताः, तैः पृष्टेन च सद्भावः कथितः, ते रक्तपटवेषेण भिक्षुसकाशं गताः सुवर्णखोरकान् गृहीत्वा, वयं व्रजामश्चैत्यवन्दकाः, इदं तिष्ठतु, स च पूर्वं भणितः, एतस्मिन्नवसरे आगतेन मार्गितं, तया लोलतया दत्तं, अन्येऽपि च भिक्षमाणा एतस्यां मञ्जूषायां करिष्यन्तीति निर्गताः, द्यूतकाराणामौत्पत्तिकी बुद्धिः ॥ चेटकनिधाने–द्वे मित्रे, ताभ्यां निधानं

दिट्ठं[1], कल्ले सुनक्खत्ते णेहामो, एगेण हरिऊण इंगाला छूढा, वीयदिवसे इंगाला पेच्छइ, सो धुत्तो भणइ—अहो मंदपुन्ना अम्हे किह ता इंगाला जाया ?, तेण णायं, हिययं ण दरिसेइ, तस्स पडिमं करेइ, दो मक्कडे लएइ, तस्स उवरि भत्तं देइ, ते छुहाइया तं पडिमं चडंति । अन्नया भोयणं सज्जिय दारगाँ णीया, संगोविया न देइ, भणइ—मक्कडा जाया, आगओ, तत्थ लेप्पणट्ठाणे ठाविओ, मक्कडगा मुक्का, किलिकिलिंता विलग्गा, भणिओ—एए ते तव पुत्ता, सो भणइ—कहं दारगा मक्कडा भवंति ?, सो भणइ—जहा दिनारा इंगाला जाया तहा दारगावि, एवं णाए दिण्णो भागो, एयस्स उप्पत्तिया बुद्धी ॥ सिक्खासत्थे धणुवेओ, तंमि एगो कुलपुत्तगो धणुवेयकुसलो, सो य कहिंपि हिंडंतो एगत्थ ईसरपुत्तए सिक्खावेइ, दवं विढत्तं, तेसिंपि तिमिस्सयावेएँइ—बहुगं दवं दिन्नं, जइया जाहि तइया मारिज्जिहितित्ति, गेहाओ य नीसरणं केणवि उवाएण न देंति, तेण णायं, संचारियं सन्नायगाणं जहा अहं रत्तिं छाणपिंडए णईए छुभिस्सामि, ते लएज्जह, तेण गोलगा

---

१ दृष्टं, कल्ये सुनक्षत्रे नेतास्वहे, एकेन हृत्वाऽङ्गाराः क्षिप्ताः, द्वितीयदिवसेऽङ्गारान् पश्यति, स धूर्त्तो भणति—अहो मन्दपुण्यावावां कथं तावदङ्गारा- जाताः, तेन ज्ञातं, हृदयं न दर्शयति, तस्य प्रतिमां करोति, द्वौ मर्कटौ लाति, तस्योपरि भक्तं ददाति, तौ क्षुधार्त्तौ तां प्रतिमां चटतः । अन्यदा भोजनं सज्ज- यित्वा दारकौ नीतौ, संगोपितौ न ददाति, भणति—मर्कटौ जातौ, आगतः, तत्र लेप्यस्थाने स्थापितः, मर्कटौ मुक्तौ, किलकिलायमानौ विलग्नौ, भणितः—एतौ तौ ते पुत्रौ, स भणति—कथं दारकौ मर्कटौ भवतः ?, स भणति—यथा दीनारा अङ्गारा जातास्तथा दारकावपि, एवं ज्ञाते दत्तो भागः, एतस्यौत्पत्तिकी बुद्धिः ॥ शिक्षाशास्त्रं—धनुर्वेदः, तस्मिन्नेकः कुलपुत्रको धनुर्वेदकुशलः, स च क्वचिदपि हिण्डमान एकत्रेश्वरपुत्रान् शिक्षयति, द्रव्यं उपार्जितं, तेषामपि शल्यायते बहु द्रव्यं दत्तं, यदा यास्यति तदा मारयिष्याम इति, गृहाच्च निःसरणं केनाप्युपायेन न ददति, तेन ज्ञातं, संदिष्टं संज्ञातकानां यथाऽहं रात्रौ छगण ( गोमय ) पिण्डान् नद्यां क्षेप्स्यामि तान् आददीध्वं, तेन गोलका × तिमिस्सिया चिंतंति प्र.

दव्वेण समं वालिया, एसा अम्हं विहित्ति तिहिपवणीसु तेहिं दारएहिं समं णईए छूहइ, एवं निव्वाहेऊण नट्ठो, एयस्स उप्पत्तिया ॥ अत्थसत्थे—एगो पुत्तो दो सवत्तिणीओ, ववहारो न छिज्जइ, देवीए भणियं—मम पुत्तो जाहिति, सो एयस्स असोगपायवस्स हेट्ठा ठिओ ववहारं छिंदिहिति, ताव दोवि अविसेसेण खाह पिवहत्ति, जीसे ण पुत्तो सा चिंतेइ—एत्तिओ ताव कालो लद्धो, पच्छा न याणामो किं भविस्सइत्ति पडिस्सुयं, देवीए णायं—ण एसा पुत्तमायत्ति, देवीए उप्पत्तिया ॥ इच्छाए—एगो भत्तारो मओ, वड्डिप्पउत्तं न उग्गमइ, तीए पतिमित्तो भणिओ—उग्गमेहि, सो भणइ—जइ मम विभागं देहि, तीए भणियं—जं इच्छसि तं मम भागं देज्जासि, तेण उग्गमेउं तीसे तुच्छयं देइ, सा नेच्छइ, ववहारो, आणावियं, दो पुंजा कया, कयरं तुमं इच्छसि ?, महंतं रासिं भणइ, भणिओ—एयं चेव देहित्ति, दवाविओ, कारणियाणमुप्पत्तिया ॥ सयसहस्से— एगो परिब्भट्ठओ, तस्स सयसहस्सो खोरो, सो भणइ—जो ममं अपुव्वं सुणावेइ तस्स एयं देमि, तत्थ सिद्धपुत्तेण सुयं,

---

१ द्रव्येण समं वालिताः, एषोऽस्माकं विधिरिति तिथिपर्वसु तैर्दारकैः समं नद्यां क्षिपति, एवं निर्वाह्य नष्टः, एतस्यौत्पत्तिकी बुद्धिः ॥ अर्थशास्त्रे—एकः पुत्रः द्वे सपत्न्यौ, व्यवहारो न छिद्यते, देव्या भणितं—मम पुत्रो भविष्यति स एतस्याशोकपादपस्याधस्तात्स्थितो व्यवहारं छेत्स्यति, तावद् द्वे अप्यविशेषेण खादतं पिबतमिति, यस्या न पुनः सा चिन्तयति—एतावान् तावत् कालो लब्धः, पश्चान्न जाने किं भविष्यतीति प्रतिश्रुतं, देव्या ज्ञातम्—नैषा पुत्रमातेति, देव्या औत्पत्तिकी ॥ इच्छायां—एको भर्त्ता मृतः, वृद्धिप्रयुक्तं नागच्छति, तया पतिमित्रं भणितं—उद्ग्राहय, स भणति—यदि मह्यं विभागं ददासि, तया भणितं—यदिच्छसि तं मह्यं भागं दद्याः, तेनोद्ग्राह्य तस्यै तुच्छं दीयते, सा नेच्छति, व्यवहारः, आनायितं, द्वौ पुञ्जौ कृतौ, कतरं त्वमिच्छसि ?, महान्तं राशिं भणति, भणितः—एनमेव देहीति, दापितः, कारणिकानामौत्पत्तिकी ॥ शतसहस्रे—एकः परिभ्रष्टः, तस्य शतसाहस्रिकं खोरकं, स भणति—यो मह्यमपूर्वं श्रावयति तस्मै एतद् ददामि, तत्र सिद्धपुत्रेण श्रुतं,

तेण भण्णइ–'तुज्झ पिया मज्झ पिउणो धारेइ अणूणयं सयसहस्सं । जइ सुयपुव्वं दिज्जउ अह ण सुयं खोरगं देहि ॥ १ ॥
जिओ, सिद्धपुत्तस्स उप्पत्तियत्ति गाथात्रयार्थः ॥ उक्तौत्पत्तिकी, अधुना वैनयिक्या लक्षणं प्रतिपादयन्नाह—

भरनित्थरणसमत्था तिवग्गसुत्तत्थगहिअपेआला । उभओ लोगफलवई विणयसमुत्था हवइ बुद्धी ॥ ९४३ ॥

व्याख्या—इहातिगुरु कार्यं दुर्निर्वहत्वाद्भर इव भरः, तन्निस्तरणे समर्था भरनिस्तरणसमर्था, त्रयो वर्गाः त्रिवर्गमिति लोकरूढेर्धर्मार्थकामाः, तदर्जनपरोपायप्रतिपादननिबन्धनं सूत्रं तदन्वाख्यानं तदर्थः पेयालं–प्रमाणं सारः, त्रिवर्गसूत्रार्थयोर्गृहीतं प्रमाणं–सारो यया सा तथाविधा, अथवा त्रिवर्गः–त्रैलोक्यम् ॥ आह—नन्वध्ययनेऽश्रुतनिसृताऽऽभिनिबोधिकाधिकारे औत्पत्तिक्यादिबुद्धिचतुष्टयोपन्यासः, त्रिवर्गसूत्रार्थगृहीतसारत्वे च सत्यश्रुतनिःसृतत्वमुक्तं विरुध्यत इति, न हि श्रुताभ्यासमन्तरेण त्रिवर्गसूत्रार्थगृहीतसारत्वं सम्भवति, अत्रोच्यते, इह प्रायोवृत्तिमङ्गीकृत्याश्रुतनिसृतत्वमुक्तम्, अतः स्वल्पश्रुतनिसृतभावेऽप्यदोष इति । 'उभयलोकफलवती' ऐहिकामुष्मिकफलवती 'विनयसमुत्था' विनयोद्भवा भवति बुद्धिरिति गाथार्थः ॥ अस्या एव विनेयजनानुग्रहार्थमुदाहरणैः स्वरूपमुपदर्शयन्नाह—

निमित्ते १ अत्थसत्थे २ अलेहे ३ गणिए अ ४ कूव ५ अस्से अ ६ ।
गद्दह ७ लक्खण ८ गंठी ९ अगए १० गणिआ य रहिओ अ ११ ॥ ९४४ ॥

सीआ साडी दीहं च तणं अवसव्वयं च कुंचस्स १२। निव्वोदए अ १३ गोणे घोडगपडणं च रुक्खाओ१४ ॥९४५॥

---

१ तेन भण्यते–'तव पिता मम पितुर्धारयत्यनूनं शतसहस्रम् । यदि श्रुतपूर्वं ददात्वथ न श्रुतपूर्वं खोरकं ददातु ॥ १ ॥ जितः, सिद्धपुत्रस्यौत्पत्तिकीति ॥

व्याख्या—गाथाद्वयार्थः कथानकेभ्य एवावसेयः, तानि चामूनि–तत्थ निमित्तेत्ति, एगस्स सिद्धपुत्तस्स दो सीसगा निमित्तं सिक्खिया, अन्नया तणकट्ठस्स वच्चंति, तेहिं हत्थिपाया दिट्ठा, एगो भणइ–हत्थिणियाए पाया, कहं ?, काइएण, सा य हत्थिणी काणा, कहं ?, एगपासेण तणाइं खाइयाइं, तेण काइएणेव णायं जहा इत्थी पुरिसो य विलग्गाणि, सा य गुव्विणित्ति, कहं ?, हत्थाणि थंभेत्ता उट्ठिया, दारगो से भविस्सइ, जेण दक्खिणो पाओ गरुओ, रत्तपोत्ता, जेण रत्ता दसिया रुक्खे लग्गा ॥ णईतीरे एगाए वुड्ढीए पुत्तो पवसियओ, तस्सागमणं पुच्छिया, तीसे य घडओ भिन्नो, तत्थेगो भणइ— 'तज्जाएण य तज्जायं' सिलोगो मओत्ति परिणामेइ, बितिओ भणइ–जाहि वुड्ढे ! सो घरे आगओ, सा गया, दिट्ठो पुत्ता-गओ, जुवलगं रूवगे य गहाय आगया, सक्कारिओ, बितिओ आपुच्छइ–सब्भावं मम न कहेसि, तेण पुच्छिया, तेहिं जहाभूयं परिकहियं, एगो भणइ–विवत्ती मरणं, एगो भूमीओ उट्ठिओ सो भूमीए चेव मिलिओ, एवं सोवि दारओ,

---

१ तत्र निमित्तमिति–एकस्य सिद्धपुत्रस्य द्वौ शिष्यौ निमित्तं शिक्षितौ, अन्यदा तृणकाष्ठाय व्रजतः, ताभ्यां हस्तिपादाः दृष्टा, एको भणति–हस्तिन्याः पादाः, कथं ?, कायिक्या, सा च हस्तिनी काणा, कथं ?, एकपार्श्वेन तृणानि खादितानि, तेन कायिक्यैव ज्ञातं यथा स्त्री पुरुषश्च विलग्नौ, सा च गुर्विणीति, कथं ?, हस्तौ स्तम्भयित्वोत्थिता, दारकस्तस्या भविष्यति, येन दक्षिणः पादो गुरुः, रक्तपोता, येन रक्ता दशा वृक्षे लग्ना ॥ नदीतीरे एकस्या वृद्धायाः पुत्रः प्रोषितः, तस्यागमनं पृष्टौ, तस्याश्च घटो भिन्नः, तत्रैको भणति–तज्जातेन च तज्जातं ( श्लोकः ) मृत इति कथयति, द्वितीयो भणति–याहि वृद्धे ! स गृहे आगतः, सा गता, दृष्टः पुत्रागतः, युग्मं रूप्यकाणां गृहीत्वाऽऽगता, सत्कारितः, द्वितीय आपृच्छति–सद्भावं मह्यं न कथयसि, तेन पृष्टौ, ताभ्यां यथाभूतं परिकथितं, एको भणति–व्यापत्तिर्मरणं, एको भूमेरुत्थितः स भूमावेव मिलितः, एवं सोऽपि दारकः, * कहेइ.

[1]भणियं च–'तज्जाएण य तज्जायं'सिलोगो, गुरुणा भणियं–को मम दोसो ?, ण तुमं सम्मं परिणामेसि, एगस्स वेणइगी बुद्धी ॥ अत्थसत्थे–कप्पओ दहिकुंडगउच्छुकलावओ य, एयस्स वेणइगी ॥ लेहे जहा–अट्ठारसलिविजाणगो, एवं गणिएवि । अण्णे भणंति–कुमारा वट्टेहिं रमन्ता अक्खराणि सिक्खाविया गणियं च, एसाऽवेयस्स वेणइगी । कूवे–खायजाणएण भणियं जहा–एद्दूरे पाणियंति, तेहिं खयं, तं वोलीणं, तस्स कहियं, पासे आहणहत्ति भणिया, घोसगसद्देणं जलमुद्धाइयं, एयस्स वेणइगी ॥ आसो–आसवाणियगा बारवइं गया, सव्वे कुमारा थुल्ले वड्डे य गेण्हंति, वासुदेवेण दुब्बलओ लक्खणजुत्तो जो सो गहिओ, कज्जनिव्वाही अणगेआसावहो य जाओ, वासुदेवस्स वेणइगी ॥ गद्दभे–राया तरुणप्पिओ, सोओधाइओ, अडवीए तिसाए पीडिओ खंधारो, थेरं पुच्छइ, घोसावियं, एगेण पिइभत्तेणाणीओ, तेण कहियं–गद्दभाणं उस्सिंघणा, तस्स सिरापासणं, अन्ने भणंति–उस्सिंघणाए चेव जलासयगमणं, थेरस्स वेणइगी ॥ लक्खणे–पारसविसए

---

१ भणितं च–'तज्जातेन च तज्जातं' श्लोकः, गुरुणा भणितं–को मम दोपः ?, न त्वं सम्यक् परिणमयसि, एकस्य वैनयिकी बुद्धिः ॥ अर्थशास्त्रे–कल्पकः दधिभाजनमिक्षुकलापकश्च, एतस्य वैनयिकी ॥ लेखे यथाऽष्टादशलिपिविज्ञायकः, एवं गणितेऽपि, अन्ये भणन्ति–राजकुमारा वर्तुलै रममाणा अक्षराणि शिक्षिताः गणितं च, एपाऽप्येतस्य वैनयिकी ॥ कूपे–खातज्ञायकेन भणितं–यथेयद्दूरे पानीयमिति, तैः खातं, तद्व्यतिक्रान्तं, तस्य कथितं, पार्श्वे आखनतेति भणिताः, घोपकशब्देन जलमुद्धावितं, एतस्य वैनयिकी ॥ अश्वः–अश्ववणिजो द्वारिकां गताः, सर्वे कुमाराः स्थूलान् बृहतश्च गृह्णन्ति, वासुदेवेन दुर्बलो लक्षणयुक्तो यः स गृहीतः, कार्यनिर्वाही अनेकाश्वावहश्च जातः, वासुदेवस्य वैनयिकी ॥ गर्दभः–राजा तरुणप्रियः सोऽवधावितः, अटव्यां तृपा पीडितः स्कन्धावारः, स्थविरं पृच्छति, घोपितं, एकेन पितृभक्तेनानीतः, तेन कथितं–गर्दभाणामुद्घ्राणं, तस्य शिरादर्शनं, अन्ये भणन्ति–उद्घ्राणेनैव जलाशयगमनं, स्थविरस्य वैनयिकी ॥ लक्षणे–पारसविपये

आसरक्खओ, धीयाएतस्स समं संसग्गी, तीए भणिओ—वीसत्थाणं घोडाणं चम्मं पहाणाण भरेऊण रुक्खाओ मुयाहि, तत्थ जो ण उत्तस्सइ तं लएहि, पडहयं च वाएहि, बुज्झावेहिय खक्खरएणं, सो वेयणकाले भणइ—मम दो देहि, अमुगं २ च, तेण भणिओ—सव्वे गेण्हाहि, किं ते एएहिं, सो नेच्छइ, भज्जाए कहियं—धीया दिज्जउ, भज्जा से नेच्छइ, सो तीसे वड्ढइ, दारयं कहे(रे)इ, लक्खणजुत्तेण कुडुंबं परिवड्ढइत्ति ॥ एगस्स माउलगेण धीया दिन्ना, कम्मं न करेइ, भज्जाए चोदिओ दिवे दिवे अडवीओ रित्तहत्थो एइ, छट्ठे मासे लद्धं कट्ठं कुलओ कओ, सयसहस्सेण सेट्ठिणा लइओ, अक्खयाणिमित्तं, आससामिस्स वेणइगी ॥ गंठिंमि—पाडलिपुत्ते मुरुंडो राया, पालित्ता आयरिया, तत्थ जाणएहिं इमाणि विसज्जियाणि—सुत्तं मोहिययं लट्ठी समा समुग्गकोत्ति, केणवि ण णायाणि, पालित्तायरिया सद्दाविया, तुब्भे जाणह भगवंति ?, बाढं जाणामि, सुत्तं उण्होदए छूढं मयणं विरायं दिट्ठाणि अग्गग्गाणि, दंडओ पाणिए छूढो, मूलं गुरुयं, समुग्गओ जउणा घोलिओ

---

१ अश्वरक्षकः, दुहित्रैतेन समं संसृष्टा, तया भणितः—विश्वस्तानां घोटकानां चर्म पाषाणैर्भृत्वा वृक्षान्मुञ्च, तत्र यो नोत्त्रसति तं लायाः, पटहं च वादय, बोधय च खर्खरकेण, स चेतनकाले भणति—मम द्वौ देहि, अमुकममुकं च, तेन भणितः—सर्वान् गृहाण, किं ते आभ्यां ?, स नेच्छति, भार्यायै कथितं—दुहिता दीयतां, भार्या तस्य नेच्छति, स तया सह कलहयति, दारकं कथय(रो)ति, लक्षणयुक्तेन कुटुम्बं परिवर्धत इति ॥ एकस्य मातुलकेन दुहिता दत्ता, कर्म न करोति, भार्यया चोदितो दिवसे दिवसेऽटवीतो रिक्तहस्त आयाति. षष्ठे मासे लब्धं काष्ठं कूलतः (कुडवः) कृतः, शतसहस्रेण श्रेष्ठिना गृहीतः अक्षततानिमित्तं, अश्वस्वामिनो वैनयिकी ॥ ग्रन्थौ—पाटलीपुत्रे मुरुण्डो राजा, पादलिप्ता आचार्याः, तत्र ज्ञातृभिरिमानि प्रेषितानि—सूत्रं मोहितकं यष्टिः समः समुद्गक इति, केनापि न ज्ञातानि, पादलिप्ताचार्याः शब्दिताः, यूयं जानीथ भगवन्निति?, बाढं जानामीति, सूत्रमुष्णोदके क्षिप्तं मदनं विगतं दृष्टान्यग्राग्राणि, दण्डः पानीये क्षिप्तः, मूलं गुरु, समुद्गको जतुना वेष्टित

उण्होदए कड्ढिओ उग्घाडिओ य, तेण विय *ओट्टियं सयलगं राइल्लेऊण रयणाणि छूढाणि, तेण सीवणीए सीविऊण विसज्जियं अभिंदेत्ता निप्फेडेह, ण सक्कियं, पादलित्तयस्स वेणइगी ॥ अगए-परवलं णयरं रोहेउ एइत्ति रायाए पाणीयाणि विणासेयव्वाणित्ति विसकरो पाडिओ, पुंजा कया, वेज्जो जवमेत्तं गहाय आगओ, राया रुट्ठो, वेज्जो भणइ-सयसहस्सवेधी, कहं?, खीणाऊ हत्थी आणीओ, पुंछवालो उप्पाडिओ, तेणं चेव वालेणं तत्थ विसं दिण्णं, वित्रण्णं करियं तं चरंतं दीसइ, एस सव्वोवि विसं, जोवि एयं खायइ सोवि विसं, एयं सयसहस्सवेधी, अत्थि निवारणाविही?, वाढं अत्थि, तहेव अगओ दिन्नो, पसमिंतो जाइ, वेज्जस्स वेणइगी। जं किं वहुणा?, असारेण पडिवक्खदरिसणेण य आयोवायकुसलत्तदंसणत्ति ॥ रहिओ गणियायएक्कं चेव, पाडलिपुत्ते दो गणियाओ-कोसा उवकोसा य, कोसाए समं थूलभद्दसामी अच्छइओ आसि पव्वइओ, जं वरिसारत्तो तत्थेव कओ तओ साविया जाया, पच्चक्खाइ अवंभस्स अण्णत्थ रायणिओगेण, रहिएण

---

१ उष्णोदके क्षिप्त उद्घाटितश्च, तेनापि औष्ट्रिकं शकलं रालालिप्तं (संधितं) कृत्वा रत्नानि क्षिप्तानि, तेन सीवन्या सीवित्वा विसृष्टं अभित्त्वा निष्काशयत, न शकितं, पादलिप्तस्य वैनयिकी ॥ अगदः-परवलं नगरं रोद्धुमायातीति राज्ञा पानीयानि विनाशयितव्यानीति विषकरः पातितः, पुञ्जाः कृताः, वैद्यो यवमात्रं गृहीत्वाऽऽगतः, राजा रुष्टः, वैद्यो भणति-शतसहस्रवेधि, कथं?, क्षीणायुर्हस्ती आनीतः, पुच्छवालः सविषीकृतः (उत्पाटितः), तेनैव वालेन तत्र विषं दत्तं, विपन्नं कृत्वा तच्चरत् दृश्यते, एप सर्वोऽपि विपं, योऽप्येनं खादति सोऽपि विपं, एतत् शतसहस्रवेधि, अस्ति निवारणाविधिः?, वाढमस्ति, तथैवागदो दत्तः, प्रशामयन् याति, वैद्यस्य वैनयिकी। यत् किं वहुना?, असारेण प्रतिपक्षदर्शनेन च आयोपायकुशलदर्शनमिति ॥ रथिकः गणिका चैकमेव, पाटलीपुत्रे द्वे गणिके-कोशोपकोशा च, कोशया समं स्थूलभद्रस्वामी स्थित आसीत् प्रव्रजितः, यद् वर्षारात्रस्तत्रैव कृतः ततः श्राविका जाता, प्रत्याख्याति अब्रह्मणः अन्यत्र राजनियोगात्, रथिकेन * दोट्टियं.

आराहिओ, सा दिण्णा, थूलभद्दसामिणो अभिक्खणं २ गुणग्गहणं करेइ, न तहा तं उवयरइ, सो तीए अप्पणो विन्नाणं दरिसेउकामो असोगवणियाए णेइ, भूमीगएण अंबपिंडी तोडिया, कंडपोंखे अण्णोण्णं लायंतेण हत्थब्भासं आणेत्ता अद्ध-चंदेण छिन्ना गहिया य, तहावि ण तूसइ, भणइ-किं सिक्खियस्स दुक्करं?, सा भणइ-पिच्छ ममंति सिद्धत्थयरासिंमि णच्चिया सूईण अग्गयंमि य कणियारकुसुमपोइयासु य, सो आउट्टो, सा भणइ-'न दुक्करं छोडिय अंबपिंडी, ण दुक्करं सिक्खिउ नच्चियाए। तं दुक्करं तं च महाणुभावं, जं सो मुणी पमदवणंमि वुच्छो ॥ १ ॥' तओ तस्स संतिगो वुत्तंतो सिट्ठो, पच्छा उवसंतो रहिओ, दोण्हवि वेणइगी ॥ सीया साडी दीहं च तणं कोंचयस्स अवसव्वयं एक्कं चेव, रायपुत्ता आयरिएण सिक्खाविया, दव्वलोभी य सो रायाणओ तं मारेउमिच्छइ, ते दारगा चिंतेंति-एएण अम्हं विज्जा दिण्णा, उवाएण नित्थारेमो, जाहे सो जेमओ एइ ताहे ण्हाणसाडियं मग्गइ, ते सुक्कियं भणंति-अहो सीया साडी, बारसंमुहं तणं

---

१ राजाऽऽराद्धः, सा दत्ता, स्थूलभद्रस्वामिनोऽभीक्ष्णमभीक्ष्णं गुणग्रहणं करोति, न तथा तमुपचरति, स तस्यै आत्मनो विज्ञानं दर्शयितुकामोऽशोकवनिकायां नयति, भूमिगतेनाम्रपिण्डी त्रोटिता, शरपुङ्खान् अन्योऽन्यं लाता हस्ताभ्यासमानीयार्धचन्द्रेण छिन्ना गृहीता च, तथापि न तुष्यति, भणति-किं शिक्षितस्य दुष्करं?, सा भणति-पश्य ममेति सिद्धार्थकराशौ नर्तिता सूचीनामग्रे च कर्णिकारकुसुमप्रोतानां च, स आवर्जितः, सा भणति-न दुष्करमाम्रपिण्डित्रोटनं, न दुष्करं शिक्षितस्य नर्तने ( शिक्षितायां नृत्तौ )। तद्दुष्करं तच्च महानुभावं, यत्स मुनिः प्रमदावने उषितः ॥ १ ॥ ततस्तत्सत्को वृत्तान्तः शिष्टः, पश्चादुपशान्तो रथिकः, द्वयोरपि वैनयिकी ॥ शीता शाटी दीर्घं च तृणं क्रौञ्चकस्यापसव्यमेकमेव, राजपुत्रा आचार्येण शिक्षिताः, द्रव्यलोभी च स राजा तं मारयितुमिच्छति, ते दारकाश्चिन्तयन्ति-एतेनास्माकं विद्या दत्ता, उपायेन निस्तारयामः, यदा स जेमितुमायाति तदा स्नानशाटीं मार्गयति, ते शुष्कां भणन्ति-अहो शीता शाटी, द्वारसंमुखं तृणं

[1]देंति, भणंति–अहो दीहं तणं, पुव्वं कुंचएण पयाहिणीकज्जइ, तद्दिवसं अपयाहिणीकओ, परिगयं जहा विरत्ताणि, पंथो दीहो सीयाणं ममं काउं मग्गइ, नट्ठो, दोण्हवि वेणइगी ॥ निंबोदए–वाणियगभज्जा चिरपउत्थे पइम्मि दासीए सब्भावं कहेइ–पाहुणयं आणेहित्ति भणिया, तीए पाहुणओ आणीओ, आवस्सयं च से कारियं, रत्तिं पवेसिओ, तिसाइओ निंबोदयं दिन्नं, मओ, देउलियाए उज्झिओ, ण्हाविया पुच्छिया, केण कारियं ?, दासीए, सा पहया, कहियं, वाणिगिणी पुच्छिया, साहइ सब्भावं, पलोइयं, तयाविसो घोणसोत्ति दिट्ठो य, णयरमयहराणं वेणइगी ॥ गोणे घोडगपडणं च रुक्खाओ एक्कं, एगो अकयपुण्णो जं जं करेइ तं तं से विवज्जइ, मित्तस्स जाइतएहिं वइल्लेहिं हलं वाहेइ, वियाले आणिया, वाडे छूढा, सो जेमेइ, मित्तो* सोइ, लज्जाए ण ढुक्को, तेणवि दिट्ठा, ते णिप्फिडिया वाडाओ हरिया, गहिओ, देहित्ति राउलं निज्जइ। पडिपंथेणं घोडएणं एइ पुरिसो, सो तेण पाडिओ आसएण, पलायंतो तेण भणिओ–आहणहत्ति, मम्मे आहओ, मओ, तेणवि

---

१ ददति, भणन्ति–अहो दीर्घं तृणं, पूर्वं क्रौञ्चेन प्रदक्षिणीक्रियते, तद्दिवसमप्रदक्षिणीकृतः, परिगतं यथा विरक्तानि, पन्था दीर्घः शीतत्राणं ( गमनं ) मम कर्त्तुं मार्गयति, नष्टः, द्वयोरपि वैनयिकी। नीम्रोदके–वणिग्भार्या चिरप्रोषिते पत्यौ दास्यै सद्भावं कथयति–प्राघूर्णकमानयेति भणिता, तया प्राघूर्णक आनीतः, भद्रं च तस्य कारितं, रात्रौ प्रवेशितः, तृषितो नीम्रोदकं दत्तं, मृतः, देवकुलिकायामुज्झितः, नापिताः पृष्टाः, केन कारितं ?, दास्या, सा प्रहता, कथितं, वणिग्जाया पृष्टा, कथयति सद्भावं, प्रलोकितं, त्वग्विषः सर्प इति दृष्टश्च, नगरमहत्तराणां वैनयिकी। गौः घोटक पतनं वृक्षात् चैकमेव, एकोऽकृतपुण्यो यद्यत्करोति तत्तत्तस्य विपद्यते, मित्रस्य याचिताभ्यां बलीवर्दाभ्यां हलं वाहयति, विकाले आनीतौ, वाटके त्यक्तौ, स जेमति, मित्रं स्वपिति, लज्जया न समीपमागतः, तेनापि दृष्टौ, तौ निष्काशितौ वाटकाद् हृतौ, गृहीतः, देहीति राजकुलं नीयते। प्रतिपथेन घोटकेनैति पुरुषः, स तेन पातितः अश्वेन, पलायमानः तेन भणित–आजहीति, मर्मण्याहतः, मृतः, तेनापि * मित्तो सो लज्जाए णवि दिट्ठो प्र.

लइओ, वियाले णयरिबाहिरियाए वुत्था, तत्थ लोमंथिया सुत्ता, इमेवि तहिं चेव, सो चिंतेइ-जावज्जीवबंधणो कीरिस्सामि, वरं मे अप्पा उब्बंधो, सुत्तेसु दंडिखंडेण तंमि वडरुक्खे अप्पाणं उक्कलंबेइ, सा दुब्बला, तुट्टा, पडिएण लोमंथियमयहरओ मारिओ, तेहिवि गहिओ, करणं णीओ, तीहिवि कहियं जहावुत्तं, सो पुच्छिओ भणइ-आमं, कुमारामच्चो भणइ-एसो बलद्दे देउ तुब्भं पुण अक्खीणि ओक्खमेंतु, एसो आसं देउ, तुज्झ जीहा उप्पाडिज्जइ, एसो हेट्ठा ठाउ तुब्भं एगो उवज्झाओ उक्कलंबिज्जउ, णिप्पडिभोत्ति काउं मंतिणा मुक्को, मंतिस्स वेणइगित्ति गाथाद्वयार्थः ॥ उक्ता वैनयिकी, साम्प्रतं कर्मजाया बुद्धेर्लक्षणं प्रतिपादयन्नाह—

**उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला। साहुक्कारफलवई कम्मसमुत्था हवइ बुद्धी ॥ ९४६ ॥**

व्याख्या—उपयोजनमुपयोगः-विवक्षिते कर्मणि मनसोऽभिनिवेशः सारः-तस्यैव कर्मणः परमार्थः उपयोगेन दृष्टः सारो ययेति समासः अभिनिवेशोपलब्धकर्मपरमार्थेत्यर्थः, कर्मणि प्रसङ्गः-अभ्यासः परिघोलनं-विचारः कर्मप्रसङ्गपरिघोलनाभ्यां विशाला कर्मप्रसङ्गपरिघोलनविशाला अभ्यासविचारविस्तीर्णेति भावार्थः, साधुकृतं-सुष्ठुकृतमिति विद्वद्भ्यः प्रशंसा

---

१ लगितः ( सोऽपि लग्नः ), विकाले नगरीबाहिरिकायामुषिताः, तत्र मल्लाः सुप्ताः, इमेऽपि तत्रैव, स चिन्तयति-यावज्जीवबन्धनः कारयिष्ये, वरं ममात्मोद्बद्धः, सुप्तेषु दण्डीखण्डेन तस्मिन्वटवृक्षे आत्मानमवलम्बयति, सा दुर्बला, त्रुटिता, पतितेन महामहत्तरको मारितः, तैरपि गृहीतः, करणं नीतः, त्रिभिरपि कथितं यथावृत्तं, स पृष्टो भणति-ओम्, कुमारामात्यो भणति-एष बलीवर्दौ ददाति त्वं पुनरक्षिणी निष्काशय, एषोऽश्वं ददातु, तव जिह्वोत्पाट्यते, एषोऽधस्तात्तिष्ठतु युष्माकमेक उपाध्यायोऽवलम्बयतु, निष्प्रतिभ इतिकृत्वा मन्त्रिणा मोचितः, मन्त्रिणो वैनयिकी ॥

साधुकारस्तेन फलवतीति समासः, साधुकारेण वा शेषमपि फलं यस्याः सा तथा, 'कर्मसमुत्था' कर्मोद्भवा भवति बुद्धिरिति गाथार्थः ॥ अस्या अपि विनेयवर्गानुकम्पयोदाहरणैः स्वरूपमुपदर्शयन्नाह—

हेरन्निए १ करिसए २ कोलिअ ३ डोवे अ ४ मुत्ति ५ घय ६ पवए ७ ।
तुन्नाग ८ वड्ढई ९ पूइए अ १० घड ११ चित्तकारे अ १२ ॥ ९४७ ॥

व्याख्या—हेरंण्णिओ अभिक्खजोएण अंधकारेवि रूवयं जाणइ हत्थामोसेणं, करिसओ अभिक्खजोएण जाणइ फलनिप्फत्तिं, तत्थ उदाहरणं–एगेण चोरेण खत्तं पउमाकारं खयं, सो जणवायं निसामेइ, करिसओ भणइ–किं सिक्खियस्स दुक्करं ?, चोरेण सुयं, पुच्छिओ गंतूण, छुरियं अंच्छिऊँण* मारेमि, तेण पडयं पत्थरेत्ता वीहियाण मुट्ठी भरित्ता किं परंमुहा पडंतु उरंमुहा पासेल्लिया (वा)?, तहेव कयं, तुट्ठो । कोलिओ मुट्ठिणा गहाय तंतू जाणइ–एत्तिएहिं वा कंडएहिं बुज्झइत्ति । डोए वड्ढइ जाणइ एत्तियं माई । मोत्तियं †आइण्णंतो आगासे उक्खिवित्ता तहा णिक्खिवइ जहा ‡कोलवाले पडइ

---

१ सुवर्णकारोऽभीक्ष्णयोगेनान्धकारेऽपि रूप्यकं जानाति हस्तामर्शेन, कर्षकोऽभीक्ष्णयोगेन जानाति फलनिष्पत्ति, तत्रोदाहरणं–एकेन चौरेण खात्रं पद्माकारं खातं, स जनवादं निशामयति, कर्षको भणति–किं शिक्षितस्य दुष्करं ?, चौरेण श्रुतं, पृष्टो गत्वा, क्षुरिकामाकृष्य मारयामि, तेन पटं प्रस्तीर्य व्रीहीणां मुष्टिं भृत्वा किं पराङ्मुखाः पतन्तु अर्वाङ्मुखाः पार्श्वगा ( वा ? ), तथैव कृतं, तुष्टः । कोलिको मुष्टिना गृहीत्वा तन्तून् जानाति–इयद्भिर्वा कण्डकैरूयते इति । डोवे ( कुण्डिकायां ) वर्धकिर्जानातीयन्माति । मौक्तिकानि प्रोतयन् आकाशे उरिक्षप्य तथा निक्षिपति यथा कोलवाले ( दवरके ) पतति ।
* अंच्छिदिऊण † आणंतो ‡ कोलवाडे

घये घयविक्किणओ सगडे संतओ जइ रुच्चइ कुंडियानालए छुभइ । *पवयो आगासे ठियाइं को(क)रणाणि करेइ । तुण्णाओ पुव्विं †थुल्लाणि पच्छा जहा ण णज्जइ सूइए तइयं गेण्हइ जहा समप्पइ जहा ‡सामिसंतगं तं दूसं धियारेण कारियं । वड्ढई-अमवेऊण देवउलरहाणं पमाणं जाणइ । घडकारो पमाणेण मट्टियं गेण्हइ, भाणस्सवि पमाणं अमिणित्ता करेइ । पूविओ-ऽवि पुणो पलप्पमाणममवेऊण करेइ । चित्तकरोवि अमवेऊणवि पमाणजुत्तं करेइ, ततियं वा वन्नयं करेइ जत्तिएणं समप्पइ । सव्वेसिं कम्मजत्ति गाथार्थः ॥ उक्ता कर्मजा, साम्प्रतं पारिणामिक्या लक्षणं प्रतिपादयन्नाह—

अणुमाणहेउदिट्ठंतसाहिया वयविवागपरिणामा । हिअनिस्सेअसफलवई बुद्धी परिणामिआ नाम ॥ ९४८ ॥

व्याख्या—अनुमानहेतुदृष्टान्तैः साध्यमर्थं साधयतीति अनुमानहेतुदृष्टान्तसाधिका, इह लिङ्गात् ज्ञानमनुमानं स्वार्थमित्यर्थः, तत्प्रतिपादकं वचो हेतुः परार्थमित्यर्थः, अथवा ज्ञापकमनुमानं कारको हेतुः, दृष्टमर्थमन्तं नयतीति दृष्टान्तः । आह–अनुमानग्रहणादेव दृष्टान्तस्य गतत्वादलमुपन्यासेन, न, अनुमानस्य तत्त्वत एकलक्षणत्वात्, उक्तं च—"अन्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण किम् ? । नान्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण किम् ? ॥ १ ॥" इत्यादि । साध्यो-

१ घृते घृतविक्रायकः शकटे सन् यदि रोचते कुण्डिकानालके क्षिपति । प्लवक आकाशे स्थितानि (तः)करणानि करोति । तन्तुवायः पूर्वं स्थूलान् पश्चाद्यथा न ज्ञायते सूच्यां तावद्गृह्णाति यथा ( यावता ) समाप्यते यथा स्वामिसत्कं तद्दूष्यं अधिकारेण ( तद्दूष्यसन्धिकारेण ) कारितं । वर्धकिः अमापयित्वा देवकुलरथानां प्रमाणं जानाति । घटकारः प्रमाणेन मृत्तिकां गृह्णाति, भाजनस्यापि प्रमाणममापयित्वा करोति । आपूपिकोऽपि पुनः पलप्रमाणममापयित्वा करोति । चित्रकारोऽपि अमापयित्वाऽपि प्रमाणयुक्तं करोति, तावन्तं वा वर्णकं करोति यावता समाप्यते । सर्वेषां कर्मजेति * घरे पवओ † चूल्लाणि ‡ सामिसंगतं

पमाभूतस्तु दृष्टान्तः, उक्तं च–"यतः *साध्यस्योपमाभूतः, स दृष्टान्त इति कथ्यते" कालकृतो देहावस्थाविशेषो वय इत्युच्यते, तद्विपाके परिणामः–पुष्टता यस्याः सा तथाविधा, हितम्–अभ्युदयस्तत्कारणं वा, निःश्रेयसं–मोक्षस्तन्निबन्धनं वा हितनिःश्रेयसाभ्यां फलवती हितनिःश्रेयसफलवती बुद्धिः पारिणामिकी नामेति गाथार्थः ॥ अस्या अपि शिष्यगणहितायोदाहरणैः स्वरूपं दर्शयन्नाह—

अभए १ सिट्ठि २ कुमारे ३ देवी ४ उदिओदए हवइ राया ५ ।
साहू अ नंदिसेणे ६ धणदत्ते ७ सावग ८ अमच्चे ९ ॥ ९४९ ॥
खवगे १० अमच्चपुत्ते ११ चाणक्के १२ चेव थूलभद्दे अ १३ ।
नासिक्कसुंदरी नंदे १४ वइरे १५ परिणामिआ बुद्धी ॥ ९५० ॥
चलणाहय १६ आमंडे १७ मणी अ १८ सप्पे अ १९ खग्गि २० थूभिं २१ दे २२ ।
परिणामिअबुद्धीए एवमाई उदाहरणा ॥ ९५१ ॥

व्याख्या—आसामर्थः कथानकेभ्य एवावसेयः, तानि चामूनि–[1]अभयस्स कहं परिणामिया बुद्धी?, जया पज्जोओ रायगिहं †ओरोहति णयरं, पच्छा तेण पुव्वं निक्खित्ता खंधावारनिवेसजाणएणं, कहिए णट्ठो, एसा । अहवा जाहे

---

१ अभयस्य कथं पारिणामिकी बुद्धिः?, यदा प्रद्योतो राजगृहमवरुध्यते नगरं, पश्चात्तेन पूर्वं निक्षिप्ताः ( दीनाराः ) स्कन्धावारज्ञायकेन कथिते नष्टः, एषा । अथवा यदा * यः साध्य † ओरोहतियं

गणियाए छलेण णीओ बद्धो जाव तोसिओ चत्तारि वरा, चिंतियं चऽणेण–मोयावेमि अप्पगं, वरो मग्गिओ–अग्गीं अइमित्ति, मुक्को भणइ–अहं छलेण आणीओ, अहं तं दिवसओ पज्जोओ हीरइत्ति कंदंतं नेमि, गओ य रायगिहं, दासो उम्मत्तओ, वाणियदारियाओ, गहिओ, रडंतो हिओ, एवमाइयाओ बहुयाओ अभयस्स परिणामियाओ बुद्धीओ ॥ सेट्ठित्ति, कट्ठो णाम सेट्ठी एगत्थ णयरे वसइ, तस्स वज्जा नामं भज्जा, तस्स नेच्चइह्रो देवसंमो णाम बंभणो, सेट्ठी दिसाजत्ताए गओ, भज्जा से तेण समं संपलग्गा, तस्स य घरे तिन्नि पक्खी–सुओ य मयणसलागा कुक्कुडगो यत्ति, सो ताणि उवणिक्खिवित्ता गओ, सोऽवि धिज्जाइओ रत्ती अईइ, मयणसलागा भणइ–को तायस्स न बीहेइ ?, सुयओ वारेइ–जो अंबिआए दइओ अम्हंपि तायओ होइ, सा मयणा अणहियासीया धिज्जाइयं परिवसइ, मारिया तीए, सुयओ ण मारिओ। अण्णया साहू भिक्खस्स तं गिहं अइयया, कुक्कुडयं पेच्छिऊण एगो साहू दिसालोयं काऊण भणइ–जो एयस्स सीसं

---

१ गणिकया छलेन नीतो बद्धो यावत्तोषितः चत्वारो वराः, चिन्तितं चानेन–मोचयामि आत्मानं, वरा मार्गिताः–अग्नौ प्रविशामीति, मुक्तो भणति–अहं छलेनानीतोऽहं त्वां दिवसे प्रद्योतो ह्रियते इति क्रन्दन्तं नेष्यामि, गतश्च राजगृहं, दास उन्मत्तो, वणिग्दारिकाः, गृहीतः, रटन् हृतः, एवमादिका बह्व्योऽभयस्य पारिणामिक्यो बुद्धयः ॥ श्रेष्ठीति–काष्ठो नाम श्रेष्ठी एकत्र नगरे वसति, तस्य वज्रा नाम भार्या, तस्य नैत्यिको देवशर्मा नाम ब्राह्मणः, श्रेष्ठी दिग्यात्रायै गतः, भार्या तस्य तेन समं संप्रलग्ना, तस्य च गृहे त्रयः पक्षिणः–शुकश्च मदनशलाका कुर्कुटकश्चेति, स तान् उपनिक्षिप्य गतः, सोऽपि धिग्जातीयो रात्रावागाति, मदनशलाका भणति–कस्तातान्न बिभेति?, शुको वारयति, योऽम्बाया दयितोऽस्माकमपि (स) तातो भवति, सा मदनाऽनध्यासिनी धिग्जातीयं परिवासयति ( आक्रोशति ), मारिता तया, शुको न मारितः। अन्यदा साधू भिक्षार्थं तद् गृहमतिगतौ, कुर्कुटकं प्रेक्ष्यैकः साधुर्दिगालोकं कृत्वा भणति–य एतस्य शीर्षं

खाइ[1] सो राया होइत्ति, तं किहवि तेणं धिज्जाइएणं अंतरिएण सुयं, तं भणइ–मारेहि खामि, सा भणइ–अन्नं आणिज्जइ, मा पुत्तभंडं संवट्टियं, निव्वंधे कए मारिओ जाव ण्हाउं गओ, ताव तीसे पुत्तो लेहसालाओ आगओ, तं च सिद्धं तम्मंसं, सो रोवइ, सीसं दिण्णं, सो आगओ, भाणए छूढं, सीसं मग्गइ, भणइ–चेडस्स दिण्णं, सो रुट्ठो, एयस्स कज्जे मए माराविओ, जइ परं एयस्स सीसं खाएज्जा तो राया होज्ज, कयं णिव्वंधे ववसिया, दासीय सुयं, तओ चेव दारयं गहाय पलाया, अण्णं णयरं गयाणि, तत्थ अपुत्तो राया मओ, आसेण परिक्खिओ, सो राया जाओ। इओ य कट्ठो आगओ, णिययघरं सडियपडियं पासइ, सा पुच्छिया, ण कहेइ, सुयएणं पंजरमुक्केण कहियं वंभणाइसंवन्धो सो तहेव, अलं संसारववहारेणं, अहं एतीसे कएण किलेसमणुहवामि एसावि एवंविहत्ति पव्वइओ, इयराणि तं चेव णयरं गयाणि जत्थ सो दारओ राया जाओ, साहूवि विहरंतो तत्थेव गओ, तीए पच्चभिन्नाओ, भिक्खाए समं सुवण्णं दिण्णं, कूवियं,

---

१ खादति स राजा भवतीति, तत्कथमपि तेन धिग्जातीयेनान्तरितेन श्रुतं, तां भणति–मारय खादामि, सा भणति–अन्य आनीयते, मा पुत्रभाण्डं संवर्त्तयतु, निर्बन्धे कृते मारितः यावत् स्नातुं गतः, तावत्तस्याः पुत्रो लेखशालाया आगतः, तच्च सिद्धं तन्मांसं, स रोदिति, शीर्षं दत्तं, स आगतः, भाजने क्षिप्तं, शीर्षं मार्गयति, भणति–चेटकाय दत्तं, स रुष्टः, एतस्यार्थाय मया मारितः, यदि परमेतस्य शीर्षं खादेयं तदा राजा भवेयं, कृतं (मनसि) निर्बन्धे व्यवसिता (कर्त्तुं), दास्या श्रुतं, तत एव दारकं गृहीत्वा पलायिता, अन्यन्नगरं गतौ, तत्रापुत्रो राजा मृतः, अश्वेन परीक्षितः (परिपिक्तः), स राजा जातः। इतश्च काष्ठ आगतः, निजकं गृहं शटितपतितं पश्यति, सा पृष्टा, न कथयति, शुकेन पञ्जरमुक्तेन व्याहृतः ब्राह्मणादिसंबन्धः स तथैवालं संसारव्यवहारेण, अहमेतस्याः कृते क्लेशमनुभवामि एषा त्वेवंविधेति प्रव्रजितः, इतरौ अपि तदेव नगरं गतौ यत्र स दारको राजा जातः, साधुरपि विहरन् तत्रैव गतः, तया प्रत्यभिज्ञातः, भिक्षया समं स्वर्णं दत्तं, कूजितं,

गहिओ, रायाए मूलं णीओ, धावीए णाओ, ताणि निविसयाणि आणत्ताणि, पिया भोगेहिं निमंतिओ, नेच्छइ, राया सड्ढो कओ, वरिसारत्ते पुण्णे वयंतस्स अकिरियाणिमित्तं धिज्जाइएहिं दुवक्खरियाए उवट्ठविआ, परिभट्ठियारूवं कयं, सा गुव्विणीया अणुवयइ, तीए गहिओ, मा पवयणस्स उड्डाहो होउत्ति भणइ–जइ मए तो जोणीए णीउ अह ण मए ता पोट्टं भिंदित्ता णीउ, एवं भणिए भिन्नं पोट्टं, मया, वन्नो य जाओ, सेट्ठिस्स पारिणामिगी इयं, जीए वा पव्वइओत्ति ॥ कुमारो–खुड्डुगकुमारो, सो जहा जोगसंगहेहिं, तस्सवि परिणामिगी । देवी–पुप्फभद्दे णयरे पुप्फसेणो राया पुप्फवई देवी, तीसे दो पुत्तभंडाणि–पुप्फचूलो पुप्फचूला य, ताणि अणुरत्ताणि भोगे भुंजंति, देवी पव्वइया, देवलोगे देवो उववण्णो, सो चिंतेइ–जइ एयाणि एवं मरंति तो नरयतिरिएसु उववज्जिहिंति सुविणए सो तीसे नेरइए दरिसेइ, सा भीया पुच्छइ पासंडिणो, ते न याणंति, अन्नियपुत्ता तत्थ आयरिया, ते सद्दाविया, ताहे सुत्तं कहुंति, सा भणइ–किं तुम्हेहिवि सुविणओ दिट्ठो?, सो

---

१ गृहीतः, राज्ञो मूलं नीतः, धात्र्या ज्ञातः, तौ निर्विषयावाज्ञप्तौ, पिता भोगैर्निमन्त्रितः, नेच्छति, राजा श्राद्धः कृतः, वर्षारात्रे पूर्णे व्रजतोऽक्रिया-(ऽवर्ण) निमित्तं धिग्जातीयैर्द्व्यक्षरिका उपस्थापिता, परिभ्रष्टाया रूपं कृतं, सा गुर्विणी अनुव्रजति, तया गृहीतः, मा प्रवचनस्योड्डाहो भूदिति भणति–यदि मया तदा योन्या निर्यातु अथ न मया तदोदरं भित्त्वा निर्गच्छतु, एवं भणिते भिन्नमुदरं, मृता, वर्णश्च जातः, श्रेष्ठिनः पारिणामिकीयं, यया वा प्रव्रजित इति । कुमारः–क्षुल्लककुमारः, स यथा योगसंग्रहेषु, तस्यापि पारिणामिकी । देवी–पुष्पभद्रे नगरे पुष्पसेनो राजा पुष्पवती देवी, तस्या द्वे पुत्रभाण्डे–पुष्पचूलः पुष्पचूला च, तौ अनुरक्तौ भोगान् भुञ्जाते, देवी प्रव्रजिता, देवलोके देव उत्पन्नः, स चिन्तयति–यदि एतावेवं म्रियेयातां तदा नरकतिर्यक्षु उत्पत्स्येयातामिति स्वप्ने स तस्यै नारकान् दर्शयति, सा भीता पृच्छति–पाषण्डिनः, ते न जानन्ति, अर्णिकापुत्रास्तत्राचार्याः, ते शब्दिताः, तदा सूत्रं कथयन्ति, सा भणति–किं युष्माभिरपि स्वप्नो दृष्टः, स

[1]भणइ–सुत्ते अम्ह एरिसं दिट्ठं, पुणोऽवि देवलोए दरिसेइ, तेऽवि से अन्नियापुत्तेहिं कहिया, पव्वइया, देवस्स पारिणामिया वुद्धी ॥ उदिओदए–पुरिमयाले णयरे ओदिओदओ राया सिरिकंता देवी, सावगाणि दोण्णिवि, परिवाइया पराजिया दासीहिं मुहमक्कडियाहिं वेलविया निच्छूढा, पओसमावण्णा, वाणारसीए धम्मरुई राया, तत्थ गया, फलयपट्टियाए सिरिकंताए रूवं लिहिऊण दाएइ धम्मरुइस्स रण्णो, सो अज्झोववन्नो, दूयं विसज्जेइ, पडिहओ अवमाणिओ निच्छूढो, ताहे सव्वबलेणागओ, णयरं रोहेइ, उदिओदओ चिंतेइ–किं एवड्डेण जणक्खएण कएण ?, उववासं करेइ, वेसमणेण देवेण सणयरं साहरिओ। उदिओदयस्स पारिणामिया वुद्धी ॥ साहू य नंदिसेणोत्ति, सेणियपुत्तो नंदिसेणो, सीस्सो तस्स ओहाणुप्पेही, तस्स चिंता(जाया)–भगवं जइ रायगिहं जाएज्ज तो देवीओ अन्ने य पिच्छिऊण साइसए जइ थिरो होज्जत्ति, भट्टारओ य गओ, सेणीओ उण णीति संतेपुरो, अन्ने य कुमारा सअंतेउरा, णंदिसेणस्स अंतेउरं सेतं*वरवसणं पउमिणिमज्झे हंसीओ वा

---

१ भणति–सूत्रेऽस्माकमीदृशं दृष्टं, पुनरपि देवलोकान् दर्शयति, तेऽप्यर्णिकापुत्रैः तस्यै कथिताः, प्रव्रजिता, देवस्य पारिणामिकी बुद्धिः ॥ उदितोदयः–पुरिमताले नगरे उदितोदयो राजा श्रीकान्ता देवी, द्वे अपि श्रावकौ, परिव्राजिका पराजिता दासीभिर्मुखमर्कटिकाभिर्विडम्बिता निष्काशिता, प्रद्वेषमापन्ना, वाराणस्यां धर्मरुची राजा, तत्र गता, फलकपट्टिकायां श्रीकान्ताया रूपं लिखित्वा दर्शयति धर्मरुचे राज्ञः, सोऽध्युपपन्नः, दूतं विसर्जयति, प्रतिहतोऽपमानितो निष्काशितः, तदा सर्वबलेनागतः, नगरं रोधयति, उदितोदयश्चिन्तयति–किमेतावता जनक्षयेण कृतेन ?, उपवासं करोति, वैश्रवणेन देवेन सनगरः संहृतः। उदितोदयस्य पारिणामिकी बुद्धिः ॥ साधुश्च नन्दिषेण इति, श्रेणिकपुत्रो नन्दिषेणः, शिष्यस्तस्यावधावनोत्प्रेक्षी, तस्य चिन्ता ( जाता ) भगवान् यदि राजगृहं यायात् तर्हि देवीरन्यांश्च सातिशयान् प्रेक्ष्य यदि स्थिरो भवेदिति, भट्टारकश्च गतः, श्रेणिकः पुनर्निर्गच्छति सान्तःपुरः, अन्ये च कुमाराः सान्तःपुराः, नन्दिषेणस्य अन्तःपुरं श्वेताम्बरवसनं पद्मिनीमध्ये हंस्य इव × सेतं परवरणं

मुक्काभरणाओ सव्वासिं छायं हरति, सो ताओ दट्ठूण चिंतेइ—जइ भट्टारएण मम आयरिएण एरिसियाओ मुक्काओ किमंग पुण मज्झ मंदपुन्नस्स असंताण परिच्चइयं* ? तं+वियाणइ, णिव्वेयमावण्णो आलोइयपडिक्कंतो थिरो जाओ । दोण्हवि परिणामिगी बुद्धी ॥ धणदत्तो सुसुमाए पिया परिणामेइ—जइ एयं न खामो तो अंतरा मरामोत्ति, तस्स पारिणामिगी बुद्धी॥ सावओ मुच्छिओ अज्झोववण्णो सावियाए वयंसियाए, तीसे परिणामो—मा मरिहित्ति अट्टवसट्टो नरएसु तिरिएसु वा (मा)उववज्जिहित्ति तीसे आभरणेहिं विणीओ, संवेगो, कहणं च, तीए पारिणामिया बुद्धी ॥ अमच्चो—वरधणुपिया जउघरे कए चिंतेइ—मा मारिओ होइ एस कुमारो, कहिंपी रक्खिज्जइ, सुरंगाए नीणिओ, पलाओ, एयस्सवि पारिणामिया बुद्धी । अन्ने भणंति—एगो राया देवी से अइप्पिया कालगया, सो य मुद्धो, सो तीए वियोगदुक्खिओ न सरीरठिइं करेइ, मंतीहिं भणिओ—देव ! एरिसी संसारठिइत्ति किं कीरइ ?, सो भणइ—नाहं देवीए सरीरठिइं अकरेंतीए करेमि, मंतीहि परिचिंतियं—

१ मुक्ताभरणाः सर्वासां छायां हरति, स ता दृष्ट्वा चिन्तयति—यदि भट्टारकेण ममाचार्येणेदृश्यो मुक्ताः किमङ्ग पुनर्मम मन्दपुण्यस्य असतीनां प्रार्थनया ( मन्दपुण्येनासतीनां परित्यक्तं ) तद्विजानाति, निर्वेदमापन्नः आलोचितप्रतिक्रान्तः स्थिरो जातः । द्वयोरपि पारिणामिकी बुद्धिः ॥ धनदत्तः सुसुमायाः पिता परिणमयति—यद्येनां न खादेम तदाऽन्तरा म्रियेमहि इति, तस्य पारिणामिकी बुद्धिः ॥ श्रावको मूर्छितः अध्युपपन्नः श्राविकाया वयस्यायां, तस्याः परिणामः—मा मृतेऽऽर्तवशार्तो नरकेषु तिर्यक्षु वा ( मा ) उत्पादीति तस्या आभरणैर्विनीतः ( अभिलाषः ), संवेगः, कथनं च, तस्याः पारिणामिकी बुद्धिः ॥ अमात्यः—वरधनुपिता जतुगृहे कृते चिन्तयति—मा मारितो भविष्यति एष कुमारः, कथमपि रक्ष्यते, सुरङ्गया निष्काशितः, पलायितः, एतस्यापि पारिणामिकी बुद्धिः । अन्ये भणन्ति—एको राजा देवी तस्यातिप्रिया कालगता, स च मुग्धः, स तस्या वियोगेन दुःखितो न शरीरस्थितिं करोति, मन्त्रिभिर्भणितः—देव ! एतादृशी संसारस्थितिरिति किं क्रियते ?, स भणति—नाहं देव्यां शरीरस्थितिमकुर्वत्यां करोमि, मन्त्रिभिः परिचिन्तितं— * परिचयइ + तव्वियाणंति

न[1] अन्नो उवाओत्ति, पच्छा भणियं-देव ! देवी सग्गं गया तं तत्थट्ठिइयाए चेव से सव्वं पेसिज्जउ, लद्धकयदेवीट्ठिईपउत्तीए पच्छा करेज्जसुत्ति, रन्ना पडिस्सुयं, माइठाणेण एगो पेसिओ, रण्णो आगंतूण साहइ-कया सरीरट्ठिई देवीए, पच्छा राया करेइ, एवं पइदिणं करेंताण कालो वच्चइ, देवीपेसणववएसेण वहुं कडिसुत्तगाइ खज्जइ राया, एगेण चिंतियं-अहंपि खत्तिं करेमि, पच्छा राया दिट्ठो, तेण भणिओ-कुतो तुमं ?, भणइ-देव ? सग्गाओ, रण्णा भणियं-देवी दिट्ठत्ति, सो भणइ-तीए चेव पेसिओ कडिसुत्तगाइनिमित्तंति, दवावियं से जहिच्छियं, किंपि ण संपडइ, रण्णा भणियं-कया गमिस्ससि ?, तेण भणियं-कल्लं, रण्णा भणियं-कल्लं ते संपाडेस्सं, मंती आदिट्ठा-सिग्घं संपाडेह, तेहिं चिंतियं-विनट्ठं कज्जं, को एत्थ उवाओत्ति विसण्णा, एगेण भणियं-धीरा होह अहं भलिस्सामि, तेण तं संपाडिऊण राया भणिओ-देव ! एस कहं जाहित्ति ?, रण्णा भणियं-अन्ने कहं जंतगा ?, तेण भणियं-अम्हे जं पट्ठवेंता तं जलणप्पवेसेणं, न अण्णहा सग्गं

---

१ नान्य उपाय इति, पश्चाद्भणितं-देव ! देवी स्वर्गं गता तत्त्र स्थितायायेव तस्यै सर्वं प्रेष्यतां, लब्धायां देवीकृतस्थितिप्रवृत्तौ पश्चात्क्रियतामिति, राज्ञा प्रतिश्रुतं, मातृस्थानेनैकः प्रेषितः, राज्ञे आगत्य कथयति-कृता शरीरस्थितिर्देव्या, पश्चात् राजा करोति, एवं प्रतिदिनं कुर्वतां कालो व्रजति, देवीप्रेपणव्यपदेशेन वहु कटीसूत्रादि खाद्यते राज्ञः, एकेन चिन्तितं-अहमपि खादितिं करोमि, पश्चाद्राजा दृष्टः, तेन भणितः-कुतस्त्वं ?, भणति-देव ! स्वर्गात्, राज्ञा भणितं-देवी दृष्टेति, स भणति-तयैव प्रेषितः कटीसूत्रादिनिमित्तमिति, दापितं तस्मै यथेष्टं, किमपि न संपद्यते, राज्ञा भणितं-कदा गमिष्यसि ?, तेन भणितं-कल्ये, राज्ञा भणितं-कल्ये ते संपादयिष्यामि, मन्त्रिण आदिष्टाः-शीघ्रं संपादयत, तैश्चिन्तितं-विनष्टं कार्यं, कोऽत्रोपाय इति विषण्णाः, एकेन भणितं-धीरा भवत अहं मेलयिष्यामि, तेन तत् संपाद्य राजा भणितः-देव ! एष कथं गमिष्यतीति ?, राज्ञा भणितं-अन्ये कथं याताः ?, तेन भणितं-वयं यं प्रास्थापयिष्यंस्तं ज्वलनप्रवेशेन, नान्यथा स्वर्गं

गमिस्सइ, रण्णा भणियं–तहेव पेसेह, तहा आढत्ता, सो विसण्णो, अण्णो य धुत्तो वायालो रण्णो समक्खं बहुं उवहसइ जहा–देविं भणिज्जासि–सिणेहवंतो ते राया, पुणोवि जं कज्जं तं संदिसेज्जासि, अण्णं च इमं च इमं च बहुविहं भणेज्जासि, तेण भणियं–देव ! णाहमेत्तिगं अविगलं भणिउं जाणामि, एसो चेव लट्ठो पेसिज्जउ, रण्णा पडिसुयं, सो तहेव णिज्जिउमाढत्तो, इयरो मुक्को, अवरस्स माणुसाणि, से विसण्णाणि पलवंति–हा ! देव ! अम्हेहिं किं करेज्जामो ?, तेण भणियं–नियतुंडं रक्खेज्जह, पच्छा मंतीहिं खरंडिय मुक्को, मडगं दड्ढं, मंतिस्स पारिणामिया ॥ खमएत्ति, खमओ चेल्लएण समं भिक्खं हिंडइ, तेण मंडुक्कलिया मारिया, आलोयणवेलाए णालोएइ, खुड्डएणं भणियं–आलोएहित्ति, रुट्ठो आहणामित्ति थंभे अब्भडिओ मओ, एगत्थ विराहियसामण्णाणं कुले दिट्ठीविसो सप्पो जाओ, जाणंति परोप्परं, रत्तिं चरंति मा जीवे मारेहामित्ति, फासुगं आहारेमित्ति । अण्णया रण्णो पुत्तो अहिणा खइओ मओ य, राया पउसमावण्णो, जो सप्पं मारेइ

१ गमिष्यति, राज्ञा भणितं–तथैव प्रेषयत, तथा आरब्धवन्तः ( प्रेषयितुं ), स विषण्णः, अन्यश्च धूर्तो वाचालो राज्ञः समक्षं बहूपहसति यथा–देवीं भणेः–स्नेहवान् त्वयि राजा, पुनरपि येन कार्यं तत् संदिशेः, अन्यच्च इदं चेदं च बहुविधं भणेः, तेन भणितं–देव ! नाहमेतावदविकलं भणितुं जाने, एष एव लष्टः प्रेष्यतां, राज्ञा प्रतिश्रुतं, स तथैव नेतुमारब्धः, इतरो मुक्तः, अपरस्य मनुष्याः, ते विषण्णाः प्रलपन्ति–हा देव ! अस्माभिः किं कार्यं ?, तेन भणितं–निजतुण्डं रक्षत, पश्चान्मन्त्रिभिः संतर्ज्य ( निर्भर्त्स्य ) मुक्तः, मृतकं दग्धं, मन्त्रिणः पारिणामिकी ॥ क्षपक इति, क्षपकः शैक्षेण समं भिक्षां हिण्डते, तेन मण्डूकिका मारिता, आलोचनावेलायां नालोचयति, क्षुल्लकेन भणितं–आलोचयेति, रुष्ट आहन्मीति स्तम्भे आहतो मृतः, एकत्र विराद्धश्रामण्यानां कुले दृष्टिविषः सर्पो जातः, जानन्ति परस्परं, रात्रौ चरन्ति, मा जीवान् मीमरामेति, प्रासुकमाहारयाम इति । अन्यदा राज्ञः पुत्रोऽहिना दष्टः मृतश्च, राजा प्रद्वेषमापन्नः, यः सर्पं मारयति

[1] तस्स दीणारं देइ, अण्णया आहिंडिएणं ताणं रेक्काओ दिट्ठाओ, तं विलं ओसहीहिं धमेंति, सीसाणि णिंताणि छिंदइ, सो अभिमुहो न णीइ, मा मारेहामि किंचित्ति जाइस्सरणत्तणेण, तं निग्गयं निग्गयं छिंदइ, तेण पच्छा रायाए उव– णीयाणि, सो राया णागदेवयाए वोहिज्जइ, वरो दिण्णो–कुमारो होहित्ति, सो खमगसप्पो मओ समाणो तत्थ राणियाए णागदत्तो पुत्तो जाओ, उम्मुक्कवालभावो साहुं दट्ठुं जाइं संभरित्ता पव्वइओ। सो य छुहालुगो अभिग्गहं गेण्हइ–मए ण रूसियव्वंति, दोसीणस्स हिंडइ, तस्स य आयरियस्स गच्छे चत्तारि खमगा–मासिओ दोमासिओ तिमासिओ चउमा- सिओ, रत्तिं देवया आगया, ते सव्वे खमए अइक्कमित्ता खुड्डुयं वंदइ, खमएण निग्गच्छंती हत्थे गहिया, भणिया य– कडगपूयणे! एयं तिकालभोइयं वंदसि, इमे महातवस्सी न वंदसित्ति, सा भणइ–भावखमगं वंदामि न दव्वखमएत्ति, गया, पभाए दोसीणगस्स गओ, निमंतेति, एगेण गहाय पाए खेलो छूढो, भणइ–मिच्छामि दुक्कडं खेलमल्लो तुब्भं

---

१ तस्मै दीनारं ददाति, अन्यदाऽऽहिण्डकेन तेषां रेखा दृष्टाः, तद्बिलमोपधीभिर्धमति, शीर्षाणि निर्गच्छन्ति छिनत्ति, सोऽभिमुखो न निर्याति, मा मीमरं किञ्चिदपि जातिस्मरत्वेन, तं निर्गतं निर्गतं छिनत्ति, तेन पश्चाद्राज्ञ उपनीतानि, स राजा नागदेवतया बोध्यते, वरो दत्तः–कुमारो भविष्यतीति, स क्षपकसर्पो मृतः सन् तत्र राज्या नागदत्तः पुत्रो जातः, उन्मुक्तबालभावः साधुं दृष्ट्वा जातिं संस्मृत्य प्रव्रजितः। स च क्षुधालुरभिग्रहं गृह्णाति–मया न रुषि- तव्यमिति, पर्युषिताय हिण्डते, तस्य चाचार्यस्य गच्छे चत्वारः क्षपकाः–मासिको द्विमासिकस्त्रिमासिकः चतुर्मासिकः, रात्रौ देवता आगता, तान् सर्वान् अतिक्रम्य क्षुल्लकं वन्दते, क्षपकेण निर्गच्छन्ती हस्ते गृहीता, भणिता च–कटपूतने! एनं त्रिकालभोजिनं वन्दसे ?, इमान् महातपस्विनो न वन्दस इति, सा भणति– भावक्षपकं वन्दे न द्रव्यक्षपकान् इति, गता, प्रभाते पर्युषिताय गतः, निमन्त्रयति, एकेन गृहीत्वा श्लेष्म क्षिप्तं, भणति–मिथ्या मे दुष्कृतं श्लेष्ममल्लकं युष्मभ्यं

णोवणीओ, एवं सेसेहिवि, जेमेउमारद्धो, तेहिं वारिओ, निव्वेगमावण्णो, पंचवि सिद्धा, विभासा, सव्वेसिं पारिणामिया बुद्धी ॥ अमच्चपुत्तो वरधणू, तस्स तेसु तेसु पओयणेसु पारिणामिया, जहा माया मोयाविया, सो पलाइओ, एवमाइ सव्वं विभासियव्वं । अण्णे भणंति–एगो मंतिपुत्तो कप्पडियरायकुमारेण समं हिंडइ, अण्णया निमित्तिओ घडिओ, रत्तिं देवकुंडिसंठियाणं सिवा रडइ, कुमारेण नेमित्तिओ पुच्छिओ–किं एसा भणइत्ति, तेण भणियं–इमं भणइ–इमंसि नदितित्थंमि पुराणियं कलेवरं चिट्ठइ, एयस्स कडीए सतं पायंकाणं, कुमार! तुमं गिण्हाहि, तुज्झ पायंका मम य कडेवरंति, मुद्दियं पुण न सक्कुणोमित्ति, कुमारस्स कोड्डुं जायं, ते वंचिय एगागी गओ, तहेव जायं, पायंके घेत्तूण पच्चागओ, पुणो रडइ, पुणो पुच्छिओ, सो भणइ–चप्फलिगाइयं कहेइ, एसा भणइ–कुमार! तुज्झवि पायंकसयं जायं मज्झवि कलेवरंति, कुमारो तुसिणीओ जाओ, अमच्चपुत्तेण चिंतियं, पेच्छामि से सत्तं किं किवणत्तणेण गहियं आउ सोंडीरयाए?,

---

१ नार्पितं, एवं शेषैरपि, जिमितुमारब्धः, तैर्वारितः, निर्वेदमापन्नः, पञ्चापि सिद्धाः, विभाषा, सर्वेषां पारिणामिकी बुद्धिः ॥ अमात्यपुत्रो वरधनुः, तस्य तेषु तेषु प्रयोजनेषु पारिणामिकी, यथा माता मोचिता, स पलायितः, एवमादि सर्वं विभाषितव्यं । अन्ये भणन्ति–एको मन्त्रिपुत्रः कार्पटिकराजकुमारेण समं हिण्डते, अन्यदा नैमित्तिको घटितः (मीलितः), रात्रौ देवकुलिकासंस्थितेषु शिवा रटति, कुमारेण नैमित्तिकः पृष्टः–किमेषा भणतीति, तेन भणितं–इदं भणति–अस्मिन्नदीतीर्थे पौराणिकं कलेवरं तिष्ठति, एतस्य कट्यां शतं पादाङ्कानां (मुद्राविशेषाणां), कुमार! त्वं गृहाण, तव पादाङ्का मम च कलेवरमिति मुद्रितं पुनर्न शक्नोमीति, कुमारस्य कौतुकं जातं, तान् वञ्चयित्वा एकाकी गतः, तथैव जातं, पादाङ्कान् गृहीत्वा प्रत्यागतः, पुना रटति, पुनः पृष्टः, स भणति–चप्फलिकादिकं (कौतूहलिकं) कथयति, एषा भणति–कुमार! तवापि पादाङ्कशतं जातं ममापि कलेवरमिति, कुमारस्तूष्णीको जातः, अमात्यपुत्रेण चिन्तितं, पश्याम्यस्य सत्त्वं किं कृपणत्वेन गृहीतमातः शौण्डीर्येण?,

[1]जइ किवणत्तणेण कयं न एयस्स रज्जंति नियत्तामि, पच्चूसे भणइ–वच्चह तुब्भे, मम पुण सूलं कज्जइ न सक्कुणामि गंतुं, कुमारेण भणियं–न जुत्तं तुमं मोत्तूण गंतुं, किं तु मा कोइ एत्थ मे जाणेहित्ति तेण वच्चामो, पच्छा कुलपुत्तगघरं णीओ समप्पिओ, तं च सव्वं पेज्जामोल्लं दिन्नं, मंतिपुत्तस्स उवगयं जहा–सोंडीरयाएत्ति, भणियं चऽणेण–अत्थि मे विसेसो अओ गच्छामि, पच्छा गओ, कुमारेण रज्जं पत्तं, भोगावि से दिण्णा, एयस्स पारिणामिगी बुद्धी ॥ चाणक्को–गोल्लविसए चणयग्गामो, तत्थ य चणगो माहणो, सो य सावओ, तस्स घरे साहू ठिया, पुत्तो से जाओ सह दाढाहिं, साहूण पाएसु पाडिओ, कहियं च–राया भविस्सइत्ति, मा दुग्गइं जाइस्सइत्ति दंता घट्ठा, पुणोऽवि आयरियाणं कहियं, भणइ–किं कज्जउ?, एत्ताहे विंबंतरिओ भविस्सइ, उम्मुक्कबालभावेण चोद्दस विज्जाट्ठाणाणि आगमियाणि, सो य सावओ संतुट्ठो, एगाओ भद्दमाहणकुलाओ भज्जा से आणिया। अण्णया कम्हिवि कोउते माइघरं भज्जा से गया, केइ भणंति–भाइविवाहे गया,

---

१ यदि कृपणत्वेन कृतं नैतस्य राज्यमिति निवर्त्ते, प्रत्यूषसि भणति–व्रजत यूयं, मम पुनः शूलं क्रियते ( पीडयति ) न शक्नोमि गन्तुं, कुमारेण भणितं–न युक्तं त्वां मुक्त्वा गन्तुं, किन्तु मा कोऽप्यत्र मां ज्ञासीत् तेन व्रजावः, पश्चात्कुलपुत्रकगृहं नीतः समर्पितः, तच्च सर्वं पेया ( पोपण ) मूल्यं दत्तं, मन्त्रिपुत्रस्योपगतं यथा–शौण्डीर्येणेति, भणितं चानेन–अस्ति मे विशेषः अतो गच्छामि, पश्चाद्गतः, कुमारेण राज्यं प्राप्तं, भोगा अपि तस्मै दत्ताः, एतस्य पारिणामिकी बुद्धिः। चाणक्यः–गोल्लविपये चणकग्रामः, तत्र च चणको ब्राह्मणः, स च श्रावकः, तस्य गृहे साधवः स्थिताः, पुत्रस्तस्य जातः सह दंष्ट्राभिः, साधूनां पादयोः पातितः, कथितं च–राजा भविष्यतीति, मा दुर्गतिं यासीदिति दन्ता घृष्टाः, पुनरप्याचार्येभ्यः कथितं, भणति–किं क्रियताम्?, अधुना ( अतः ) बिम्बान्तरितो (राजा) भविष्यति, उन्मुक्तबालभावेन चतुर्दश विद्यास्थानान्यागमितानि ( प्राप्तानि ), स च श्रावकः संतुष्टः, एकस्मात् भद्रब्राह्मणकुलात् भार्या तस्यानीता। अन्यदा कस्मिंश्चिदपि कौतुके मातृगृहं भार्या तस्य गता, केचिद्भणन्ति–भ्रातृविवाहे गता, ~ एगट्ठाणे

तीसे य भगिणीओ अण्णेसिं खद्धादाणियाणं दिण्णेल्लियाओ, ताओ अलंकियविहूसियाओ आगयाओ, सव्वोऽवि परियणो ताहिं समं संलवएति, सा एगंते अच्छइ, अद्धिई जाया, घरं आगया, ससोगा, निब्बंधे सिट्ठं, तेण चिंतियं–नंदो पाडलिपुत्ते देइ तत्थ वच्चामि, तओ कत्तियपुण्णिमाए पुव्वण्णत्थे आसणे पढमे णिसण्णो, तं च तस्स सव्वीपतियस्स सया ठविज्जइ, सिद्धपुत्तो य णंदेण समं तत्थ आगओ भणइ–एस बंभणो णंदवंसस्स छायं अक्कमिऊण ठिओ, भणिओ दासीए–भगवं! बितीए आसणे णिवेसाहि, अत्थु, बितिए आसणे कुंडियं ठवेइ, एवं ततिए दंडयं, चउत्थे गणित्तियं, पंचमे जण्णोवइयं, धिट्ठोत्ति निच्छूढो, पाओ उक्खित्तो, अण्णया य भणइ–'कोशेन भृत्यैश्च निबद्धमूलं, पुत्रैश्च मित्रैश्च विवृद्धशाखम्। उत्पाट्य नन्दं परिवर्तयामि, महाद्रुमं वायुरिवोग्रवेगः ॥ १ ॥' निग्गओ मग्गइ पुरिसं, सुयं चऽणेण बिंबंतरिओ राओ होहामित्ति, नंदस्स मोरपोसगा, तेसिं गामं गओ परिव्वायगलिंगेणं, तेसिं च महत्तरधूयाए चंदपियणे दोहलो, सो

१ तस्याश्च भगिन्योऽन्येषां प्रचुरादानीयानां ( धनाढ्येभ्यः ) दत्ताः, ता अलंकृतविभूषिता आगताः, सर्वोऽपि परिजनस्ताभिः समं संलपति, सैकान्ते तिष्ठति, अधृतिर्जाता, गृहमागता, सशोका, निर्बन्धे शिष्टं, तेन चिन्तितं–नन्दः पाटलीपुत्रे ददाति तत्र व्रजामि, ततः (तत्र) कार्त्तिकपूर्णिमायां पूर्वन्यस्ते आसने प्रथमे निषण्णः, तच्च तस्य शचीपतेः ( नन्दस्य ) सदा स्थाप्यते, सिद्धपुत्रश्च नन्देन समं तत्रागतो भणति–एष ब्राह्मणः नन्दवंशस्य छायामाक्रम्य स्थितः, भणितो दास्या–भगवन्! द्वितीय आसने उपविश, अस्तु, द्वितीये आसने कुण्डिकां स्थापयति, एवं तृतीये दण्डकं, चतुर्थे मालां, पञ्चमे यज्ञोपवीतं, धृष्ट इति निष्काशितः, पादः ( प्रतिज्ञा ) उत्क्षिप्तः ( मनसि स्थापिता ), अन्यदा च भणति–निर्गतो मार्गयति पुरुषं, श्रुतं चानेन बिम्बान्तरितो राजा भविष्यामीति, नन्दस्य मयूरपोषकाः, तेषां ग्रामं गतः परिव्राजकवेषेण, तेषां च महत्तरस्य दुहितुः चन्द्रपाने दोहदः, स * पाओ पउमो

संमुदाणिंतो गओ, पुच्छंति, सो भणइ—जइ इमं मे दारगं देह तो णं पाएमि चंदं, पडिसुणेंति, पडमंडवे कए तद्दिवसं पुण्णिमा, मज्झे छिड्डुं कयं, मज्झगए चंदे सव्वरसालूहिं दव्वेहिं संजोएत्ता दुद्धस्स थालं भरियं, सद्दाविया पेच्छइ पिवइ य, उवरिं पुरिसो अच्छाडेइ, अवणीए जाओ पुत्तो, चंदगुत्तो से नामं कयं, सोऽवि ताव संवड्ढइ, चाणक्को य धाउविलाणि मग्गइ। सो य दारगेहिं समं रमइ रायणीईए, विभासा, चाणक्को पडिएइ, पेच्छइ, तेणवि मग्गिओ—अम्हवि दिज्जउ, भणइ—गावीओ लएहिं, मा मारेज्जा कोई, भणइ—वीरभोज्जा पुहवी, णातं जहा विण्णाणंपि से अत्थि, पुच्छिओ—कस्सत्ति ?, दारएहिं कहियं—परिव्वायगपुत्तो एसो, अहं सो परिव्वायगो, जामु जा ते रायाणं करेमि, पलाओ, लोगो मिलिओ, पाडलिपुत्तं रोहियं। णंदेण भग्गो परिव्वायगो, आसेहिं पिट्ठीओ लग्गो, चंदगुत्तो पउमसरे निव्वुडो, इमो उपस्पृशति, सण्णाए भणइ—वोलीणोत्ति, अन्ने भणन्ति—चंदगुत्तं पउमिणीसरे छुभित्ता रयओ जाओ, पच्छा एगेण जच्चवल्हीककिसोरगएण-आसवारेण पुच्छिओ भणइ—एस पउमसरे निविट्ठो, तओ आसवारेण दिट्ठो, तओऽणेण घोडगो चाणक्कस्स अल्लितो;

---

१ भिक्षयन् गतः, पृच्छन्ति, स भणति—यदि इमं दारकं मह्यं दत्त तदैनां पाययामि चन्द्रं, प्रतिशृण्वन्ति, पटमण्डपे कृते तद्दिवसे पूर्णिमा, मध्ये छिद्रं कृतं मध्यगते चन्द्रे सर्वरसाढ्यैर्द्रव्यैः संयोज्य दुग्धस्य स्थालो भृतः, शब्दिता पश्यति पिबति च, उपरि पुरुष आच्छादयति, अपनीते ( दौहदे ) जातः पुत्रः, चन्द्रगुप्तस्तस्य नाम कृतं, सोऽपि तावत्संवर्धते, चाणक्यश्च धातुवादान् (स्वर्णरसादिकान्) मार्गयति। स च दारकैः समं रमते राजनीत्या, विभाषा, चाणक्यः प्रत्येति, प्रेक्षते, तेनापि मार्गितः—मह्यमपि देहि, भणति—गा लाहि, मा मारिषि केनचित्, भणति—वीरभोज्या वसुन्धरा, ज्ञातं यथा विज्ञानमप्यस्ति तस्य, पृष्टः—कस्येति?, दारकैः कथितं—परिव्राजकपुत्र एषः, अहं स परिव्राजकः, यावो यावत्त्वां राजानं करोमि, पलायितः, लोको मीलितः, पाटलीपुत्रं रुद्धं। नन्देन भञ्जितः परिव्राजकः, अश्वैः पृष्ठतो लग्नः, चन्द्रगुप्तः पद्मसरसि ब्रूडितः, अयमुपस्पृशति, संज्ञया भणति—(अश्ववारान्) व्यतिक्रान्त इति॥ अन्ये भणन्ति-चन्द्रगुप्तं पद्मिनीसरसि क्षिप्त्वा रजको जातः, पश्चादेकेन जात्यवाह्लीककिशोरगतेनाश्ववारेण पृष्टो भणति—एष पद्मसरसि ब्रूडितः, ततोऽश्ववारेण दृष्टः, ततोऽनेन घोटकश्चाणक्यायार्पितः,

खग्गं मुक्कं, जाव निगुडिउं जलोयरणट्ठयाए कंचुगं मिल्लइ, तावऽणेण खग्गं घेत्तूण दुहाकओ, पच्छा चंदगुत्तोहक्कारिय चडाविओ, पुणो पलाया, पुच्छिओऽणेण चंदगुत्तो-जं वेलं तंसि सिट्ठो तं वेलं किं तुमे चिंतियं ?, तेण भणियं-धुवं एव-मेव सोहणं भवइ, अज्जो चेव जाणइत्ति, तओऽणेण चिंतियं-जोगो एस न विपरिणमइत्ति । पच्छा चंदगुत्तो छुहाइओ, चाणक्को तं ठवेत्ता भत्तस्स अइगओ, बीहेइ य-मा एत्थ नज्जेज्जामो डोडस्स बाहिं निग्गयस्स पोट्टं फालियं, दहिकूरं गहाय गओ, जिमिओ दारओ । अण्णया अण्णत्थ गामे रत्तिं समुयाणेइ, थेरीए पुत्तगभंडाणं विलेवी वड्डिया, एक्केण मज्झे हत्थो छूढो, दड्ढो रोवइ, ताए भण्णइ-चाणक्कमंगलयं, पुच्छियं, भणइ-पासाणि पढमं घेप्पंति, गआ हिमवंतकूडं, पव्वइओ राया, तेण समं मित्तया जाया, भणइ-समं समेण विभजामो रज्जं, उपवेंताणं एगत्थ णयरं न पडइ, पविट्ठो तिदंडी, वत्थूणि जोएइ, इंदकुमारियाओ दिट्ठाओ, तासिं तणएण ण पडइ, मायाए णीणावियाओ, पडियं णयरं, पाडलिपुत्तं

---

१ खड्गो मुक्तः, यावत् शेषं मुक्त्वा जलावतरणार्थाय कञ्चुकं ( अधःपरिधानं ) मुञ्चति, तावदनेन खड्गं गृहीत्वा द्विधाकृतः, पश्चाच्चन्द्रगुप्त आहूयारोहितः पुनः पलायितौ, पृष्टोऽनेन चन्द्रगुप्तः-यस्यां वेलायां त्वमसि शिष्टस्तस्यां वेलायां किं त्वया चिन्तितं ?, तेन भणितं-ध्रुवमेवमेव शोभनं भविष्यति, आर्य एव जानातीति, ततोऽनेन चिन्तितं-योग्य एष न विपरिणमत इति । पश्चात् चन्द्रगुप्तः क्षुधार्त्तः, चाणक्यस्तं स्थापयित्वा भक्तायातिगतः, बिभेति च-माऽत्र ज्ञायिष्महि महोदरस्य ( भट्टस्य ) बहिर्निर्गतस्योदरं पाटितं, दधिकूरं गृहीत्वा गतः, जेमितो दारकः । अन्यदा अन्यत्र ग्रामे रात्रौ भिक्षयति, स्थविरया पुत्रादीनां रब्बा परिवेषिता, एकेन मध्ये हस्तः क्षिप्तः, दग्धो रोदिति, तया भण्यते-चाणक्याख्यानकं ( चाणक्यसदृशं ), पृष्टं, भणति-पार्श्वाः प्रथमं ग्राह्याः, गतो हिमवत्कूटं, पार्वतिको राजा, तेन समं मैत्री जाता, भणति-सर्वं समेन विभजावो राज्यं, उपागच्छतो(लुण्टतो)रेकत्र नगरं न पतति, प्रविष्टस्त्रिदण्डी, वस्तूनि पश्यति, इन्द्रकुमार्यो दृष्टाः, तासां सत्केन ( प्रभावेण ) न पतति, मायया अपनायिताः, पतितं नगरं, पाटलीपुत्रं † मोडोट्ठस्स

रोहियं[1], नंदो धम्मवारं मग्गइ, एगेण रहेण जं तरसि तं नीणाहि, दो भज्जाओ एगा कण्णा दवं च णीणेइ, कण्णा चंदगुत्तं पलोएइ, भणिया—जाहित्ति, ताहे विलग्गंतीए चंदगुत्तरहे णव अरगा भग्गा, तिदंडी भणइ—मा वारेहि, नवपुरिसजुगाणि तुज्झ वंसो होहित्ति, अइयओ, दोभागीकयं रज्जं। एगा कण्णगा विसभाविया, तत्थ पव्वयगस्स इच्छा जाया, सा तस्स दिण्णा, अग्गिपरियंचणे विसपरिगओ मरिउमारद्धो भणइ—वयंस! मरिज्जइ, चंदगुत्तो रुंभामित्ति ववसिओ, चाणक्केण भिउडी कया, णियत्तो, दोवि रज्जाणि तस्स जायाणि। नंदमणुसा चोरियाए जीवंति, चोरग्गाहं मग्गइ, तिदंडी वाहिरियाए नलदामं मुइंगमारणे दट्ठुं आगओ, रण्णा सद्दाविओ, आरक्खं दिण्णं, वीसत्था कया, भत्तदाणेण सकुडुंबा मारिया। आणाए—वंसीहिं अंवगा परिक्खित्ता, विवरीए रुट्ठो, पलीविओ सव्वो गामो, तेहिं गामीलएहिं कप्पडियत्ते भत्तं न दिण्णंतिकाउं। कोसनिमित्तं पारिणामिया वुद्धी—जूयं रमइ कूडपासएहिं, सोवण्णं थालं दीणाराणं भरियं, जो जिणइ तस्स एयं, अहं जीणामि एगो दीणारो दायव्वो। अइचिरंति अन्नं उवायं चिंतेइ, णागराण भत्तं देइ मज्जपाणं च, मत्तेसु

---

१ रुद्धं, नन्दो धर्मद्वारं मार्गयति, एकेन रथेन यत् शक्नोपि तन्नय, द्वे भार्ये एकां कन्यां द्रव्यं च नयति, कन्या चन्द्रगुप्तं प्रलोकयति, भणिता—याहीति, तदा विलगन्त्यां चन्द्रगुप्तरथे नवारका भग्नाः, त्रिदण्डी भणति—मा निवारीः, नव पुरुषयुगानि तव वंशो भविष्यतीति, अतिगत॰, द्विभागीकृतं राज्यं। एका कन्या विषभाविता, तत्र पर्वतकस्येच्छा जाता, सा तस्मै दत्ता, अग्निप्रदक्षिणायां परिगतविषो मर्त्तुमारब्धो भणति—वयस्य! म्रियसे, चन्द्रगुप्तो रुणध्मि इति व्यवसितः, चाणक्येन भ्रूकुटीकृता, निवृत्तः, द्वे अपि राज्ये तस्य जाते। नन्दमनुष्याश्चौरिकया जीवन्ति, चौरग्राहं मार्गयति, त्रिदण्डी शाखापुरे नलदामं मत्कोटकमारकं दृष्ट्वाऽऽगतः, राज्ञा शब्दितः, आरक्ष्यं दत्तं, विश्वस्ताः कृताः, भक्तदानेन सकुटुंबा मारिताः। आज्ञायां—वंशीभिराम्राः परिक्षेप्तव्याः, विपरीते रुष्टः, प्रदीपितो ग्रामः समग्रः, तैर्ग्रामेयकैः कार्पटिकत्वे भक्तं न दत्तमितिकृत्वा। कोशनिमित्तं पारिणामिकी बुद्धिः—द्यूतं रमते कूटपाशकैः, सौवर्णः स्थालो दीनारभृतः, यो जयति तस्यैषः, अहं जयामि एको दीनारो दातव्यः। अतिचिरमिति अन्यमुपायं चिन्तयति, नागरेभ्यो भक्तं ददाति मद्यपानं च, मत्तेषु

पेणच्चिओ, भणइ—'दो मज्झ धाउरत्ता कंचणकुंडिया तिदंडं च रायावि य वसवत्ती एत्थवि ता मे होलं वाएहिं' अण्णो असह-माणो भणति—गयपोययस्स मत्तस्स उप्पइयस्स जोअणसहस्सं पए पए सयसहस्सं एत्थवि ता मे होलं वाएहिं। अन्नो भणइ—तिलआढयस्स वुत्तस्स निप्फण्णस्स बहुसइयस्स तिले तिले सयसहस्सं ता मे हालं वाएहि अण्णो भणइ—नवपाउसंमि पुण्णाए गिरिणईयाए सिग्घवेगाए एगाहमहियमेत्तेण नवणीएण पालिं बंधामि एत्थवि ता मे होलं वाएहि, अन्नो भणइ—जच्चाण नवकिसोराण तद्दिवसेण जायमेत्ताण केसेहिं नहं छाएमि एत्थवि ता मे होलं वाएहि, अन्नो भणइ—दो मज्झ अत्थि रयणा सालि पसूई य गद्दभिया य छिन्ना छिन्नावि रुहंति एत्थवि ता मे होलं वाएहि, अन्नो भणइ—[1]सयसुक्कि-लनिच्चसुयंधो भज्ज अणुवय नत्थि पवासो निरिणो य दुपंचसओ एत्थवि ता मे होलं वाएहिं, एवं णाऊण रयणाणि मग्गि-ऊण कोट्ठाराणि सालीण भरियाणि, गद्दभियाए पुच्छिओ छिन्नाणि २ पुणो पुणो जायंति, आसा एगदिवस जाया मग्गिया एगदिवसियं णवणीयं, एस पारिणामिया चाणक्कस्स बुद्धी ॥ थूलभद्दस्स पारिणामिया—पिइम्मि मारिए णंदेण भणिओ—

१ प्रणर्त्तितः, भणति—द्वे मम धातुरक्ते काञ्चनकुण्डिका त्रिदण्डं च राजाऽपि च वशवर्त्ती अत्रापि तन्मे झल्लरीं वादय, अन्योऽसहमानो भणति—गजपोतस्य मत्तस्योत्पतितस्य योजनसहस्रं पदे पदे शतसहस्रं अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति—उप्तस्य तिलाढकस्य निष्पन्नस्य बहुशतिकस्य तिले तिले शतसहस्रं तन्मे झल्लरीं वादय, अन्यो भणति—नवप्रावृषि पूर्णाया गिरिनद्याः शीघ्रवेगाया एकाहमथितमात्रेण नवनीतेन पालीं बध्नामि अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति—जात्यानां नवकिशोराणां तद्दिवसजातमात्राणां केशैर्नभश्छादयामि अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति—द्वे ममास्ति शालिरत्ने—प्रसूतिश्च गर्दभिका च, छिन्ना छिन्ना अपि रोहन्ति, अत्रापि तन्मे झल्लरीं वादय, अन्यो भणति—सदाशुक्लो नित्यसुगन्धो भार्या अनुवर्त्तिनी नास्ति प्रवासो निर्ऋणश्च द्विपञ्चशतिकः अत्रापि तन्मम झल्लरीं वादय, एवं ज्ञात्वा रत्नानि मार्गयित्वा कोष्ठागाराणि शालीभिर्भृतानि गर्दभिकया पुच्छिको (धान्यभाजनविशेषः) छिन्ना छिन्ना पुनः पुनर्जायन्ते इति, अश्वा एकदिवसजाता मार्गिताः, एकदिवसजं नवनीतं, एषा पारिणामिकी चाणक्यस्य बुद्धिः। स्थूलभद्रस्य पारिणामिकी-पितरि मृते नन्देन भणितः—[1]सुय०प्र०

[1]अमच्चो होहित्ति, असोगवणियाए चिंतेइ—केरिसा भोगा वाउलाणंति पव्वइओ। रण्णा भणिया—पेच्छह मा कवडेण गणियाघरं जाएज्जा, निंतस्स सुणगमडेण वावण्णेण णासं ण गेण्हइ, पुरिसेहिं रण्णो कहियं, विरत्तभोगोत्ति सिरिओ ठविओ, थूलभद्दसामिस्स पारिणामिया रण्णो य ॥ णासिक्कं णयरं, णंदो वाणियगो, सुंदरी से भज्जा, सुंदरिनंदो से नामं कयं, तस्स भाया पव्वइयओ, सो सुणेइ—जहा सो तीए अज्झोववन्नो, पाहुणओ आगओ, पडिलाभिओ, भाणं तेणं गहियं, ˣइह पत्थवियउत्ति उज्जाणं नीणिओ, लोगेण य भायणहत्थो दिट्ठो, तओ णं उवहसंति—पव्वइओ सुंदरीनंदो, तओ सो तहवि गओ उज्जाणं, साहुणा से देसणा कया, उक्कडरागोत्ति न तीरइ मग्गे लाइउं, वेउव्वियलद्धिमं च भगवं साहू, तओऽणेण चिंतियं—न अण्णो उवाओत्ति अहिगयरेणं उवलोभेमि, पच्छा मेरू पयट्टाविओ, न इच्छइ, †अविओगिओ, मुहुत्तेण आणेमि, पडिसुए पयट्टो, मक्कडजुयलं विउव्वियं, अन्ने भणंति—सच्चकं चेव दिट्ठं, साहुणा भणिओ—सुंदरीए वानरीओ य का लट्ठयरी?;

---

१ अमात्यो भवेति, अशोकवनिकायां चिन्तयति—कीदृशा भोगा व्याक्षिप्तानामिति प्रव्रजितः। राज्ञा भणिताः (पुरुषाः)—पश्यत मा कपटेन गणिकागृहं यासीत्, निर्गच्छन् श्वमृतकेन व्यापन्नेन नासिकां न कूणयति, पुरुषै राज्ञः कथितं, विरक्तभोग इति श्रीयकः स्थापितः, स्थूलभद्रस्वामिनः पारिणामिकी राज्ञश्च ॥ नासिक्यं नगरं, नन्दो वणिग्, सुन्दरी तस्य भार्या, सुन्दरीनन्दस्तस्य नाम कृतं, तस्य भ्राता प्रव्रजितः, स शृणोति—यथा स तस्यामध्युपपन्नः, प्राघूर्णकः (साधुः) आगतः, प्रतिलम्भितः, भाजनं तेन ग्राहितं, एहि अत्र प्रस्थापयेत्युद्यानं नीतः, लोकेन च भाजनहस्तो दृष्टः, ततस्तं उपहसन्ति—प्रव्रजितः सुन्दरीनन्दः, ततः स तथापि गत उद्यानं, साधुना तस्मै देशना कृता, उत्कटराग इति न शक्यते मार्गे आनेतुं, वैक्रियलब्धिकश्च भगवान् साधुः, ततोऽनेन चिन्तितं—नान्य उपाय इति अधिकतरेणोपलोभयामि, पश्चात् मेरुः प्रवर्त्तितः, नेच्छति, अवियोगिकः, मुहूर्त्तेनानयामि, प्रतिश्रुते प्रवृत्तः, मर्कटयुगलं विकुर्वितं, अन्ये भणन्ति—सत्यमेव दृष्टं, साधुना भणितः—सुन्दरीवानर्योः का लष्टतरा?, ˣअप्पणा समं चालिओ सो जाणइ एत्थ विसज्जेहित्ति † अविवेगिओ

सो भणइ–भगवं! अघडंती सरिसव मेरूवमत्ति, पच्छा विज्जाहरमिहुणं दिट्ठं, तत्थ पुच्छिओ भणइ–तुल्ला च्चेव, पच्छा देवमिहुणगं दिट्ठं, तत्थवि पुच्छिओ भणति–भगवं! एईए अग्गओ वानरी सुंदरित्ति, साहुणा भणियं–थोवेण धम्मेण एसा पाविज्जइत्ति, तओ से उवगयं, पच्छा पव्वइओ। साहुस्स परिणामिया बुद्धी॥ वइरसामिस्स पारिणामिया–माया णाणुवत्तिया, मा संघो अवमन्निज्जिहितित्ति, पुणो देवेहिं उज्जेणीए वेउव्वियलद्धी दिन्ना, पाडलिपुत्ते मा परिभविहित्ति वेउव्वियं कयं, पुरियाए पवयणओहावणा मा होहितित्ति सव्वं कहेयव्वं॥ चलणाहए–राया तरुणेहिं वुग्गाहिज्जइ, जहा थेरा कुमारमच्चा अवणिज्जंतु, सो तेसिं परिक्खणणिमित्तं भणइ–जो रायं सीसे पाएण आहणइ तस्स को दंडो?, तरुणा भणंति–तिलं तिलं छिंदियव्वओ, थेरा पुच्छिया–चिंतेमोत्ति ओसरिया, चिंतेंति–नूणं देवीए को अण्णो आहणइत्ति आगया भणंति–सक्कारेयव्वो। रण्णो तेसिं च पारिणामिया॥ आमंडेत्ति–आमलगं, कित्तिमं एगेण णायं अइकढिणं

---

१ स भणति–भगवन्! अघटमाना सर्षप इव मेरूपमेति, पश्चाद्विद्याधरमिथुनं दृष्टं, तत्र पृष्टो भणति–तुल्यैव, पश्चाद्देवमिथुनं दृष्टं, तत्रापि पृष्टो भणति– भगवन्! एतस्या अग्रतो वानरी सुन्दरीति, साधुना भणितं–स्तोकेन धर्मेणैषा प्राप्यत इति, ततस्तेनोपगतं, पश्चात्प्रव्रजितः। साधोः पारिणामिकी बुद्धिः॥ वज्रस्वामिनः पारिणामिकी–माता नानुवर्त्तिता, मा सङ्घोऽवमानीति, पुनर्देवैरुज्जयिन्यां वैक्रियलब्धिर्दत्ता, पाटलीपुत्रे मा पराभूदिति वैक्रियं कृतं, पुरिकायां प्रवचनापभ्राजना मा भूदिति सर्वं कथयितव्यं॥ चरणाहतौ–राजा तरुणैर्व्युद्ग्राह्यते, यथा स्थविराः कुमारामात्या अपनीयन्तां, स तेषां परीक्षानिमित्तं भणति– यो राजानं शीर्षे पादेन आहन्ति तस्य को दण्डः?, तरुणा भणन्ति–तिलशश्छेत्तव्यः; स्थविराः पृष्टाः–चिन्तयाम इत्यपसृताः, चिन्तयन्ति–नूनं को देव्या अन्य आहन्ति इत्यागता भणन्ति–सत्कारयितव्यः। राज्ञस्तेषां च पारिणामिकी॥ आम्लकमिति आमलकं, कृत्रिममेकेन ज्ञातमतिकठिनं,

अकाले विंग्घो होइत्ति । तस्सवि पारिणामिया ॥ मणित्ति–सप्पो पक्खिणं अंडगाणि खाइ रुक्खे विलग्गित्ता, तत्थ गिद्धेण आलयं विलग्गिय मारिओ, मणी तत्थ पडिओ, हेट्ठा कूवो, तस्स पाणियं रत्तिभूयं, णीणियं कूवाओ साभावियं होइ, दारएण थेरस्स कहियं, तेण विलग्गिऊण गहिओ । थेरस्स परिणामिया ॥ सप्पो–चंडकोसिओ चिंतेइ–एरिसो महप्पा इच्चाइ विभासा, एयस्स पारिणामिगी ॥ खग्गीति–सावयपुत्तो जोव्वणवलुम्मत्तो धम्मं न गिण्हइ, मरिऊण खग्गिसु उववण्णो, पिट्ठिस्स दोहिंवि पासेहिं जहा पक्खरा तहा चंमाणि लंबंति, अडवीए च उप्पहे जणं मारेइ, साहुणो य तेणेव पहेण अइक्कमंति, वेगेण आगओ, तेएण ण तरइ अल्लिउं, चिंतेइ, जाई संभरिया, पच्चक्खाणं, देवलोगगमनं । एयस्स पारिणामिगी ॥ थूभे–वेसालाए णयरीए णाभीए मुणिसुव्वयस्स थूभो, तस्स गुणेण कूणियस्स ण पडइ, देवया आगासे कूणियं भणइ–'समणो जइ कूलवालए मागहियं गणियं लभिस्सति । लाया य असोगचंदए वेसालिं नगरिं गहेस्सइ ॥ १ ॥' सो

---

१ अकालेऽस्यास्लं भवतीति । तस्यापि पारिणामिकी ॥ मणिरिति–सर्पः पक्षिणामण्डानि खादति वृक्षं विलग्य, तत्र गृध्रेणालयं विलग्य मारितः, मणिस्तत्र पतितः, अधस्तात्कूपः, तस्य पानीयं रक्तीभूतं, निष्काशितं कूपात् स्वाभाविकं भवति, दारकेण स्थविराय कथितं, तेन विलग्य गृहीतः । स्थविरस्य पारिणामिकी ॥ सर्पः–चण्डकौशिकश्चिन्तयति–ईदृशो महात्मा इत्यादि विभाषा, एतस्य पारिणामिकी ॥ खड्गी–श्रावकपुत्रो यौवनबलोन्मत्तो धर्मं न गृह्णाति, मृत्वा खड्गिषूत्पन्नः, पृष्ठेऽस्य द्वयोरपि पार्श्वयोः यथा पक्षौ तथा चर्मणी लम्बेते, अटव्यां चोत्पथे जनं मारयति, साधवश्च तेनैव पथा व्यतिक्रमन्ति, वेगेनागतः, तेजसा न शक्नोति अभिद्रोतुं, चिन्तयति, जातिः स्मृता, प्रत्याख्यानं, देवलोकगमनं । एतस्य पारिणामिकी ॥ स्तूप–विशालायां नगर्यां मध्ये मुनिसुव्रतस्य स्तूपः, तस्य गुणेन कूणिकस्य ( उद्यमेऽपि ) न पतति, देवताऽऽकाशे कूणिकं भणति–'श्रमणो यदा कूलवालको मागधिकां गणिकां लप्स्यते ( गमिष्यति )। राजा च अशोकचन्द्रः ( कौणिकः ) वैशालीं नगरीं ग्रहीष्यति ॥ १ ॥' । स

भग्गिज्जइ । तस्स का उप्पत्ती?–एगस्स आयरियस्स चेल्लओ अविणीओ, तं आयरिओ अंबाडेइ, सो वेरं वहइ । अन्नया आयरिया सिद्धसिलं तेण समं वंदगा विलग्गा, उत्तरंताण वधाए सिला मुक्का, दिट्ठा आयरिएण, पाया ओसारिया इहरा मारिओ होंतो, सावो दिण्णो–दुरात्मन्! इत्थीओ विणस्सिहिसित्ति, मिच्छावाई एसो भवउत्तिकाउं तावसासमे अच्छइ, नईए कूले आयावेइ, पंथब्भासे जो सत्थो एइ तओ आहारो होइ, णईए कूले आयावेमाणस्स सा णई अण्णओ पवूढा, तेण कूलवारओ नामं जायं, तत्थ अच्छंतो आगमिओ, गणियाओ सद्दावियाओ, एगा भणइ–अहं आणेमि, कवडसाविया जाया, सत्थेण गया, वंदइ ‡उद्दाणे होइयम्मि चेइयाइं वंदामि तुब्भे य सुया, आगयामि, पारणगे मोदगा संजोइया दिन्ना, अइसारो जाओ, पओगेण ठविओ, उबत्तणाईहिं संभिन्नं चित्तं, आणिओ, भणिओ–रण्णो वयणं करेहि, कहं?, जहा वेसाली घेप्पइ, थूभो नीणाविओ, गहिया । गणियाकूलवालगाणं दोण्हवि पारिणामिगी । इंदपाउयाओ चाणक्केण पुव्वभणियाओ, एसा पारिणामिया ॥ उक्तोऽभिप्रायसिद्धः, साम्प्रतं तपःसिद्धप्रतिपिपादयिषयाऽऽह—

१ मार्ग्यते । तस्य कोत्पत्तिः?–एकस्याचार्यस्य क्षुल्लकः (शिष्यः) अविनीतः, तमाचार्यो निर्भर्त्सयति, स वैरं वहति । अन्यदा आचार्याः सिद्धशैलं तेन समं वन्दितुं विलग्नाः, अवतरतां वधाय शिला मुक्ता, दृष्टाऽऽचार्येण, पादौ प्रसारितौ इतरथा मृता अभविष्यन्, शापो दत्तः–दुरात्मन्! स्त्रीतो विनङ्क्ष्यसीति, मिथ्यावादी एष भवत्विति कृत्वा तापसाश्रमे तिष्ठति, नद्याः कूले आतापयति, पन्थाभ्यासे यः सार्थ आयाति तत आहारो भवति, नद्याः कूले आतापयतः सा नद्यन्यतो व्यूढा, तेन कूलवारको नाम जातं, तत्र तिष्ठन् आगमितः, गणिकाः शब्दिताः, एका भणति–अहमानयामि, कपटश्राविका जाता, सार्थेन गता, वन्दते, विधवायां जातायां चैत्यानि वन्दे युष्मांश्च श्रुताः, आगताऽस्मि, पारणके मोदकाः सांयोगिका दत्ताः, अतिसारो जातः, प्रयोगेण स्थापितः (नीरोगीकृतः), उद्वर्तनादिभिः संभिन्नं चित्तं, आनीतः, भणितः–राज्ञो वचनं कुरु, कथं?–यथा वैशाली गृह्यते, स्तूपो निष्काशितः (पातितः), गृहीता । गणिकाकूलवालकयोर्द्वयोरपि पारिणामिकी ॥ इन्द्रपादुकाः (इन्द्रकुमार्यः) चाणक्येन पूर्वभणिताः, एषा पारिणामिकी ॥ ‡ उद्दाणे

न किलम्मइ जो तवसा सो तवसिद्धो दढप्पहारिव्व । सो कम्मक्खयसिद्धो जो सव्वक्खीणकम्मंसो ॥९५२॥

व्याख्या—'न क्लामति' न क्लमं गच्छति यः सत्त्वस्तपसा—बाह्याभ्यन्तरेण स एवंभूतस्तपःसिद्धः, अग्लानित्वाद्, दढप्रहारिवदिति गाथाक्षरार्थः ॥ भावार्थः कथानकादवसेयः, तच्चेदम्—[1]एगो धिज्जाइयओ दुद्दंतो अविणयं करेइ, सो ताओ थाणाओ नीणिओ हिंडंतो चोरपल्लिमल्लिणो, सेणावइणा पुत्तो गहिओ, तंमि मयंमि सोच्चेव सेणावई जाओ, निक्किवं पहणइत्ति दढप्पहारी से णामं कयं । सो अन्नया सेणाए समं एगं गामं हंतुं गओ, तत्थ य एगो दरिद्दो, तेण पुत्तभंडाण मग्गंताणं दुद्धं जाएत्ता पायसो सिद्धो, सो य ण्हाइउं गओ, चोरा य तत्थ पडिया, एगेण सो तस्स पायसो दिट्ठो, छुहियत्ति तं गहाय पहाविओ, ताणि खुड्डगरूवाणि रोवंताणि पिउमूलं गयाणि, हिओ पायसोत्ति, सो रोसेणं मारेमित्ति पहाविओ, महिला अवयासेउं अच्छइ, तहवि जाइ जहिं सो चेव चोरसेणावई गाममज्झे अच्छइ, तेण गंतूण महासंगामो कओ, सेणावइणा चिंतियं—एएण मम चोरा परिभविज्जन्ति, तओ असिं गहाय निद्दयं छिण्णो, महिला से भणइ—हा णिक्किव !

---

1 एको धिग्जातीयो दुर्दान्तोऽविनयं करोति, स ततः स्थानात् निष्काशितो हिण्डमानश्चौरपल्लीमाश्रितः, सेनापतिना पुत्रो गृहीतः, तस्मिन् मृते स एव सेनापतिर्जातः, निष्कृपं प्रहन्तीति दढप्रहारी तस्य नाम कृतं । सोऽन्यदा सेनया समं एकं ग्रामं हन्तुं गतः, तत्र चैको दरिद्रः, तेन पुत्रपौत्रेभ्यो मार्गयद्भ्यः दुग्धं याचित्वा पायसं साधितं, स च स्नातुं गतः, चौराश्च तत्र पतिताः, एकेन तस्य तत्पायसं दृष्टं, क्षुधार्त्त इति तद्गृहीत्वा प्रधावितः, तानि क्षुल्लकरूपाणि रुदन्ति पितृमूलं गतानि, हृतं पायसमिति, स रोषेण मारयामीति प्रधावितः, महिला निवारयितुं तिष्ठति, तथापि याति यत्र स एव चौरसेनापतिर्ग्राममध्ये तिष्ठति, तेन गत्वा महासंग्रामः कृतः, सेनापतिना चिन्तितं—एतेन मम चौराः परिभूयन्ते, ततोऽसिं गृहीत्वा निर्दयं छिन्नः, महिला तस्य भणति—हा निष्कृप !

किमेयं कयंति?, पच्छा सावि मारिया, गब्भोऽवि दोभाए कओ फुरुफुरेइ, तस्स किवा जाया—अहम्मो कओ, चेडरूवेहिंतो दरिद्दत्ति पउत्ती उवलद्धा, दढयरं निव्वेयं गओ, को उवाओत्ति, साहू दिट्ठा, पुच्छिया यऽणेण—भगवं! को एत्थ उवाओ?, तेहिं धम्मो कहिओ, सो य से उवगओ, पच्छा चारित्तं पडिवज्जिय कम्माण समुग्घायणट्ठाए घोरं खंतिअभिग्गहं गिण्हिय तत्थेव विहरइ, तओ हीलिज्जइ हम्मति य, सो सम्मं अहियासेइ, घोराकारं च कायकिलेसं करेइ, असणाइ व अलभंतो सम्मं अहियासेइ, जावऽणेण कम्मं निग्घाइयं, केवलं से उप्पण्णं, पच्छा सो सिद्धत्ति ॥ उक्तस्तपःसिद्धः, साम्प्रतं कर्मक्षयसिद्धप्रतिपादनाय गाथाचरमदलमाह—'सो कम्म' इत्यादि, स कर्मक्षयसिद्धः, यः किंविशिष्ट इत्यत आह—'सर्वक्षीणकर्मांशः' सर्वे—निरवशेषाः क्षीणाः कर्मांशाः—कर्मभेदा यस्य स तथाविध इति गाथार्थः ॥ साम्प्रतं कर्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयन्नाह—

दीहकालरयं जं तु कम्मं से सिअमट्ठहा। सिअं धंतंति सिद्धस्स सिद्धत्तमुवजायइ ॥ ९५३ ॥

व्याख्या—दीर्घः सन्तानापेक्षयाऽनादित्वात् स्थितिबन्धकालो यस्य तद्दीर्घकालं, निसर्गनिर्मलजीवानुरञ्जनाच्च कर्मैव

---

१ किमेतत्कृतमिति, पश्चात्साऽपि मारिता, गर्भोऽपि द्विधाकृतः स्फुरति, तस्य कृपा जाता—अधर्मः कृतः, चेटरूपेभ्यो दरिद्र इति प्रवृत्तिरुपलब्धा, दृढतरं निर्वेदं गतः, क उपाय इति, साधवो दृष्टाः, पृष्टाश्चानेन—भगवन्! कोऽत्रोपायः?, तैर्धर्मः कथितः, स च तस्योपगतः, पश्चाच्चारित्रं प्रतिपद्य कर्मणां समुद्घातनार्थाय घोरं क्षान्त्यभिग्रहं गृहीत्वा तत्रैव विहरति, ततो हील्यते हन्यते च, स सम्यक् अध्यासयति घोराकारं च कायक्लेशं करोति, अशनादि वाऽलभमानः सम्यगध्यास्ते, यावदनेन कर्म निर्घातितं ( निहतं ), केवलं तस्योत्पन्नं, पश्चात्स सिद्ध इति ॥

भण्यते ततश्च दीर्घकालं च तद्रजश्चेति दीर्घकालरजः, यच्छब्दः सर्वनामत्वादुद्देशवचनः, यत्कर्मेत्थंप्रकारं, तुशब्दो भव्यकर्मविशेषणार्थः, यतो नाभव्यकर्म सर्वथा ध्मायत इति, ततश्च यद्भव्यकर्मेति 'शेषितम्' इति शेषं कृतं शेषितं—स्थित्यादिभिः प्रभूतं सत् स्थितिसङ्ख्यानुभावापेक्षयैवानाभोगसद्दर्शनज्ञानचरणाद्युपायतः शेषम्—अल्पं कृतमिति भावः, प्राक् किंभूतं सच्छेषितम्? इत्याह—'अष्टधा सितम्' अष्टप्रकारं ज्ञानावरणादिभेदेन सितं 'सित वर्णबन्धनयो'रिति वचनात् सितं—बद्धमुच्यते। इदानीं निरुक्तिमुपदर्शयति—तच्छेषितं सितं कर्म ध्मातं, 'ध्मा शब्दाग्निसंयोगयो'रिति वचनात् ध्यानानलेन दग्धं महाग्निना लोहमलवदस्येति सिद्ध इति, एवं कर्मदहनानन्तरं सिद्धस्यैव सतः किं?—सिद्धत्वमुपजायते, नासिद्धस्य, '[1]भव्योऽसिद्धो न सिध्यती'ति वचनाद्, उपजायत इत्यपि तदात्मनः स्वाभाविकमेव सदनादिकर्मावृतं तदावरणविगमेनाऽऽविर्भवति तत्त्वतः तथाऽपि लौकिकवाचोयुक्त्या व्यवहारदेशनयोपजायत इत्युच्यते, अथवा सिद्धस्य सिद्धत्वं भावरूपमुपजायते, न तु प्रदीपनिर्वाणकल्पमभावरूपमिति नयमतान्तरव्यवच्छेदार्थमेतत्, तथा चाऽऽहुरेके—'दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम्। दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात् केवलमेति शान्तिम् ॥ १ ॥' इत्यादि, एवंविधसिद्धत्वभावे दीक्षादिप्रयासवैयर्थ्यात् निरन्वयक्षणभङ्गस्य चायुज्यमानत्वात्, प्रदीपदृष्टान्तस्याप्यसिद्धत्वात्, तथाहि—तत्र त एव पुद्गला भास्वरं रूपं परित्यज्य तामसं रूपान्तरमासादयन्तीत्यलं विस्तरेण, अथवाऽन्यथा व्याख्यायते 'दीर्घकालरयं' इति रयः—वेगः चेष्टाऽनुभवः फलमित्यनर्थान्तरं, ततश्च दीर्घकालो रयोऽस्येति

१ भवे—संसारे भवो भव्यः अभव्य इत्यर्थः

दीर्घकालरयं, सन्तानोपभोग्यत्वादिति भावना, यद्भव्यकर्म 'सेसित' सिति श्लेषितमिति संश्लिष्टं लेश्यानुभावात् अष्टधा सितमित्यादि पूर्ववत्, अथवाऽन्यथा व्याख्यायते—दीर्घकालरज इति, तत्र रज इव रजः सूक्ष्मतया स्नेहबन्धनयोग्यत्वाद्वा रज इत्युच्यते, यद्भव्यकर्मेति च नैवं व्याख्यायते, साक्षात्कर्माभिधानेन सर्वनाम्नो निरर्थकत्वात्, प्रकरणादेव भव्यस्यावगम्यमानत्वाद्, अभव्यस्य सिद्धत्वानुपपत्तेः, ततश्च जन्तुकर्म इति व्याख्यायते, जन्तुः—जीवस्तस्य कर्म जन्तुकर्म, अनेनावद्धकर्मव्यवच्छेदमाह, तच्च 'से' तस्य जन्तोः 'असितम्' असितमिति कृष्णमशुभं संसारानुबन्धित्वात्, एवंविधस्यैव च क्षयः श्रेयानिति, न तु शुभस्य स्वरूपस्येति भावना, अष्टधा सितमिति पूर्ववदिति गाथार्थः ॥ प्रथमव्याख्यापक्षमधिकृत्य सम्बन्धमाह—तत्कर्मशेषं तस्य समस्थित्यसमस्थिति वा स्यात्?, न तावत् समस्थिति विषमनिबन्धनत्वात्, नाप्यसमस्थिति चरमसमये युगपत् क्षयासम्भवादिति, एतदयुक्तम्, उभयथाऽप्यदोषात्, तथाहि—विषमनिबन्धनत्वे सत्यपि विचित्रक्षयसम्भवात् कालतः समस्थितित्वाविरोध एव, चरमपक्षेऽपि समुद्घातगमनेन समस्थितिकरणभावाददोषः, न चैतत् स्वमनीषिकयैवोच्यते, यत आह निर्युक्तिकारः—

नाऊण वेअणिज्जं अइबहुअं आउअं च थोवागं । गंतूण समुग्घायं खवंति कम्मं निरवसेसं ॥ ९५४ ॥

व्याख्या—'ज्ञात्वा' केवलेनावगम्य, किं?—वेदनीयं कर्म, किंभूतं?—'अतिबहु' शेषभवोपग्राहिकर्मापेक्षयाऽतिप्रभूतमित्यर्थः, तथाऽऽयुष्कं च कर्म 'स्तोकम्' अल्पं, तदपेक्षयैव ज्ञात्वेति वर्तते, अत्रान्तरे 'गत्वा' प्राप्य 'समुद्घातम्' इति सम्यग्-अपुनर्भावेनोत्—प्राबल्येन कर्मणो हननं घातः—प्रलयो यस्मिन् प्रयत्नविशेषेऽसौ समुद्घात इति तम्, 'क्षपयन्ति' विनाश-

यन्ति 'कर्म' वेदनीयादि 'निरवशेषम्' इति निरवशेषमिव निरवशेषं प्रभूततमक्षपणाच्छेषस्य चान्तर्मुहूर्त्तमात्रकालावधित्वात्, किञ्चिच्छेषत्वादसत्कल्पनेति भावना, अत्राऽऽह—'ज्ञात्वा वेदनीयमतिबह्वि'त्यत्र को नियमः? येन तदेव बहु ( ग्रं० ११००० ) तथाऽऽयुष्कमेवाल्पमिति, अत्रोच्यते, वेदनीयस्य सर्वकर्मभ्यो बन्धकालबहुत्वात् केवलिनोऽपि तद्बन्धकत्वादायुष्कस्य चाल्पत्वात्, उक्तं च–'[1]जाव णं अयं जीवे एयइ वेयइ चलइ फंदइ ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एगविहबंधए वा णो णं अबंधए' आयुष्कस्य त्वान्तर्मुहूर्तिक एव बन्धकाल इति, उक्तं च–"[2]सियं तिभागे सिय तिभागतिभागे" इत्याद्यलं प्रसङ्गेनेति गाथार्थः ॥ ९५४ ॥ इदानीं समुद्घातादिस्वरूपप्रतिपादनायैवाऽऽह—

**दंड कवाडे मंथंतरे अ साहरणया सरीरत्थे । भासाजोगनिरोहे सेलेसी सिज्झणा चेव ॥ ९५५ ॥**

व्याख्या—इह समुद्घातं प्रारभमाणः प्रथममेवावर्जीकरणमभ्येति, आन्तर्मौहूर्तिकमुदीरणावलिकायां कर्मपुद्गलप्रक्षेपव्यापाररूपमित्यर्थः, ततः समुद्घातं गच्छति, तस्य चायं क्रमः–इह प्रथमसमय एव स्वदेहविष्कम्भतुल्यविष्कम्भमूर्ध्वमधश्चाऽऽयतमुभयतोऽपि लोकान्तगामिनं जीवप्रदेशसङ्घातं दण्डं दण्डस्थानीयं केवली ज्ञानाभोगतः करोति, द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामिनं कपाटमिव कपाटं करोति, तृतीयसमये तदेव कपाटं दक्षिणोत्तर-

१ यावदयं-जीव एजते व्येजते चलति स्पन्दते तावदष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा नाबन्धकः । २ स्यात्रिभागे स्यात्त्रिभागत्रिभागे

भावशुद्धया । चन्द्रिकावच्च विज्ञानं, तदावरणमभ्रवद् ॥ १ ॥" इत्यादि, 'विलीयन्ते' विनाशमुपयान्तीति गाथार्थः ॥ १०२ ॥ किं चेदमन्यद् ?, इहलोकप्रतीतमेव ध्यानफलमिति दर्शयति—

न कसायसमुत्थेहि य वाहिज्जइ माणसेहिं दुक्खेहिं । ईसाविसायसोगाइएहिं झाणोवगयचित्तो ॥ १०३ ॥

व्याख्या—'न कषायसमुत्थैश्च' न क्रोधाद्युद्भवैश्च 'बाध्यते' पीड्यते मानसैर्दुःखैः, मानसग्रहणात्ताप इत्याद्यपि यदुक्तं तन्न बाध्यते 'ईर्ष्याविषादशोकादिभिः' तत्र प्रतिपक्षाभ्युदयोपलम्भजनितो मत्सरविशेष ईर्ष्या विषादः—वैक्लव्यं शोकः—दैन्यम्, आदिशब्दाद् हर्षादिपरिग्रहः, ध्यानोपगतचित्त इति प्रकटार्थमयं गाथार्थः ॥ १०३ ॥

सीयायवाइएहि य सारीरेहिं सुबहुप्पगारेहिं । झाणसुनिच्चलचित्तो न वहिज्जइ निज्जरापेही ॥ १०४ ॥

व्याख्या—इह कारणे कार्योपचारात् शीतातपादिभिश्च, आदिशब्दात् क्षुदादिपरिग्रहः, शारीरैः 'सुबहुप्रकारैः' अनेक भेदैः 'ध्यानसुनिश्चलचित्तः' ध्यानभावितमतिर्न बाध्यते, ध्यानसुखादिति गम्यते, अथवा न शक्यते चालयितुं तत एव, 'निर्जरापेक्षी' कर्मक्षयापेक्षक इति गाथार्थः ॥ १०४ ॥ उक्तं फलद्वारम्, अधुनोपसंहरन्नाह—

इय सव्वगुणाधाणं दिट्ठादिट्ठसुहसाहणं झाणं । सुपसत्थं सद्धेयं नेयं झेयं च निच्चंपि ॥ १०५ ॥

व्याख्या—'इय' एवमुक्तेन प्रकारेण 'सर्वगुणाधानम्' अशेषगुणस्थानं दृष्टादृष्टसुखसाधनं ध्यानमुक्तन्यायात् सुष्ठु प्रशस्तं २, तीर्थकरगणधरादिभिरासेवितत्वात्, यतश्चैवमतः श्रद्धेयं नान्यथैतदिति भावनया 'ज्ञेयं' ज्ञातव्यं स्वरूपतः 'ध्येयम्' अनुचिन्तनीयं क्रियया, एवं च सति सम्यग्दर्शनज्ञानचारित्राण्यासेवितानि भवन्ति, 'नित्यमपि' सर्वकालमपि,

आह–एवं तर्हि सर्वक्रियालोपः प्राप्नोति, न, तदासेवनस्यापि तत्त्वतो ध्यानत्वात्, नास्ति काचिदसौ क्रिया यया साधूनां ध्यानं न भवतीति गाथार्थः ॥ १०५ ॥ ग्रन्थाग्रं १५६९६ ॥ समाप्तं ध्यानशतकं ॥

पडिक्कमामि पंचहिं किरियाहिं काइयाए अहिगरणियाए पाउसियाए पारितावणियाए पाणाइवायकिरियाए (सूत्रम्) प्रतिक्रमामि पञ्चभिः क्रियाभिः–व्यापारलक्षणाभिर्योऽतिचारः कृतः, तद्यथा–'काइयाए' इत्यादि, चीयत इति कायः, कायेन निर्वृत्ता कायिकी तया, सा पुनस्त्रिधा–अविरतकायिकी दुष्प्रणिहितकायिकी उपरतकायिकी, (च) तत्र मिथ्यादृष्टेरविरतसम्यग्दृष्टेश्चाऽऽद्या अविरतस्य कायिकी–उत्क्षेपणादिलक्षणा क्रिया कर्मबन्धनिबन्धनाऽविरतकायिकी, एवमन्यत्रापि षष्ठीसमासो योज्यः, द्वितीया दुष्प्रणिहितकायिकी प्रमत्तसंयतस्य, सा पुनर्द्विधा–इन्द्रियदुष्प्रणिहितकायिकी नोइन्द्रियदुष्प्रणिहितकायिकी च, तत्राऽऽद्येन्द्रियैः–श्रोत्रादिभिर्दुष्प्रणिहितस्य–इष्टानिष्टविषयप्राप्तौ मनाक्सङ्गनिर्वेदद्वारेणापवर्गमार्गं प्रति दुर्व्यवस्थितस्य कायिकी, एवं नोइन्द्रियेण–मनसा दुष्प्रणिहितस्याशुभसङ्कल्पद्वारेण दुर्व्यवस्थितस्य कायिकी, तृतीयाऽप्रमत्तसंयतस्य–उपरतस्य–सावद्ययोगेभ्यो निवृत्तस्य कायिकी, गता कायिकी १, अधिक्रियत आत्मा नरकादिषु येन तदधिकरणम्–अनुष्ठानं बाह्यं वा वस्तु चक्रमहादि तेन निर्वृत्ता–अधिकरणिकी तया, सा पुनर्द्विधा–अधिकरणप्रवर्तिनी निर्वर्तिनी च, तत्र प्रवर्तिनी चक्रमहःपशुबन्धादिप्रवर्तिनी, निर्वर्तिनी खड्गादिनिर्वर्तिनी, अलमन्यैरुदाहरणैः, अनयोरेवान्तःपातित्वात्तेषां, गताऽऽधिकरणिकी २, प्रद्वेषः–मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी, असावपि द्विधा–जीवप्राद्वेषिक्यजीवप्रद्वेषिकी च, आद्या जीवे प्रद्वेषं गच्छतः, द्वितीया पुनरजीवे, तथाहि–पाषाणादौ प्रस्खलितस्तत्प्रद्वेषमावहति गता तृतीया ३,

परितापनं—ताडनादिदुःखविशेषलक्षणं तेन निर्वृत्ता पारितापनिकी तया, असावपि द्विधैव—स्वदेहपारितापनिकी परदेहपारितापनिकी च, आद्या स्वदेहे परितापनं कुर्वतो द्वितीया परदेहे परितापनमिति, तथा च अन्यरुष्टोऽपि स्वदेहपरितापनं करोत्येव कश्चिज्जडः, अथवा स्वहस्तपारितापनिकी परहस्तपारितापनिकी च, आद्या स्वहस्तेन परितापनं कुर्वतः द्वितीया परहस्तेन कारयतः, गता चतुर्थी ४, प्राणातिपातः—प्रतीतः, तद्विषया क्रिया प्राणातिपातक्रिया तया, असावपि द्विधा—स्वप्राणातिपातक्रिया परप्राणातिपातक्रिया च, तत्राऽऽद्याऽऽत्मीयप्राणातिपातं कुर्वतः द्वितीया परप्राणातिपातमिति, तथा च कश्चिन्निर्वेदतः स्वर्गाद्यर्थं वा गिरिपतनादिना स्वप्राणातिपातं करोति, तथा क्रोधमानमायालोभमोहवशाच्च परप्राणातिपातमिति, क्रोधेनाऽऽक्रुष्टः रुष्टो वा व्यापादयति, मानेन जात्यादिभिर्हीलितः, माययाऽपकारिणं विश्वासेन, लोभेन शौकरिकः, मोहेन संसारमोचकः स्मार्तो वा याग इति, गता पञ्चमी ५। क्रियाऽधिकाराच्च शिष्यहितायानुपात्ता अपि सूत्रे अन्या अपि विंशतिः क्रियाः प्रदर्श्यन्ते, तंजहा—आरंभिया १ परिग्गहिया २ मायावत्तिया ३ मिच्छादंसणवत्तिया ४ अपच्चक्खाणकिरिया ५ दिट्ठिया ६ पुट्ठिया ७ पाडुच्चिया ८ सामंतोवणिवाइया ९ नेसत्थिया १० साहत्थिया ११ आणमणिया १२ वियारणिया १३ अणाभोगवत्तिया १४ अणवकंखवत्तिया १५ पओगकिरिया १६ समुयाणकिरिया १७ पेज्जवत्तिया १८ दोसवत्तिया १९ ईरियावहिया २० चेति, तत्थारंभिया दुविहा—जीवारंभिया य अजीवारंभिया य जीवारंभिया—जं जीवे

---

१ तद्यथा—आरम्भिकी पारिग्रहिकी मायाप्रत्ययिकी मिथ्यादर्शनप्रत्ययिकी अप्रत्याख्यानक्रिया दृष्टिजा स्पृष्टिजा प्रातीत्यिकी सामन्तोपनिपातिकी नैःशस्त्रिकी स्वहस्तिकी आज्ञापनी विदारणी अनाभोगप्रत्ययिकी अनवकाङ्क्षाप्रत्ययिकी प्रयोगक्रिया समुदानक्रिया प्रेमप्रत्ययिकी द्वेषप्रत्ययिकी ऐर्यापथिकी चेति। तत्रारम्भिकी द्विविधा—जीवारम्भिकी अजीवारम्भिकी च, जीवारम्भिकी यज्जीवान्

आरंभइ अजीवारंभिया—अजीवे आरंभइ १, पारिग्गहिया किरिया दुविहा—जीवपारिग्गहिया अजीवपारिग्गहिया य, जीवपारिग्गहिया—जीवे परिगिण्हइ, अजीवपारिग्गहिया—अजीवे परिगिण्हइ २, मायावत्तिया किरिया दुविहा—आयभाववंचणा य परभाववंचणा य, आयभाववंचणा अप्पणोच्चयं भावं गूहइ नियडीमंतो उज्जुयभावं दंसेइ, संजमाइसिढिलो वा करणफडाडोवं दरिसेइ, परभाववंचणया तं तं आयरति जेण परो वंचिज्जइ कूडलेहकरणाईहिं ३, मिच्छादंसणवत्तिया किरिया दुविहा—अणभिग्गहियमिच्छादंसणवत्तिया य अभिग्गहियमिच्छादंसणवत्तिया य, अणभिग्गहियमिच्छादंसणवत्तिया असंणीण संणीणवि जेहिं न किंचि कुतित्थियमयं पडिवण्णं, अभिग्गहियमिच्छादंसणवत्तिया किरिया दुविहा—हीणाइरित्तदंसणे य तव्वइरित्तदंसणे य, हीणा जहा—अंगुट्ठपव्वमेत्तो अप्पा जवमेत्तो सामागतंदुलमेत्तो वालग्गमेत्तो परमाणुमेत्तो हृदये जाज्वल्यमानस्तिष्ठति भ्रूललाटमध्ये वा, इत्येवमादि, अहिगा जहा—पंचधणुसइगो अप्पा सव्वगओ अकत्ता अचेयणो

---

१ आरम्भयति, अजीवारम्भिकी अजीवानारम्भयति, पारिग्रहिकी क्रिया द्विविधा—जीवपारिग्रहिकी अजीवपारिग्रहिकी च, जीवपारिग्रहिकी जीवान् परिगृह्णाति अजीवपारिग्रहिकी अजीवान् परिगृह्णाति, मायाप्रत्ययिकी क्रिया द्विविधा—आत्मभाववञ्चनता च परभाववञ्चनता च, आत्मभाववञ्चनता आत्मीयं भावं निगूहति निकृतिमान् ऋजुभावं दर्शयति, संयमादिशिथिलो वा करणस्फटाटोपं दर्शयति, परभाववञ्चनता तत्तदाचरति येन परो वञ्च्यते कूटलेखकरणादिभिः, मिथ्यादर्शनप्रत्ययिकी क्रिया द्विविधा— अनभिगृहीतमिथ्यादर्शनप्रत्ययिकी च अभिगृहीतमिथ्यादर्शनप्रत्ययिकी च, अनभिगृहीतमिथ्यादर्शनप्रत्ययिकी असंज्ञिनां संज्ञिनामपि यैर्न किञ्चित् कुतीर्थिकमतं प्रतिपन्नं, अभिगृहीतमिथ्यादर्शनप्रत्ययिकी क्रिया द्विविधा—हीनातिरिक्तदर्शने च तद्व्यतिरिक्तदर्शने च, हीना यथा अङ्गुष्ठपर्वमात्र आत्मा यवमात्रः श्यामाकतन्दुलमानो वालाग्रमात्रः परमाणुमात्रः। अधिका यथा पञ्चधनुःशतिक आत्मा सर्वगतोऽकर्त्ता अचेतनः

इत्येवमादि, एवं हीणाइरित्तदंसणं, तव्वइरित्तदंसणं नास्त्येवाऽऽत्माऽऽत्मीयो वा भावः नास्त्ययं लोकः न परलोकः असत्स्वभावाः सर्वभावा इत्येवमादि, अपच्चक्खाणकिरिया अविरतानामेव, तेषां न किञ्चिद्विरतिर(तम)स्ति, सा दुविहा–जीवअपच्चक्खाणकिरिया अजीवऽपच्चक्खाणकिरिया य, न केसुइ जीवेसु अजीवेसु य वा विरती अत्थित्ति ५, दिट्ठिया किरिया दुविहा, तंजहा–जीवदिट्ठिया य अजीवदिट्ठीया य, जीवदिट्ठीया आसाईणं चक्खुदंसणवत्तियाए गच्छइ, अजीवदिट्ठिया चित्तकम्माईणं ६, पुट्ठिया किरिया दुविहा पण्णत्ता–जीवपुट्ठिया अजीवपुट्ठिया य, जीवपुट्ठिया जा जीवाहियारं पुच्छइ रागेण वा दोसेण वा, अजीवाहिगारं वा, अहवा पुट्ठियत्ति फरिसणकिरिया, तत्थ जीवफरिसणकिरिया इत्थी पुरिसं नपुंसगं वा स्पृशति, संघट्टेइत्ति भणियं होइ, अजीवेसु सुहनिमित्तं मियलोमाइ वत्थजायं मोत्तिगादि वा रयणजायं स्पृशति ७, पाडुच्चिया किरिया दुविहा–जीवपाडुच्चिया अजीवपाडुच्चिया य, जीवं पडुच्च जो बंधो सा जीवपाडुच्चिया, जो पुण अजीवं पडुच्च रागदोसुब्भवो सा अजीवपाडुच्चिया ८, सामंतोवणिवाइया समन्तादनुपततीति सामंतोवणिवाइया

---

१ एवं हीनातिरिक्तदर्शनं, तद्व्यतिरिक्तदर्शनं,–अप्रत्याख्यानक्रिया–सा द्विविधा जीवाप्रत्याख्यानक्रिया अजीवाप्रत्याख्यानक्रिया च, न केषुचिज्जीवेषु अजीवेषु च वा विरतिरस्तीति, दृष्टिजा क्रिया द्विविधा, तद्यथा–जीवदृष्टिजा च अजीवदृष्टिजा च, जीवदृष्टिजा अश्वादीनां चक्षुर्दर्शनप्रत्ययाय गच्छति, अजीवदृष्टिजा चित्रकर्मादीनां, प्राश्निकी, पृष्टिजा क्रिया द्विविधा प्रज्ञप्ता–जीवप्राश्निकी अजीवप्राश्निकी च, जीवप्राश्निकी या जीवाधिकारं पृच्छति रागेण वा द्वेषेण वा, अजीवाधिकारं वा, अथवा स्पृष्टिजेति स्पर्शनक्रिया, तत्र जीवस्पर्शनक्रिया स्त्रियं पुरुषं नपुंसकं संघट्टयतीति भणितं भवति, अजीवेषु सुखनिमित्तं मृगलोमादि वस्त्रजातं मौक्तिकादि वा रत्नजातं, प्रातीत्यिकी क्रिया द्विविधा–जीवप्रातीत्यिकी अजीवप्रातीत्यिकी च, जीवं प्रतीत्य यो बन्धः सा जीवप्रातीत्यिकी, यः पुनरजीवं प्रतीत्य रागद्वेषोद्भवः साऽजीवप्रातीत्यिकी, सामन्तोपनिपातिकी–सामन्तोपनिपातिकी

जीवसामंतोवणिवाइया जहा–एगस्स संडो तं जणो
सा दुविहा–जीवसामंतोवणिवाइया य अजीवसामंतोवणिवाइया य, जहा जहा पलोएइ पसंसइ य तहा तहा सो हरिसं गच्छइ, अजीवेवि रहकम्माई, अहवा सामंतोवणिवाइया दुविहा– देससामंतोवणिवाइया य सबसामंतोवणिवाइया य, देससामंतोवणिवाइया प्रेक्षकान् प्रति यत्रैकदेशेनाऽऽगमो भवत्यसं-यतानां सा देससामंतोवणिवाइया, सबसामंतोवणिवाइया य यत्र सर्वतः समन्तात् प्रेक्षकाणामागमो भवति सा सबसा-मंतोवणिवाइया, अहवा समन्तादनुपतन्ति प्रमत्तसंजयाणं अन्नपाणं प्रति अवंगुरिते संपातिमा सत्ता विणस्संति ८, नेस-त्थिया किरिया दुविहा–जीवनेसत्थिया अजीवनेसत्थिया य, जीवनेसत्थिया रायाइसंदेसाउ जहा उदगस्स जंतादीहिं, अजीवनेसत्थिया जहा पहाणकंडाईण गोफणधणुहमाइहिं निसिरइ, अहवा नेसत्थिया जीवे जीवं निसिरइ पुत्तं सीसं वा, अजीवे सूत्रव्यपेतं निसिरइ वत्थं पात्रं वा, सृज विसर्गे इति १०, साहत्थिया किरिया दुविहा–जीवसाहत्थिया अजीवसाहत्थिया

---

१ सा द्विविधा–जीवसामन्तोपनिपातिकी चाजीवसामन्तोपनिपातिकी च, जीवसामन्तोपनिपातिकी यथा एकस्य षण्डस्तं जनो यथा यथा प्रलोकते प्रशंसति च तथा तथा स हर्षं गच्छति, अजीवानपि रथकर्मादीनि, अथवा सामन्तोपनिपातिकी द्विविधा–देशसामन्तोपनिपातिकी च सर्वसामन्तोपनिपातिकी च, देशसामन्तोपनिपातकी–सा देशसामन्तोपनिपातिकी, सर्वसामन्तोपनिपातिकी च–सा सर्वसामन्तोपनिपातिकी, अथवा प्रमत्तसंयतानामन्नपानं प्रति अनाच्छादिते संपातिमाः सत्त्वा विनश्यन्ति, नैःशस्त्रिकी क्रिया द्विविधा–जीवनैःशस्त्रिकी अजीवनैःशस्त्रिकी च, जीवनैःशस्त्रिकी यथा राजादिसंदेशात् यथा यन्त्रादिभिरुदकस्य, अजीवनैःशस्त्रिकी यथा पाषाणकाण्डादीनि गोफणधनुरादिभिर्निसृज्यन्ते, अथवा नैःशस्त्रिकी जीवे जीवं निसृजति पुत्रं शिष्यं वा, अजीवे निसृजति, स्वाहस्तिकी क्रिया द्विविधा–जीवस्वाहस्तिकी अजीवस्वाहस्तिकी च.

य, जीवसाहत्थिया जं जीवेण जीवं मारेइ, अजीवसाहत्थिया जहा—असिमाईहिं, अहवा जीवसाहत्थिया जं जीवं सहत्थेण तालेइ, अजीवसाहत्थिया अजीवं सहत्थेण तालेइ वत्थं पत्तं वा ११, आणमणिया किरिया दुविहा—जीवआणमणिया अजीवआणमणिया य, जीवाणमणी जीवं आज्ञापयति परेण, अजीवं वा आणवावेइ १२, वेयारणिया दुविहा—जीववेयारणिया य अजीववेयारणिया य, जीववेयारणिया जीवं विदारेइ, स्फोटयतीत्यर्थः, एवमजीवमपि, अहवा जीवमजीवं वा आभासिएसु विक्केमाणो दो भासिउ वा विदारेइ परियच्छावेइत्ति भणियं होइ, अहवा जीवं वियारेइ असंतगुणेहिं एरिसो तारिसो तुमंति,अजीवं वा वेतारणबुद्धीए भणइ—एरिसं एयंति १३, अणाभोगवत्तिया किरिया दुविहा-अणाभोगआदियणा य अणाभोगणिक्खेवणा य, अणाभोगो—अन्नाणं आदियणआ—गहणं निक्खिवणं—ठवणं, तं गहणं निक्खिवणं वा अणाभोगेण अपमज्जियाइ गिण्हइ निक्खिवइत्ति वा, अहवा अणाभोगकिरिया दुविहा—आयाणनिक्खिवणाभोगकिरिया य

---

१ जीवस्वाहस्तिकी यज्जीवेन जीवं मारयति, अजीवस्वाहस्तिकी यथाऽस्यादिभिः, अथवा जीवस्वाहस्तिकी यज्जीवं स्वहस्तेन ताडयति, अजीवस्वाहस्तिकी अजीवं स्वहस्तेन ताडयति वस्त्रं पात्रं वा, आज्ञापनी क्रिया द्विविधा—जीवाज्ञापनिकी अजीवाज्ञापनिकी च, जीवाज्ञापनी जीवमाज्ञापयति परेण अजीवं वाऽऽज्ञापयति, विक्रीणानो द्विविधा, जीवविदारणिकी च अजीवविदारणिकी च, जीवविदारणिकी जीवं विदारयति, एवमजीवमपि, अथवा जीवमजीवं वा अभाषिकेषु विक्रीणानो द्वैभाषिको वा विदारयति, प्रपञ्चं विधत्ते इति भणितं भवति, अथवा जीवं विचारयति असद्भिर्गुणैरीदृशस्तादृशस्त्वमिति, अजीवं वा विप्रतारणबुद्ध्या भणति-ईदृशमेतदिति, अनाभोगप्रत्ययिकी क्रिया द्विविधा—अनाभोगादानजा अनाभोगनिक्षेपजा च, अनाभोगोऽज्ञानं आदानं ग्रहणं निक्षेपणं स्थापनं, तद् ग्रहणं स्थापनं वाऽनाभोगेनाप्रमार्जितादि गृह्णाति निक्षिपति वा, अथवा अनाभोगक्रिया द्विविधा—आदाननिक्षेपानाभोगक्रिया च

उक्कमणअणाभोगकिरिया य, तत्थादाणनिक्खिवणअणाभोगकिरिया रओहरणेण अपमज्जियाइ पत्तचीवराणं आदाणं णिक्खेवं वा करेइ, उक्कमणअणाभोगकिरिया लंघणपवणधावणअसमिक्खगमणागमणाइ १४, अणवकंखवत्तिया किरिया दुविहा–इहलोइयअणवकंखवत्तिया य परलोइयअणवकंखवत्तिया य, इहलोयअणवकंखवत्तिया लोयविरुद्धाइं चोरिक्काईणि करेइ जेहिं वहबंधणाणि इह चेव पावेइ, परलोयअणवकंखवत्तिया हिंसाईणि कम्माणि करेमाणो परलोयं नावकंखइ १५, पओयकिरिया तिविहा पण्णत्ता तं०-मणप्पओयकिरिया वइप्पओयकिरिया कायप्पओयकिरिया य, तत्थ मणप्पओयकिरिया अट्टरुद्दज्झाई इन्द्रियप्रसृतौ अनियमियमण इति, वइप्पओगो–वायाजोगो जो तित्थगरेहिं सावज्जाई गरहिओ तं सेच्छाए भासइ, कायप्पओयकिरिया कायप्पमत्तस्स गमणागमणकुंचणपसारणाइचेट्ठा कायस्स १६, समुदाणकिरिया समग्गमुपादाणं समुदाणं, समुदाओ अट्ठ कम्माइं, तेसिं जाए उवायाणं कज्जइ सा समुदाणकिरिया, सा दुविहा–देसोवघाय-

---

१ उत्क्रमणानाभोगक्रिया च, तत्रादाननिक्षेपानाभोगक्रिया रजोहरणेनाप्रमार्ज्य पात्रचीवरादीनामादानं निक्षेपं वा करोति, उत्क्रमणानाभोगक्रिया लङ्घनप्लवनधावनासमीक्ष्यगमनागमनादि, अनवकाङ्क्षाप्रत्ययिकी क्रिया द्विविधा–ऐहलौकिकानवकाङ्क्षाप्रत्ययिकी च पारलौकिकानवकाङ्क्षाप्रत्ययिकी च, ऐहलौकिकानवकाङ्क्षाप्रत्ययिकी लोकविरुद्धानि चौर्यादीनि करोति यैर्वधबन्धनानि इहैव प्राप्नोति, परलोकानवकाङ्क्षाप्रत्ययिकी हिंसादीनि कर्माणि कुर्वन् परलोकं नावकाङ्क्षते, प्रयोगक्रिया त्रिविधा प्रज्ञप्ता, तद्यथा–मनःप्रयोगक्रिया वाक्प्रयोगक्रिया कायप्रयोगक्रिया च, तत्र मनःप्रयोगक्रिया आर्त्तरौद्रध्यायीन्द्रियप्रसृतौ अनियमितमना इति, वाक्प्रयोगः–वाग्योगः यस्तीर्थकरैः सावद्यादिर्गर्हितस्तं स्वेच्छया भाषते, कायप्रयोगक्रिया कायेन प्रमत्तस्य गमनागमनाकुञ्चनप्रसारणादिः चेष्टा कायस्य, समुदानक्रिया समग्रमुपादानं समुदानं, समुदायोऽष्ट कर्माणि, तेषां ययोपादानं क्रियते सा समुदानक्रिया, सा द्विविधा–देशोपघात–.

समुदाणकिरिया सव्वोवघायसमुदाणकिरिया, तत्थ देसोवघाएण समुदाणकिरिया कज्जइ कोइ कस्सइ इंदियदेसोवघायं करेइ, सव्वोवघायसमुदाणकिरिया सव्वप्पयारेण इंदियविणासं करेइ १७, पेज्जवत्तिया पेम्म राग इत्यर्थः, सा दुविहा-मायानिस्सिया लोभनिस्सिया य, अहवा तं वयणं उदाहरइ जेण परस्स रागो भवइ १८, दोसवत्तिया अप्रीतिकारिका सा दुविहा-कोहनिस्सिया य माणनिस्सिया य, कोहनिस्सिया अप्पणा कुप्पइ, परस्स वा कोहमुप्पादेइ, माणणिस्सिया सयं पमज्जइ परस्स वा माणमुप्पाएइ, इरियावहिया किरिया दुविहा-कज्जमाणा वेइज्जमाणा य, सा अप्पमत्तसंजयस्स वीयरायछउमत्थस्स केवलिस्स वा आउत्तं गच्छमाणस्स आउत्तं चिट्ठमाणस्स आउत्तं निसीयमाणस्स आउत्तं तुयट्टमाणस्स आउत्तं भुंजमाणस्स आउत्तं भासमाणस्स आउत्तं वत्थं पडिग्गहं कंवलं पायपुंछणं गिण्हमाणस्स निक्खिवमाणस्स वा जाव चक्खुपम्हनिवायमवि सुहुमा किरिया इरियावहिया कज्जइ, सा पढमसमए वद्धा विइयसमए वेइया सा वद्धा पुट्ठा वेइया निज्जिण्णा सेअकाले अकंमंसे यावि भवइ। एयाओ पंचवीस किरियाओ॥

---

१ समुदानक्रिया सर्वोपघातसमुदानक्रिया, तत्र देशोपघातेन समुदानक्रिया क्रियते कश्चित् कस्यचिद् इन्द्रियदेशोपघातं करोति, सर्वोपघातसमुदानक्रिया सर्वप्रकारेणेन्द्रियविनाशं करोति, प्रेमप्रत्ययिकी-सा द्विविधा-मायानिश्रिता लोभनिश्रिता च, अथवा तद्वचनमुदाहरेति येन परस्य रागो भवति, द्वेषप्रत्ययिकी, सा द्विविधा-क्रोधनिश्रिता च माननिश्रिता च, क्रोधनिश्रिता आत्मना कुप्यति परस्य वा क्रोधमुत्पादयति, माननिश्रिता स्वयं माद्यति परस्य वा मानमुत्पादयति, ईर्यापथिकी क्रिया द्विविधा-क्रियमाणा च वेद्यमाना च, सा अप्रमत्तसंयतस्य वीतरागच्छद्मस्थस्य केवलिनो वाऽऽयुक्तं गच्छत आयुक्तं तिष्ठत आयुक्तं निषीदत आयुक्तं त्वग्वर्त्तयत आयुक्तं भुञ्जानस्यायुक्तं भाषमाणस्यायुक्तं वस्त्रं पात्रं कम्बलं पादप्रोञ्छनं गृह्णतो निक्षिपतो वा यावचक्षुःपक्ष्मनिपातमपि ( कुर्वतः ) सूक्ष्मा क्रिया ईर्यापथिकी क्रियते, सा प्रथमे समये वद्धा द्वितीयसमये वेदिता सा वद्धा स्पृष्टा वेदिता निर्जीर्णा एष्यत्काले अकर्मांशश्चापि भवति, एताः पञ्चविंशतिः क्रियाः।

'पडिक्कमामि पंचहिं कामगुणेहिं–सद्देणं रूवेणं रसेणं गंधेणं फासेणं। पडिक्कमामि पंचहिं महव्वएहिं, –पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिण्णादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं। पडिक्कमामि पंचहिं समिईहिं–ईरियासमिइए भासासमिइए एसणासमिइए आयाणभंडमत्तनिक्खेवणासमिइए उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिइए ॥ सूत्रं ॥

प्रतिक्रमामि पञ्चभिः कामगुणैः, प्रतिषिद्धकरणादिना प्रकारेण हेतुभूतेन योऽतिचारः कृतः, तद्यथा–शब्देनेत्यादि, तत्र काम्यन्त इति कामाः–शब्दादयस्त एव स्वस्वरूपगुणबन्धहेतुत्वाद्गुणा इति, तथाहि–शब्दाद्यासक्तः कर्मणा बद्ध्यत इति भावना॥ प्रतिक्रमामि पञ्चभिर्महाव्रतैः करणभूतैर्योऽतिचारः कृतः, औदयिकभावगमनेन यत्खण्डनं कृतमित्यर्थः, कथं पुनः करणता महाव्रतानामतिचारं प्रति ?, उच्यते, प्रतिषिद्धकरणादिनैव, किंविशिष्टानि पुनस्तानि ?, तत्स्वरूपाभिधित्सयाऽऽह–प्राणातिपाताद्विरमणमित्यादीनि क्षुण्णत्वान्न विव्रियन्ते, प्रतिक्रमामि पञ्चभिः समितिभिः करणभूताभिर्योऽतिचारः कृतः, तद्यथा–ईर्यासमित्या भाषासमित्येत्यादि, तत्र संपूर्वस्य 'इण् गतौ' वित्यस्य क्तिन्प्रत्ययान्तस्य समितिर्भवति, सम्–एकीभावेनेतिः समितिः, शोभनैकाग्रपरिणामचेष्टेत्यर्थः, ईर्यायां समितिरीर्यासमितिस्तया, ईर्याविषये एकीभावेन चेष्टनमित्यर्थः, तथा च–ईर्यासमितिर्नाम रथशकटयानवाहनाक्रान्तेषु मार्गेषु सूर्यरश्मिप्रतापितेषु प्रासुकविविक्तेषु पथिषु युगमात्रदृष्टिना भूत्वा गमनागमनं कर्तव्यमिति, भाषणं भाषा तद्विषया समितिर्भाषासमि-

तिस्तया, उक्तं च–"भाषासमितिर्नाम हितमितासन्दिग्धार्थभाषणं" एषणा गवेषणादिभेदा शङ्कादिलक्षणा वा तस्यां समि-
तिरेषणासमितिस्तया, उक्तं च–"एषणासमितिर्नाम गोचरगतेन मुनिना सम्यगुपयुक्तेन नवकोटीपरिशुद्धं ग्राह्य'मिति,
आदानभाण्डमात्रनिक्षेपणा समितिः, भाण्डमात्रे आदाननिक्षेपविषया समितिः सुन्दरचेष्टेत्यर्थः, तया, इह च सप्त भङ्गा
भवन्ति–पत्ताइ[1] न पडिलेहइ ण पमज्जइ, चउभंगो, तत्थ चउत्थे चत्तारि गमा–दुप्पडिलेहियं दुप्पमज्जियं चउभंगो,
आइल्ला छ अप्पसत्था, चरिमो पसत्थो, उच्चारप्रश्रवणखेलसिंघाणजल्लानां परिस्थापनिका तद्विषया समितिः सुन्दरचेष्टे-
त्यर्थः, तया, उच्चारः–पुरीषं, प्रश्रवणं–मूत्रं, खेलः–श्लेष्मा, सिङ्घानं–नासिकोद्भवः श्लेष्मा, जल्लः–मलः, अत्रापि त एव
सप्त भङ्गा इति, इह च उदाहरणानि, ईरियासमिईए उदाहरणं—

एगो[2] साहू ईरियासमिईए जुत्तो, सक्कस्स आसणं चलियं, सक्केण देवमज्झे पसंसिओ मिच्छादिट्ठी देवो असद्दहंतो
आगओ मच्छियप्पमाणाओ मंडुक्कलियाओ विउव्वइ पच्छओ य हत्थी, गइं ण भिंदइ, हत्थिणा उक्खिविय पाडिओ, न
सरीरं पेहइ, सत्ता मे मारियजीवदयापरिणओ। अहवा ईरियासमिईए अरहण्णओ, देवयाए पाओ छिण्णो, अण्णाए

---

१ पात्रादि न प्रतिलिखति न प्रमार्जयति, चतुर्भङ्गिका, तत्र चतुर्थे चत्वारो गमाः–दुष्प्रतिलेखितं दुष्प्रमार्जितं चतुर्भङ्गी, आद्याः षट् अप्रशस्ताः, चरमः प्रशस्तः, २ एकः साधुरीर्यासमित्या युक्तः, शक्रस्यासनं चलितं, शक्रेण देवमध्ये प्रशंसितः, मिथ्यादृष्टिर्देवोऽश्रद्दधान आगतो मक्षिकाप्रमाणा मण्डूकिका विकुर्वति पृष्ठतश्च हस्ती, गतिं न भिनत्ति, हस्तिनोत्क्षिप्य पातितः, न शरीराय स्पृहयति, सत्त्वा मया मारिता इति जीवदयापरिणतः ॥ अथवेर्यासमितावरहन्नकः, देवतया पादश्छिन्नः, अन्यया

संधिओ ॥ भासासमिईए—साहू, भिक्खट्ठा नयररोहए कोइ निग्गंथो बाहिं कडए हिंडंतो केणइ पुट्ठो—केवइय आसहत्थी तह निचयो दारुधन्नमाईणं । णिव्विण्णाऽनिव्विण्णा नागरया बेंति मं समिओ ॥ १ ॥ बेइ ण जाणामोत्ति सज्झायझाणजोगवेक्खित्ता । हिंडंता न वि पेच्छह ? नवि सुणह किह हु तो बेंति ॥ २ ॥-बहुं सुणेइ कण्णेहीत्यादि—वसुदेवपुव्वजम्मं आहरणं एसणाए समिईए । मगहा नंदिग्गामो गोयमधिज्जाइचक्कयरो ॥ १ ॥ तस्स य धारिणी भज्जा गब्भो तीए कयाइ आहूओ । धिज्जाइ मओ छम्मास गब्भ धिज्जाइणी जाए ॥ २ ॥ माउलसंवड्ढणकम्मकरणवेयारणा य लोएणं । नत्थि तुह एत्थ किंचिवि तो बेती माउलो तं च ॥ ३ ॥ मा सुण लोयस्स तुमं धूयाओ तिण्णि तेसि जेट्ठयरं । दाहामि करे कंमं पकओ पत्तो य वीवाहो ॥ ४ ॥ सा नेच्छई विसण्णो माउलओ बेइ बिइय दाहामि । सावि य तहेव निच्छइ तइयत्ती निच्छए सावि ॥ ५ ॥ निव्विण्णनंदिवद्धणआयरियाणं सगासि निक्खंतो । जाओ छट्ठछ्खमओ गिण्हइयमभिग्गहमिमं तु ॥ ६ ॥

---

१ संहितः ॥ भाषासमितौ—साधुः, भिक्षार्थं नगररोधे कोऽपि निर्ग्रन्थो बहिः कटके हिण्डमानः केनचित् पृष्टः—कियन्तोऽश्वा हस्तिनस्तथा निचयो दारुधान्यादीनाम् । निर्विण्णा अनिर्विण्णा नागरकाः ? ब्रुवत इदं समिताः ॥ १ ॥ ब्रुवति न जानाम इति स्वाध्यायध्यानयोगव्याक्षिप्ताः । हिण्डमानाः नैव प्रेक्षध्वं ? नैव शृणुथ कथं नु ? तदा ब्रुवति ॥ २ ॥ बहु शृणोति कर्णाभ्यामित्यादि ॥ वसुदेवपूर्वजन्माहरणं एषणायां समितौ । मगधेषु नन्दीग्रामो गौतमो धिग्जातीयचक्रकरः ॥ १ ॥ तस्य च धारिणीभार्या गर्भस्तस्याः कदाचिज्जातः । धिग्जातीयो मृतः षण्मासगर्भे धिग्जातीया जाते ॥ २ ॥ मातुलसंवर्धनं कर्मकरणं विचारणा च लोकेन । नास्ति तवात्र किञ्चिदपि तदा ब्रवीति मातुलस्तं च ॥ ३ ॥ मा शृणु लोकस्य त्वं दुहितरस्तिस्रस्तासां ज्येष्ठतराम् । दास्यामि कुरु कर्म प्रकृतः प्राप्तश्च विवाहः ॥ ४ ॥ सा नेच्छति विषण्णो मातुलो ब्रवीति द्वितीयां दास्यामि । सापि च तथैव नेच्छति तृतीयेति नेच्छति सापि ॥ ५ ॥ निर्विण्णो नन्दिवर्धनाचार्याणां सकाशे निष्क्रान्तः । जातः षष्ठषष्ठक्षपको गृह्णाति चाभिग्रहमिमं तु ॥ ६ ॥

वालगिलाणाईयं वेयावच्चं मए उ कायव्वं । तं कुणइ तिव्वसद्धो खायजसो सक्कगुणकित्ती ॥ ७ ॥ असद्दहेण देवस्स आगमो कुणइ दो समणरूवे । अतिसारगहियमेगो अडविठिओ अइगओ बीओ ॥ ८ ॥ वेति गिलाणो पडिओ वेयावच्चं तु सद्दहे जो उ । सो उट्ठेऊ खिप्पं सुयं च तं नंदिसेणेणं ॥ ९ ॥ छट्ठोववासपारणयमाणियं कवल घेत्तुकामेण । तं सुयमेत्तं रहसु-ट्ठिओ य भण केण कज्जंति ॥ १० ॥ पाणगदव्वं च तहिं जं णत्थि तेण वेइ कज्जं तु । निग्गय हिंडंतो कुणइ अणेसणं नविय पेल्लेइ ॥ ११ ॥ इय एक्कवारबितियं च हिंडिओ लद्ध ततियवारंमि । अणुकंपाए तरंतो तओ गओ तस्सगासं तु ॥ १२ ॥ खरफरुसनिट्ठुरेहिं अक्कोसइ सो गिलाणओ रुट्ठो । हे मंदभग्ग ! फुक्किय तूससि तं नाममेत्तेणं ॥१३॥ साहुवगा-रित्ति अह समुद्दिसिउमाओ । एयाएऽवत्थाए तं अच्छसि भत्तलोभिल्लो ॥ १४ ॥ अमियमिव मण्णमाणो तं फरुसगिरं तु सो उ संभंतो । चलणगओ खामेइ धुवइ य तं असुइमललित्तं ॥१५॥ उट्ठेह वयामोत्ती तह काहामी जहा हु अचिरेणं ।

---

१ बालग्लानादीनां वैयावृत्यं मया कर्त्तव्यमेव । तत्करोति तीव्रश्रद्धः ख्यातयशाः शक्रगुणकीर्त्तिः ॥ ७ ॥ अश्रद्धानेन देवस्यागमः करोति द्वे श्रमणरूपे । अतिसारगृहीत एकोऽटव्यां स्थितोऽतिगतो द्वितीयः ॥८॥ ब्रवीति ग्लानः पतितो वैयावृत्यं तु श्रद्दधाति यस्तु । स उत्तिष्ठतु क्षिप्रं श्रुतं च तन्नन्दिषेणेन ॥९॥ षष्ठोपवासपारणकमानीतं कवलान् गृहीतुकामेन । तच्छ्रुतमात्रे रभसोत्थितश्च भण केन कार्यमिति ? ॥१०॥ पानकद्रव्यं च तत्र यन्नास्ति तेन ब्रवीति कार्यं तु । निर्गतो हिण्डमाने करोत्यनेषणां न च प्रेरयति ॥ ११ ॥ एवमेकवारं द्वितीयं च हिण्डितो लब्धं तृतीयवारे । अनुकम्पया त्वरयन् ततो गतस्तत्सकाशं तु ॥ १२ ॥ खरपरुषनिष्ठुरैराक्रोशति स ग्लानो रुष्टः । हे मन्दभाग्य ! वृथैव तुष्यसि त्वं नाममात्रेण ॥ १३ ॥ साधूपकार्यमहमिति नामाथ समुद्दिश्याथायातः । एतस्या-मवस्थायां त्वं तिष्ठसि भक्तलोलुपः ॥ १४ ॥ अमृतमिव मन्यमानस्तां परुषगिरं तु स तु संभ्रान्तः । चरणगतः क्षमयति प्रक्षालयति च तमशुचिमललिप्तम् ॥ १५ ॥ उत्तिष्ठ व्रजाव इति तथा करिष्यामि यथाऽचिरेणैव ।

होहिह निरुआ तुब्भे बेती न वएमि गंतुं जे ॥ १६ ॥ आरुहया पिट्ठीए आरूढो ताहे तो पयारं च । परमासुइदुग्गंधं मुयई पट्ठीए फरुसं च ॥१७॥ बेइ गिरं धिम्मुंडिय!, वेगविघाओ कओत्ति दुक्खविओ। इय बहुविहमक्कोसइ पए पए सोऽवि भगवं तु ॥ १८ ॥ ण गणेई फरुसगिरं णयावि तं दुसइ तारिसं गंधं । चंदणमिव मण्णंतो मिच्छामिह दुक्कडं भणइ ॥ १९ ॥ चिंतेइ किह करेमी किह हु समाही हविज्ज साहुस्स ? । इय बहुविहप्पयारं नवि तिण्णो जाहे खोहेउं ॥ २० ॥ ताहे अभित्थुणंतो सुरो गओ आगओ य इयरो य । आलोएइ गुरूहि य धन्नोत्ति तओ अणुसट्ठो ॥ २१ ॥ जह तेणं नवि पेल्लिय एसण इय एसणाइ जइयव्वं । अहवावि इमं अण्णं आहरणं दिट्ठिवादीयं ॥ २२ ॥ जह केइ पंच संजय तण्हछुहकिलंत सुमहमद्धाणं । उत्तिणा वेयालिय पत्ता गामं च ते एगं ॥ २३ ॥ मग्गंति पाणगं ते लोगो य तहिं अणेसणं कुणई । न गहिय न लद्धमियरं कालगया तिसाभिभूया य ॥ २४ ॥ चउत्थीए उदाहरणं—आयरिएण साहू भणिओ—गामं वच्चामो,

---

१ भविष्यसि नीरोगस्त्वं ब्रवीति शक्नोमि न गन्तुं ॥ १६ ॥ आरोह पृष्ठौ आरूढस्तदा ततः प्रचारं ( विष्ठां ) च । परमाशुचिदुर्गन्धां मुञ्चति पृष्ठौ परुषां च ॥ १७ ॥ ब्रवीति गिरां धिग् मुण्डित ! वेगविघातः कृत इति दुःखापितः । इति बहुविधमाक्रोशति पदे पदे सोऽपि भगवांस्तु ॥ १८ ॥ न गणयति परुषगिरं न चापि तं दूषयति तादृशं गन्धम् । चन्दनमिव मन्यमानो मिथ्या मे इह दुष्कृतं भणति ॥१९॥ चिन्तयति कथं कुर्वे कथं च समाधिर्भवेत् साधोः ? । इति बहुविधप्रकारैर्नैव शक्तो यदा क्षोभयितुम् ॥ २० ॥ तदाऽभिष्टुवन् सुरो गत आगतश्चेतरश्च । आलोचयति गुरुभिश्च धन्य इति ततोऽनुशिष्टः ॥ २१ ॥ यथा तेन नैवोल्लङ्घितैषणैवमेषणायां यतितव्यं । अथवापीदमन्यदाहारणं दृष्टिवादिकम् ॥ २२ ॥ यथा केचित्पञ्च संयतास्तृष्णाक्षुधाभ्यां क्लिश्यन्तो सुमहान्तमध्वानम् । उत्तीर्णा विकाले च प्राप्ता ग्रामं च ते एकम् ॥ २३ ॥ मार्गयन्ति पानकं ते लोकश्च तत्रानेषणां करोति । न गृहीतं न लब्धमितरत् कालगतास्तृषाभिभूताश्च ॥ २४ ॥ चतुर्थ्यामुदाहरणं—आचार्येण साधुर्भणितः—ग्रामं व्रजामः.

उग्गाहिए संते केणइ कारणेण ठिया, एक्को एत्ताहे पडिलेहियाणित्ति काउं ठवेउमारद्धो, साहूहिं चोइओ भणइ–किमित्थ सप्पो अच्छइ ?, सन्निहियाए देवयाए सप्पो विउब्विओ, एस जहण्णओऽसमिओ, अण्णो तेणेव विहिणा पडिलेहित्ता ठवेइ, सो उक्कोसओ समिओ, एत्थ उदाहरणं–एक्कस्स आयरियस्स पंच सीससयाइं, तेसिमेगो सेट्ठिसुओ पव्वइओ, सो जो जो साहू एइ तस्स तस्स दंडगं निक्खिवइ, एवं तस्स उट्ठियस्स अन्नो एइ अन्नो जाइ, तहावि सो भगवं अतुरियं अचवलं उवरिं हेट्ठा य पमज्जिय ठवेइ, एवं बहुएणवि कालेण न परितम्मइ–चरिमाए समिईए पण्णत्तमिणं तु वीयराएहिं । आहरणं धम्मरुई परिठावणसमिइउवउत्तो ॥ १ ॥ काइयसमाहिपरिट्ठावणे य गहिओ अभिग्गहो तेणं । सक्कप्पसंसा अस्सद्दहणे देवागमविउव्वे ॥ २ ॥ सुबहुं पिवीलियाओ बाहा जवावि काइयसमाही । अन्नो य उट्ठिओ हू साहू बेंती तओ गाढं ॥ ३ ॥ अहयं च काइयाओ बेई अच्छसु परिट्ठवेमित्ति । निग्गए निसिरे जहियं पिवीलिया ओसरे तत्थ ॥ ४ ॥ साहू य

---

१ उद्ग्राहिते सति केनचित्कारणेन स्थिताः, एकोऽधुना प्रतिलिखितानीतिकृत्वा स्थापयितुमारब्धः, साधुभिर्नोदितो भणति–किमत्र सर्पस्तिष्ठति ?, सन्निहितया देवतया सर्पो विकुर्वितः, एष जघन्योऽसमितः, अन्यस्तेनैव विधिना प्रतिलिख्य स्थापयति, स उत्कृष्टतः समितः, अत्रोदाहरणं–एकस्याचार्यस्य पञ्च शिष्यशतानि, तेष्वेकः श्रेष्ठिसुतः प्रव्रजितः, स यो यः साधुः आयाति तस्य तस्य दण्डकं निक्षिपति, एवं तस्मिन्नुत्थितेऽन्य आयाति अन्यो याति, तथापि स भगवान् अत्वरितमचपलमुपर्यधस्ताच्च प्रमृज्य स्थापयति, एवं बहुनापि कालेन न परिताम्यति । चरमायां समितौ प्रज्ञप्तमिदं तु वीतरागैः । आहरणं धर्मरुचिः पारिष्ठापनिकीसमित्युपयुक्तः ॥ १ ॥ कायिकीसमाधिपारिष्ठापनिकायां च गृहीतोऽभिग्रहस्तेन । शक्रप्रशंसा अश्रद्धाने देवागमो विकुर्वति ॥ २ ॥ सुबह्व्यः पीपिलिका बाधा जवादपि कायिकीसमाधेः । अन्य उत्थितः साधुर्ब्रवीति ततो गाढम् ॥ ३ ॥ अहं च कायिकयाऽर्त्तो ब्रवीति तिष्ठ परिष्ठापयामीति । निर्गतो व्युत्सृजति यत्र पिपीलिका अवसर्पन्ति तत्र ॥ ४ ॥ साधुश्च

किलामिज्जइ पपिए ता वारिओ य देवेणं । सामाइए निसिद्धो मा पिय देवो य आउट्टो ॥ ५ ॥ वंदित्तु गओ बितियं तु दिट्ठिवाइयं खुड्डुए उ एक्को । तेण ण पेहिय थंडिल्ल काइया लोभओ राओ ॥ ६ ॥ थंडिलं न पेहियंती न वोसिरे देवयाएँ उज्जोओ । अणुकंपाएँ कओ से दिट्ठा भूमित्ति वोसिरियं ॥ ७ ॥ एसो समिओ भणिओ अण्णो पुण असमिओ इमो भणिओ । सो काइयभोमाई एक्केक्कं नवरि पडिलेहे ॥ ८ ॥ नवि तिण्णि तिण्णि पेहे वेइ किमित्थं निविट्ठो होज्जुट्टो । काऊण उट्टरूवं च निविट्ठा देवया तत्थ ॥ ९ ॥ सो उट्ठिओ य राओ तत्थ गओ नवरि पेच्छए उट्टं । बितियं च गओ तत्थवि ततियंपि य तत्थवि णिविट्ठो ॥ १० ॥ तो अण्णो उट्ठविओ तेसुंपि तहेव देवया भणिओ । कीस न वि सत्तवीसं पेहिसी ? सम्मं पडिवण्णो ॥ ११ ॥ उच्चाराई एसा परिट्ठावण वण्णिया समासेणं । वेइ किमेत्तियं चिय परिठप्पमुआहु अण्णंपि ? ॥ १२ ॥ भण्णइ अण्णंपत्थी किह तं किह वा परिट्ठवेयव्वं । संबंधेणेएणं परिठावणिजुत्तिमायाया ॥ १३ ॥

---

१ क्लाम्यते प्रपीतवान् तदा वारितश्च देवेन । सामायिके निषिद्धो मा पा देवश्चावर्जितः ॥ ५ ॥ वन्दित्वा गतः द्वितीयं दृष्टिवादिकं क्षुल्लकस्त्वेकः । तेन न प्रेक्षितं कायिकीस्थण्डिलं लोभतो रात्रौ ॥ ६ ॥ स्थण्डिलं न प्रेक्षितमिति न व्युत्सृजति देवतयोद्योतः । अनुकम्पया कृतः तस्य दृष्टा भूमिरिति व्युत्सृष्टम् ॥ ७ ॥ एष समितो भणितोऽन्यः पुनरसमितोऽयं भणितः । स कायिकभूम्यादि एकैकं परं प्रतिलिखति ॥ ८ ॥ नैव त्रीणि त्रीणि प्रत्युपेक्षते ब्रवीति किमिहो-पविष्टो भवेदुष्ट्रः ? । कृत्वोष्ट्ररूपं चोपविष्टा देवता तत्र ॥ ९ ॥ स उत्थितश्च रात्रौ तत्र गतः परं प्रेक्षते उष्ट्रम् । द्वितीयं च गतस्तत्रापि तृतीयमपि तत्राप्युपविष्टः ॥ १० ॥ ततोऽन्य उत्थापितस्तेष्वपि तथैव देवतया भणितः । कथं नैव सप्तविंशतिं प्रत्युपेक्षसे ? सम्यक् प्रतिपन्नः ॥ ११ ॥ उच्चारादीनामेषा पारिष्ठापनिकी वर्णिता समासेन । ब्रवीति किमेतावदेव पारिष्ठाप्यमुताहो अन्यदपि ॥ १२ ॥ भण्यतेऽन्यदप्यस्ति कथं तत् क वा परिष्ठापयितव्यम् ?। संबन्धेनैतेन पारिष्ठापनिकी निर्युक्तिरायाता ॥ १३ ॥

पारिट्ठावणियविहिं वोच्छामि धीरपुरिसपण्णत्तं । जं णाऊण सुविहिया पवयणसारं उवलहंति ॥ १ ॥

व्याख्या—परितैः—सर्वैः प्रकारैः स्थापनं परिस्थापनम्—अपुनर्ग्रहणतया न्यास इत्यर्थः, तेन निर्वृत्ता पारिस्थापनिकी तस्या विधिः—प्रकारः पारिस्थापनिकाविधिस्तं 'वक्ष्ये' अभिधास्ये, किं स्वबुद्ध्योत्प्रेक्ष्य ?, नेत्याह—'धीरपुरुषप्रज्ञप्तम्' अर्थसूत्राभ्यां तीर्थकरगणधरप्ररूपितमित्यर्थः, तत्रैकान्ततो वीर्यान्तरायापगमाद्धीरपुरुषः—तीर्थकरो गणधरस्तु धीः—बुद्धिस्तया विराजत इति धीरः । आह—यद्ययं पारिस्थापनिकाविधिर्धीरपुरुषाभ्यां प्ररूपित एव किमर्थं प्रतिपाद्यत इत्युच्यते—धीरपुरुषाभ्यां प्रपञ्चेन प्रज्ञप्तः स एव संक्षेपरुचिसत्त्वानुग्रहायेह सङ्क्षेपेणोच्यत इत्यदोषः, किंविशिष्टं विधिमत आह—यं 'ज्ञात्वा' विज्ञाय 'सुविहिताः' शोभनं विहितम्—अनुष्ठानं येषां ते सुविहिताः, साधव इत्यर्थः, किं ?—प्रवचनस्य सारः प्रवचनसन्दोहस्तम् 'उपलभन्ति' जानन्तीत्यर्थः ॥ सा पुनः पारिस्थापनिक्योघतः एकेन्द्रियनोएकेन्द्रियपरिस्थाप्यवस्तुभेदेन द्विधा भवति, आह—

एगेंदियनोएगेंदियपारिट्ठावणिया समासओ दुविहा । एएसिं तु पयाणं पत्तेय परूवणं वोच्छं ॥ २ ॥

व्याख्या—एकेन्द्रियाः—पृथिव्यादयः, नोएकेन्द्रियाः—त्रसादयस्तेषां पारिस्थापनिकी—एकेन्द्रियनोएकेन्द्रियपारिस्थापनिकी, 'समासतः' संक्षेपेण 'द्विधा' द्विप्रकारा प्रज्ञप्तोक्तेनैव प्रकारेण, 'एएसिं तु पयाणं पत्तेय परूवणं वोच्छं' अनयोः पदयोरेकेन्द्रियनोएकेन्द्रियलक्षणयोः 'प्रत्येकं' पृथक् पृथक् 'प्ररूपणां' स्वरूपकथनां वक्ष्ये—अभिधास्य इति गाथार्थः ॥ २ ॥ तत्रैकेन्द्रियपारिस्थापनिकीप्रतिपिपादयिषया तत्स्वरूपमेवादौ प्रतिपादयन्नाह—

पुढवी आउक्काए तेऊ वाऊ वणस्सई चेव । एगेंदिय पंचविहा तज्जाय तहा य अतज्जाय ॥ ३ ॥

व्याख्या—पृथिव्यप्कायस्तेजो वायुर्वनस्पतिश्चैव एवमेकेन्द्रियाः पञ्चविधाः, एकं त्वगिन्द्रियं येषां ते एकेन्द्रियाः 'पञ्चविधाः' पञ्चप्रकाराः, एतेषां चैकेन्द्रियाणां पारिस्थापनिकी द्विविधा भवति,कथमित्याह—'तज्जाय तहा य अतज्जाय' तज्जातपारिस्थापनिकी अतज्जातपारिस्थापनिकी च, अनयोर्भावार्थमुपरिष्टाद्वक्ष्यतीति गाथार्थः ॥ ३ ॥ आह—सति ग्रहणसम्भवेऽतिरिक्तस्य परिस्थापनं भवति, तत्र पृथिव्यादीनां कथं ग्रहणमित्यत आह—

दुविहं च होइ गहणं आयसमुत्थं च परसमुत्थं च । एक्केकंपि य दुविहं आभोगे तह अणाभोगे ॥ ४ ॥

व्याख्या—'द्विविधं तु' द्विप्रकारं च भवति 'ग्रहणं' पृथिव्यादीनां, कथम् ?—'आत्मसमुत्थं च परसमुत्थं च' आत्मसमुत्थं च स्वयमेव गृह्णतः परसमुत्थं परस्माद्गृह्णतः, पुनरेकैकमपि द्विविधं भवति, कथमित्याह—'आभोए तह अणाभोए' आभोगनम् आभोगः, उपयोगविशेष इत्यर्थः, तस्मिन्नाभोगे सति, तथाऽनाभोगे, अनुपयोग इत्यर्थः, अयं गाथाक्षरार्थः ॥ ४ ॥ अयं पुनर्भावार्थो वर्तते—तत्थ ताव आयसमुत्थं कहं च आभोएण होज्ज ?, साहू अहिणा खइओ विसं वा खइयं विसप्फोडिया वा उट्ठिया, तत्थ जो अचित्तो पुढविकाओ केणइ आणिओ सो मग्गिज्जइ, णत्थि आणिल्लओ, ताहे अप्पणावि आणिज्जइ, तत्थवि ण होज्ज अचित्तो ताहे मीसो, अंतो हलखणणकुड्डमाईसु आणिज्जइ, ण होज्ज ताहे अडवीओ पंथे वंमिए वा दवदड्ढए वा, ण होज्ज पच्छा सचित्तोवि घेप्पइ, आसुकारी वा कज्जं होज्जा जो लद्धो सो आणिज्जइ, एवं



१ तत्र तावदात्मसमुत्थं कथं चाभोगेन भवेत् ?, साधुरहिना दष्टो विषं वा खादितं विषस्फोटिका वोत्थिता, तत्र योऽचित्तः पृथ्वीकायः केनचिदानीतः स मार्ग्यते, नास्त्यानीतस्तदाऽऽत्मनाऽप्यानीयते, तत्रापि न भवेदचित्तस्तदा मिश्रः, अन्तशो हलखननकुड्यादिभ्य आनीयते, न भवेत्तदाऽटवीतः. पथि वल्मीकात् दवदग्धाद्वा, न भवेत् पश्चात्सचित्तोऽपि गृह्यते, आशुकारि वा कार्यं भवेत् यो लब्धः स आनीयते, एवं

लोणंपि[1] जाणंतो, अणाभोइएण–तेण लोणं मग्गियं अचित्तंति काऊणं मीसं सचित्तं वा घेत्तूण आगओ, पच्छा णायं तत्थेव छड्डेयव्वं, खंडे वा मग्गिए एयं खंडंति लोणं दिन्नं, तंपि तहिं चेव विगिंचियव्वं, ण देज्ज ताहे तं अप्पणा विगिंचियव्वं, एयं आयसमुत्थं दुविहंपि । परसमुत्थं आभोगेण ताव सचित्तदेसमट्टिया लोणं वा कज्जनिमित्तेण दिण्णं, मग्गिएण अणाभोगेण खंडं मग्गियं लोणं देज्ज तस्सेव दायव्वं, नेच्छेज्ज ताहे पुच्छिज्जइ–कओ तुब्भेहिं आणियं ?, जत्थ साहइ तत्थ विगिंचिज्जइ, न साहेज्ज न जाणामोत्ति वा भणेज्जा ताहे उवलक्खेयव्वं वण्णगंधरसफासेहिं, तत्थ आगरे परिट्ठविज्जइ, नत्थि आगरो पंथे वा वट्टंति विगालो वा जाओ ताहे सुक्कगं महुरगं कप्परं मग्गिज्जइ, ण होज्ज कप्परं ताहे वडपत्ते पिप्पलपत्ते वा काऊण परिट्ठविज्जइ १ । आउक्काए दुविहं गहणं आयाए णायं अणायं च, एवं परेणवि णायं अणायं च, आयाए जाणंतस्स विसकुंभो हणियव्वो विसफोडिया वा सिंचियव्वा विसं वा खइयं मुच्छाए वा पडिओ गिलाणो वा, एवमाइसु ( कज्जेसु )

---

१ लवणमपि जानन् । अनाभोगिकेन–तेन लवणं मार्गितमचित्तमितिकृत्वा मिश्रं सचित्तं वा गृहीत्वाऽऽगतः, पश्चात् ज्ञातं तत्रैव त्यक्तव्यं, खण्डायां वा मार्गितायामेषा खण्डेति लवणं दत्तं, तदपि तत्रैव त्यक्तव्यं, न दद्यात्तदाऽऽत्मना त्यक्तव्यं, एतदात्मसमुत्थं द्विविधमपि । परसमुत्थमाभोगेन तावत् सचित्तदेशा मृत्तिका लवणं वा कार्याय दत्तं मार्गिते अनाभोगेन खण्डायां मार्गितायां लवणं दद्यात् तस्मायेव दातव्यं,नेच्छेत् तदा पृच्छयते–कुतस्त्वयाऽऽनीतं ?, यतः कथयति तत्र त्यज्यते, न कथयेन्न जानाम इति वा भणेत्तदोपलक्षितव्यं वर्णगन्धरसस्पर्शैः, तत्राकरे परिष्ठाप्यते नास्त्याकरः पथि वा वर्त्तन्ते विकालो वा जातस्तदा शुष्कं मधुर कर्परं मार्ग्यते न भवेत्कर्परं तदा वटपत्रे पिप्पलपत्रे वा कृत्वा परिष्ठाप्यते । अप्काये द्विविधं ग्रहणमात्मना ज्ञातमज्ञातं च, एवं परेणापि ज्ञातमज्ञातं च, आत्मना जानानस्य विषकुम्भो हन्तव्यो विषस्फोटिका वा सेक्तव्या विषं वा खादितं मूर्च्छयापि वा पतितो ग्लानो वा, एवमादिषु ( कार्येषु. )

पुव्वमचित्तं पच्छा मीसं अहुणाधोयं तंदुलोदयाइ आउरे कज्जे सचित्तंपि, कए कज्जे सेसं तत्थेव परिठविज्जइ, न देज्ज ताहे पुच्छिज्जइ–कओ आणीयं ?, जइ साहेइ तत्थ परिठवेयव्वं आगरे, न साहेज्जा न वा जाणेज्जा पच्छा वण्णाईहिं उवलक्खेउं तत्थ परिठवेइ, अणाभोगा कोंकणेसु पाणियं अंबिलं च एगत्थ वेतियाए अच्छइ, अविरइया मग्गिया भणइ–एत्तो गिण्हाहि, तेण अंबिलंति पाणियं गहियं, णाए तत्थेव छुभेज्जा, अह ण देइ ताहे आगरे, एवं अणाभोगा आयसमुत्थं, परसमुत्थं जाणंती अणुकंपाए देइ, ण एते भगवंतो पाणियस्स रसं जाणंति हरदोदगं दिज्जा, पडिणीययाए वा देज्जा, एयाणि से वयाणि भज्जंतुत्ति, णाए तत्थेव साहरियव्वं, न देज्ज जओ आणियं तं ठाणं पुच्छिज्जइ, तत्थ नेऊं परिट्ठविज्जइ, न जाणेज्जा वण्णाईहिं लक्खिज्जइ, ताहे णइपाणियं णईए विगिंचेज्जा एवं तलागपाणियं तलाए अगडवाविसरमाइसु सट्ठाणेसु विगिंचिज्जइ, जइ सुक्कं तडागपाणियं वडपत्तं पिप्पलपत्तं वा अट्ठेऊण सणियं विगिंचइ, जह उज्जरा न जायंति, पत्ताणं

---

१ पूर्वमचित्तं पश्चान्मिश्रं अधुनाधौतं तन्दुलोदकादि आतुरे कार्ये सचित्तमपि, कृते कार्ये शेषं तत्रैव परिष्ठाप्यते, न दद्यात्तदा पृच्छयते–कुत आनीतं ?, यदि कथयेत्तत्र परिष्ठापयितव्यमाकरे, न कथयेद्वा जानाति पश्चाद्वर्णादिभिरुपलक्ष्य तत्र परिष्ठापयति, अनाभोगात् कोङ्कणे पानीयमम्लं चैकत्र वेदिकायां तिष्ठतः, अविरतिका मार्गिता भणति–अतो गृहाण, तेनाम्लमिति पानीयं गृहीतं, ज्ञाते तत्रैव क्षिपेत्, अथ न दद्यात्तदाऽऽकरे, एवमनाभोगादात्मसमुत्थं, परसमुत्थं जानानाऽनुकम्पया दद्यात्–नैते भगवन्तः पानीयस्य रसं जानन्ति ह्रदोदकं दद्यात्, प्रत्यनीकतया वा दद्यात् एतान्यस्य व्रतानि भज्यन्त्विति, ज्ञाते तत्रैव संहर्तव्यं, न दद्याद्यत आनीतं तत्स्थानं पृच्छयते तत्र नीत्वा परिष्ठाप्यते, न जानीयाद्वर्णादिभिर्लक्ष्यते तदा नदीपानीयं नद्यां त्यज्यते एवं तटाकपानीयं तटाके अवटवापीसरआदिषु स्वस्थानेषु त्यज्यते, यदि शुष्कं तटाकपानीयं वटपत्रं पिप्पलपत्रं वाऽवष्टभ्य शनैस्त्यज्यते यथा प्रवाहा न जायन्ते, पत्राणा–

[1]असईए भायणस्स कण्णा जाव हेट्ठा सणियं उदयं अल्लियाविज्जइ ताहे विगिंचिज्जइ, अह कूओदयं ताहे जइ कूवतडा उल्ला तत्थ सणियं निसिरइ, अणुल्लसिओ सुक्कतडा होज्जा उल्लगं च ठाणं नत्थि ताहे भाणं सिक्कएण जडिज्जइ, मूले दोरो वज्झइ, उसक्कावेउ पाणियं ईसिमसंपत्तं मूलदोरो उक्खिप्पइ, ताहे पलोट्टइ, नत्थि कूवो दूरे वा तेणसावयभयं होज्जा ताहे सीयलए महुररुक्खस्स वा हेट्ठा सपडिग्गहं वोसिरइ, न होज्ज पायं ता उल्लियं पुहविकायं मग्गित्ता तेण परिट्ठवेइ, असइ सुक्कंपि उण्होदएण उल्लेत्ता पच्छा परिट्ठविज्जइ, निव्वाघाए चिक्खल्ले खड्डुं खणिऊण पत्तपणालेण विगिंचइ, सोहिं च करेंति, एसा विही, जं पडिनियत्ताए आउक्काएण मीसेउं दिण्णं तं विगिंचेइ, जं संजयस्स पुव्वगहिए पाणिए आउक्काओ अणाभोगेण दिण्णो जइ परिणओ भुंजइ, नवि परिणमइ जेण कालेण थंडिलं पावइ विगिंचियव्वं, जत्थ हरतणुया पडेज्जा तं कालं पडिच्छित्ता विगिंचिज्जइ २। तेउक्काओ तहेव आयसमुत्थो आहोएण संजयस्स अगणिक्काएण कज्जं जायं—अहिडक्को

---

१ असति भाजनस्य कर्णौ यावदधस्तात् ( पश्चात् ) शनैरुदकं श्लिष्यन्ति तदा त्यज्यते, अथ कूपोदकं तदा यदि कूपतट आर्द्रस्तत्र शनैर्निसृज्यते, असिच्यमानः शुष्कतटो भवेत् आर्द्रं च स्थानं नास्ति तदा भाजनं सिक्कंकेन वध्यते, मूले दवरको वध्यते, उत्त्रष्क्य पानीयसमीपदसंप्राप्ते मूलदवरक उत्क्षिप्यते, तदा प्रलोठ्यते, नास्ति कूपो दूरे वा स्तेनश्वापदभयं भवेत् तदा शीतले मधुरवृक्षस्याधस्तात् सप्रतिग्रहं व्युत्सृज्यते, न भवेत्पात्रं तदाऽऽर्द्रं पृथ्वीकायं मार्गयित्वा तेन परिष्ठापयति, असति शुष्कमप्युष्णोदकेनार्द्रयित्वा पश्चात् परिष्ठाप्यते, निर्व्याघाते कर्दमे खड्डुं खनित्वा पत्रप्रणालिकया त्यज्यते, शुद्धिं च कुर्वन्ति, एप विधिः, यत् प्रत्यनीकतयाऽप्कायेन मिश्रयित्वा दत्तं तद्विविच्यते, यदि संयतेन पूर्वं गृहीते पानीयेऽप्कायोऽनाभोगेन दत्तो यदि परिणतो भुज्यते, न परिणमति येन कालेन स्थण्डिलं प्राप्यते त्यक्तव्यं, यत्र हरतनुकाः पतेयुस्तं कालं प्रतीच्छ्य त्यज्यते । तेजस्कायस्तथैवात्मसमुत्थ आभोगेन संयतस्याग्निकायेन कार्यं जातं—अहिदष्टो

वा [1]डंभिज्जइ फोडिया वा वायगंठी वा अन्त्रवृद्धिर्वा, वसहीए दीहजाईओ पविट्ठो, पोट्टसूलं वा तावेयव्वं, एवमाईहिं आणिए कज्जे कए तत्थेव पडिछुब्भइ, ण देति तो तेहिं कट्ठेहिं जो अगणी तज्जाइओ तत्थेव विगिंचिज्जइ, न होज्ज सोवि न देज्ज वा ताहे तज्जाएण छारेण उच्छाइज्जइ, पच्छा अण्णजाइएणवि, दीवएसु तेल्लं गालिज्जइ वत्ती य निप्पीलिज्जइ मल्लगसंपुडए कीरइ पच्छा अहाउगं पालेइ, भत्तपच्चक्खायगाइसु मल्लगसंपुडए काऊण अच्छत्ति, सारक्खिज्जइ, कए कज्जे तहेव विवेगो, अणाभोगेण खेलमल्लगालोयच्छारादिसु, तहेव परो आभोएण छारेण दिज्ज वसहीए अगणिं जोइक्खं वा करेज्ज तहेव विवेगो, अणाभोएणवि एए चेव पूयलियं वा सइंगालं देज्जा, तहेव विवेगो ३ । वाउकाए आयसमुत्थं आभोएण, कहं ?, वत्थिणा दिइएण वा कज्जं, सो कयाइ सचित्तो अचित्तो वा मीसो वा भवइ, कालो दुविहो–निद्धो लुक्खो य, णिद्धो तिविहो–उक्कोसाइ, लुक्खोवि तिविहो–उक्कोसाइ, उक्कोसए सीए जाहे धंतो भवइ ताहे जाव पढमपोरिसी

---

१ वा दह्यते स्फोटिका वा वातग्रन्थिर्वा अन्त्रवृद्धिर्वा, वसतौ दीर्घजातीयः प्रविष्टः, उदरशूलं वा तापयितव्यं, एवमादिभिरानीते कार्ये कृते तत्रैव प्रतिक्षिप्यते, न दद्यात्तदा तैः काष्ठैर्योऽग्निस्तज्जातीयस्तत्रैव त्यज्यते, न भवेत् सोऽपि न दद्याद्वा तदा तज्जातेन क्षारेणाच्छाद्यते, पश्चादन्यजातीयेनापि, दीपेभ्यः तैलं गाल्यते वर्त्तिर्निष्पीड्यते मल्लकसंपुटे क्रियते पश्चाद्यथायुष्कं पालयति, भक्तप्रत्याख्यानादिषु मल्लकसंपुटे कृत्वा तिष्ठति, संरक्ष्यते, कृते कार्ये तथैव विवेकः, अनाभोगेन श्लेष्ममल्लकलोचक्षारादिषु, तथैव पर आभोगेन दद्यात् , वसतौ अग्निं ज्योतिर्वा कुर्यात् तथैव विवेकः । अनाभोगेनापि एते चैव पूपलिकां वा साङ्गारां दद्यात् तथैव विवेकः ॥ वायुकाय आत्मसमुत्थमाभोगेन, कथं ?, बस्तिना दृत्या वा कार्यं, स कदाचित् सचित्तोऽचित्तो वा मिश्रो वा भवति, कालो द्विविधः–स्निग्धो रूक्षश्च, स्निग्धस्त्रिविधः–उत्कृष्टादिः, रूक्षोऽपि त्रिविधः–उत्कृष्टादिः, उत्कृष्टे शीते यदा ध्मातो भवति तदा यावत् प्रथमपौरुषी

ताव अचित्तो वितियाए मीसो ततियाए सचित्तो, मज्झिमए सीए वितियाए आरद्धो चउत्थीए सचित्तो भवइ, मंदसीए तइयाए आरद्धो पंचमाए पोरिसीए सचित्तो, उण्हकाले मंदउण्हे मज्झे उक्कोसे दिवसा नवरि दो तिण्णि चत्तारि पंच य, एवं वत्थिस्स दइयस्स पुवद्धंतस्स एसेव कालविभागो, जो पुण ताहे चेव धमित्ता पाणियं उत्तारिज्जइ, तस्स य पढमे हत्थसए अचित्तो बितिए मीसो तइए सचित्तो, कालविभागो नत्थि, जेण पाणियं पगतीए सीयलं, पुव्वं अचित्तो मग्गिज्जइ पच्छा मीसो पच्छा सचित्तोत्ति। अणाभोएण एस अचित्तोत्ति मीसगसचित्ता गहिया, परोवि एवं चेव जाणंतो वा देज्जा अजाणंतो वा, णाए तस्सेव अणिच्छंते उवरगं सकवाडं पविसित्ता सणियं मुंचइ, पच्छा सालाएवि, पच्छा वणणिगुंजे महुरे, पच्छा संघाडियाउवि जयणाए, एवं दइयस्सवि, सचित्तो वा अचित्तो वा मीसो वा होउ सव्वस्सवि एस विही, मा अण्णं विराहेहित्ति ४। वणस्सइकाइयस्सवि आयसमुत्थं आभोएणं गिलाणाइकज्जे मूलाईण गहण होज्जा, अणाभोएण

---

१ तावदचित्तो द्वितीयायां मिश्रस्तृतीयायां सचित्तः, मध्यमे शीते द्वितीयाया आरभ्य चतुर्थ्यां सचित्तो भवति, मन्दशीते तृतीयस्या आरभ्य पञ्चम्यां पौरुष्यां सचित्तः, उष्णकाले मन्दोष्णे मध्ये उत्कृष्टे दिवसाः परं द्वौ त्रीन् चतुरः पञ्च च, एवं बस्तेर्दृतेः, पूर्वध्मातस्यैष एव कालविभागः, यः पुनस्तदैव ध्मात्वा पानीय उत्तार्यते, तस्य च प्रथमे हस्तशते अचित्तो द्वितीये मिश्रस्तृतीये सचित्तः, कालविभागो नास्ति, येन पानीयं प्रकृत्या शीतलं, पूर्वमचित्तो मार्ग्यते पश्चान्मिश्रः पश्चात्सचित्त इति। अनाभोगेन एषोऽचित्त इति मिश्रसचित्तौ गृहीतौ, परोऽप्येवमेव जानन्वा दद्यादजानन्वा, ज्ञाते तस्मै एव अनिच्छति अपवरकं सकपाटं प्रविश्य शनैर्मुच्यते, पश्चात् शालायामपि, पश्चाद्वननिकुञ्जे मधुरे, पश्चात् शृङ्गाटिकायामपि यतनया, एवं दृतेरपि, सचित्तो वाऽचित्तो वा मिश्रो वा भवन्तु सर्वस्याप्येष विधिः, माऽन्यं विरात्सीदिति। वनस्पतिकायिकस्य आत्मसमुत्थमाभोगेन ग्लानादिकार्याय मूलादीनां ग्रहणं भवति, अनाभोगेन

गहियं भत्ते वा छोड़ो पडिओ पिढगं वा कुकुसा वा, सो चेव पोरिसिविभागो, दुकुड्डिओ चिरंपि होज्जा, परो अद्दगेण मिसियगं चवलगमीसियाणि वा पीलूणि कूरओडियाए वा अंतो छोढूणं करमद्दएहिं वा समं कंजिओ अन्नयरो बीयकाओ पडिओ होज्जा, तिलाण वा एवं गहणं होज्जा, निंबं तिलमाइसु होज्जा. जइ आभोगगहियं आभोगेण वा दिन्नं विवेगो, अणाभोगगहिए अणाभोगदिण्णे वा जइ तरइ विगिंचिउं पढमं परपाए, सपाए, संथारए लद्धीए वा पणओ हवेज्जा ताहे उण्हं सीयं व णाऊण विगिंचणा. एसोवि वणस्सइकाओ पच्छा अंतोकाए एसिं विगिंचणविही. अद्दगं अद्दगखेत्ते सेसाणी आगरे, असइ आगरस्स निव्वाघाए महुराए भूमीए, अंतो वा कप्परे वा पत्ते वा, एस विहित्ति ॥ अत्र तज्जातातज्जातपारिस्थापनिकी प्रत्येकं पृथिव्यादीनां प्रदर्शितैव, भाष्यकारः सामान्येन तल्लक्षणप्रतिपादनायाह—

तज्जायपरिट्ठवणा आगरमाईसु होइ बोद्धव्वा । अतज्जायपरिट्ठवणा कप्परमाईसु बोद्धव्वा ॥ २०५ ॥ ( भा० )

व्याख्या—तज्जाते—तुल्यजातीये पारिस्थापनिका २ सा आगरादिषु परिस्थापनं कुर्वतो भवति ज्ञातव्या, आकराः—

१ गृहीतं भक्ते वा छोडः[*] पतितःपिढं वा +कुकुसा वा, स एव पौरुषीविभागः, दुष्कृतः चिरमपि भवेत्, पर आर्द्रकेण मिश्रितं चपलकमिश्रितानि वा पीलूनि कूरकोडिकायां ( क्षिप्रपचिकायां ) वाऽन्तः क्षिप्त्वा करमर्दैः समं वा काञ्जिकः अन्यतरो वा बीजकायः पतितो भवेत्, तिलानां चैवं ग्रहणं भवेत्, निम्बं तैलादिषु भवेत्, यथाभोगगृहीतमाभोगेन वा दत्तं विवेकः, अनाभोगगृहीतेऽनाभोगदत्ते वा यदि शक्यते त्यक्तुं प्रथमं परपात्रे स्वपात्रे, संस्तारके लब्ध्यां वा पनको भवेत् तदोष्णं शीतं वा ज्ञात्वा त्यागः, एषोऽपि वनस्पतिकायिकः, पश्चादन्तःकाय एषां विवेकविधिः, आर्द्रमार्द्रकक्षेत्रे शेषाणि आकरे, असत्याकारे निर्व्याघाते मधुरायां भूमौ, अन्तर्वा कर्परस्य वा पात्रस्य वा एष विधिरिति । [*] कङ्कुक. + कणिका.

पृथिव्याद्याकराः प्रदर्शिता एव, अतज्जातीये-भिन्नजातीये परिस्थापनिका २ सा पुनः कर्परादिषु यथा (योगं) परिस्थापनं कुर्वतो वोद्धव्येति गाथार्थः ॥ गतैकेन्द्रियपरिस्थापनिका, अधुना नोएकेन्द्रियपारिस्थापनिकां प्रतिपादयन्नाह—

णोएगिंदिएहिं जा सा सा दुविहा होइ आणुपुव्वीए । तसपाणेहिं सुविहिया ! नायव्वा नोतसेहिं च ॥ ५ ॥

व्याख्या—एकेन्द्रिया न भवन्तीति नोएकेन्द्रियाः-त्रसादयस्तैः करणभूतैरिति तृतीया, अथवा तेषु सत्सु तद्विषया वेति सप्तमी, एवमन्यत्रापि योज्यं, याऽसौ पारिस्थापनिका सा 'द्वि(वि)धा' द्विप्रकारा भवति 'आनुपूर्व्या' परिपाट्या, द्वैविध्यमेव दर्शयति-'तसपाणेहिं सुविहिया णायव्वा णोतसेहिं च' त्रसन्तीति त्रसाः त्रसाश्च ते प्राणिनश्चेति समासस्तैः करणभूतैः सुविहितेति सुशिष्यामन्त्रणम्, अनेन कुशिष्याय न देयमिति दर्शयति, ज्ञातव्या-विज्ञेया 'नोतसेहिं च' त्रसा न भवन्तीति नोत्रसा-आहारादयस्तैः करणभूतैरिति गाथार्थः ॥ ५ ॥

तसपाणेहिं जा सा सा दुविहा होइ आणुपुव्वीए । विगलिंदियतसेहिं जाणे पंचिंदिएहिं च ॥ ६ ॥

व्याख्या—त्रसप्राणिभिर्याऽसौ सा द्वि(वि)धा भवति आनुपूर्व्या, 'विकलेन्द्रिया' द्वीन्द्रियादयश्चतुरिन्द्रियपर्यन्तास्तैश्च, 'जाणि'त्ति जानीहि पञ्चेन्द्रियैश्चेति गाथार्थः ॥ ६ ॥

विगलिंदिएहिं जा सा सा तिविहा होइ आणुपुव्वीए । वियतियचउरो यावि य तज्जाया तहा अतज्जाया ॥ ७ ॥

व्याख्या—विकलेन्द्रियैर्याऽसौ सा त्रिविधा भवति आनुपूर्व्या, 'वियतियचउरो यावि य' द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाँश्चाधिकृत्य, सा च प्रत्येकं द्विभेदा, तथा चाह-'तज्जाय तहा अतज्जाया' तज्जाते-तुल्यजातीये या क्रियते सा तज्जाता,

तथा अतज्जाता-अतज्जाते या क्रियत इति गाथार्थः ॥ ७ ॥ ॥ भावार्थस्त्वयं-बेइंदियाणं आयसमुत्थं जलुगा गंडाइसु कज्जेसु गहिया तत्थेव विगिंचिज्जइ, सत्तुया वा आलेवणनिमित्तं ऊरणियासंसत्ता गहिया विसोहित्ता आयरे विगिंचेति, असइ आगरस्स सत्तुएहिं समं निव्वाघाए, संसत्तदेसे वा कत्थइ होज्ज अणाभोगगहणं तं देसं चेव न गंतव्वं, असिवाईहिं गमेज्जा जत्थ सत्तुया तत्थ कूरं मग्गइ ( ग्रं० १६००० ), न लहइ तद्देवसिए सत्तुए मग्गइ, असईए बितिए जाव ततिए, असइ पडिलेहिय २ गिण्हइ, वेला वा अइक्कमइ अद्धाणं वा, संकिया वा मत्ते घेप्पंति, बाहिं उज्जाणे देउले पडिसयस्स वा बाहिं रयत्ताणं पत्थरिऊणं उवरि एक्कं घणमसिणं पडलं तत्थ पल्लच्छिज्जंति, तिन्नि ऊरणयपडिलेहणाओ, नत्थि जइ ताहे पुणो पडिलेहणाओ, तिण्णि मुट्ठिओ गहाय जइ सुद्धा परिभुज्जंति, एगंमि दिट्ठे पुणोवि मूलाओ पडिलेहिज्जंति, जे तत्थ पाणा ते मल्लए सत्तुएहिं समं ठविज्जंति, आगराइसु विगिंचइ, नत्थि बीयरहिएसु विगिंचइ, एवं जत्थ पाणयंपि बीयपाए

---

१ द्वीन्द्रियाणामात्मसमुत्थं जलौका गण्डादिषु कार्येषु गृहीता तत्रैव त्यज्यते, सक्तुका वा आलेपननिमित्तं ऊर्णिकासंसक्ता गृहीता विशोध्याकरे त्यजति, असत्याकारे सक्तुकैः समं निर्व्याघाते, संसक्तदेशे वा कुत्रचित् भवेदनाभोगग्रहणं तं देशमेव न गच्छेत्, अशिवादिभिर्गच्छेत् यत्र सक्तुकास्तत्र कूरो मार्ग्यते, न लभ्यते तद्दैवसिकान् सक्तुकान् मार्गयति, असति द्वैतीयिकान् यावत्तार्त्तीयिकान्, असति प्रतिलिख्य २ गृह्णाति, वेलां वाऽतिक्रामति अध्वानं वा ( प्रतिपन्नाः ), शङ्किता वा मात्रके गृह्णाति, बहिरुद्यानात् देवकुले प्रतिश्रयस्य वा बहिः रजस्त्राणं प्रस्तीर्य उपर्येकं घनमसृणं पटलं तत्र प्रच्छादयति, त्रिकृत्व ऊरणिकाप्रतिलेखना, नास्ति यदि तदा पुनः प्रतिलेखना, तिस्रो मुष्टीर्गृहीत्वा यदि शुद्धा परिभुज्यन्ते, एकस्यां दृष्टायां पुनरपि मूलात् प्रतिलेखयति, ये तत्र प्राणिनस्ते मल्लके सक्तुकैः समं स्थाप्यन्ते, आकरादिषु त्यज्यन्ते, न सन्ति बीजरहितेषु त्यजति, एवं यत्र पानीयमपि द्वितीयपात्रे.

पंडिलेहित्ता उग्गाहिए छुब्भइ, संसत्तं जायं रसएहिं ताहे सपडिग्गहं वोसिरउ, नत्थि पायं ताहे अंबिलिं पाडिहारियं मग्गउ, णो लहेज्ज सुक्कयं अंबिलिं उल्लेऊणं असइ अण्णंमिवि अंबिलिबीयाणि छोढूण विगिंचइ, नत्थि वीयरहिएसु विगिंचइ, पच्छा पडिस्सए पाडिहारिए वा अपाडिहारियं वा तिकालं पडिलेहेइ दिणे दिणे, जया परिणयं तहा विगिंचइ, भायणं च पडिअप्पिज्जइ, नत्थि भायणं ताहे अडवीए अणागमणपहे छाहीए जो चिक्खल्लो तत्थ खड्डुं खणिऊण निच्छिड्डुं लिंपित्ता पत्तणालेणं जयणाए छुभइ, एक्कसि पाणएणं भमाडेइ, तंपि तत्थेव छुब्भइ, एवं तिन्नि वारे, पच्छा कप्पेइ सण्हकट्ठेहिं य मालं करेंति चिक्खिल्लेणं लिंपइ कंटयछायाए य उच्छाएइ, तेण य भाणएणं सीयलपाणयं ण लयइ, अवसावणेण कूरेण य भाविज्जइ, एवं दो तिण्णि वा दिवसे, संसत्तगं च पाणयं असंतत्तगं च एगो न धरे, गंधेण विसंसिज्जइ, संसत्तं च गहाय न हिंडिज्जइ, विराहणा होज्ज, संसत्तं गहाय न समुद्दिसिज्जइ, जइ परिस्संता जे ण हिंडंति ते लिंति, जे

---

१ प्रतिलिख्योद्ग्राहिके क्षिप्यते, संसक्तं जातं रसजैस्तदा सप्रतिग्रहं व्युत्सृजतु, नास्ति पात्रं तदा चिञ्चिणिकां प्रातिहारिकीं मार्गयतु, न लभेत शुष्कां चिञ्चिणिकां आर्द्रयित्वा असति अन्यस्मिन्नपि चिञ्चिणिकाबीजानि क्षिप्त्वा विविच्यते, नास्ति बीजरहितेषु त्यज्यते, पश्चात् प्रतिश्रये प्रातिहारिके वा अप्रातिहारिके वा त्रिकालं प्रतिलिखति दिने दिने, यदा परिणतं तदा विविच्यते, भाजनं च प्रत्यर्प्यते, नास्ति भाजनं तदाऽटव्यामनागमनपथे छायायां यः कर्दमस्तत्र गर्तं खनित्वा निश्छिद्रं लिप्त्वा पत्रनालेन यतनया क्षिपति, एकशः पानीयेनार्द्रयति, तदपि तत्रैव क्षिपति, एवं त्रीन् वारान्, पश्चात् कल्पयति श्लक्ष्णकाष्ठैश्च मालं करोति कर्दमेन लिम्पति कण्टकच्छायया चाच्छादयति, तेन च भाजनेन शीतलपानीयं न लाति, अवश्रावणेन कूरेण च भाव्यते, एवं द्वौ त्रीन् वा दिवसान्, संसक्तं च पानकमसंसक्तं चैको न धारयेत्, गन्धेन विशस्यते, संसक्तं च गृहीत्वा न हिण्ड्यते, विराधना भवेत्, संसक्तं गृहीत्वा न भुज्यते, यदि परिश्रान्तास्तर्हि ये न हिण्डन्ते ते लान्ति, ये

यं पाणा दिट्ठा ते मया होज्जा, एगेण पडिलेहियं बीएण ततिएणं, सुद्धं परिभुंजंति, एवं चेव महियस्सवि गालियदहियस्स नवणीयस्स य का विही ?, महीए एगा उट्ठी छुब्भइ, तत्थ तत्थ दीसंति, असइ महियस्स का विही ?, गोरसधोवणे, पच्छा उण्होदयं सियलाविज्जइ, पच्छा महुरे चाउलोदए, तेसु सुद्धं परिभुज्जइ, असुद्धे तहेव विवेगो दहियस्स, पच्छओ उयन्ता णियत्ते पडिलेहिज्जइ, तीराए सुत्तेसुवि एस विही, परोवि आभोयणाभोयाए ताणि दिज्जा ॥ तेइंदियाण गहणं सत्तुयपाणाण पुव्वभणिओ विही, तिलकीडयावि तहेव दहिए वा रत्ता तहेव छगणकिमिओवि तहेव संथारगो वा गहिओ घुणाइणा णाए तहेव तारिसए कट्ठे संकामिज्जइ, उद्देहियाहिं गहिए पोत्ते णत्थि तस्स विगिंचणया, ताहे तेसिंवि ओढाइ-ज्जइ, तत्थ अइंति लोए, छप्पइयाउ विसामिज्जंति सत्तदिवसे, कारणगमणं ताहे सीयलए निव्वायाए, एवमाईणं तहेव आगरे निव्वाघाए विवेगो, कीडियाहिं संसत्ते पाणए जइ जीवंति खिप्पं गलिज्जइ, अहे पडिया लेवाडेणेव हत्थेण उद्धरेयव्वा,

---

१ च प्राणिनो दृष्टास्ते मृता भवेयुः, एकेन प्रतिलेखितं द्वितीयेन तृतीयेन, शुद्धं परिभुञ्जन्ति, एवमेव गोरसस्यापि गालितस्य दध्नो नवनीतस्य च को-विधिः ?, तक्रस्यैकाऽष्टा क्षिप्यते तत्र तत्र दृश्यन्ते, असति तक्रे को विधिः ?, गोरसधावनं, पश्चादुष्णोदकं शीतलीयते पश्चात् मधुरं तन्दुलोदकं, तेषु शुद्धं परिभुज्यते, अशुद्धे तथैव विवेको दध्नः, पश्चात् गच्छन्त आगच्छन्तः प्रतिलेखयन्ति. ( उदकादेः ) तीरादिषु सुप्तेष्वपि एष विधिः, परोऽप्याभोगानाभोगाभ्यां तानि दद्यात् ॥ त्रीन्द्रियाणां ग्रहणं सक्तुप्राणिनां पूर्वभणितो विधिः तिलकीटका अपि तथैव दध्नि वा रक्ताः तथैव गोमयकृमयोऽपि तथैव संस्तारको वा गृहीतो घुणादिभिः ज्ञाते तथैव तादृशे काष्ठे संक्राम्यन्ते, उपदेहिकाभिर्गृहीते पोते नास्ति तस्य विवेकः, तदा तासामपि अवतारणं क्रियते, तथापयान्ति स्वस्थाने, षट्पदिका विश्राम्यन्ते सप्त दिवसान्, कारणे गमनं तदा शीतले निर्व्याघाते, एवमादीनां तथैवाकरे निर्व्याघाते विवेकः, कीटिकाभिः संसक्ते पानीये यदि जीवन्ति क्षिप्रं गाल्यते, अधःपतिता लेपकृतैव हस्तेनोद्धर्तव्याः,.

[1]अलेवडयं चेव पाणयं होइ, एवं मक्खियावि, संघाडएण पुण एगो भत्तं गेण्हइ मा चेव छुब्भइ, बीओ पाणयं, हत्थो अलेवाडओ चेव, जइवि कीडियाउ मइयाउ तहवि गलिज्जंति, इहरहा मेहं उवहणंति मच्छियाहिं वमी हवइ, जइ तंदुलोयगमाइसु पूयरओ ताहे पगासे भायणे छुहित्ता पोत्तेण दद्दरओ कीरइ, ताहे कोसएणं खोरएण वा उक्कड्डिज्जइ, थोवएण पाणएण समं विगिंचिज्जइ, आउक्कायं गमित्ता कट्ठेण गहाय उदयस्स ढोइज्जइ, ताहे अप्पणा चेव तत्थ पडइ, एवमाइ [,]तइंदियाणं, पूयलिया कीडियाहिं संसत्तिया होज्जा, सुक्कओ वा कूरो, ताहे झुसिरे विक्खिरिज्जइ, तहेव तत्थ ताओ पविसंति, मुहुत्तयं च रक्खिज्जइ जाव विप्पसरियाओ। चउरिंदियाणं आसमक्खिया अक्खिंमि अक्खरा उकड्डिज्जइत्ति घेप्पइ, परहत्थे भत्ते पाणए वा जइ मच्छिया तं अणेसणिज्जं, संजयहत्थे उद्धरिज्जइ, नेहे पडिया छारेण गुंडिज्जइ, कोत्थलगारिया वा वच्छत्थे पाए वा घरं करेज्जा सव्वविवेगो, असइ छिंदित्ता, अह अन्नंमि य घरए संकामिज्जंति, संथारए मंकुणाणं

---

१ अलेपकृदेव पानीयं भवति, एवं मक्षिका अपि, संघाटकेन पुनरेको भक्तं गृह्णाति, मैव पप्तन्, द्वितीयः पानीयं, हस्तोऽलेपकृदेव, यद्यपि कीटिका मृतास्तथापि गाल्यन्ते, इतरथा मेधामुपहन्युः मक्षिकाभिर्वान्तिर्भवति, यदि तन्दुलोदकादिषु पूतरकास्तदा प्रकाशे भाजने क्षिप्त्वा पोतेनाच्छादनं क्रियते, ततः कोशेन क्षौरकेण वा निष्काश्यन्ते, स्तोकेन पानीयेन समं त्यज्यन्ते, अप्कायं प्रापय्य काष्ठेन गृहीत्वोदकाग्रे ध्रियन्ते, तदाऽऽत्मनैव तत्र पतन्ति, एवमादि त्रीन्द्रियाणां, पूपलिका कीटिकाभिः संसक्ता भवेत्, शुष्को वा कूरः, तदा झुषिरे विकीर्यंते, तथैव ताः प्रविशन्ति, मुहूर्त्तं च रक्ष्यन्ते यावद्विप्रसृताः ॥ चतुरिन्द्रियाणां अश्वमक्षिका अक्षण. पुष्पिकां निष्काशयन्ति इति गृह्यन्ते, परहस्ते भक्ते पानीये वा यदि मक्षिकास्तदनेषणीयं, संयतहस्ते उद्ध्रियन्ते, स्नेहे पतिताः क्षारेणावगुण्ड्यन्ते २थलकारिका वा वस्त्रे पात्रे वा गृहं कुर्यात् सर्वविवेकः, असति छित्वा, अथान्यस्मिन् गृहे वा संक्राम्यन्ते, संस्तारके मत्कुणानां

पुंव्वगहिए तहेव घेप्पमाणे पायपुंछणे वा, जइ तिन्नि वेलाउ पडिलेहिज्जंतो दिवसे २ संसज्जइ ताहे तारिसएहिं चेव कट्ठेहिं संकामिज्जंति, दंडए एवं चेव, भमरस्सवि तहेव विवेगो, सअंडए सकट्ठो विवेगो, पूतरयस्स पुव्वभणिओ विवेगो, एवमाइ जहासंभवं विभासा कायव्वा । गता विकलेन्द्रियत्रसपारिस्थापनिका, अधुना पञ्चेन्द्रियत्रसपारिस्थापनिकां विवृण्वन्नाह—

पंचिंदिएहिं जा सा सा दुविहा होइ आणुपुव्वीए । मणुएहिं च सुविहिया, नायव्वा नोयमणुएहिं ॥ ८ ॥

व्याख्या—पञ्च स्पर्शादीनीन्द्रियाणि येषां ते पञ्चेन्द्रियाः—मनुष्यादयस्तैः करणभूतैस्तेषु वा सत्सु तद्विषयाऽसौ पारिस्थापनिका सा द्विविधा भवत्यानुपूर्व्या, मनुष्यैस्तु सुविहिता ! ज्ञातव्या, 'नोमनुष्यैश्च' तिर्यग्भिः, चशब्दस्य व्यवहितः सम्बन्ध इति गाथाक्षरार्थः, ॥ ८ ॥ भावार्थं तूपरिष्टाद्वक्ष्यामः ॥—

मणुएहिं खलु जा सा सा दुविहा होइ आणुपुव्वीए । संजयमणुएहिं तह नायव्वाऽसंजएहिं च ॥ ९ ॥

व्याख्या—मनुष्यैः खलुः याऽसौ सा द्विविधा भवति आनुपूर्व्या संयतमनुष्यैस्तथा ज्ञातव्याऽसंयतैश्चेति गाथार्थः ॥ ९ ॥ भावार्थं तूपरिष्टाद्वक्ष्यामः—

संजयमणुएहिं जा सा सा दुविहा होइ आणुपुव्वीए । सचित्तेहिं सुविहिया ! अचित्तेहिं च नायव्वा ॥ १० ॥

व्याख्या—'संयतमनुष्यैः' साधुभिः करणभूतैर्याऽसौ पारिस्थापनिका सा द्विविधा भवत्यानुपूर्व्या, सह चित्तेन वर्तन्त

---

१ पूर्वगृहीते तथैव गृह्यमाणे पादप्रोञ्छने वा यदि तिस्रो वाराः प्रतिलिख्यमानो दिवसे दिवसे संसृज्यते तदा तादृशैरेव काष्ठैः संक्राम्यन्ते, दण्डकेऽप्येवमेव, भ्रमरस्यापि विवेकस्तथैव विवेकः, साण्डे सकाष्ठस्य विवेकः, पूतरकस्य पूर्वभणितो विवेकः, एवमादि यथासंभवं विभाषा कर्त्तव्या ।

आहाकम्मे य तहा लोहविसे आभिओगिए गहिए । एएण होइ जाया वोच्छं से विहीएँ वोसिरणं ॥ ७३ ॥

व्याख्या—आधाकर्म–प्रतीतं तस्मिन्नाधाकर्मणि च तथा 'लोहविसे आभिओगिए गहिए'त्ति लोभाद्गृहीते 'विसे'त्ति विषकृते गृहीते 'आभिओगिए'त्ति वशीकरणाय मन्त्राभिसंस्कृते गृहीते सति कथञ्चिन्मक्षिकाव्यापत्तिचेतोऽन्यथात्वादिलिङ्गतश्च ज्ञाते सति 'एतेन' आधाकर्मादिना दोषेण भवति 'जाता' पारिस्थापनिका दोषात्परित्यागार्हाहारविषयेत्यर्थः, 'वोच्छं से विहीए वोसिरणं'ति वक्ष्येऽस्या विधिना–जिनोक्तेन व्युत्सर्जनं–परित्यागमित्यर्थः, ॥ ७३ ॥

एगंतमणावाए अच्चित्ते थंडिल्ले गुरुवइट्ठे । छारेण अक्कमित्ता तिट्ठाणं सावणं कुज्जा ॥ ७४ ॥

व्याख्या—एकान्ते 'अनापाते' स्त्र्याद्यापातरहिते 'अचेतने' चेतनाविकले 'स्थाण्डिल्ये' भूभागे 'गुरूपदिष्टे' गुरुणा व्याख्याते, अनेनाविधिज्ञेन परिस्थापनं न कार्यमिति दर्शयति, 'छारेण अक्कमित्ता' भस्मना सम्मिश्र्य 'तिट्ठाणं सावणं कुज्ज'त्ति सामान्येन तिस्रो वाराः श्रावणं कुर्यात्–अमुकदोषदुष्टमिदं व्युत्सृजामि एवं, विशेषतस्तु विषकृताभियोगिकादेरेवापकारकस्यैष विधिः, न त्वाधाकर्मादेः, तद्गतं प्रसङ्गेनेहैव भणिष्याम इति गाथार्थः ॥ ७४ ॥ अजातपारिस्थापनिकीं प्रतिपादयन्नाह—

आयरिए य गिलाणे पाहुणए दुल्लहे सहसलाहे । एसा खलु अजाया वोच्छं से विहीएँ वोसिरणं ॥ ७५ ॥

व्याख्या—आचार्ये सत्यधिकं गृहीतं किञ्चिद्, एवं ग्लाने प्राघूर्णके दुर्लभे वा विशिष्टद्रव्ये सति सहसलाभे–विशिष्टस्य कथञ्चिल्लाभे सति अतिरिक्तग्रहणसम्भवः, तस्य च या पारिस्थापनिका एषा खलु 'अजाता' अदुष्टाधिकाहारपरित्यागविषयेत्यर्थः, 'वोच्छं से विहीएँ वोसिरणं' प्राग्वदिति गाथार्थः ॥ ७५ ॥

एगंतमणावाए अचित्ते थंडिले गुरुवइट्ठे । आलोए तिण्णि पुंजे तिट्ठाणं सावणं कुज्जा ॥ ७६ ॥

व्याख्या—पूर्वार्द्धं प्राग्वत् 'आलोए'त्ति प्रकाशे त्रीन् पुञ्जान् कुर्यात्, अत एव मूलगुणदुष्टे त्वेकमुत्तरगुणदुष्टे तु द्वाविति प्रसङ्गः, तथा 'तिट्ठाणं सावणं कुज्ज'त्ति पूर्ववदयं गाथार्थः ॥ ७६ ॥ गताऽऽहारपारिस्थापनिका, अधुना नोआहारपारिस्थापनिकां प्रतिपादयति—

णोआहारंमी जा सा सा दुविहा होइ आणुपुव्वीए । उवगरणंमि सुविहिया ! नायव्वा नोयउवगरणे ॥ ७७ ॥

निगदसिद्धा, नवरं नोउपकरणं श्लेष्मादि गृह्यते,—

उवगरणंमि उ जा सा सा दुविहा होइ आणुपुव्वीए । जाया चेव सुविहिया ! नायव्वा तह अजाया य ॥ ७८ ॥

निगदसिद्धैव, नवरमुपकरणं वस्त्रादि,—

जाया य वत्थपाए वंका पाए य चीवरं कुज्जा । अज्जायवत्थपाए वोच्चत्थे तुच्छपाए य ॥ १ ॥ ( प्र० ) ॥

व्याख्या—जाता च वस्त्रे पात्रे च वक्तव्या, चोदनाभिप्रायस्तावद्वस्त्रे मूलगुणादिदुष्टे वङ्कानि पात्रे च चीवरं कुर्यात्, अजाता च वक्तव्या—वस्त्रे पात्रे च 'वोच्चत्थे तुच्छपाए य' चोदनाभिप्रायो वस्त्रं विपर्यस्तं—ऋजु स्थाप्यते पात्रं च ऋजु स्थाप्यत इति, सिद्धान्तं तु वक्ष्यामः, एष तावद् गाथार्थः ॥ इयं चान्यकर्तृकी गाथा ।—

दुविहा जायमजाया अभिओगविसे य सुद्धऽसुद्धा य । एगं च दोण्णि तिण्णि य मूलुत्तरसुद्धजाणट्ठा ॥ ७९ ॥

व्याख्या—द्विविधा जाताअजातापारिस्थापनिका—आभिओगिकी विषे च अशुद्धा शुद्धा च, तत्र शुद्धा अजाता भवि-

ष्यति, अयं च प्राग्निर्दिष्टः सिद्धान्तः–'एगं च दोण्णि तिण्णि य मूलुत्तरसुद्धि जाणाहि' मूलगुणाऽसुद्धे एको ग्रन्थिः पात्रे च रेखा, उत्तरगुणासुद्धे द्वौ, शुद्धे त्रय इति गाथार्थः ॥ अवयवार्थस्तु गाथाद्वयस्याप्ययं सामाचार्यभिज्ञैर्गीत इति–उवगरणे णोउवगरणे य, उवगरणे जाया अजाया य, जाया वत्थे पाए य, अजायावि वत्थे पत्ते य, जाया णाम वत्थपायं मूलगुणअसुद्धं उत्तरगुणअसुद्धं वा अभिओगेण वा विसेण वा, जइ विसेण आभिओगियं वा वत्थं पायं वा खंडाखंडिं काऊण विगिंचियव्वं, सावणा य तहेव, जाणि अइरित्ताणि वत्थपायाणि कालगए वा पडिभग्गे वा साहारणगहिए वा जाएज्ज एत्थ का विगिंचणविही ?, चोयओ भणइ–आभिओगविसाणं तहेव खंडाखंडिं काऊण विगिंचणं मूलगुणअसुद्धवत्थस्स एकं वंकं कीरइ, उत्तरगुणअसुद्धस्स दोण्णि वंकाणि, सुद्धं उज्जुयं विगिंचिज्जइ, पाए मूलगुणऽसुद्धे एगं चीरं दिज्जइ, उत्तरगुणअसुद्धे दोन्नि चीरखंडाणि पाए छुब्भंति, सुद्धं तुच्छं कीरइ–रित्तयंति भणियं होइ, आयरिया भणंति–एवं सुद्धंपि असुद्धं भवइ, कहं ?, उज्जुयं ठवियं, एगेण वंकेण मूलगुणअसुद्धं जायं, दोहिं उत्तरगुणअसुद्धं, एकवंकं दुवंकं वा होज्जा दुवंकं

---

१ उपकरणे नोउपकरणे च, उपकरणे जाता अजाता च, जाता वस्त्रे पात्रे च, अजाताऽपि वस्त्रे पात्रे च, जाता नाम वस्त्रपात्रं मूलगुणाशुद्धमुत्तरगुणाशुद्धं वा अभियोगेन वा विषेण वा, यदि विषेणाभियोगिकं वा वस्त्रं पात्रं वा खण्डशः कृत्वा परिष्ठापनीयं, रेखाश्च तथैव, यान्यतिरिक्तानि वस्त्रपात्राणि कालगते वा प्रतिभग्ने वा साधारणगृहीते वा याचेत, अत्र कः परिष्ठापनविधिः ?–चोदको भणति–आभियोगिकविषयोः तथैव खण्डशः कृत्वा विवेकः मूलगुणाशुद्धवस्त्रस्य एकं वक्रं क्रियते, उत्तरगुणाशुद्धस्य द्वे वक्रे, शुद्धमृजुकं त्यज्यते, पात्रे मूलगुणाशुद्धे एकं चीवरं दीयते, उत्तरगुणाशुद्धे द्वे चीवरखण्डे पात्रे क्षिप्येते, शुद्धं तुच्छं क्रियते–रिक्तमिति भणितं भवति, आचार्या भणन्ति–एवं शुद्धमप्यशुद्धं भवति, कथं ?, ऋजुकं स्थापितं, एकेन वक्रेण मूलगुणाशुद्धं जातं, द्वाभ्यामुत्तरगुणाशुद्धं, एकवक्रं द्विवक्रं वा भवेत् द्विवक्रं

एकवंकं वा होज्जा, एवं मूलगुणे उत्तरगुणो होज्जा उत्तरगुणे वा मूलगुणो होज्जा, एवं चेव पाएवि होज्जा, एगं चीवरं निग्गयं मूलगुणासुद्धं जायं, दोहिं विणिग्गएहिं सुद्धं जायं, जे य तेहिं वत्थपाएहिं परिभुंजिएहिं दोसा तेसिं आवत्ती भवइ, तम्हा जं भणियं ते तं न जुत्तं, तओ कहं दाउं विगिंचियव्वं ?, आयरिया भणंति—मूलगुणे असुद्धे वत्थे एगो गंठी कीरइ उत्तरगुणअसुद्धे दोण्णि सुद्धे तिण्णि एवं वत्थे, पाए मूलगुणअसुद्धे अंतो अड्डए एगसण्हिया रेहा कीरइ, उत्तरगुणअसुद्धे दोण्णि, सुद्धे तिण्णि रेहाओ, एवं णायं होइ, जाणएण कायव्वाणि, कहिं परिट्ठवेयव्वाणि ?—एगंतमणावाए सह पत्ताबंधरयत्ताणेण, असइ पडिलेहणियाए दोरेण मुहे बज्झइ, उद्धमुहाणि ठविज्जंति, असइ ठाणस्स पासल्लियं ठविज्जइ, जओ वा आगमो तओ पुप्फयं कीरइ, एयाए विहीए विगिंचिज्जइ, जइ कोइ आगारो पावइ तहावि वोसट्ठाऽहिगरणा

---

१ चैकवक्रं भवेत्, एवं मूलगुण उत्तरगुणो भवेत् उत्तरगुणे वा मूलगुणो भवेत्, एवमेव पात्रेऽपि भवेत्, एकं चीवरं निर्गतं मूलगुणाशुद्धं जातं, द्वयोर्विनिर्गतयोः शुद्धं जातं, ये च तेषु वस्त्रपात्रेषु परिभुज्यमानेषु दोषास्तेषामापत्तिर्भवति, तस्मात् यद् भणितं त्वया तन्न युक्तं, ततः कथं दत्त्वा (चिह्नं) विवेक्तव्यं?, आचार्या भणन्ति—मूलगुणाशुद्धे वस्त्रे एको ग्रन्थिः क्रियते उत्तरगुणाशुद्धे द्वौ शुद्धे त्रयः एवं वस्त्रे, पात्रे मूलगुणाशुद्धे अन्तस्तले एका श्लक्ष्णा रेखा क्रियते उत्तरगुणाशुद्धे द्वे शुद्धे तिस्रो रेखाः, एवं ज्ञातं भवति, ज्ञायकेन कर्त्तव्यानि, क्व परिष्ठापनीयानि ?, एकान्तेऽनापाते सह पात्रबन्धरजस्त्राणाभ्यां, असत्यां पात्रप्रतिलेखनिकाया दवरकेण मुखं बध्यते, ऊर्ध्वमुखानि स्थाप्यन्ते, असति स्थाने पार्श्ववर्त्ति स्थाप्यते, यतो वाऽऽगमनं ततः (तस्यां दिशि) पुष्पकं (पृष्ठं) क्रियते, एतेन विधिना त्यज्यते, यदि कश्चिदपवादः प्राप्नोति तथापि व्युत्सृष्टाः अधिकरणमाश्रित्य

सुद्धा साहुणो, जेहिं अण्णेहिं साहूहिं गहियाणि जइ कारणे गहियाणि ताणि य सुद्धा जावज्जीवाए परिभुंजंति, मूलगुण-उत्तरगुणेसु उप्पण्णे ते विगिंचइ, गतोपकरणपारिस्थापनिका, अधुना नोउपकरणपारिस्थापनिका प्रतिपाद्यते, आह च—

नोउवगरणे जा सा चउव्विहा होइ आणुपुव्वीए। उच्चारे पासवणे खेले सिंघाणए चेव ॥ ८० ॥

व्याख्या—निगदसिद्धैव, विधिं भणति—

उच्चारं कुव्वंतो छायं तसपाणरक्खणट्ठाए। कायदुयदिसाभिग्गहे य दो चेवऽभिगिण्हे ॥ ८१ ॥

पुढविं तसपाणसमुट्ठिएहिं एत्थं तु होइ चउभंगो। पढमपयं पसत्थं सेसाणि उ अप्पसत्थाणि ॥ ८२ ॥

इमीणं वक्खाणं—जस्स गहणी संसज्जइ तेण छायाए वोसिरियव्वं, केरिसियाए छायाए?—जोताव लोगस्स उवभोगरुक्खो तत्थ न वोसिरिज्जइ, निरुवभोगे वोसिरिज्जइ, तत्थवि जा सयाओ पमाणाओ निग्गया तत्थेव वोसिरिज्जइ, असइ पुण निग्गयाए तत्थेव वोसिरिज्जइ असति रुक्खाणं काएणं छाया कीरइ तेसु परिणएसु वच्चइ, काया दोण्णि—तसकाओ थावरकाओ य, जइ पडिलेहेइवि पमज्जइऽवि तो एगिंदियावि रक्खिया तसावि, अह पडिलेहेइ न पमज्जइ तो थावरा रक्खिया तसा परिच्चत्ता, अह न

---

१ शुद्धाः साधवः, यैरन्यैः साधुभिर्गृहीतानि यदि कारणे गृहीतानि तानि च शुद्धानि यावज्जीवं परिभुञ्जन्ति, मूलगुणोत्तरगुणेषु (शुद्धेषु) उत्पन्नेषु तानि विविच्यन्ते—अनयोर्व्याख्यानं—यस्य ग्रहणी संसज्यते तेन छायायां व्युत्स्रष्टव्यं, कीदृश्यां छायायां ?, यस्तावल्लोकस्योपभोगवृक्षस्तत्र न व्युत्सृज्यते, निरुपभोगे व्युत्सृज्यते, तत्रापि या स्वकीयात् प्रमाणात् निर्गता तत्रैव व्युत्सृज्यते, असत्यां पुनर्निर्गतायां तत्रैव व्युत्सृज्यते असत्सु वृक्षेषु कायेन छाया क्रियते तेषु परिणतेषु व्रज्यते, कायौ द्वौ—त्रसकायः स्थावरकायश्च, यदि प्रतिलेखयत्यपि प्रमार्जयत्यपि तदैकेन्द्रिया अपि रक्षितास्त्रसा अपि, अथ प्रतिलेखयति न प्रमार्जयति तदा स्थावरा रक्षिताः, त्रसाः परित्यक्ताः, अथ न

पडिलेहेइ पमज्जइ थावरा परिचत्ता तसा रक्खिया, इयरत्थ दोवि परिचत्ता, सुप्पडिलेहियसुप्पमज्जिएसुवि पढमं पयं पसत्थं, बिइयतइए एक्केकेण चउत्थं दोहिवि अप्पसत्थं, पढमं आयरियव्वं सेसा परिहरियव्वा, दिसाभिग्गहे—'उभे मूत्रपुरीषे च, दिवा कुर्यादुदङ्मुखः। रात्रौ दक्षिणतश्चैव, तस्य आयुर्न हीयते ॥ १ ॥' दो चेव एयाउ अभिगेण्हंति, डगलगहणे तहेव चउभंगो, सूरिये गामे एवमाइ विभासा कायव्वा जहासंभवं ॥ अधुना शिष्यानुशास्तिपरां परिसमाप्तिगाथामाह—

गुरुमूलेवि वसंता अनुकूला जे न होंति उ गुरूणं । एएसिं तु पयाणं दूरंदूरेण ते होंति ॥ ८३ ॥

व्याख्या—'गुरुमूले' गुर्वन्तिकेऽपि 'वसन्तः' निवसमानाः अनुकूला ये न भवन्त्येव गुरूणाम्, एतेषां 'पदानां' उक्तलक्षणानां, तुशब्दादन्येषां च दूरंदूरेण ते भवन्ति, अविनीतत्वात्तेषां श्रुतापरिणतेरिति गाथार्थः ॥ पारिस्थापनिकेयं समाप्तेति ॥

**पडिक्कमामि छहिं जीवनिकाएहिं—पुढविकाएणं आउकाएणं तेउकाएणं वाउकाएणं वणस्सइकाएणं तसकाएणं । पडिक्कमामि छहिं लेसाहिं—किण्हलेसाए नीललेसाए काउलेसाए तेउलेसाए पम्हलेसाए सुक्कलेसाए ॥ पडिक्कमामि सत्तहिं भयट्ठाणेहिं । अट्ठहिं मयट्ठाणेहिं । नवहिं बंभचेरगुत्तीहिं । दसविहे समणधम्मे । एक्कारसहिं उवासगपडिमाहिं । बारसहिं भिक्खुपडिमाहिं । तेरसहिं किरियाठाणेहिं**

१ प्रतिलेखयति प्रमार्जयति स्थावराः परित्यक्ताः त्रसा रक्षिताः, इतरत्र द्वयेऽपि परित्यक्ताः, सुप्रत्युपेक्षितसुप्रमार्जितयोरपि प्रथमं पदं प्रशस्तं, द्वितीयतृतीययोरेकैकेन चतुर्थं द्वाभ्यामपि अप्रशस्तं, प्रथममाचरितव्यं शेषाः परिहर्त्तव्याः, दिगभिग्रहे—द्वे एवैते अभिगृह्णीते, डगलकग्रहणे तथैव चतुर्भङ्गी, सूर्ये ग्रामे एवमादि विभाषा कर्त्तव्या यथासंभवं ।

प्रतिक्रमामि षड्भिर्जीवनिकायैः प्रतिषिद्धकरणादिना प्रकारेण हेतुभूतैर्यो मया दैवसिकोऽतिचारः कृतः, तद्यथा–पृथिवीकायेनेत्यादि । प्रतिक्रमामि षड्भिर्लेश्याभिः करणभूताभिर्यो मया दैवसिकोऽतिचारः कृतः, तद्यथा—कृष्णलेश्ययेत्यादि–'कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥' कृष्णादिद्रव्याणि तु सकलप्रकृतिनिष्यन्दभूतानि, आसां च स्वरूपं जम्बूखादकदृष्टान्तेन ग्रामघातकदृष्टान्तेन च प्रतिपाद्यते–'जह जंबुतरुवरेगो सुपक्कफलभरियनमियसालग्गो । दिट्ठो छहिं पुरिसेहिं ते बिंती जंबु भक्खेमो ॥ १ ॥ किह पुण ? ते बेंतेक्को आरुहमाणाण जीवसंदेहो । तो छिंदिऊण मूले पाडेमुं ताहे भक्खेमो ॥ २ ॥ बितिआह एद्दहेणं किं छिण्णेणं तरूण अम्हंति ? । साहा महल्ल छिंदह तइओ बेंती पसाहाओ ॥ ३ ॥ गोच्छे चउत्थओ उण पंचमओ बेति गेण्हह फलाइं । छट्ठो बेंती पडिया एएच्चिय खाह घेत्तुं जे ॥ ४ ॥ दिट्ठंतस्सोवणओ जो बेंति तरूवि छिन्न मूलाओ । सो वट्टइ किण्हाए सालमहल्ला उ नीलाए ॥ ५ ॥ हवइ पसाहा काऊ गोच्छा तेऊ फला य पम्हाए । पडियाए सुक्कलेसा अहवा अण्णं उदाहरणं ॥ ६ ॥

---

१ यथा जम्बूतरुवर एकः सुपक्कफलभारनम्रशालाग्रः । दृष्टः षड्भिः पुरुषैस्ते ब्रुवते जम्बूः भक्षयामः ॥ १ ॥ कथं पुनः ? तेषामेको ब्रवीति आरुहतां जीवसंदेहः । तद् व्युच्छिद्य मूलात् पातयामस्ततो भक्षयामः ॥ २ ॥ द्वितीय आह–एतावता तरुणा छिन्नेनास्माकं किम् ? । शाखां महतीं छिन्त्त तृतीयो ब्रवीति प्रशाखाम् ॥ ३ ॥ गुच्छान् चतुर्थः पुनः पञ्चमो ब्रवीति गृह्णीत फलानि । षष्ठो ब्रवीति पतितानि एतान्येव खादामो गृहीत्वा ॥ ४ ॥ दृष्टान्तस्योपनयो–यो ब्रवीति तरुमपि छिन्त्त मूलात् । स वर्त्तते कृष्णायां शाखां महतीं तु नीलायाम् ॥५॥ भवति प्रशाखां कापोती गुच्छान् तैजसी फलानि च पद्मायाम् । पतितानि शुक्लेश्या अथवाऽन्यदुदाहरणम् ॥ ६ ॥

चोरा गामवहत्थं विणिग्गया एगो बेंति घाएह । जं पेच्छह सव्वं दुपयं च चउप्पयं वावि ॥ ७ ॥ बिइओ माणुस पुरिसे य तइओ साउहे चउत्थे य । पंचमओ जुज्झंते छट्ठो पुण तत्थिमं भणइ ॥८॥ एक्कं ता हरह धणं बीयं मारेह मा कुणह एवं । केवल हरह धणंती उवसंहारो इमो तेसिं ॥ ९ ॥ सव्वे मारेहत्ती वट्टइ सो किण्हलेसपरिणामो । एवं कमेण सेसा जा चरमो सुक्कलेसाए ॥ १० ॥ आदिल्लतिण्णि एत्थं अपसत्था उवरिमा पसत्था उ । अपसत्थासुं वट्टिय न वट्टियं जं पसत्थासुं ॥ ११ ॥ एसऽइयारो एयासु होइ तस्स य पडिक्कमामित्ति । पडिकूलं वट्टामी जं भणियं पुणो न सेवेमि ॥ १२ ॥

प्रतिक्रमामि सप्तभिर्भयस्थानैः करणभूतैर्यो मया दैवसिकोऽतिचारः कृत इति, तत्र भयं मोहनीयप्रकृतिसमुत्थ आत्मपरिणामस्तस्य स्थानानि–आश्रया भयस्थानानि–इहलोकादीनि, तथा चाह सङ्ग्रहणिकारः—

इहपरलोयादाणमकम्हाआजीवमरणमसिलोए' त्ति

अस्य गाथाशकलस्य व्याख्या—'इहपरलोअ' त्ति इहलोकभयं परलोकभयं, तत्र मनुष्यादिसजातीयादन्यस्मान्मनु-

---

१ चौरा ग्रामवधार्थं विनिर्गता एको ब्रवीति घातयत । यं पश्यत तं सर्वं द्विपदं च चतुष्पदं वापि ॥ ७ ॥ द्वितीयो मनुष्यान् पुरुषांश्च तृतीयः सायुधान् चतुर्थश्च । पञ्चमो युध्यमानान् षष्ठः पुनस्तत्रेदं भणति ॥ ८॥ एकं तावद्धरत धनं द्वितीयं मारयत मा कुरुतैवम् । केवलं हरत धनं उपसंहारोऽयं तस्य ॥ ९ ॥ सर्वान् मारयतेति वर्त्तते स कृष्णलेश्यापरिणामः । एवं क्रमेण शेषाः यावच्चरमः शुक्ललेश्यायाम् ॥ १० ॥ आद्यास्तिस्रोऽप्रशस्ता उपरितनाः प्रशस्तास्तु । अप्रशस्तासु वृत्तं न वृत्तं प्रशस्तासु यत् ॥ ११ ॥ एषोऽतिचार एतासु भवति तस्माच्च प्रतिक्राम्यामि । प्रतिकूलं वर्त्ते यद्भणितं पुनर्न सेवे ॥ १२ ॥

ष्यादेरेव सकाशात् भयमिहलोकभयं, विजातीयात्तु तिर्यग्देवादेः सकाशाद्भयं परलोकभयम्, आदीयत इत्यादानं–धनं तदर्थं चौरादिभ्यो यद्भयं तदादानभयम्, अकस्मादेव–बाह्यनिमित्तानपेक्षं गृहादिष्वेवावस्थितस्य रात्र्यादौ भयम् अकस्माद्भयं, 'आजीवे' ति आजीविकाभयं निर्धनः कथं दुर्भिक्षादावात्मानं धारयिष्यामीत्याजीविकाभयं, मरणाद्भयं मरणभयं प्रतीतमेव, 'असिलोगो'त्ति अश्लाघाभयम्–अयशोभयमित्यर्थः, एवं क्रियमाणे महदयशो भवतीति तद्भयान्न प्रवर्तत इति गाथाशकलाक्षरार्थः ॥ मदः–मान [ग्रन्थाग्रं० १६५००] स्तस्य स्थानानि–पर्याया भेदा मदस्थानानि, इह च प्रतिक्रमामीति वर्तते, अष्टभिर्मदस्थानैः करणभूतैर्यो मया दैवसिकोऽतिचारः कृत इति, एवमन्येष्वपि सूत्रेष्वायोज्यं, कानि पुनरष्टौ मदस्थानानि ?, अत आह सङ्ग्रहणिकारः–

जाईकुलबलरूवे तवईसरिए सुए लाहे ॥ १ ॥

अस्य व्याख्या–कश्चिन्नरेन्द्रादिः प्रव्रजितो जातिमदं करोति, एवं कुलबलरूपतपऐश्वर्यश्रुतलाभेष्वपि योज्यमिति ॥ नवभिर्ब्रह्मचर्यगुप्तिभिः, शेषं पूर्ववत्, ताश्चेमाः—

वसहिकहनिसिज्जिंदियकुड्डंतरपुव्वकीलियपणीए । अइमायाहारविभूसणा य नव बंभगुत्तीओ ॥ १ ॥

व्याख्या—ब्रह्मचारिणा तद्गुप्त्यनुपालनपरेण न स्त्रीपशुपण्डकसंसक्ता वसतिरासेवनीया, न स्त्रीणामेकाकिनां कथा कथनीया, न स्त्रीणां निषद्या सेवनीया, उत्थितानां तदासने नोपवेष्टव्यं, न स्त्रीणामिन्द्रियाण्यवलोकनीयानि, न स्त्रीणां कुड्यान्तरितानां मोहनसंसक्तानां क्वणितध्वनिराकर्णयितव्यः, न पूर्वक्रीडितानुस्मरणं कर्तव्यं, न प्रणीतं भोक्तव्यं,

स्निग्धमित्यर्थः, नातिमात्राहारोपभोगः कार्यः, न विभूषा कार्या, एता नव ब्रह्मचर्यगुप्तय इति गाथार्थः ॥ 'श्रमणः'—प्राग्निरूपितशब्दार्थस्तस्य धर्मः—क्षान्त्यादिलक्षणस्तस्मिन् दशविधे—दशप्रकारे श्रमणधर्मे सति तद्विषये वा प्रतिषिद्धकरणादिना यो मयाऽतिचारः कृत इति भावना । दशविधधर्मस्वरूपप्रतिपादनायाह सङ्ग्रहणिकारः—

खंती य मद्दवज्जव मुत्ती तव संजमे य बोद्धव्वे । सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥ १ ॥

क्षान्तिः श्रमणधर्मः, क्रोधविवेक इत्यर्थः, चशब्दस्य व्यवहितः सम्बन्धः, मृदोर्भावः मार्दवं मानपरित्यागेन वर्तनमित्यर्थः, तथा ऋजुभाव आर्जवं—मायापरित्यागः, मोचनं मुक्तिः, लोभपरित्याग इति भावना, तपो द्वादशविधमनशनादि, संयमश्चाश्रवविरतिलक्षणः 'बोद्धव्यः' विज्ञेयः श्रमणधर्मतया, सत्यं प्रतीतं, शौचं संयमं प्रति निरुपलेपता, आकिञ्चन्यं च, कनकादिरहिततेत्यर्थः, ब्रह्मचर्यं च, एष यतिधर्मः, अयं गाथाक्षरार्थः ॥ अन्ये त्वेवं वदन्ति—खंती मुत्ती अज्जव मद्दव तह लाघवे तवे चेव । संयम चियागऽकिंचण बोद्धव्वे बंभचेरे य ॥ १ ॥ तत्र लाघवम्—अप्रतिबद्धता, त्यागः—संयतेभ्यो वस्त्रादिदानं, शेषं प्राग्वत्, गुप्त्यादीनां चाऽऽद्यदण्डकोक्तानामपीहोपन्यासोऽन्यविशेषाभिधानाददुष्ट इति ॥ एकादशभिरुपासकप्रतिमाभिः करणभूताभिर्योऽतिचार इति, उपासकाः—श्रावकास्तेषां प्रतिमाः—प्रतिज्ञा दर्शनादिगुणयुक्ताः कार्या इत्यर्थः, उपासकप्रतिमाः, ताश्चैता एकादशेति—

दंसणवयसामाइय पोसहपडिमा अबंभ सच्चित्ते । आरंभपेसउद्दिट्ठ वज्जए समणभूए य ॥ १ ॥

व्याख्या—दर्शनप्रतिमा, एवं व्रतसामायिकपौषधप्रतिमा अब्रह्मसचित्तआरम्भप्रेष्यउद्दिष्टवर्जकः श्रमणभूतश्चेति, अयमासां भावार्थः—[१]सम्मद्दंसणसंकाइसल्लपामुक्कसंजुओ जो उ । सेसगुणविप्पमुक्को एसा खलु होंति पडिमा उ ॥ १ ॥ बिइया पुण वयधारी सामाइयकडो य तइयया होइ । होइ चउत्थी चउद्दसि अट्ठमिमाईसु दियहेसु ॥ २ ॥ पोसह चउ-विहंपी पडिपुण्णं सम्म जो उ अणुपाले । पंचमि पोसहकाले पडिमं कुणएगराईयं ॥ ३ ॥ असिणाणवियडभोई पगा-सभोइत्ति जं भणिय होइ । दिवसओं न रत्ति भुंजे मउलिकडो कच्छ णवि रोहे ॥ ४ ॥ दिय बंभयारि राई परिमाणकडे अपोसहीएसुं । पोसहिए रत्तिंमि य नियमेणं बंभयारी य ॥ ५ ॥ इय जाव पंच मासा विहरइ हु पंचमा भवे पडिमा । छट्ठीए बंभयारी ता विहरे जाव छम्मासा ॥ ६ ॥ सत्तम सत्त उ मासे णवि आहारे सचित्तमाहारं । जं जं हेट्ठिल्लाणं तं तो परिमाण सव्वंपि ॥ ७ ॥ आरंभसयंकरणं अट्ठमिया अट्ठमास वज्जेइ । नवमा णव मासे पुण पेसारंभे विवज्जेइ ॥ ८ ॥

---

१ शङ्कादिदोषशल्यप्रमुक्तसम्यक्त्वसंयुतो यस्तु । शेषगुणविप्रमुक्त एषा खलु भवति प्रतिमा ॥ १ ॥ द्वितीया पुनर्व्रतधारी कृतसामायिकश्च तृतीया भवति । भवति चतुर्थी चतुर्दश्यष्टम्यादिषु दिवसेषु ॥ २ ॥ पोषधं चतुर्विधमपि प्रतिपूर्णं सम्यग् यस्तु अनुपालयति । पञ्चमी पोषधकाले प्रतिमां करोत्येकरात्रिकीम् ॥ ३ ॥ अस्नानो दिवसभोजी प्रकाशभोजीति यद्भणितं भवति । दिवसे न रात्रौ भुङ्क्ते कृतमुकुलः कच्छं नैव बध्नाति ॥ ४ ॥ दिवा ब्रह्मचारी रात्रौ कृतपरिमाणोऽपोषधिकेषु । पोषधिको रात्रौ च नियमेन ब्रह्मचारी च ॥ ५ ॥ इति यावत् पञ्च मासान् विहरति पञ्चमी भवेत् प्रतिमा । षष्ठ्यां ब्रह्मचारी तावत् विहरेत् यावत् षण्मासाः ॥ ६ ॥ सप्तमी सप्तैव मासान् नैवाहारयेत् सचित्तमाहारम् । यद्यदधस्तनीनां तत्तदुपरितनासु सर्वमपि ॥ ७ ॥ आरम्भस्य स्वयंकरणं अष्टम्यां अष्ट मासान् वर्जयति । नवमी नव मासान् पुनः प्रेषारम्भान् विवर्जयति ॥ ८ ॥

दसमा पुण दस मासे उद्दिट्ठकयंपि भत्त नवि भुंजे । सो होई छुरमुंडो छिहलिं वा धारए जाहिं ॥ ९ ॥ जं निहियमत्थजायं पुच्छंति नियाण नवरि सो आह । जइ जाणे तो साहे अह नवि तो बेंति नवि जाणे ॥ १० ॥ खुरमुंडो लोओ वा रयहरण पडिग्गहं च गेण्हित्ता । समणब्भूओ विहरे णवरिं सण्णायगा उवरिं ॥ ११ ॥ ममिकारअवोच्छिन्ने वच्चइ सण्णायपल्लि दट्ठुं जे । तत्थवि साहुव्व जहा गिण्हइ फासुं तु आहारं ॥ १२ ॥ एसा एक्कारसमा इक्कारसमासियासु एयासु । पण्णवणवितहअसद्दहाणभावाउ अइयारो ॥ १३ ॥

द्वादशभिर्भिक्षुप्रतिमाभिः प्रतिषिद्धकरणादिना प्रकारेण योऽतिचारः कृत इति, क्रिया प्राग्वत्, तत्रोद्गमोत्पादनैषणादिशुद्धभिक्षाशिनो भिक्षवः—साधवस्तेषां प्रतिमाः—प्रतिज्ञा भिक्षुप्रतिमाः, ताश्चेमा द्वादश—

मासाई सत्तंता पढमाबितिसत्त ( सत्त ) राइदिणा । अहराई एगराई भिक्खूपडिमाण बारसगं ॥ १ ॥

मासाद्याः सप्तान्ताः 'प्रथमाद्वित्रिसप्त ( सप्त ) रात्रिदिवा' प्रथमा सप्तरात्रिकी, द्वितीया सप्तरात्रिकी, तृतीया

---

१ दशमी पुनर्दश मासान् उद्दिष्टकृतमपि भक्तं नैव भुङ्क्ते । स भवति क्षुरमुण्डः शिखां वा धारयति यस्याम् ॥ ९ ॥ यन्निहितमर्थजातं पृच्छतां निजानां परं स ब्रवीति । यदि जानाति तदा कथयति अथ नैव ब्रवीति नैव जाने ॥ १० ॥ क्षुरमुण्डो लोचो वा रजोहरणं पतद्ग्रहं च गृहीत्वा । श्रमणभूतो विहरति नवरं सज्ञातीयानामुपरि ॥ ११ ॥ ममीकारेऽव्युच्छिन्ने व्रजति सज्ञातीयपल्लीं द्रष्टुम् । तत्रापि साधुवत् यथा गृह्णाति प्रासुकं त्वाहारम् ॥ १२ ॥ एषैकादशी एकादशमासिकी एतासु । वितथप्रज्ञापनाऽश्रद्धानभावात्त्वतिचारः ॥ १३ ॥ मासाद्याः सप्तान्ताः प्रथमा द्वितीया तृतीया सप्तरात्रिन्दिवमाना । अहोरात्रिकी एकरात्रिकी भिक्षुप्रतिमानां द्वादशकम् ॥ १ ॥

सप्तरात्रिकी, अहोरात्रिकी, एकरात्रिकी, इदं भिक्षुप्रतिमानां द्वादशकमिति । अयमासां भावार्थः–पंडिवज्जइ संपुण्णो संघयणधिइजुओ महासत्तो । पडिमाउ जिणमयंमी संमं गुरुणा अणुण्णाओ ॥ १ ॥ गच्छेच्चिय निम्माओ जा पुव्वा दस भवे असंपुण्णा । नवमस्स तइयवत्थुं होइ जहण्णो सुयाभिगमो ॥ २ ॥ वोसठ्ठचत्तदेहो उवसग्गसहो जहेव जिणकप्पी । एसण अभिग्गहीया भत्तं च अलेवयं तस्स ॥ ३ ॥ गच्छा विणिक्खमित्ता पडिवज्जे मासियं महापडिमं । दत्तेगभोयणस्सा पाणस्सवि एग जा मासं ॥ ४ ॥ पच्छा गच्छमईए एव दुमासि तिमासि जा सत्त । नवरं दत्तीवुड्ढी जा सत्त उ सत्तमासीए ॥ ५ ॥ तत्तो य अट्ठमीया हवइ हू पढमसत्तराइंदी । तीय चउत्थचउत्थेणऽपाणएणं अह विसेसो ॥ ६ ॥ तथा चाऽऽगमः–"पढमसत्तराइंदियाणं भिक्खूपडिमं पडिवन्नस्स अणगारस्स कप्पइ से चउत्थेणं भत्तेणं अपाणएणं वहिया गामस्स वे"त्यादि, उत्ताणगपासल्लीणसज्जीवात्रि ठाणे ठाइत्ता । सहउवसग्गे घोरे दिवाई तत्थ अविकंपो ॥ ७ ॥

---

१ प्रतिपद्यते एताः संपूर्णः संहननधृतियुतो महासत्त्वः । प्रतिमा जिनमते सम्यक् गुरुणाऽनुज्ञातः ॥ १ ॥ गच्छे एव निष्णातो यावत् पूर्वाणि दश भवेयुरसंपूर्णानि । नवमस्य तृतीयं वस्तु भवति जघन्यः श्रुताधिगमः ॥ २ ॥ व्युत्सृष्टत्यक्तदेहः उपसर्गसहो यथैते जिनकल्पी । एषणा अभिगृहीता भक्तं चालेपकृत्तस्य ॥ ३ ॥ गच्छाद्विनिष्क्रम्य प्रतिपद्यते मासिकीं महाप्रतिमाम् । दत्तिरेका भोजनस्य पानस्याप्येका यावन्मासः ॥ ४ ॥ पश्चाद् गच्छमायाति एवं द्विमासिकी त्रिमासिकी यावत् सप्तमासिकी । नवरं दत्तिवृद्धिः यावत् सप्तैव सप्तमास्याम् ॥ ५ ॥ ततश्चाष्टमी भवति प्रथमसप्तरात्रिन्दिवा । तस्यां चतुर्थचतुर्थेनापानकेनासौ विशेषः ॥ ६ ॥ प्रथमां सप्तरात्रिन्दिवां भिक्षुप्रतिमां प्रतिपन्नस्यानगारस्य कल्पतेऽथ चतुर्थेन भक्तेनापानकेन बहिर्ग्रामस्य वेत्यादि, उत्तानः पार्श्वतो नैषधिको वाऽपि स्थानं स्थित्वा । सहते उपसर्गान् घोरान् दिव्यादीन् तत्राविकम्पः ॥ ७ ॥

दोच्चावि एरिसच्चिय बहिया गामाइयाण णवरं तु । उक्कुडलगंडसाई डंडाइतिउव्व ठाइत्ता ॥ ८ ॥ तच्चाएवि एवं णवरं ठाणं तु तस्स गोदोही । वीरासणमहवावी ठाइज्ज व अंबखुज्जो वा ॥ ९ ॥ एमेव अहोराई छट्ठं भत्तं अपाणयं णवरं । गामणयराण बहिया वग्घारियपाणिए ठाणं ॥ १० ॥ एमेव एगराई अट्ठमभत्तेण ठाण बाहिरओ । ईसीपब्भारगए अणिमिसनयणेगदिट्ठीए ॥ ३ ॥ साहट्टु दोवि पाए वग्घारियपाणि ठायई ठाणं । वाघारि लंबियभुओ सेस दसासुं जहा भणियं ॥४॥

त्रयोदशभिः क्रियास्थानैः प्रतिषिद्धकरणादिना प्रकारेण हेतुभूतैर्योऽतिचारः कृत इति, क्रिया पूर्ववत्, करणं क्रिया, कर्मबन्धनिबन्धना चेष्टेत्यर्थः, तस्याः स्थानानि—भेदाः पर्याया अर्थायानर्थायेत्यादयः क्रियास्थानानि, तानि पुनस्त्रयोदश भवन्तीति, आह च सङ्ग्रहणिकारः—

अट्ठाणट्ठा हिंसाऽकम्हा दिट्ठी य मोसऽदिण्णे य । अज्झत्थमाणमेत्ते[१०] मायालोहे[११] रियावहिया ॥ १ ॥

व्याख्या—अर्थाय क्रिया, अनर्थाय क्रिया, हिंसायै क्रिया, अकस्मात् क्रिया, 'दिट्ठिय' त्ति दृष्टिविपर्यासक्रिया च सूचनात्सूत्रमितिकृत्वा, मृषाक्रियाऽदत्तादानक्रिया च, अध्यात्मक्रिया, मानक्रिया, मित्रदोषक्रिया, मायाक्रिया, लोभक्रिया

---

१ द्वितीयाऽपीदृश्येव बहिर्ग्रामादीनां परं तु । उत्कुटुकासनो वक्रकाष्ठशायी वा दण्डायतिको वा स्थित्वा ॥ ८ ॥ तृतीयस्यामप्येवं परं स्थानं तु तस्य गोदोहिका । वीरासनमथवाऽपि तिष्ठेद्वाऽऽम्रकुब्जो वा ॥ ९ ॥ एवमेवाहोरात्रिकी षष्ठं भक्तमपानकं परम् । ग्रामनगरयोर्बहिस्तात् प्रलम्बभुजस्तिष्ठति स्थानम् ॥ १० ॥ एवमेवैकरात्रिकी अष्टमभक्तेन स्थानं बहिः । ईषत्प्राग्भारगतोऽनिमिषनयन एकदृष्टिकः ॥ ११ ॥ संहृत्य द्वावपि पादौ प्रलम्बितभुजस्तिष्ठति स्थानम् । 'वाघारि' लम्बितभुजः शेषं दशासु यथा भणितम् ॥ १२ ॥

ईर्यापथक्रिया, अयमासां भावार्थः—तसथावरभूएहिं जो दंडं निसिरई हु कज्जंमि । आय परस्स व अट्ठा अट्ठादंडं तयं वेंति ॥ १ ॥ जो पुण सरडाईयं थावरकायं च वणलयाईयं । मारेत्तुं छिंदिऊण व छड्डे एसो अणट्ठाए ॥ २ ॥ अहिमाइ वेरियस्स व हिंसिंसु हिंसइव हिंसिहिई । जो दंडं आरभइ हिंसादंडो भवे एसो ॥ ३ ॥ अन्नट्ठाए निसिरइ कंडाइ अन्न-माहणे जो उ । जो व नियंतो सस्सं छिंदिज्जा सालिमाई य ॥ ४ ॥ एस अकम्हादंडो दिट्ठिविवज्जासओ इमो होइ । जो मित्तममित्तंती काउं घाएइ अहवावि ॥ ५ ॥ गामाईघाएसु व अतेण तेणंति वावि घाएज्जा । दिट्ठिविवज्जासे सो किरि-याठाणं तु पंचमयं ॥ ६ ॥ आयट्ठा णायगाइण वावि अट्ठाए जो मुसं वयइ । सो मोसपच्चईओ दंडो छट्ठो हवइ एसो ॥ ७ ॥ एमेव आयणायगअट्ठा जो गेण्हइ अदिन्नं तु । एसो अदिन्नवत्ती अज्झत्थीओ इमो होइ ॥ ८ ॥ नवि कोवि किंचि भणई तहविहु हियएण दुम्मणो किंपि । तस्सऽज्झत्थी संसइ चउरो ठाणा इमे तस्स ॥ ९ ॥ कोहो माणो माया

---

१ त्रसस्थावरभूतेषु यो निसृजति कार्ये । आत्मनः परस्य वाऽर्थाय अर्थदण्डं तं ब्रुवते ॥ १ ॥ यः पुनः सरटादिकं स्थावरकायं च वनलतादिकम् । मारयित्वा छित्वा वा त्यजति एषोऽनर्थाय ॥ २ ॥ अह्यादेर्वैरिणो वा अहिंसीत् हिनस्ति वा हिंसिष्यति । यो दण्डमारभते हिंसादण्डो भवेदेषः ॥ ३ ॥ अन्यार्थाय निसृजति कण्डादि अन्यमाहन्ति यस्तु । यो वा गच्छन् शस्यं छिन्द्यात् शाल्यादींश्च ॥ ४ ॥ एषोऽकस्माद्दण्डो दृष्टिविपर्यासतोऽयं भवति । यो मित्रममित्रमितिकृत्वा घातयत्यथवाऽपि ॥ ५ ॥ ग्रामादिघातेषु वा अस्तेनं स्तेनमिति वाऽपि घातयेत् । दृष्टिविपर्यासात् स क्रियास्थानं तु पञ्चमम् ॥ ६ ॥ आत्मार्थं ज्ञातीयादीनां वाऽप्यर्थाय यो मृषा वदति । स मृषाप्रत्ययिको दण्डो भवत्येषः षष्ठः ॥ ७ ॥ एवमेवात्मज्ञातीयार्थं यो गृह्णात्यदत्तं तु । एषोऽदत्तप्रत्ययोऽध्यात्मस्थोऽयं भवति ॥ ८ ॥ नैव कोऽपि किञ्चिद्भणति तथापि हृदये दुर्मना किमपि । तस्याध्यात्मस्थः शंसति चत्वारि स्थानानीमानि तस्य ॥ ९ ॥ क्रोधो मानो माय-

कोहो अज्झत्थकिरिय पवेसो । जो पुण जाइमयाई अट्ठविहेणं तु माणेणं ॥ १० ॥ मत्तो हीलेइ परं खिंसइ परिभवइ माणवत्तेसा । मायपिइनायगाईण जो पुण अप्पोवि अवराहे ॥ ११ ॥ तिव्वं दंडं करेइ डहणंकणबंधतालणाईयं । तं मित्त-दोसवत्ती किरियाठाणं हवइ दसमं ॥ १२ ॥ एक्कारसमं माया अण्णं हिययंमि अण्ण वायाए । अण्णं आयरई या स क-म्मुणा गूढसामत्थो ॥ १३ ॥ मायावत्ती एसा तत्तो पुण लोहवत्तिया इणमो । सावज्जारंभपरिग्गहेसु सत्तो महंतेसु ॥१४॥ तह इत्थी कामेसुं गिद्धो अप्पाणयं च रक्खंतो । अण्णेसिं सत्ताणं वहबंधणमारणं कुणइ ॥ १५ ॥ एसो उ लोहवित्ती इरियावहियं अओ पवक्खामि । इह खलु अणगारस्सा समिईगुत्तीसुगुत्तस्स ॥ १६ ॥ सययं तु अप्पमत्तस्स भगवओ जाव चक्खुपम्हंपि । निवयइ ता सुहुमा चिट्ठ इरियावहिया किरिय एसा ॥ १७ ॥

चोद्दसहिं भूयगामेहिं पन्नरसहिं परमाहम्मिएहिं सोलसहिं गाहासोलसएहिं सत्तरसविहे संजमे अट्ठारस-विहे अबंभे एगूणवीसाए णायज्झयणेहिं वीसाए असमाहिठाणेहिं ॥

१ क्रोधोऽध्यात्मक्रिया पूर्वेषः । यः पुनर्जात्यादिभिरष्टविधेन तु मानेन ॥ १० ॥ मत्तो हीलयति परं निन्दति परिभवति मानप्रत्ययिकी एषा । माता-पित्रादीनामल्पेऽपि यः पुनरपराधे ॥ ११ ॥ तीव्रं करोति दण्डं दहनाङ्कनबन्धताडनादिकम् । तद् मित्रद्वेषप्रत्ययिकं क्रियास्थानं भवति दशमम् ॥ १२ ॥ एकादशमं माया अन्यद् हृदये अन्यद् वाचि । अन्यदाचरति स कर्मणा गूढसामर्थ्यः ॥ १३ ॥ मायाप्रत्ययिकैषा ततः पुनर्लोभप्रत्ययिकैषा । सावद्यारम्भपरि-ग्रहेषु सक्तो महत्सु ॥ १४ ॥ तथा स्त्रीकामेषु गृद्ध आत्मानं च रक्षन् । अन्येषां सत्त्वानां वधमारणाङ्कनबन्धनानि करोति ॥ १५ ॥ एष तु लोभप्रत्ययिक ईर्या-पथिकमतः प्रवक्ष्यामि । इह खल्वनगारस्य समितिगुप्तिसुगुप्तस्य ॥ १६ ॥ सततं त्वप्रमत्तस्य भगवतो यावच्चक्षुःपक्ष्मापि । निपतति तावत् सूक्ष्मा ईर्या-पथिकी क्रियैषा ॥ १७ ॥

चतुर्दशभिर्भूतग्रामैः, क्रिया पूर्ववत्, भूतानि—जीवास्तेषां ग्रामाः—समूहा भूतग्रामास्तैः, ते चैवं चतुर्दश भवन्ति—

एगिंदियसुहुमियरा सण्णियर पणिंदिया य सबीतिचऊ । पज्जत्तापज्जत्ता भेएणं चोद्दसग्गामा ॥ १ ॥

व्याख्या—एकेन्द्रियाः—पृथिव्यादयः सूक्ष्मेतरा भवन्ति, सूक्ष्मा बादराश्चेत्यर्थः, संज्ञीतराः पञ्चेन्द्रियाश्च, संज्ञिनोऽसंज्ञिनश्चेति भावना, 'सबीतिचउ'त्ति सह द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियैः, एते हि पर्याप्तकापर्याप्तकभेदेन चतुर्दश भूतग्रामा भवन्ति, स्थापना चेयं

| ए सु ऽप | सु प | बाद ऽप | बा प |
|---|---|---|---|
| | बे ऽप | बें० प | |
| | ते ऽप | ते प | |
| | च ऽप | च प | |
| ऽसं ऽप | ऽस प | सं ऽप | सं प |

एवं चतुर्दशप्रकारो भूतग्रामः प्रदर्शितः, अधुनाऽमुमेव गुणस्थानद्वारेण दर्शयन्नाह सङ्ग्रहणिकारः—

मिच्छद्दिट्ठी सासायणे[2] य तह [3]सम्ममिच्छदिट्ठी य अविरय[4]सम्मद्दिट्ठी विरया[5]विरए पमत्ते य[6] ॥ १ ॥
तत्तो य [7]अप्पमत्तो नियट्टि[8]अनियट्टि[9]बायरे [10]सुहुमे । [11]उवसंत[12]खीणमोहे होइ [13]सजोगी [14]अजोगी य ॥ २ ॥

गाथाद्वयस्य व्याख्या—कश्चिद्भूतग्रामो मिथ्यादृष्टिः, तथा सास्वादनश्चान्यः, सहैव तत्त्वश्रद्धानरसास्वादनेन वर्तत इति सास्वादनः, क्वणद्घण्टालालान्यायेन प्रायः परित्यक्तसम्यक्त्वः, तदुत्तरकालं षडावलिकाः, तथा चोक्तम्—"उवसमसंमत्तातो चयतो मिच्छं अपावमाणस्स । सासायणसंमत्तं तदंतरालंमि छावलियं ॥ १ ॥" तथा सम्यग्मिथ्यादृष्टिश्च

१ उपशमसम्यक्त्वात् च्यवमानस्य मिथ्यात्वमप्राप्नुवतः । सास्वादनसम्यक्त्वं तदन्तराले षडावलिकाः ॥ १ ॥

सम्यक्त्वं प्रतिपद्यमानः प्रायः सञ्जाततत्त्वरुचिरित्यर्थः, तथाऽविरतसम्यग्दृष्टिः—देशविरतिरहितः सम्यग्दृष्टिः, विरताविरतः—श्रावकग्रामः, प्रमत्तश्च प्रकरणात्प्रमत्तसंयतग्रामो गृह्यते, ततश्चाप्रमत्तसंयतग्राम एव, 'णियट्टिअणियट्टिबायरो'त्ति निवृत्तिबादरोऽनिवृत्तिबादरश्च, तत्र क्षपकश्रेण्यन्तर्गतो जीवग्रामः क्षीणदर्शनसप्तकः निवृत्तिबादरो भण्यते, तत ऊर्ध्वं लोभाणुवेदनं यावदनिवृत्तिबादरः, 'सुहुमे'त्ति लोभाणून् वेदयन् सूक्ष्मो भण्यते, सूक्ष्मसम्पराय इत्यर्थः, उपशान्तक्षीणमोहः श्रेणिपरिसमाप्तावन्तर्मुहूर्तं यावदुपशान्तवीतरागः क्षीणवीतरागश्च भवति, सयोगी अनिरुद्धयोगः भवस्थकेवलिग्राम इत्यर्थः, अयोगी च निरुद्धयोगः शैलेश्यां गतो ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालं यावत् इति गाथाद्वयसमासार्थः ॥ व्यासार्थस्तु प्रज्ञापनादिभ्योऽवसेयः ॥ पञ्चदशभिः परमाधार्मिकैः, क्रिया पूर्ववत्, परमाश्च तेऽधार्मिकाश्च २, संक्लिष्टपरिणामत्वात्परमाधार्मिकाः, तानभिधित्सुराह सङ्ग्रहणिकारः—

[1]अंबे अंबरिसी चेव, [3]सामे अ सबले इय । रुद्दोवेरुद्दकाले[7] य, महाकालेत्ति आवरे ॥ १ ॥
असिपत्ते धणकुंभे[11], [12]वालू [13]वेयरणी इय । खरस्सरे महाघोसे,[15] एए पन्नरसाहिया ॥ २ ॥

इदं गाथाद्वयं सूत्रकृन्निर्युक्तिगाथाभिरेव प्रकटार्थाभिर्व्याख्यायते—धाडेंति पहावेंति य हणंति बंधंति ( विंधंति—विध्यन्ति ) तह निसुंभंति । मुंचंति अंबरतले अंबा खलु तत्थ नेरइया ॥ १ ॥ ओहयहए य तहियं निस्सण्णे कप्पणीहिं

१ धाटयन्ति ( प्रेरयन्ति ) प्रधावयन्ति ( भ्रमयन्ति ) च घ्नन्ति बध्नन्ति तथा भूमौ पातयन्ति । मुञ्चन्ति अम्बरतलात् अम्बाः खलु तत्र नैरयिकान् ॥ १ ॥ उपहतहतान् तत्र च निःसंज्ञान् कल्पनीभिः

[1]कप्पंति । विदलियचडुलयछिन्ने अंबरिसा तत्थ नेरइए ॥ २ ॥ साडणपाडणतुन्नण ( तोदण ) विंधण ( बंधण ) रज्जूतल(लय)प्पहारेहिं । सामा नेरइयाणं पवत्तयंती अपुण्णाणं ॥ ३ ॥ अंतगयफेफ (यकीक) साणि य हियय कालेज्जफुप्फुसे चुण्णे । सबला नेरइयाणं पवत्तयंती अपुण्णाणं ॥ ४ ॥ असिसत्तिकुंततोमरसूलतिसूलेसु सूइच्चिइयासु । पोएंति रुद्दकम्मा नरयपाला तहिं रोद्दा ॥ ५ ॥ भंजंति अंगमंगाणि ऊरू बाहू सिराणि करचरणे । कप्पंति कप्पणीहिं उवरुद्दा पावकम्मरए ॥ ६ ॥ मीरासु सुंडएसु य कंडूसु पयणगेसु य पयंति । कुंभीसु य लोहीसु य पयंति काला उ नेरइया ॥ ७ ॥ कप्पिंति कागिणीमंसगाणिं छिंदंति सीहपुच्छाणि । खायंति य नेरइए महाकाला पावकम्मरए ॥ ८ ॥ हत्थे पाए ऊरू बाहू य सिरं च अंगुवंगाणि । छिंदंति पगामं तु असिनेरइया उ नेरइए ॥ ९ ॥ कण्णोट्ठनासकरचरणदसणथणपूअऊरुबाहूणं । छेयणभेयणसाडण असिपत्तधणूहिं पाडिंति ॥ १० ॥ कुंभीसु य पइणीसु य लोहीसु कंडुलोहकुंभीसु । कुंभी उ नरयपाला हणंति

---

[1] कल्पन्ते । द्विदलवत् तिर्यक्छिन्नान् अम्बर्षयस्तत्र नैरयिकान् ( कुर्वन्ति ) ॥ २ ॥ शातनपातनवयनव्यथनानि रज्जुलताप्रहारैः । श्यामा नैरयिकाणां प्रवर्त्तयन्ति अपुण्यानाम् ॥ ३ ॥ अन्त्रगतकीकसानि हृदयं कालेयकफुप्फुसानि चूर्णयन्ति । शबला नैरयिकाणां प्रवर्त्तयन्त्यपुण्यानाम् ॥ ४ ॥ असिशक्तिकुन्ततोमरशूलत्रिशूलेषु सूचिचितिकासु । प्रोतयन्ति रुद्रकर्माणस्तु नरकपालास्तत्र रौद्राः ॥ ५ ॥ भञ्जन्ति अङ्गोपाङ्गानि ऊरुणी बाहू शिरः करौ चरणौ । कल्पन्ते कल्पनीभिः उपरुद्राः पापकर्मरताः ॥ ६ ॥ दीर्घचुल्लीषु शुण्ठकेषु च कुम्भीषु च कन्दूषु प्रचनकेषु ( प्रचण्डेषु ) च पचन्ति । कुम्भीषु च लौहीषु च पचन्ति कालास्तु नारकान् ॥ ७ ॥ कल्पन्ते काकिणी ( श्लक्ष्ण ) मांसानि छिन्दन्ति सिंहपुच्छान् ( पृष्ठिवर्ध्रान् ) । खादयन्ति च नैरयिकान् महाकालाः पापकर्मरतान् ॥ ८ ॥ हस्तौ पादौ ऊरुणी बाहू च शिरः अङ्गोपाङ्गानि । छिन्दन्ति प्रकाममेव असिनरकपालास्तु नैरयिकान् ॥९॥ कर्णोष्ठनासिकाकरचरणदशनस्तनपूतोरुबाहूनाम् । छेदनभेदनशातनानि असिपत्रधनुर्भिः पातयन्ति ॥ १० ॥ कुम्भीषु च पचनीषु च लौहीषु कन्दूलोहकुम्भीषु । कुम्भिकास्तु नरकपाला घ्नन्ति

पाइंति नरएसु ॥ ११ ॥ तडतडतडस्स भुंजति भज्जणे कलंबुवालुयापट्ठे । वालुयगा नेरइया लोलेंति अंबरतलंमि ॥ १२ ॥
वसपूयरुहिरकेसट्ठिवाहिणी कलकलंतजउसोत्तं । वेयरणिनिरयपाला नेरइए ऊ पवाहंति ॥ १३ ॥ कप्पंति करगतेहिं
कप्पंति परोप्परं परसुएहिं । संबलियमारुहंती खरस्सरा तत्थ नेरइए ॥ १४ ॥ भीए य पलायंते समंतओ तत्थ ते निरुं-
भंति । पसुणो जहा पसुवहे महघोसा तत्थ नेरइए ॥ १५ ॥ षोडशभिर्गाथाषोडशैः सूत्रकृताङ्गाद्यश्रुतस्कन्धाध्ययनै-
रित्यर्थः, क्रिया पूर्ववत्, तानि पुनरमून्यध्ययनानि—

समगो वेयालीयं उवसग्गपरिण्णथीपरिण्णा य । निरयविभत्ती वीरत्थओ य कुसीलाणं परिहासा ॥ १ ॥
वीरियधम्मसमाही मग्गसमोसरणं अहतहं गंथो । जमईयं तह गाहासोलसमं होइ अज्झयणं ॥ २ ॥

गाथाद्वयं निगदसिद्धमेव,

सप्तदशविधे संयमे, सप्तदशविधे—सप्तदशप्रकारे संयमे सति, तद्विषयो वा प्रतिषिद्धकरणादिना प्रकारेण योऽतिचारः
कृत इति, क्रियायोजना पूर्ववत्, सप्तदशविधसंयमप्रतिपादनायाह—

---

१ पाचयन्ति नरकेषु ॥ ११ ॥ तडतडतडत्कुर्वन्तो भृज्जन्ति भ्राष्टे कदम्बवालुकापृष्ठे । वालुका नैरयिकपालाः लोलयन्त्यम्बरतले ॥ १२ ॥ वसापूयरुधि-
रकेशास्थिवाहिनीं कलकलज्जलत्श्रोतसम् । वैतरणीनरकपाला नैरयिकांस्तु प्रवाहयन्ति ॥ १३ ॥ कल्पन्ते क्रकचैः कल्पयन्ति परस्परं परशुभिः । शाल्मली-
मारोहयन्ति खरस्वरास्तत्र नैरयिकान् ॥ १४ ॥ भीतांश्च पलायमानान् समन्ततस्तत्र तान्निरुन्धन्ति । पशून् यथा पशुवधे महाघोषास्तत्र नैरयिकान् ॥ १५ ॥

पुढविदगअगणिमारुयवणस्सइ वितिचउपणिंदिअजीवो। पेहुप्पेहपमज्जणं परिट्ठवणं मणो वईकाए ॥ १ ॥

व्याख्या—पुढवाइयाण जाव य पंचेंदियसंजमो भवे तेसिं। संघट्टणाइ न करे तिविहेणं करणजोएणं ॥ १ ॥ अज्जीवेहिवि जेहिं गहिएहिं असंजमो हवइ जइणो। जह पोत्थदूसपणए तणपणए चम्मपणए य ॥ २ ॥ गंडी कच्छवि मुट्ठी संपुडफलए तहा छिवाडी य। एयं पोत्थयपणयं पण्णत्तं वीयराएहिं ॥ ३ ॥ बाहल्लपुहुत्तेहिं गंडीपोत्थो उ तुल्लगो दीहो। कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥ ४ ॥ चउरंगुलदीहो वा वट्टागिइ मुट्ठिपोत्थओ अहवा। चउरंगुलदीहोच्चिय चउरस्सो वावि विण्णेओ ॥ ५ ॥ संपुडओ दुगमाई फलगावोच्छं छिवाडिमेत्ताहे। तणुपत्तूसियरूवो होइ छिवाडी बुहा बेंति ॥ ६ ॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहुल्ले। तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥ ७ ॥ दुविहं च दूसपणयं समासओ तंपि होइ नायव्वं। अप्पडिलेहियपणयं दुप्पडिलेहं च विण्णेयं ॥ ८ ॥ अप्पडिलेहियदूसे

---

१ पृथ्व्यादयो यावच्च पञ्चेन्द्रियाः संयमो भवेत्तेषाम्। संघट्टनादि न करोति त्रिविधेन करणयोगेन ॥ १ ॥ अजीवेष्वपि येषु गृहीतेषु असंयमो भवति यतेः। यथा पुस्तकदूष्यपञ्चके तृणपञ्चके चर्मपञ्चके च ॥ २ ॥ गण्डी कच्छपी मुष्टिः संपुटफलकस्तथा सृपाटिका च। एतत् पुस्तकपञ्चकं प्रज्ञप्तं वीतरागैः ॥ ३ ॥ बाहल्यपृथक्त्वैर्गण्डीपुस्तकं तु तुल्यं दीर्घम्। कच्छपी अन्ते तनुकं मध्ये पृथु मुणितव्यम् ॥ ४ ॥ चतरङ्गुलं दीर्घं वा वृत्ताकृति मुष्टिपुस्तकमथवा। चतुरङ्गुलदीर्घमेव चतुरस्रं वाऽपि विज्ञेयं ॥ ५ ॥ संपुटः फलकानि द्विकादीनि वक्ष्ये सृपाटिकामधुना। तनुपत्रोच्छ्रितरूपं भवति सृपाटिका बुधा ब्रुवते ॥ ६ ॥ दीर्घो वा ह्रस्वो वा यः पृथुर्भवत्यल्पबाहल्यः। तं ज्ञातसमयसाराः सृपाटिकापुस्तकं भणन्तीह ॥ ७ ॥ द्विविधं च दूष्यपञ्चकं समासतस्तदपि भवति ज्ञातव्यम्। अप्रतिलेखितपञ्चकं दुष्प्रतिलेखं च विज्ञेयम् ॥ ८ ॥ अप्रतिलेखितदूष्यपञ्चके

तूली उवहाणगं च नायवं । गंडुवहाणालिंगणि मसूरए चेव पोत्तमए ॥ ९ ॥ पल्हवि कोयवि पावार णवयए तहा य दाढिगालीओ । दुप्पडिलेहियदूसे एयं बीयं भवे पणयं ॥ १० ॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ पडओ । दढिगालि धोयपोत्ती सेस पसिद्धा भवे भेया ॥ ११ ॥ तणपणयं पुण भणियं जिणेहिं जियरायदोसमोहेहिं । साली वीही कोद्दवरालग रण्णेतणाइं च ॥ १२ ॥ अलएलगाविमहिसी मिगाणमइणंच पंचमं होइ । तलिगा खल्लग बज्झे कोसग कत्ती य बीयं तु ॥ १३ ॥ अह वियडहिरन्नाई ताइ न गिण्हइ असंजमो साहू । ठाणाइ जत्थ चेते पेहपमज्जित्तु तत्थ करे ॥ १४ ॥ एसा पेहुवपेहा पुणो य दुविहा उ होइ नायवा । वावारावावारे वावारे जह उ गामस्स ॥ १५ ॥ एसो उविक्खगो हू अवावारे जहा विणस्संतं । किं एयं नु उवेक्खसि दुविहाए वेत्थ अहिगारो ॥ १६ ॥ वावारुवेक्ख तहियं संभोइय सीयमाण चोएइ । चोएई इयरंपी पावयणीयंमि कज्जंमि ॥ १७ ॥ अवावार उवेक्खा नवि चोएइ गिहिं तु सीयंतं । कम्मेसु

---

१ तूली उपधानकं च ज्ञातव्यम् । गण्डोपधानमालिङ्गिनी मसूरकश्चैव पोतमयः ॥ ९ ॥ पल्हवी ( प्रल्हत्तिः ) कौतपी प्रावारो नवत्वक् तथा दंष्ट्रागाली तु । दुष्प्रतिलिखितदूष्ये एतद् द्वितीयं भवेत् पञ्चकम् ॥ १० ॥ पल्हवी हस्तास्तरणं कौतपो रुतपूरितः पटः । दंष्ट्रागाली धौतपोतं शेषौ प्रसिद्धौ भवेतां भेदौ ॥ ११ ॥ तृणपञ्चकं पुनर्भणितं जिनैर्जितरागद्वेषमोहैः । शालिर्व्रीहिः कोद्रवः रालकोऽरण्यतृणानि च ॥ १२ ॥ अजैडकगोमहिषाणां मृगाणामजिनं च पञ्चमं भवति । तलिका खल्लको वर्ध्रः कोशः कर्त्तरी च द्वितीयं तु ॥ १३ ॥ अथ हिरण्यविकटादीनि ( अजीवाः ) तानि न गृह्णाति असंयमः (मत्वात्) साधुः । स्थानादि यत्र चिकीर्षेत् प्रेक्ष्य प्रमार्ज्य तत्र कुर्यात् ॥ १४ ॥ एषा प्रेक्षा उपेक्षा पुनर्द्विविधा तु भवति ज्ञातव्या । व्यापारेऽव्यापारे व्यापारे यथैव ( इन्द्रिय ) ग्रामस्य ॥ १५ ॥ एष उपेक्षकः अव्यापारे यथा विनश्यत् । किमेतदुपेक्षसे द्विविधयाऽप्यत्राधिकारः ॥१६॥ व्यापारोपेक्षा तत्र सांभोगिकान् सीदतश्चोदयति । चोदयति इतरमपि प्रावचनीये कार्ये ॥ १७ ॥ अव्यापारोपेक्षा नैव चोदयति गृहिणं तु सीदन्तम् । कर्मसु

[1]बहुविहेसुं संजम एसो उवेक्खाए ॥ १८ ॥ पाए सागारिएसुं अपमज्जित्तावि संजमो होइ । ते चेव पमज्जंते असागारिए संजमो होइ ॥ १९ ॥ पाणेहिं संसत्तं भत्तं पाणमहवावि अविसुद्धं । उवगरणपत्तमाई जं वा अइरित्त होज्जाहि ॥ २० ॥ तं परिठवणविहीए अवहट्टु संजमो भवे एसो । अकुसलमणवइरोहे कुसलाण उदीरणं जं तु ॥ २१ ॥ मणवइसंजम एसो काए पुण जं अवस्सकज्जंमि । गमणागमणं भवई तओवउत्तो कुणइ संमं ॥ २२ ॥ तवज्जं कुम्मस्सव सुसमाहियपाणिपायकायस्स । हवई य कायसंजमो चिट्ठंतस्सेव साहुस्स ॥ २३ ॥ अष्टादशप्रकारे अब्रह्मणि—अब्रह्मचर्ये सति तद्विषयो वा प्रतिषिद्धकरणादिना प्रकारेण योऽतिचारः कृत इति, क्रिया पूर्ववत्, तत्राष्टादशविधाब्रह्मप्रतिपादनायाह सङ्ग्रहणिकारः—

ओरालियं च दिव्वं मणवइकाएण करणजोएणं । अणुमोयणकारवणे करणेणऽट्ठारसाबंभं ॥ १ ॥

व्याख्या—इह मूलतो द्विधाऽब्रह्म भवति—औदारिकं तिर्यग्मनुष्याणां दिव्यं च भवनवास्यादीनां, चशब्दस्य व्यवहितः सम्बन्धः, मनोवाक्कायाः करणं त्रिधा, योगेन त्रिविधेनैवानुमोदनकारापणकरणेन निरूपितं, पश्चानुपूर्व्योपन्यासः,

---

१ बहुविधेषु संयम एष उपेक्षायाः ॥ १८ ॥ पादौ सागारिकेषु अप्रमार्ज्यापि ( अप्रमृजत्यपि ) संयमो भवति । तावेव प्रमार्जयति असागारिके संयमो भवति ॥ १९ ॥ प्राणिभिः संसक्तं भक्तं पानमथवाऽप्यविशुद्धम् । उपकरणपात्रादि यद्वाऽतिरिक्तं भवेत् ॥ २० ॥ तत् परिष्ठापनविधिनाऽपहृत्यसंयमो भवेदेषः । अकुशलमनोवाचोरोधे कुशलयोरुदीरणं यत्तु ॥ २१ ॥ मनोवाक्संयमावेतौ काये पुनर्यदवश्यकार्ये । गमनागमनं भवति तदुपयुक्तः करोति सम्यक् ॥ २२ ॥ तद्वर्जं कूर्मस्येव सुसमाहितपाणिपादकायस्य । भवति च कायसंयमस्तिष्ठत एव साधोः ॥ २३ ॥

अब्रह्माष्टादशविधं भवति, इयं भावना–औदारिकं स्वयं न करोति मनसा ३, नान्येन कारयति मनसा ३, कुर्वन्तं नानुमोदते मनसा ३, एवं वैक्रियमपि । प्राकृतशैल्या छान्दसत्वाच्चैकोनविंशतिभिर्ज्ञाताध्ययनैरिति वेदितव्यं, पाठान्तरं वा–'एगूणवीसाहिं णायज्झयणेहिंति' एवमन्यत्रापि द्रष्टव्यं, क्रिया पूर्ववत्, ज्ञाताध्ययनानि ज्ञाताधर्मकथान्तर्वर्तीनि, तान्येकोनविंशति अभिधानतः प्रतिपादयन्नाह सङ्ग्रहणिकारः

उक्खित्तणाए संघाडे, [3]अंडे कुम्मे य सेलेए । तुंबे[8] य रोहिणी मल्ली, मागंदी [10]चंदिमा इय ॥ १ ॥
दावद्दवे उदगणाए, मंडुक्के तेयली इय । नंदिफले अवरकंका, आयन्ने[17] सुंसुं पुंडरिया ॥ २ ॥

गाथाद्वयं निगदसिद्धं, । विंशतिभिरसमाधिस्थानैः, क्रिया प्राग्वदेव, तानि चामूनि–[1]दवदवचारऽपमज्जिय दुपमज्जियेऽइरित्तसिज्जआसणिए । राइणियपरिभासिय थेरब्भूओवघाई य ॥ १ ॥ संजलणकोहणो पिट्ठिमंसिएऽभिक्खऽभिक्खमोहारी । अहिकरणकरोईरणं अकालसज्झायकारी या ॥ २ ॥ ससरक्खपाणिपाए सद्दकरो कलहझंझकारी य । सूरप्पमाणभोती वीसइमे एसणासमिए ॥ ३ ॥ गाथात्रयम्, अस्य व्याख्या—समाधानं समाधिः–चेतसः स्वास्थ्यं मोक्षमार्गेऽवस्थितिरित्यर्थः, न समाधिरसमाधिस्तस्य स्थानानि–आश्रया भेदाः पर्याया असमाधिस्थानान्युच्यन्ते, [1]दवदवचारि दुयं दुयं निरवेक्खो वच्चंतो इहेव अप्पाणं पडणादिणा असमाहीए जोएइ, अन्ने य सत्ते बाधंते

१ द्रुतद्रुतचारी द्रुतं द्रुतं निरपेक्षो व्रजन् इहैवात्मानं पतनादिनाऽसमाधिना योजयति अन्यांश्च सत्वान् बाध्यमानान्

[1]असमाहीए जोएइ, सत्तवहजणिएण य कंमुणा परलोएवि अप्पाणं असमाहीए जोएइ, अतो द्रुत २ गन्तृत्वमसमाधिकारणत्वादसमाधिस्थानम्, एवमन्यत्रापि यथायोगं स्वबुद्ध्याऽक्षरगमनिका कार्येति, अपमज्जिए ठाणे निसीयणतुयट्टणाइ आयरंतो अप्पाणं विच्छुगडंकादिणा सत्ते य संघट्टणादिणा असमाहीए जोएइ, एवं दुपमज्जिएवि आयरंतो, अइरित्ते सेज्जाआसणिएत्ति अइरित्ताए सेज्जाए घंघसालाए अण्णेवि आवासेंति अहिगरणाइणा अप्पाणं परे य असमाहीए जोएइ आसणं—पीढफलगाइ तंपि अइरित्तमसमाहीए जोएइ, रायणियपरिभासी राइणिओ—आयरिओ अण्णो वा जो महल्लो जाइसुयपरियायादीहिं तस्स परिभासी परिभवकारी असुद्धचित्तत्तणओ अप्पाणं परे य असमाहीए जोयइ, थेरोवघाई थेरा—आयरिया गुरवो ते आयारदोसेण सीलदोसेण य णाणाईहिं उवहणति, उवहणंतो दुट्ठचित्तत्तणओ अप्पाणमण्णे य असमाहीए जोएइ, भूयाणि एगिंदिया ते अणट्ठाए उवहणइ उवहणंतो असमाहीए जोएइ, संजलणोत्ति मुहुत्ते २ रूसइ

---

१ असमाधिना योजयति, सत्त्ववधजनितेन च कर्मणा परलोकेऽपि आत्मानमसमाधिना योजयति १, अप्रमार्जिते स्थाने निषीदनत्वग्वर्तनाद्याचरन् आत्मानं वृश्चिकदंशादिना सत्त्वांश्च संघट्टनादिनाऽसमाधिना योजयति २, एवं दुष्प्रमार्जितेऽप्याचरन् ३, अतिरिक्तशय्यासनिक इति अतिरिक्तायां शय्यायां घङ्घ-(बृहत्) शालायां अन्येऽप्यावासयन्ति अधिकरणादिनाऽऽत्मानं परांश्चासमाधिना योजयति, आसनं—पीठफलकादि तदप्यतिरिक्तमसमाधिना योजयति ४, रात्निकपरिभाषी रात्निक—आचार्यः अन्यो वा यो महान् जातिश्रुतपर्यायादिभिः तस्य परिभाषी—पराभवकारी अशुद्धचित्तत्वात् आत्मानं परांश्चासमाधिना योजयति ५, स्थविरोपघाती स्थविराः—आचार्याः गुरवः तान् आचारदोषेण शीलदोषेण च ज्ञानादिभिरुपहन्ति, उपघ्नन् दुष्टचित्तत्वादात्मानं परांश्च असमाधिना योजयति ६, भूता एकेन्द्रियाः तान् अनर्थायोपहन्ति उपघ्नन् असमाधिना योजयति, संज्वलन इति मुहूर्ते २ रुष्यति-

रुसंतो अप्पाणमण्णे य असमाहीए जोएइ, कोहणोत्ति सइ कुद्धो अच्चंतकुद्धो भवइ, सो य परमप्पाणं च असमाहीए जोएइ, एवं किया वक्तव्या, पिट्ठिमंसिएत्ति परंमुहस्स अवण्णं भणइ, अभिक्खभिक्खमोहारीति अभिक्खणमोहारिणीं भासं भासइ जहा दासो तुमं चोरो वत्ति जं वा संकियं तं निस्संकियं भणइ एवं चेवत्ति, अहिगरणकरोदीरण अहिगरणाइं करेति अण्णेसिं कलहेइत्ति भणियं होति यन्त्रादीनि वा उदीरति, उवसंताणि पुणो उदीरेति, अकालसज्झायकारी य कालियसुयं उग्घाडापोरिसीए पढइ, पंतदेवया असमाहीए जोएइ, ससरक्खपाणिपाओ भवइ ससरक्खपाणिपाए सह स-रक्खेण ससरक्खे अथंडिल्ला थंडिल्लं संकमंतो न पमज्जइ थंडिल्लाओवि अथंडिल्लं कण्हभोमाइसु विभासा ससरक्खपाणिपाए ससरक्खेहिं हत्थेहिं भिक्खं गेण्हइ अहवा अणंतरहियाए पुढवीए निसीयणाइ करेंतो ससरक्खपाणिपाओ भवति, सद्दं करेइ असंखडबोलं करेइ विगालेवि महया सद्देण उ वएइ वेरत्तियं वा गारत्थियं भासं भासइ, कलहकरेत्ति अप्पणा कलहं करेइ

---

१ रुष्यन् आत्मानमन्यांश्चासमाधिना योजयति ८, क्रोधन इति सकृत् क्रुद्धः अत्यन्तक्रुद्धो भवति, स च परमात्मानं चासमाधिना योजयति९, पृष्ठमांसाद इति पराङ्मुखस्यावर्णं भणति१०,अभीक्ष्णमभीक्ष्णमवधारक इति अभीक्ष्णमवधारिणीं भाषां भाषते यथा दासस्त्वं चोरो वेति यद्वा शङ्कितं तत् निःशङ्कितं भणति एवमेवेति११, अधिकरणकर उदीरकः अधिकरणानि करोति अन्येषां कलहयतीति भणितं भवति, यन्त्रादीनि वोदीरयति, उपशान्तानि पुनरुदीरयति १२-१३,अकालस्वाध्यायकारी च कालिकश्रुतं चोद्घाटपौरुष्यां पठति, प्रान्तदेवताऽसमाधिना योजयेत् १४, सरजस्कपाणिपादो भवति सरजस्कपाणिपादः सह रजसा सरजस्कः अस्थण्डिलात् स्थण्डिलं संक्रामन् न प्रमार्जयति स्थण्डिलादपि अस्थण्डिलं कृष्णभूमादिषु विभाषा ससरजस्कपाणिपादः ससरजस्काभ्यां हस्ताभ्यां भिक्षां गृह्णाति अथवाऽनन्तर्हितायां पृथ्व्यां निषीदनादि कुर्वन् ससरजस्कपाणिपादो भवति १५, शब्दं करोति–कलहबोलं करोति विकालेऽपि महता शब्देनैव वदति वैरात्रिकं वा गार्हस्थभाषां भाषते १६, कलहकर इति आत्मना कलहं करोति

तं करेइ जेण कलहो भवइ, झंझकारी य जेण २ गणस्स भेओ भवइ सव्वो वा गणो झंझविओ अच्छइ तारिसं भासइ करेइ वा, सूरप्पमाणभोइत्ति सूर एव पमाणं तस्स उदियमेत्ते आरद्धो जाव न अत्थमेइ ताव भुंजइ सज्झायमाई ण करेति, पडिचोइओ रूसइ, अजीरगाई य असमाहि उप्पज्जइ, एसणाऽसमिएत्ति अणेसणं न परिहरइ पडिचोइओ साहूहिं समं भंडइ, अपरिहरंतो य कायाणमुवरोहे वट्टइ, वट्टंतो अप्पाणं असमाहीए जोएइत्ति गाथात्रयसमासार्थः ॥ विस्तरस्तु दशाख्याद् ग्रन्थान्तरादवसेय इति,

एक्कवीसाए सबलेहिं बावीसाए परीसहेहिं तेवीसाए सूयगडज्झयणेहिं चउवीसाए देवेहिं पंचवीसाए भावणाहिं छव्वीसाए दसाकप्पववहाराणं उद्देसणकालेहिं सत्तावीसविहे अणगारचरित्ते अट्ठावीसविहे आयारकप्पे एगूणतीसाए पावसुयपसंगेहिं तीसाए मोहणियठाणेहिं एगतीसाइ सिद्धाइगुणेहिं बत्तीसाए जोगसंगहेहिं (सूत्रं)

एकविंशतिभिः शवलैः क्रिया प्राग्वत्, तत्र शवलं चित्रमाख्यायते, शवलचारित्रनिमित्तत्वात् करकर्मकरणादयः क्रियाविशेषाः शवला भण्यन्ते, तथा चोक्तं—अवराहंमि पयणुए जेण उ मूलं न वच्चई साहू । सबलेंति तं चरित्तं तम्हा सवलत्तणं बेंति ॥ १ ॥ तानि चैकविंशतिशवलस्थानानि दर्शयन्नाह—

---

१ तत्करोति येन कलहो भवति १७, झञ्झकारी च येन येन गणस्य भेदो भवति सर्वो वा गणो झञ्झितो वर्त्तते तादृशं भाषते करोति वा १८, सूर्यप्रमाणभोजीति सूर्य एव प्रमाणं तस्योदयमात्रादारब्धः यावत् नास्तमयति तावत् भुनक्ति स्वाध्यायादि न करोति, प्रतिचोदितो रुष्यति, अजीर्णत्वादि चासमाधिरुत्पद्यते १९, एषणाऽसमित इत्यनेषणां न परिहरति प्रतिचोदितः साधुभिः समं कलहयति, अपरिहरंश्च कायानामुपरोधे वर्त्तते, वर्त्तमान आत्मानमसमाधिना योजयति २०।अप-

तंजह उ हत्थकम्मं कुव्वंते मेहुणं च सेवंते । राइं च भुंजमाणे आहाकम्मं च भुंजंते ॥ १ ॥ तत्तो य रायपिंडं कीयं पामिच अभिहडं छेज्जं । भुंजंते सबले ऊ पच्चक्खियऽभिक्खभुंजंइ य ॥ २ ॥ छम्मासब्भंतरओ गणा गणं संकमं करेंते यं । मासब्भंतर तिण्णि य दगलेवा ऊ करेमाणो ॥ ३ ॥ मासब्भंतरओ वा माइठाणाइं तिन्नि करेमाणे । पाणाइवायउट्टिं कुव्वंते मुसं वयंते यं ॥ ४ ॥ गिण्हंते य अदिण्णं आउट्टि तह अणंतरहियाए । पुढवीय ठाणसेज्जं निसीहियं वावि चेतेइ ॥ ५ ॥ एवं ससणिद्धाए ससरक्खाचित्तमंतसिललेलुं । कोलावासपइट्ठा कोल घुणा तेसि आवासो ॥ ६ ॥ संडसपाणसबीओ जाव उ संताणए भवे तहियं । ठाणाइ चेयमाणो सबले आउट्टिआए उ ॥ ७ ॥ आउट्टि मूलकंदे पुप्फे य फले य बीयहरिए य । भुंजंते सबलेए तहेव संवच्छरस्संतो ॥ ८ ॥ दस दगलेवे कुणं तह माइट्ठाण दस य वरिसन्तो । आउटिय सीउदगं वग्घारियहत्थमत्ते य ॥ ९ ॥ दवीए भायणेण व दीयंतं भत्तपाण घेत्तूणं । भुंजइ सबलो एसो इगवीसो होइ नायव्वो ॥ १० ॥

आसां व्याख्या—हत्थकम्मं सयं करेंति परेण वा करेंते सबले १, मेहुणं च दिव्वाइ ३ अइक्कमाइसु तिसु सालंबणे य सेवंते सबले २, राइं च भुंजमाणेत्ति, एत्थ चउभंगो-दिया गेण्हइ दिया भुंजइ ह्वा[४]अतिक्कमाइसु ४ सबले, सालंबणे

०राधे प्रतनुके येन तु न मूलं व्रजति साधुः । शबलयति तत् चारित्रं तस्मात् शबलत्वं भवते ॥ १ ॥ तद्यथा तु हस्तकर्म कुर्वंति मैथुनं च सेवमाने । रात्रौ च भुञ्जाने आधाकर्म च भुञ्जाने ॥ १ ॥ ततश्च राजपिण्डं क्रीतं प्रामित्यं अभिहृतमाच्छेद्यम् । भुञ्जाने शबलस्तु प्रत्याख्यायाभीक्ष्णं भुनक्ति च॥२॥ षण्मासाभ्यन्तरतो गणाद् गणं संक्रमं कुर्वंश्च । मासाभ्यन्तरे त्रींश्च दकलेपांस्तु कुर्वन्॥३॥मासाभ्यन्तरतो वा मातृस्थानानि त्रीणि कुर्वन् । प्राणातिपातमाकुट्टया कुर्वन् मृषा वदंश्च॥४॥ गृह्णति चादत्तं आकुट्टया तथाऽनन्तर्हितायां । पृथ्व्यां स्थानं शय्यां नैषेधिकीं वाऽपि करोति ॥ ५ ॥ एवं सस्निग्धायां सरजस्कचित्तवच्छिलालेलुनि । कोलावास-प्रतिष्ठा कोला घुणास्तेषामावासः ॥ ६ ॥ साण्डसप्राणसबीजो यावत् ससंतानको भवेत् तत्र । स्थानादि कुर्वन् शबल आकुट्टयैव ॥ ७ ॥ आकुट्टया मूलकन्दान् पुष्पाणि च फलानि च बीजहरितानि च । भुञ्जानः शबल एष तथैव संवत्सरस्यान्तः ॥८॥ दश दकलेपान् कुर्वन् तथा दश मातृस्थानानि च वर्षान्तः । आकुट्टया शीतोदकं प्रलम्बिते ( अल्पवृष्टौ ) हस्तमात्रेण च॥ ९ ॥ दर्व्या भाजनेन वा ( उदकार्द्रेण ) दीयमानं भक्तपानं गृहीत्वा । भुनक्ति शबल एष एकविंशतितमो भवति ज्ञातव्यः ॥ १० ॥ हस्तकर्म स्वयं करोति परेण वा कारयति शबलो मैथुनं च दिव्यादि अतिक्रमादिभिस्त्रिभिः सालम्बनश्च सेवमानः शबलः, रात्रौ च भुञ्जाने, अत्र चतुर्भङ्गी—दिवा गृह्णाति दिवा भुङ्क्ते ४ अतिक्रमादिषु शबलः सालम्बने

[1]पुण जयणाए, संनिहिमाईसु पडिसेवणाए चेव, एवमन्यत्रापि द्रष्टव्यं ३, 'आहाकंमं च भुंजंते' प्रकटार्थं ४ रायपिंड ५ कीय ६ पामिच्च ७ अभिहड ८ अच्छेज्ज ९ पसिद्धा 'पच्चक्खियभिक्ख भुंजइ य' असइं पच्चक्खिय २ भुंजए सबले १०, अंतो छण्हं मासाणं गणाओ गणसंकमं करेंते सबले अण्णत्थ णाणदंसणचरित्तट्ठयाए ११, 'मासब्भंतर तिण्णि य दगलेवे ऊ करेमाणे' लेवोत्ति नाभिप्पमाणमुदगं, भणियं च–"जंघद्धा संघट्टो णाभी लेवो परेण लेवुवरि"त्ति, अंतो मासस्स तिन्नि उदगलेवे उत्तरंते सबले १२, तिण्णि य माइट्ठाणाइं पच्छायणाईणि कुणमाणे सबले १३, आउट्टिआए–उपेत्य पुढवाइ पाणाइवायं कुणमाणे सबले १४, मुसं वयंते सबले १५, अदिण्णं च गिण्हमाणे सबले १६, अणंतरहियाए सचित्तपुढवीए ठाणं काउस्सग्गं सेज्जं सयणं निसीहियं च कुणमाणे सबले, ससणिद्धे दगेण ससरक्खा पुढविरएण, चित्तमंतसिला सचेयणा सिलत्ति भणियं होति, लेलू लेट्टू, कोला–घुणा तेसिमावासो घुणखइयं कट्ठं, तत्थ ठाणाइं करेमाणे सबले, एवं सह अंडाईहिं जं तत्थवि ठाणाइ

---

१ पुनर्यतनया, सन्निध्यादेः प्रतिषेवणायामेव, आधाकर्मणि च भुञ्जाने, राजपिण्डं क्रीतं प्रामित्यं अभिहृतं आच्छेद्यं प्रसिद्धानि प्रत्याख्यायाभीक्ष्णं भुनक्ति च–असकृत् प्रत्याख्याय २ भुङ्क्ते शबलः, अन्तः षण्णां मासानां गणात् गणसंक्रमं कुर्वन् शबलः अन्यत्र ज्ञानदर्शनचारित्रार्थात्, मासाभ्यन्तरे त्रींश्चोदकलेपान् कुर्वन्, लेप इति नाभिप्रमाणमुदकं, भणितं च–जङ्घार्धं संघट्टो नाभिर्लेपः परतो लेपोपरीति, अन्तः मासस्य त्रीनुदकलेपानुत्तरन् शबलः, त्रीणि च मातृस्थानानि प्रच्छादनादीनि कुर्वन् शबलः, ज्ञात्वा पृथ्व्यादिप्राणातिपातं कुर्वन् शबलः, मृषा वदन् शबलः, अदत्तं च गृह्णन् शबलः, अनन्तर्हितायां सचित्तपृथ्व्यां स्थानं कायोत्सर्गं शय्यां ( वसतिं ) शयनं नैषेधिकीं च कुर्वन् शबलः, सस्निग्धोदकेन सरजस्कः पृथ्वीरजसा चित्तमती शिला सचेतना शिलेति भणितं भवति, लेलु–लेष्टुः, कोलाः–घुणाः तेषामावासो घुणखादितं काष्ठं, तत्र स्थानादि कुर्वन् शबलः, एवं सहाण्डादिभिः यत् तत्रापि स्थानादि

च्चेएमाणो सबले१७,आउट्टिआए मूलाई भुंजंते सबले१८,वरिसस्संतो दस दगलेवे य माइट्ठाणाइं कुव्वंते सबले,१९-२०सीओदग-वग्घारिय हत्थमत्तेण गलंतेणंति भणियं होइ,एवं दव्वीए गलंतीए भायणेण य दिज्जंतं घेत्तूण भुंजमाणे सबले२१अयं च समासार्थः व्यासार्थस्तु दशाख्यग्रन्थान्तरादवसेयः,एवमसम्मोहार्थं दशानुसारेण सबलस्वरूपमभिहितं, सङ्ग्रहणिकारस्त्वेवमाह—

> वरिसंतो दस मासस्स तिन्नि दगलेवमाइठाणाइं । आउट्टिया करेंतो वेहालियादिण्णमेहुण्णे ॥ १ ॥
> निसिभत्तेकम्मनिवपिंड कीयमाई अभिक्खसंवरिए । कंदाई [17]भुंजंते उदउल्लहत्थाइ गेण्हणं च ॥ २ ॥
> सचित्तसिलाकोले परविणिवाई ससिणिद्ध ससरक्खो । छम्मासंतो गणसंकमं च करकंममिइ सबले ॥ ३ ॥

अस्य गाथात्रयस्यापि व्याख्या प्राग्निरूपितसबलानुसारेण कार्या । द्वाविंशतिभिः परीषहैः, क्रिया पूर्ववत्, तत्र "मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः" ( तत्त्वा० अ०९सू० ८ ) सम्यग्दर्शनादिमार्गाच्यवनार्थं ज्ञानावरणीयादिकर्मनिर्जरार्थं च परि–समन्तादापतन्तः क्षुत्पिपासादयो द्रव्यक्षेत्रकालभावापेक्षाः सोढव्याः–सहितव्या इत्यर्थः, परीषहांस्तान् स्वरूपेणाभिधित्सुराह—

> खुहा पिवासा सीउण्हं दंसाचेला रइत्थिओ । चरियानिसीहिया सेज्जा अक्कोस वह जायणा ॥ १ ॥

---

१ कुर्वन् शबलः, ज्ञात्वा मूलादि भुञ्जानः शबलः, वर्षस्यान्तर्दश दकलेपान् दश च मातृस्थानानि कुर्वन् शबलः, शीतोदकार्द्रहस्तमात्राभ्यां गलद्भ्यामिति भणितं भवति, एवं दर्व्या गलन्त्या भाजनेन च दीयमानं गृहीत्वा भुञ्जानः शबलः

अलाभ[15] रोगे[16] तणफासा[17] मलसक्कारपरीसहा[18][19]। पण्णा[20] अण्णाणसंमत्तं[21][22] इइ बावीस परीसहा ॥ २ ॥

व्याख्या—क्षुत्परीषहः—क्षुद्वेदनामुदितामशेषवेदनातिशायिनीं सम्यग्विषहमाणस्य जठरान्त्रविदाहिनीमागमविहितेनान्धसा शमयतोऽनेषणीयं च परिहरतः क्षुत्परीषहजयो भवति, अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः, १, एवं पिपासापरीषहोऽपि द्रष्टव्यः २, 'सीयं'ति शीते महत्यपि पतति जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि परिगृह्णीयात् परिभुञ्जीत वा, नापि शीतार्तोऽग्निं ज्वालयेत् अन्यज्वालितं वा नाऽऽसेवयेत्, एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति ३, 'उण्हं' उष्णपरितप्तोऽपि न जलावगाहनस्नानव्यजनवातादि वाञ्छयेत्, नैवातपत्राद्युष्णत्राणायाऽऽददीतेति, उष्णमापतितं सम्यक् सहेत, एवमनुतिष्ठतोष्णपरीषहजयः कृतो भवति ४, 'दंस'त्ति दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, न च व्यजनादिना निवारयेदिति, एवमनुतिष्ठता दंशपरिषहजयः कृतो भवति ५, एवमन्यत्रापि क्रिया योज्या, 'अचेल'त्ति अमहाधनमूल्यानि खण्डितानि जीर्णानि च वासांसि धारयेत् न च तथाविधो दैन्यं गच्छेत्, तथा चागमः—'परिजुण्णेहिं[1] वत्थेहिं, होक्खामित्ति अचेलए। अदुवा सचेलए होक्खं, इति भिक्खू न चिंतए ॥ १ ॥' इत्यादि ६, 'अरति'त्ति विहरतस्तिष्ठतो वा यद्यरतिरुत्पद्यते तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव संसारस्वभावमालोच्य भवितव्यं, 'इत्थीउ'त्ति न स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितनयनविभ्रमादिचेष्टां चिन्तयेत्, न जातुचिच्चक्षुरपि तासु निवेशयेत् मोक्षमार्गार्गलासु कामबुद्ध्येति ८, 'चरिय'त्ति

१ परिजीर्णेषु वस्त्रेषु भविष्याम्यचेलकः। अथवा सचेलको भविष्यामीति भिक्षुर्न चिन्तयेत् ॥ १ ॥

वर्जितालस्यो ग्रामनगरकुलादिष्वनियतवसतिर्निर्ममत्वः प्रतिमासं चर्यामाचरेदिति ९, 'निसीहिय'त्ति निषीदन्त्यस्यामिति निषद्या—स्थानं तत् स्त्रीपशुपण्डकविवर्जितां वसतिं सेवेत पश्चाद्भाविनस्त्विष्टानिष्टोपसर्गान् सम्यगधिसहेत १०, 'सेज्ज'त्ति शय्या संस्तारकः—चम्पकादिपट्टो मृदुकठिनादिभेदेनोच्चावचः प्रतिश्रयो वा पांशूत्करप्रचुरः शिशिरो बहुघर्मको वा तत्र नोद्विजेत ११, 'अक्कोस'त्ति आक्रोशः—अनिष्टवचनं तच्छ्रुत्वा सत्येतरालोचनया न कुप्येत १२, 'वह'त्ति वधः—ताडनं पाणिपार्ष्णिलताकशादिभिः, तदपि शरीरमवश्यंतया विध्वंसत एवेति मत्वा सम्यक् सहेत, स्वकृतकर्मफलमुपनतमित्येवमभिसंचिन्तयेत् १३, 'जायण'त्ति याचनं—मार्गणं, भिक्षोर्हि वस्त्रपात्रान्नपानप्रतिश्रयादि परतो लब्धव्यं सर्वमेव, शालीनतया च न याच्ञां प्रत्याद्रियते, साधुना तु प्रागल्भ्यभाजा सञ्जाते कार्ये स्वधर्मकायपरिपालनाय याचनमवश्यं कार्यमिति, एवमनुतिष्ठता याच्ञापरीषहजयः कृतो भवति १४, 'अलाभ'त्ति याचितालाभेऽपि प्रसन्नचेतसैवाविकृतवदनेन भवितव्यं १५, 'रोग'त्ति रोगः—ज्वरातिसारकासश्वासादिस्तस्य प्रादुर्भावे सत्यपि न गच्छनिर्गताश्चिकित्सायां प्रवर्तन्ते, गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक् सहन्ते, प्रवचनोक्तविधिना प्रतिक्रियामाचरन्तीति, एवमनुतिष्ठता रोगपरीषहजयः कृतो भवति १६, 'तणफास'त्ति अशुषिरतृणस्य दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छनिवासिनां च, तत्र येषां शयनमनुज्ञातं निष्पन्नानां ते तान् दर्भान् भूमावास्तीर्य संस्तारोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चौरापहृतोपकरणा वा प्रतनुसंस्तारपट्टकावत्यन्तजीर्णत्वात्, तथाऽपि तं परुषकुशदर्भादितृणस्पर्शं सम्यक् सहेत १७,

'मल'त्ति स्वेदवारिसम्पर्कात्कठिनीभूतं रजो मलोऽभिधीयते, स वपुषि स्थिरतामितो ग्रीष्मोष्मसन्तापजनितघर्मजलादार्द्रतां गतो दुर्गन्धिर्महान्तमुद्वेगमापादयति, तदपनयनाय न कदाचिदभिलषेत्—अभिलाषं कुर्यात् १८, 'सक्कारपरीसहे'त्ति सत्कारो—भक्तपानवस्त्रपात्रादीनां परतो लाभः पुरस्कारः—सद्भूतगुणोत्कीर्तनं वन्दनाभ्युत्थानासनप्रदानादिव्यवहारश्च, तत्रासत्कारितोऽपुरस्कृतो वा न द्वेषं यायात् १९, 'पण्ण'त्ति प्रज्ञायतेऽनयेति प्रज्ञा—बुद्ध्यतिशयः, तत्प्राप्तौ न गर्वमुद्वहेत् २०, 'अण्णाणं'ति कर्मविपाकजादज्ञानान्नोद्विजेत २१, 'असंमत्तं'ति असम्यक्त्वपरीषहः, सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसङ्गश्चाहं तथापि धर्माधर्मात्मदेवनारकादिभावान्नेक्षे अतो मृषा समस्तमेतदिति असम्यक्त्वपरीषहः, तत्रैवमालोचयेत्—धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ ततस्तयोः कार्यदर्शनानुमानसमधिगम्यत्वं, अथ क्षमाक्रोधादिकौ धर्माधर्मौ ततः स्वानुभवत्वादात्मपरिणामरूपत्वात् प्रत्यक्षविरोधः, देवास्त्वत्यन्तसुखासक्तत्वान्मनुष्यलोके कार्याभावात् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति, नारकास्तु तीव्रवेदनार्ताः पूर्वकृतकर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमायान्तीत्येवमालोचयतोऽसम्यक्त्वपरीषहजयो भवति, 'बावीस परीसह'त्ति एते द्वाविंशतिपरीषहा इति गाथाद्वयार्थः ॥ त्रयोविंशतिभिः सूत्रकृताध्ययनैः, क्रिया पूर्ववत्, तानि पुनरमूनि—

पुंडरीयकिरियट्ठाणं आहारपरिण्णपच्चक्खाणकिरिया य । अणगारअद्दनालंद सोलसाइं च तेवीसं ॥ १ ॥

गाथा निगदसिद्धैव ॥ चतुर्विंशतिभिर्देवैः, क्रिया पूर्ववत्, तानुपदर्शयन्नाह—

भवणवणजोइसवेमाणिया य दसअट्ठपंचएगविहा । इह चउवीसं देवा केइ पुण बेंति अरहंता ॥ १ ॥

इयमपि निगदसिद्धैव ॥ पञ्चविंशतिभिर्भावनाभिः, क्रिया पूर्ववत्, प्राणातिपातादिनिवृत्तिलक्षणमहाव्रतसंरक्षणाय भाव्यन्त इति भावनाः, ताश्चेमाः—

इरियासमिए सया जए, उवेह भुंजेज्ज व पाणभोयणं । आयाणनिक्खेवदुगुंछ संजए, समाहिए संजमए मणोवई ॥ १ ॥ अहस्ससच्चे अणुवीइ भासए, जे कोहलोहभयमेव वज्जए । स दीहरायं समुपेहिया सिया, मुणी हु मोसं परिवज्जए सया ॥ २ ॥ सयमेव उ उग्गहजायणे, घडे मतिमं निसम्म सइ भिक्खु उग्गहं । अणुण्णविय भुंजिज्ज पाणभोयणं, जाइत्ता साहंमियाण उग्गहं ॥ ३ ॥ आहारगुत्ते अविभूसियप्पा, इत्थिं न निज्झाइ न संथवेज्जा । बुद्धो मुणी खुड्डकहं न कुज्जा, धम्माणुपेही संधए बंभचेरे ॥ ४ ॥ जे सद्दरूवरसगंधमागए, फासे य संपप्प मणुण्णपावए । गिहीपदोसं न करेज्ज पंडिए, स होइ दंते विरए अकिंचणे ॥ ५ ॥

गाथाः पञ्च, आसां व्याख्या—ईरणम् ईर्या, गमनमित्यर्थः, तस्यां समितः—सम्यगित ईर्यासमितः, ईर्यासमितता प्रथमभावना यतोऽसमितः प्राणिनो हिंसेदतः सदा यतः-सर्वकालमुपयुक्तः सन् 'उवेह भुंजेज्ज व पाणभोयणं' 'उवेह' त्ति अवलोक्य भुञ्जीत पानभोजनं, अनवलोक्य भुञ्जानः प्राणिनो हिंसेत, अवलोक्य भोक्तव्यं द्वितीयभावना, एवमन्यत्राप्यक्षरगमनिका कार्या, आदाननिक्षेपौ-पात्रादेर्ग्रहणमोक्षौ आगमप्रसिद्धौ जुगुप्सति—करोत्यादाननिक्षेपजुगुप्सकः, अजुगुप्सन् प्राणिनो हिंस्यात् तृतीयभावना, संयतः—साधुः समाहितः सन् संयमे 'मणोवइ' त्ति अदुष्टं मनः प्रवर्तयेत्, दुष्टं प्रवर्तयन् प्राणिनो हिंसेत् चतुर्थी भावना, एवं वाचमपि पञ्चमी भावना, गताः प्रथमव्रतभावनाः। द्वितीयव्रतभावनाः प्रोच्यन्ते—'अहस्ससच्चे' त्ति अहास्यात्

सत्यः, हास्यपरित्यागादित्यर्थः, हास्यादनृतमपि ब्रूयात्, अतो हास्यपरित्यागः प्रथमभावना, अनुविचिन्त्य–पर्यालोच्य भाषेत, अन्यथाऽनृतमपि ब्रूयात् द्वितीयभावना, यः क्रोधं लोभं भयमेव वा त्यजेत्, स इत्थम्भूतो दीर्घरात्रं–मोक्षं समुपेक्ष्य–सामीप्येन द्रष्टा (दृष्ट्वा) 'सिया' स्यात् मुनिरेव मृषां परिवर्जेत सदा, क्रोधादिभ्योऽनृतभाषणादिति भावनात्रयं, गता द्वितीयव्रतभावनाः । तृतीयव्रतभावनाः प्रोच्यन्ते–'स्वयमेव' आत्मनैव प्रभुं प्रभुसंदिष्टं वाऽधिकृत्य अवग्रहयाञ्चायां प्रवर्तते अनुविचिन्त्यान्यथाऽदत्तं गृह्णीयात् प्रथमभावना, 'घडे मइमं निसम्म'त्ति तत्रैव तृणाद्यनुज्ञापनायां चेष्टेत मतिमान् निशम्य–आकर्ण्य प्रतिग्रहदातृवचनमन्यथा तददत्तं गृह्णीयात्, परिभोग इति द्वितीया भावना, 'सइ भिक्खु उग्गहं'ति सदा भिक्षुरवग्रहं स्पष्टमर्यादयाऽनुज्ञाप्य भजेत, अन्यथाऽदत्तं संगृह्णीयात्, तृतीया भावना, अनुज्ञाप्य गुरुमन्यं वा भुञ्जीत पानभोजनम्, अन्यथाऽदत्तं गृह्णीयात् चतुर्थी भावना, याचित्वा साधर्मिकाणामवग्रहं स्थानादि कार्यमन्यथा तृतीयव्रतविराधनेति पञ्चमी भावना, उक्तास्तृतीयव्रतभावनाः । साम्प्रतं चतुर्थव्रतभावनाः प्रोच्यन्ते—'आहारगुत्ते'त्ति आहारगुप्तः स्यात् नातिमात्रं स्निग्धं वा भुञ्जीत, अन्यथा ब्रह्मव्रतविराधकः स्यात् प्रथमा भावना, अविभूषितात्मा स्याद्–विभूषां न कुर्याद्, अन्यथा ब्रह्मव्रतविराधकः स्यात् द्वितीया भावना, स्त्रियं न निरीक्षेत तदव्यतिरेकादिन्द्रियाणि नाऽऽलोकयेद्, अन्यथा ब्रह्मविराधकः स्यात् तृतीया भावना, 'न संथवेज्ज'त्ति न स्त्र्यादिसंसक्तां वसतिं सेवेत, अन्यथा ब्रह्मविराधकः स्यात् चतुर्थी भावना, बुद्धः–अवगततत्त्वः मुनिः–साधुः क्षुद्रकथां न कुर्यात् स्त्रीकथां स्त्रीणां वेति, अन्यथा ब्रह्मविराधकः स्यात् पञ्चमी भावना, 'धम्म (धम्माणु) पेही संधए वंभचेरं'ति निगदसिद्धम्, उक्ताश्चतुर्थव्र-

तभावनाः । पञ्चमव्रतभावनाः प्रोच्यन्ते—यः शब्दरूपरसगन्धानागतान्, प्राकृतशैल्याऽलाक्षणिकोऽनुस्वारः, स्पर्शांश्च
संप्राप्य मनोज्ञपापकान्—इष्टानिष्टानित्यर्थः, गृद्धिम्—अभिष्वङ्गलक्षणां, प्रद्वेषः प्रकटस्तं न कुर्यात् पण्डितः, स भवति
दान्तो विरतोऽकिञ्चन इति, अन्यथाऽभिष्वङ्गादेः पञ्चममहाव्रतविराधना स्यात्, पञ्चापि भावनाः, उक्ताः पञ्चमहाव्रतभा-
वनाः, अथवाऽसम्मोहार्थं यथाक्रमं प्रकटार्थाभिरेव भाष्यगाथाभिः प्रोच्यन्ते—"पणवीस भावणाओ पंचण्ह महव्वयाणमे-
याओ । भणियाओ जिणगणहरपुज्जेहिं नवर सुत्तंमि ॥ १ ॥ इरियासमिइ पढमा आलोइयभत्तपाणभोई य । आयाण-
भंडनिक्खेवणा य समिई भवे तइया ॥ २ ॥ मणसमिई वयसमिई पाणइवायंमि होंति पंचेव । हासपरिहारअणुवीइ
भासणा कोहलोहभयपरिण्णा ॥ ३ ॥ एस मुसावायस्स अदिन्नदाणस्स होंतिमा पंच । पहुसंदिट्ठ पहू वा पढमोग्गह जाएँ
अणुवीई ॥ ४ ॥ उग्गहणसील बिइया तत्थोग्गेण्हेज्ज उग्गहं जहियं । तणडगलमल्लगाई अणुण्णवेज्जा तहिं तहियं ॥ ५ ॥
तच्चंमि उग्गहं तू अणुण्णवे सारिउग्गहे जा उ । तावइय मेर काउं न कप्पई बाहिरा तस्स ॥ ६ ॥ भावण चउत्थ साहं-
मियाण सामण्णमण्णपाणं तु । संघाडगमाईणं भुंजेज्ज अणुण्णवियए उ ॥ ७ ॥ पंचमियं गंतूणं साहम्मियउग्गहं अणुण्ण-
विया । ठाणाई चेएज्जा पंचेव अदिण्णदाणस्स ॥ ८ ॥ बंभवयभावणाओ णो अइमायापणीयमाहारे । दोच्च अविभूस-
णा ऊ विभूसवत्ती न उ हवेज्जा ॥ ९ ॥ तच्चा भावण इत्थीण इंदिया मणहरा ण णिज्झाए । सयणासणा विचित्ता इत्थि-
पसुविवज्जिया सेज्जा ॥ १० ॥ एस चउत्था ण कहे इत्थीण कहं तु पंचमा एसा । सद्दा रूवा गंधा रसफासा पंचमी एए
॥ ११ ॥ रागद्दोसविवज्जण अपरिग्गहभावणाउ पंचेव । सव्वा पणवीसेया एयासु न वट्टियं जं तु ॥ १२ ॥"

षड्विंशतिभिर्दशाकल्पव्यवहाराणामुद्देशनकालैः, क्रिया पूर्ववत्, तानेवोद्देशनकालान्–श्रुतोपचारान् दर्शयन्नाह सङ्ग्रहणिकारः

दस उद्देसणकाला दसाण कप्पस्स होंति छच्चेव । दस चेव ववहारस्स वहोंति सव्वेवि छव्वीसं ॥ १ ॥

निगदसिद्धा । सप्तविंशतिप्रकारेऽनगारचारित्रे सति–साधुचारित्रे सति तद्विषयो वा प्रतिषिद्धादिना प्रकारेण योऽतिचारः कृत इति प्राग्वत्, सप्तविंशतिभेदान् प्रतिपादयन्नाह सङ्ग्रहणिकारः–

वयछक्कमिंदियाणं च निग्गहो भावकरणसच्चं च । खमयाविरागयाविय मणमाईणं निरोहो य ॥ १ ॥

कायाण छक्क जोगाण जुत्तया वेयणाऽहियासणया । तह मारणंतियऽहियासणा य एएऽणगारगुणा ॥ २ ॥

गाथाद्वयम्, अस्य व्याख्या–व्रतषट्कं–प्राणातिपातादिविरतिलक्षणं रात्रिभोजनविरतिपर्यवसानम्, इन्द्रियाणां च श्रोत्रादीनां निग्रहः–इष्टेतरेषु शब्दादिषु रागद्वेषाकरणमित्यर्थः, भावसत्यं–भावलिङ्गम् अन्तःशुद्धिः, करणसत्यं च बाह्यं प्रत्युपेक्षणादिकरणसत्यं भण्यते, क्षमा क्रोधनिग्रहः, विरागता लोभनिग्रहः, मनोवाक्कायानामकुशलानामकरणं कुशलानामनिरोधश्च, कायानां–पृथिव्यादीनां षट्कं सम्यगनुपालनविषयतयाऽनगारगुणा इति, संयमयोगयुक्तता, वेदना–शीतादिलक्षणा तदभिसहना वा, तथा मारणान्तिकाऽभिसहना च–कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमित्यर्थः एतेऽनगारगुणा इति गाथाद्वयार्थः ॥ अष्टाविंशतिविध आचार एवाऽऽचारप्रकल्पः, क्रिया पूर्ववत्, अष्टाविंशतिभेदान् दर्शयति–

सत्थपरिण्णा[1] लोगो[2] विजओ य सीओसणिज्ज[3] संमत्तं[4] । आवंति[5] धुव[6] विमोहो[8] उवहाणसुय महापरिण्णा[7] य ॥ १ ॥

पिंडेसण[10] सिज्जि[11] रिया[12] भासज्जाया[13] य वत्थ[14] पाएसा[15] । उग्गह[16] पडिमा सत्तेक्क[23] तयं भावण[24] विमुत्तीओ[25] ॥ २ ॥

उग्घाय[26] मणुग्घायं[27] आरूवणा[28] तिविहमो णिसीहं तु । इय अट्ठावीसविहो आयारपकप्पणामोऽयं ॥ ३ ॥

गाथात्रयं निगदसिद्धमेव, एकोनत्रिंशद्भिः पापश्रुतप्रसङ्गैः, क्रिया पूर्ववत्, पापोपादानानि श्रुतानि पापश्रुतानि तेषां प्रसङ्गाः–तथाऽऽसेवनारूपा इति, पापश्रुतानि दर्शयन्नाह सङ्ग्रहणिकारः—

अट्ठनिमित्तंगाइं दिव्वुप्पायंतलिक्खभोमं च। अंगसरलक्खणवंजणं च तिविहं पुणोक्केक्कं ॥ १ ॥

सुत्तं [1]वित्ती तह वत्तियं च पावसुय अउणतीसविहं। गंधव्वनट्टवत्थुं आउं धणुवेयसंजुत्तं ॥ २ ॥

गाथाद्वयम्, अस्य व्याख्या—अष्ट निमित्ताङ्गानि दिव्यं–व्यन्तराद्यट्टहासादिविषयम्, उत्पातं–सहजरुधिरवृष्ट्यादिविषयम्, अन्तरिक्षं–ग्रहभेदादिविषयं, भौमं–भूमिविकारदर्शनादेवास्मादिदं भवतीत्यादिविषयम्, अङ्गम्–अङ्गविषयं स्वरं–स्वरविषयं, व्यञ्जनं–मषादि तद्विषयं, तथा च–अङ्गादिदर्शनतस्तद्विदो भाविनं सुखादि जानन्त्येव, त्रिविधं पुनरेकैकं दिव्यादि सूत्रं वृत्तिः तथा वार्तिकं च, इत्यनेन भेदेन–दिव्वाईण सरूवं अंगविवज्जाण होंति सत्तण्हं। सुत्तं सहस्स लक्खो य वित्ती तह कोडि वक्खाणं ॥ १ ॥ अंगस्स सयसहस्सं सुत्तं वित्ती य कोडि विन्नेया। वक्खाणं अपरिमियं इयमेव य वत्तियं जाण ॥ २ ॥' पापश्रुतमेकोनत्रिंशद्विधं, कथम्?, अष्टौ मूलभेदाः सूत्रादिभेदेन त्रिगुणिताश्चतुर्विंशतिः गन्धर्वादिसंयुक्ता एकोनत्रिंशद्भवन्ति, 'वत्थु'त्ति वास्तुविद्या 'आउ'न्ति वैद्यकं, शेषं प्रकटार्थं ॥

---

१ दिव्यादीनां स्वरूपमङ्गविवर्जितानां भवति सप्तानाम्। सूत्रं सहस्रं लक्षं च वृत्तिस्तथा कोटी व्याख्यानम् ॥ १ ॥ अङ्गस्य शतसहस्रं सूत्रं वृत्तिश्च कोटी विज्ञेया। व्याख्यानमपरिमितं इदमेव वार्तिकं जानीहि ॥ २ ॥

त्रिंशद्भिर्मोहनीयस्थानैः, क्रिया पूर्ववत्, सामान्येनैकप्रकृतिकर्म मोहनीयमुच्यते, उक्तं च–'[1]अट्ठविहंपि य कम्मं भणियं मोहोत्ति जं समासेण'मित्यादि, विशेषेण चतुर्थी प्रकृतिर्मोहनीयं तस्य स्थानानि–निमित्तानि भेदाः पर्याया मोहनीयस्थानानि, तान्यभिधित्सुराह सङ्ग्रहणिकारः

'वारिमज्झेवगाहित्ता, तसे पाणे विहिंसई[1]। छाएउ मुहं हत्थेणं, अंतोनायं गलेरवं[2] ॥ १ ॥ सीसावेढेण वेढित्ता, संकिलेसेण मारए[3]। सीसंमि जे य आहंतुं, दुहमारेण हिंसई[4] ॥ २ ॥ बहुजणस्स नेयारं, दीवं ताणं च पाणिणं[5]। साहारणे गिलाणंमि, पहू किच्चं न कुव्वई[6] ॥ ३ ॥ साहू अकम्म धम्माउ, जे भंसेइ उवट्ठिए[7]। णेयाउयस्स मग्गस्स, अवगारंमि वट्टई[8] ॥ ४ ॥ जिणाणं णंतणाणीणं, अवण्णं जो उ भासई[9]। आयरियउवज्झाए, खिंसई मंदबुद्धीए[10] ॥ ५ ॥ तेसिमेव य णाणीणं, संमं नो पडितप्पई[11]। पुणो पुणो अहिगरणं, उप्पाए तित्थभेयए[12] ॥ ६ ॥ जाणं आहंमिए जोए, पउंजइ पुणो पुणो[13]। कामे वमित्ता पत्थेइ, इहऽन्नभविए इयं[14] ॥ ७ ॥ भिक्खूणं बहुसुएऽहंति, जो भासइऽबहुस्सुए[15]। तहा य अतवस्सी उ, जो तवस्सित्तिऽहं वए[16] ॥ ८ ॥ जायतेएण बहुजणं, अंतोधूमेण हिंसई[17]। अकिच्चमप्पणा काउं, कयमेएण भासई[18] ॥ ९ ॥ नियडुवहिपणिहीए, पलिउंचे[19] साइजोगजुत्ते[20] य। बेई सव्वं मुसं वयसि[21], अक्खीणझंझए सया[22] ॥ १० ॥ अद्धाणंमि पवेसित्ता जो, धणं हरइ पाणिणं[23]। वीसंभित्ता उवाएणं, दारे तस्सेव लुब्भई[24] ॥ ११ ॥ अभिक्खमकुमारेहिं, कुमारेऽहंति पासई[25]। एवं अबंभयारीवि, बंभयारित्तिऽहं वए[26] ॥ १२ ॥ जेणेविस्सरियं णीए, वित्ते तस्सेव लुब्भई[27]। तप्पभावुट्ठिए वावि, अंतरायं करेइ से[28] ॥ १३ ॥ सेणावइं पसत्थारं, भत्तारं वावि हिंसई। रट्ठस्स वावि निगमस्स, नायगं सेट्ठिमेव वा[29] ॥ १४ ॥ अपस्समाणो पस्सामि, अहं देवेत्ति वा वए। अवण्णेणं च देवाणं[30], महामोहं पकुव्वइ ॥ १५ ॥

---

१ अष्टविधमपि च कर्म भणितं मोह इति यत् समासेन।

गाथाः पञ्चदश, आसां व्याख्या—'वारिमज्झे' पाणियमज्झे 'अवगाहित्त'त्ति तिव्वेण मणसा पाएण अक्कमित्ता तसे पाणे—इत्थिमाई विहिंसइ, 'से' तस्स महामोहमुप्पाएमाणे संकिलिट्ठचित्तत्तणओ य भवसयदुहवेयणिज्जं अप्पणो महामोहं पकुवइ, एवं सर्वत्र क्रिया वाच्या १, तथा 'छाएउ' ढंकिउं मुहं 'हत्थेणं'ति उवलक्खणमिदमन्नाणि य कन्नाईणि 'अंतोनदं'ति हिदए सदुक्खमारसंतं 'गलेरवं' गलएण अच्चंतं रडति हिंसति २, 'सीसावेढेण' अल्लचंमाइणा कएणाभिक्खणं वेढेत्ता 'संकिलेसेण' तिव्वासुहपरिणामेण 'मारए' हिंसइ जीवंति ३, सीसंमि जे य आहंतुं—मोग्गराइणा विभिंदिय सीसं 'दुहमारेण' महामोहजणगेण हिंसइत्ति ४, बहुजणस्स नेयारंति—पहुं सामित्ति भणियं होइ, दीवं समुद्दमिव वुज्झमाणाणं संसारे आसासथाणभूयं ताणं च—अण्णपाणाइणा ताणकारिणं 'पाणिणं' जीवाणं तं च हिंसइ, से तं विहिंसंते बहुजणसंमोहकारणेण महामोहं पकुवइ ५, साहारणे—सामण्णे गिलाणंमि पहू—समत्थो उवएसेण सइकरणेण वा तप्पिउं तहवि 'किच्चं' ओसहजायणाइ महाघोरपरिणामो न कुवइ सेऽवि महामोहं पकुवइ, सव्वसामण्णो य गिलाणो भवइ, तथाजिनोपदेशाद्, उक्तं च—'[1]किं भंते ! जो गिलाणं पडियरइ से धण्णे उदाहु जे तुमं दंसणेण पडिवज्जइ ?, गोयमा ! जे गिलाणं पडियरइ, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जे गिलाणं पडियरइ से मं दंसणेणं पडिवज्जइ

---

१ किं भदन्त ! यो ग्लानं प्रतिचरति स धन्य उताहो यो युष्मान् दर्शनेन प्रतिपद्यते ?, गौतम ! यो ग्लानं प्रतिचरति, तत् केनार्थेन भदन्तैव मुच्यते ?, गौतम ! यो ग्लानं प्रतिचरति स मां दर्शनेन प्रतिपद्यते, यो मां दर्शनेन प्रतिपद्यते

[1]जे मं दंसणेण पडिवज्जइ से गिलाणं पडियरइत्ति,आणाकरणसारं खु अरहंताणं दंसणं,से तेणट्ठेणं गोयमा! एवं वुच्चइ—जे गिलाणं पडियरइ से मं पडिवज्जइ, जे मं पडिवज्जइ से गिलाणं पडिवज्जईत्यादि ६, तहा 'साहुं' तवस्सिं अकम्म—वलात्कारेण धम्माओ—सुयचरित्तभेयाओ जे महामोहपरिणामे भंसेतित्ति—विनिवारेइ उवट्ठियं—सामीप्येन स्थितं ७, नेयाउयस्स—नयनशीलस्य मग्गस्स—णाणादिलक्खणस्स दूसणपगारेण अप्पाणं परं च विपरिणामंतो अवगारंमि वट्टइ, णाणे—'[2]काया वया य तेच्चिय' एवमाइणा, दंसणे '[3]एते जीवाणंता कहमसंखेज्जपएसियंमि लोयंमि ठाएज्जा ?', एवमाइणा, चारित्ते 'जीव[4]बहुत्ताउ कहमहिंसगत्तंति चरणाभाव' इत्यादिना ८, तथा जिणाणं—तित्थगराणं अणंतणाणीणं—केवलीणं अवन्नं—निंदं जो महाघोरपरिणामो 'पभासइ' भणति, कथं ?, ज्ञेयाऽनन्तत्वात्सर्वार्थज्ञानस्याभाव एव, तथा च—'[5]अज्जवि धावति णाणं अज्जवि लोओ अणंतओ होइ । अज्जवि न तुहं कोई पावइ सवण्णुयं जीवो ॥ १ ॥' एवमाइ पभासइ, न पुणज्जाणति जहा—'[6]खीणावरणो जुगवं लोगमलोगं जिणो पगासेइ । ववगयघणपडलो इव परिमिययं देसमाइच्चो ॥ १ ॥' ९, आयरियउवज्झाए

---

१ स ग्लानं प्रतिचरतीति, आज्ञाकरणसारमेवार्हतां दर्शनं, तदेतेनार्थेन गौतमैवमुच्यते—यो ग्लानं प्रतिचरति स मां प्रतिपद्यते यो मां प्रतिपद्यते स ग्लानं प्रतिपद्यते ( प्रतिचरति ) २। काया व्रतानि च तान्येव । ३ एते जीवा अनन्ताः कथमसंख्येयप्रदेशिके लोके तिष्ठेयुः ? । ४ जीवबहुत्वात् कथमहिंसकत्वमिति चरणाभावः ५ अद्यापि धावति ज्ञानमद्यापि लोकोऽनन्तको भवति । अद्यापि न तव कोऽपि प्राप्नोति सर्वज्ञतां जीवः ॥ १ ॥ ६क्षीणावरणो युगपद् लोकमलोकं जिनः प्रकाशयति । व्यपगतघनपटल इव परिमितं देशमादित्यः ॥ १ ॥

पसिद्धे 'खिंसइ' निंदइ जच्चाईहिं, अबहुस्सुया वा एए तहावि अम्हेवि एएसिं तु सगासे किंपि कहंचि अवहारियंति 'मंदबुद्धीए' बालेत्ति भणियं होइ १०, 'तेसिमेव'य आयरिओवज्झायाणं परमबंधूणं परमोवगारीणं'णाणीण'न्ति,गुणोवलक्खणं गुणेहिं पभा- विए पुणो तेसिं चेव कज्जे समुप्पण्णे 'संमं न पडितप्पइ' आहारोवगरणाईहिं णोवजुज्जेइ ११, 'पुणो पुणो'त्ति असइं 'अहिगरणं' जो तिस्साइ 'उप्पाए' कहेइ निवजत्ताइ 'तित्थभेयए' णाणाइमग्गविराहणत्थंति भणियं होइ १२, जाणं आहंमिए जोए—वसी- करणाइलक्खणे पउंजइ 'पुणो पुणो' असइत्ति१३, 'कामे' इच्छामयणभेयभिण्णे 'वमेत्ता' चइऊण, पव्वज्जमब्भुवगम्म 'पत्थेइ' अभिलसइ इहभविए—माणुस्से चेव अण्णभविए—दिव्वे १४, 'अभिक्खणं २' पुणो २ बहुस्सुएऽहंति जो भासए, बहुस्सुए ( बहुस्सुएण ) अण्णेण वा पुट्ठो स तुमं बहुस्सुओ ?, आमंति भणइ तुण्हिक्को वा अच्छइ, साहवो चेव बहुस्सुएत्ति भणति १५, अतवस्सी तवस्सित्ति विभासा १६, 'जायतेएण' अग्गिणा बहुजणं घरे छोढुं 'अंतो धूमेण' अब्भिंतरे धूमं काऊण हिंसइ १७, 'अकिच्चं' पाणाइवायाइ अप्पणा काउं कयमेएण भासइ—अण्णस्स उत्थोभं देइ १८, 'नियडुवहिपणिहीए पलिउंचइ' नियडी— अण्णहाकरणलक्खणा माया उवही तं करेइ जेण तं पच्छाइज्जइ अण्णहाकयं पणिही एवंभूत एव ( च ) रइ, अनेन प्रकारेण 'पलिउंचइ' वंचेइत्ति भणियं होइ १९, साइजोगजुत्ते य—अशुभमनोयोगयुक्तश्च २०, 'बेति' भणइ सव्वं मुसं वयइ सभाए २१, 'अक्खीणझंझए सया' अक्षीणकलह इत्यर्थः, झंझा—कलहो २२, 'अद्धाणंमि' पंथे 'पवेसेत्ता' नेऊण विस्संभेण जो धणं- सुवण्णाई हरइ पाणिणं—अच्छिदइ २३, जीवाणं, विसंभेत्ता—उवाएण केणइ अतुलं पीइं काऊण पुणो दारे—कलत्ते 'तस्सेव' जेण समं पीई कया तत्थ लुब्भइ २४, 'अभिक्खणं' पुणो २ अकुमारे संते कुमारेऽहंति भासइ २५, एवमबं-

भयारिंमि विभासा २६, जेणेविस्सरियं नीए–ऐश्वर्यं प्रापित इत्यर्थः, 'वित्ते' धणे तस्सेव संतिए लुब्भइ २७, तप्पभावुट्ठिए वावि–लोगसंमयत्तणं पत्ते तस्सेव केणइ पगारेण अंतरायं करेइ २८ सेणावइं रायाणुन्नायं वा चाउरंतसामिं पसत्थारं— लेहारियमाइ भत्तारं वा विहिंसइ रट्ठस्स वावि निगमस्स जहासंखं नायगं सेट्ठिमेव वा, निगमो–वणिसंघाओ २९, अप्पस्समाणो माइट्ठाणेण पासामि अहं देवत्ति वा वए ३०, 'अवन्नेणं च देवाणं' जह किं तेहिं कामगद्दहेहिं जे अम्हं न उवकरेंति, महामोहं पकुवइ कलुसियचित्तत्तणओ ३१, अयमधिकृतगाथानामर्थः। एकत्रिंशद्भिः सिद्धादिगुणैः, क्रिया पूर्ववत्, सितं ध्मातमस्येति सिद्धः आदौ गुणा आदिगुणाः सिद्धस्यादिगुणाः सिद्धादिगुणाः, युगपद्भाविनो न क्रमभाविन इत्यर्थः, तानेवोपदर्शयन्नाह सङ्ग्रहणिकारः—

पडिसेहेण संठाणवण्णगंधरसफासवेए य। पणपणदुपणट्ठतिहा इगतीसमकायसंगरुहा ॥ १ ॥

अस्या व्याख्या—प्रतिषेधेन संस्थानवर्णगन्धरसस्पर्शवेदानां, कियद्भेदानां ?–पञ्चपञ्चद्विपञ्चाष्टत्रिभेदानामिति, किम् ?–एगात्रिंशत्सिद्धादिगुणा भवन्ति, 'अकायसंगरुह'त्ति अकायः–अशरीरः असङ्गः–सङ्गवर्जितः अरुहः–अजन्मा, एभिः सहैकात्रिंशद्भवन्ति, तथा चोक्तं–"से णं दीहे ण हस्से ण वट्टे न तंसे न चउरंसे न परिमंडले ५ न किण्हे न नीले न लोहिए न हालिद्दे न सुक्किले ५ न सुब्भिगंधे न दुब्भिगंधे २ न तित्ते न कडुए न कसाए न अंबिले न महुरे ५ न कक्खडे न मउए

---

१ स न दीर्घः न ह्रस्वो न वृत्तो न त्र्यस्रो न चतुरस्रो न परिमण्डलो न कृष्णो न नीलो न लोहितो न हारिद्रो न शुक्लो न सुरभिर्न दुर्गन्धो न तिक्तो न कटुको न कषायो नाम्लो न मधुरो न कर्कशो न मृदुर्न.

न गरुए न लहुए न सीए न उण्हे न निद्धे न लुक्खे न काए ण संगे न रुहे न इत्थी न पुरिसे न नपुंसए," प्रकारान्तरेण सिद्धादिगुणान् प्रदर्शयन्नाह—

अहवा कंमे णव दरिसणंमि चत्तारि आउए पंच । आइम अंते सेसे दोदो खीणभिलावेण इगतीसं ॥ १ ॥

व्याख्या—'अथवे'ति व्याख्यान्तरप्रदर्शनार्थः, 'कर्मणि' कर्मविषया क्षीणाभिलापेनैकत्रिंशद्गुणा भवन्ति, तत्र नव दर्शनावरणीये, नवभेदा इति-क्षीणचक्षुर्दर्शनावरणः ४ क्षीणनिद्रः ५, चत्वार आयुष्के-क्षीणनरकायुष्कः ४ 'पंच आ-इमे'त्ति आद्ये ज्ञानावरणीयाख्ये कर्मणि पञ्च-क्षीणाभिनिबोधिकज्ञानावरणः ५ 'अंते'त्ति अन्त्ये-अन्तराये कर्मणि पञ्चैव क्षीणदानान्तरायः ५ शेषकर्मणि-वेदनीयमोहनीयनामगोत्रलक्षणे द्वौ द्वौ भेदौ भवतः, क्षीणसातावेदनीयः क्षीणासातावेद-नीयः क्षीणदर्शनमोहनीयः क्षीणचारित्रमोहनीयः क्षीणाशुभनाम क्षीणशुभनाम क्षीणनीचैर्गोत्रः क्षीणोच्चैर्गोत्र इति गाथार्थः ॥

द्वात्रिंशद्भिर्योगसङ्ग्रहैः, क्रिया पूर्ववत्, इह युज्यन्त इति योगाः-मनोवाक्कायव्यापाराः, ते चाशुभप्रतिक्रमणाधिका-रात्प्रशस्ता एव गृह्यन्ते, तेषां शिष्याचार्यगतानामालोचनानिरपलापादिना प्रकारेण सङ्ग्रहणानि योगसङ्ग्रहाः प्रशस्तयो-गसङ्ग्रहनिमित्तत्वादालोचनादय एव तथोच्यन्ते, ते च द्वात्रिंशद्भवन्ति, तदुपदर्शनायाह निर्युक्तिकारः—

आलोयणा निरवेलावे, आवईसु दढधम्मया । अणिस्सिओवहाणे यं, सिक्खा णिप्पडिकम्मयाँ ॥ १२७४ ॥

१ गुरुर्न लघुर्न शीतो नोष्णो न स्निग्धो न रूक्षो न कायवान् न सङ्गवान् न रुहो न स्त्री न पुरुषो न नपुंसकं

अण्णायया अलोहे य, तितिक्खा [10]अज्जवे [11]सुई । [12]सम्मदिट्ठी [13]समाही य, [14]आयारे विणओवए [15] ॥ १२७५ ॥
[16]धिई मई य [17]संवेगे, [18]पणिही [19]सुविहि [20]संवेर । अत्तदोसोवसंहारो[21], सव्वकामविरत्तिया[22] ॥ १२७६ ॥
[23]पच्चक्खाणा [24]विउस्सग्गे[25], अप्पमाए[26] लवालवे[27] । झाणसंवरजोगे[28] य, उदए मारणंतिए[29] ॥ १२७७ ॥
संगाणं च परिण्णा[30], पायच्छित्तकरणे[31] इय । आराहणा य [33]मरणंते, बत्तीसं जोगसंगहा ॥ १२७८ ॥

आसां व्याख्या—'आलोयण'त्ति प्रशस्तमोक्षसाधकयोगसङ्ग्रहाय शिष्येणाऽऽचार्याय सम्यगालोचना दातव्या १, 'निरवलावे'त्ति आचार्योऽपि प्रशस्तमोक्षसाधकयोगसङ्ग्रहायैव दत्तायामालोचनायां निरपलापः स्यात्, नान्यस्मै कथयेदित्यर्थः, एकारान्तश्च प्राकृते प्रथमान्तो भवतीत्यसकृदावेदितं यथा—'कयरे आगच्छइ दित्तरूवे'इत्यादि २, 'आवतीसु दढधम्मत'त्ति तथा योगसङ्ग्रहायैव सर्वेण साधुनाऽऽपत्सु द्रव्यादिभेदासु दृढधर्मता कार्या, आपत्सु सुतरां दृढधर्मेण भवितव्यमित्यर्थः, ३, 'अणिस्सिओवहाणे'त्ति प्रशस्तयोगसङ्ग्रहायैवानिश्रितोपधानं च कार्यम्, अथवाऽनिश्रित उपधाने च यत्नः कार्यः, उपदधातीत्युपधानं—तपः न निश्रितमनिश्रितम्—ऐहिकामुष्मिकापेक्षाविकलमित्यर्थः, अनिश्रितं च तदुपधानं चेति समासः ४, 'सिक्ख'त्ति प्रशस्तयोगसङ्ग्रहायैव शिक्षाऽऽसेवितव्या, सा च द्विप्रकारा भवति—ग्रहणशिक्षाऽऽसेवनाशिक्षा च ५, 'निप्पडिकम्मय'त्ति प्रशस्तयोगसङ्ग्रहायैव निष्प्रतिकर्मशरीरता सेवनीया, न पुनर्नागदत्तवदन्यथा वर्तितव्यमिति ६ प्रथमगाथासमासार्थः ॥ 'अन्नायय'त्ति तपस्यज्ञातता कार्या, यथाऽन्यो न जानाति तथा तपः कार्यं, प्रशस्तयोगाः सङ्गृहीता भवन्तीत्यतत् सर्वत्र योज्यं ७, 'अलोहे'त्ति अलोभश्च कार्यः, अथवाऽलोभे यत्नः कार्यः ८, 'तितिक्ख'त्ति तितिक्षा कार्या, परीषहादि-

जय इत्यर्थः ९,'अज्जवे'त्ति ऋजुभावः—आर्जवं तच्च कर्तव्यं १०,'सुइ'त्ति शुचिना भवितव्यं, संयमवतेत्यर्थः ११, 'सम्मदिट्ठि'त्ति सम्यग्—अविपरीता दृष्टिः कार्या, सम्यग्दर्शनशुद्धेरित्यर्थः १२, समाधिश्च कार्यः, समाधानं समाधिः—चेतसः स्वास्थ्यं १३, 'आचारे विणओवए'त्ति द्वारद्वयम्, आचारोपगः स्यात्, न मायां कुर्यादित्यर्थः १४, तथा विनयोपगः स्यात्, न मानं कुर्यादित्यर्थः १५, द्वितीयगाथासमासार्थः ॥ 'धिई मई य'त्ति धृतिर्मतिश्च कार्या, धृतिप्रधाना मतिरित्यर्थः १६,'संवेगे'त्ति संवेगः कार्यः १७,'पणिहि'त्ति प्रणिधिस्त्याज्या, माया न कार्येत्यर्थः १८,'सुविहि'त्ति सुविधिः कार्यः १९, 'संवरे'त्ति संवरः कार्यः, न तु न कार्य इति व्यतिरेकोदाहरणमत्र भावि २०,'अत्तदोसोवसंहारे'त्ति आत्मदोषोपसंहारः कार्यः २१, 'सव्वकामविरत्तय'त्ति सर्वकामविरक्तता भावनीया २२, इति तृतीयगाथासमासार्थः ॥ 'पच्चक्खाणे'त्ति मूलगुणउत्तरगुणविषयं प्रत्याख्यानं कार्यमिति द्वारद्वयं २३-२४,'विउस्सग्गे'त्ति विविध उत्सर्गो व्युत्सर्गः स च कार्य इति द्रव्यभावभेदभिन्नः, २५'अप्पमाए'त्ति न प्रमादोऽप्रमादः, अप्रमादः कार्यः २६, 'लवालवे'त्ति कालोपलक्षणं क्षणे २ सामाचार्यनुष्ठानं कार्यं २७, 'झाणसंवरजोगे'त्ति ध्यानसंवरयोगश्च कार्यः, ध्यानमेव संवरयोगः, २८,'उदये मारणंतिए'त्ति वेदनोदये मारणान्तिकेऽपि न क्षोभः कार्य इति २९ चतुर्थगाथासमासार्थः ॥ 'संगाणं च परिण्ण'त्ति सङ्गानां च ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभावेन परिज्ञा कार्या ३०, 'पायच्छित्तकरणे इय' प्रायश्चित्तकरणं च कार्यं ३१ 'आराहणा य मरणंति'त्ति आराधना च मरणान्ते कार्या, मरणकाल इत्यर्थः, ३२ एते द्वात्रिंशद् योगसङ्ग्रहा इति पञ्चमगाथासमासार्थः ॥ ॥ आद्यद्वाराभिधित्सयाऽऽह—

उज्जेणि अट्टणे खलु सीहगिरिसोपारए य पुहइवई । मच्छियमल्ले दुरलकूविए फलिहमल्ले य ॥ १२७९ ॥

[1]उज्जेणित्ति णयरी, तीए जियसत्तूरण्णो अट्टणो मल्लो अतीव वलवं, सोपारए पट्टणे पुहइवई राया सिंहगिरी नाम मल्लवल्लहो, पतिवरिसमट्टणजओहामिएण अणेण मच्छियमल्ले कए जिएण अट्टणेण भरुगच्छाहरणीए दूरुल्लकूवियाए गामे फलिहमल्ले कएत्ति । एवमक्षरगमनिकाऽन्यासामपि स्वबुद्ध्या कार्या, कथानकान्येव कथयिष्यामः, अधिकृतगाथा-प्रतिवद्धकथानकमपि विनेयजनहितायोच्यते–उज्जेणीणयरीए जियसत्तू राया, तस्स अट्टणो मल्लो सव्वरज्जेसु अजेओ, इओ य समुद्दतीरे सोपारयं णयरं, तत्थ सीहगिरी राया, सो य मल्लाणं जो जिणइ तस्स वहुं दवं देइ, सो य अट्टणो तत्थ गंतूण वरिसे २ पडायं गिण्हइ, राया चिंतेइ–एस अन्नाओ रज्जाओ आगंतूण पडायं हरइ, एस मम ओहावणत्ति पडिमल्लं मग्गइ, तेण एगो मच्छिओ दिट्ठो वसं पिवंतो, वलं च से विन्नासियं, नाऊण पोसिओ, पुणरवि अट्टणो आगओ, सो य किर महो होहितित्ति अणागयं चेव सयाओ णयराओ अप्पणो पत्थयणस्स अवल्लं भरिऊण अव्वाबाहेणं एइ,

---

१ उज्जयिनी नगरी, तस्या जितशत्रुराज्ञोऽट्टणो मल्लोऽतीव बलवान्, सोपारके पत्तने पृथ्वीपती राजा सिंहगिरिर्नाम मल्लवल्लभः, प्रतिवर्षमट्टनजयापभ्राजितेनानेन मात्स्यिकमल्ले कृते जितेनाट्टनेन भृगुकच्छहरण्यां दूरीयकूपिकाग्रामे कार्पासिकमल्लः कृत इति । उज्जयिनीनगर्यां जितशत्रू राजा, तस्याट्टनो मल्लः सर्वराज्येषु अजेयः, इतश्च समुद्रतीरे सोपारकं नगरं, तत्र सिंहगिरी राजा, स च मल्लानां यो जयति तस्मै बहुद्रव्यं ददाति, स चाट्टनस्तत्र गत्वा वर्षे २ पताकां हरति ( गृह्णाति ), राजा चिन्तयति–एषोऽन्यस्माद् राज्यादागत्य पताकां हरति, एषा ममापभ्राजनेति प्रतिमल्लं मार्गयति, तेनैको मात्स्यिको दृष्टो वसां पिबन्, बलं च तस्य परीक्षितं, ज्ञात्वा पोषितः, पुनरप्यट्टन आगतः, स च किल मल्लो भविष्यतीति अनागत एव स्वस्मात् नगरात् आत्मनः पथ्यदनस्य गोणीं भृत्वाऽव्याबाधेनायाति,

संपत्तो य सोपारयं, जुद्धे पराजिओ मच्छियमल्लेणं, गओ य सयं आवासं चिंतेइ, एयस्स वुड्ढी तरुणयस्स मम हाणी, अण्णं मल्लं मग्गइ, सुणइ य–सुरट्ठाए अत्थित्ति, एएण भरुयच्छाहरणीए गामे दूरुल्लकूवियाए करिसगो दिट्ठो–एगेण हत्थेण हलं वाहेइ एगेण फलहिओ उप्पाडेइ, तं च दट्ठूण ठिओ पेच्छामि से आहारंति, आवल्ला मुक्का, भज्जा य से भत्तं गहाय आगया, पत्थिया, कूरस्स उज्झमज्जीए घडओ पेच्छइ, जिमिओ सण्णाभूमि गओ, तत्थवि पेच्छइ सव्वं वत्तियं, वेगालिओ वसहिं तस्स य घरे मग्गइ, दिन्ना, ठिओ, संकहाए पुच्छइ,–का जीविया ?, तेण कहिए भणइ–अहं अड्डणो तुमं ईसरं करेमित्ति, तीसे भज्जाए से कप्पासमोल्लं दिन्नं, अवल्ला य, सा सवलद्धा उज्जेणिं गया, वमणविरेयणाणि कयाणि पोसिओ निजुद्धं च सिक्खाविओ, पुणरवि महिमाकाले तेणेव विहिणा आगओ, पढमदिवसे फलहियमल्लो मच्छियमल्लो य जुद्धे एगोवि न पराजिओ, राया बिइयदिवसे होहितित्ति अइगओ, इमेवि सए सए आलए गया,

---

१ संप्राप्तश्च सोपारकं, युद्धे पराजितो मात्स्यिकमल्लेन, गतश्च स्वकमावासं चिन्तयति, एतस्य वृद्धिस्तरुणस्य मम हानिः, अन्यं मल्लं मार्गयति, शृणोति च–सुराष्ट्रायामस्तीति, एतेन भृगुकच्छहरिण्यां ग्रामे दूरीयकूपिकायां कर्षको दृष्टः–एकेन हस्तेन हलं वाहयति एकेन कर्पासमुत्पाटयति, तं च दृष्ट्वा स्थितः पश्यामि अस्याहारमिति बलीवर्दौ मुक्तौ, भार्या च तस्य भक्तं गृहीत्वाऽऽगता, प्रस्थिता, उद्घाटने कूरस्य घटं प्रेक्षते, जिमितः संज्ञाभूमिं गतः, तत्रापि प्रेक्षते सर्वं वर्तितं, वैकालिको वसतिं तस्यैव गृहे मार्गयति, दत्ता, स्थितः, संकथायां पृच्छति–का जीविका ?, तेन कथिते भणति–अहमाढ्यं त्वामीश्वरं करोमीति, तस्य भार्यायै तेन कर्पासमूल्यं दत्तं बलीवर्दौ च, सा सबलीवर्दोज्जयिनीं गता ( साऽऽश्वस्ता, तौ उज्जयिनीं गतौ ), वमनविरेचनानि कृतानि, पोषितो नियुद्धं च शिक्षितः, पुनरपि महिमकाले तेनैव विधिनाऽऽगतः, प्रथमदिवसे कर्पासमल्लो मात्स्यिकमल्लश्च युद्धे एकोऽपि न पराजितः, द्वितीयदिवसे भविष्यतीति राजाऽतिगतः, इमावपि स्वके आलये गतौ,

[1]अट्टणेण फलहियमल्लो भणिओ—कहेहि पुत्ता ! जं ते दुक्खावियं, तेण कहियं, मक्खित्ताऽक्खेवेणं पुणण्णवीकयं, मच्छियस्सवि रण्णा संमद्दगा पेसिया, भणइ—अहं तस्स पिउपि ण विभेमि, को सो वराओ ?, वितियदिवसे समजुज्झा, ततियदिवसे अंवियपहारो वइसाहं ठिओ मच्छिओ, अट्टणेण भणिओ फलिहित्ति, तेण फलहिग्गाहेण गहिओ सीसे, तं कुंडियनालगंपिव एगंते पडियं, सक्कारिओ गओ उज्जेणिं, पंचलक्खणाण भोगाण आभागी जाओ, इयरो मओ, एवं जहा पडागा तहा आराहणपडागा, जहा अट्टणो तहा आयरिओ, जहा मल्लो तहा साहू, पहारा अवराहा, जो ते गुरुणो आलोएइ सो निस्सल्लो निव्वाणपडागं तेलोकरंगमज्झे हरइ, एवं आलोयणं प्रति योगसङ्ग्रहो भवति । एए सीस गुणा, निरवलावस्स जो अन्नस्स न कहेइ एरिसमेतेण पडिसेवियंति, एत्थ उदाहरणगाहा—

दंतपुरदन्तचक्के सच्चवदी दोहले य वणयरए । धणमित्त धणसिरी य पउमसिरी चेव दढमित्तो ॥ १२८० ॥

---

१ अट्टनेन कर्पासमल्लो भणितः—कथय पुत्र ! यत्ते दुःखितं, तेन कथितं, म्रक्षित्वा अक्षेपेण पुनर्नवीकृतं, मात्स्यिकायापि राज्ञा संमर्दकाः प्रेपिताः, भणति—अहं तस्य पितुरपि न विभेमि, कः स वराकः, द्वितीयदिवसे समयुद्धौ तृतीयदिवसे प्रहारार्त्तो वैशाखं स्थितो मात्स्यिकः, अट्टनेन भणितः—फलिहीति, तेन फलहिग्राहेण गृहीतः शीर्षे, तत् कुण्डिकानालमिवैकान्ते पतितं, सत्कारितो गत उज्जयिनीं, पञ्चलक्षणानां भोगानामाभागीजातः, इतरो मृतः, एवं यथा पताका तथाऽऽराधनापताका, यथाऽट्टनस्तथा आचार्यः, यथा मल्लस्तथा साधुः, प्रहारा अपराधाः, यतस्तान् गुरूणामालोचयति स निश्शल्यो निर्वाणपताकां त्रैलोक्यरङ्गमध्ये हरति, एवमालोचनां प्रति योगसंग्रहो भवति । एते शिष्यगुणाः, निरपलापस्य—योऽन्यस्मै न कथयति—ईदृशमेतेन प्रतिसेवितमिति, अत्रोदाहरणगाथा ।

अस्या व्याख्या—कथानकादवसेया, तच्चेदं—दंतपुरे णयरे दंतचक्को राया, सच्चवई देवी, तीसे दोहलो—कहं दंतमए पासाए अभिरमिज्जइ ?, रायाए पुच्छियं, दंतनिमित्तं घोसावियं रण्णा जहा—उचियं मोल्लं देमि, जो न देइ तस्स राया सरीरनिग्गहं करेइ, तत्थेव णयरे धणमित्तो वाणियओ, तस्स दो भारियाओ, धणसिरी महंती पउमसिरी तु डहरिया पीययरी यत्ति, अण्णया सवत्तीणं भंडणं, धणसिरी भणइ—किं तुमं एवं गविया ? किं तुज्झ महाओ अहियं, जहा सच्च-वईए तहा ते किं पासाओ कीरेज्जा ?, सा भणइ—जइ न कीरइ तो अहं नेवत्ति उवगरए ( वरए ) बारं बंधित्ता ठिया, वाणियओ आगओ पुच्छइ—कहिं पउमसिरी ?, दासीहिं कहियं, तत्थेव अइयओ, पसाएइ, न पसीयइत्ति, जइ नत्थि न जीवामि, तस्स मित्तो दढमित्तो नाम, सो आगओ, तेण पुच्छियं, सव्वं कहेइ, भणइ—कीरउ, मा इमाए मरंतीए तुमंपि मरिज्जासि, तुमंमि मरंते अहं, रायाए य घोसावियं, तो पच्छन्नं कायव्वं ताहे सो दढमित्तो पुलिंदगपाउग्गाणि

---

१ दन्तपुरे नगरे दन्तचक्रो राजा, सत्यवती देवी, तस्या दोहदः कथं दन्तमये प्रासादेऽभिरमे, राज्ञा पृष्टं, दन्तनिमित्तं घोषितं राज्ञा यथा उचितं मूल्यं ददामि, यो न दास्यति तस्य राजा शरीरनिग्रहं करोति, तत्रैव नगरे धनमित्रो वणिक्, तस्य द्वे भार्ये, धनश्रीर्महती पद्मश्रीस्तु लघ्वी प्रियतरा चेति, अन्यदा सपत्न्योर्भण्डनं, धनश्रीर्भणति—किं त्वमेवं गर्विता ? किं तव मत् अधिकं, यथा सत्यवत्यास्तव किं प्रासादः क्रियते ?, सा भणति—यदि न क्रियते तदाऽहं नैवेत्यपवरके द्वारं बद्ध्वा स्थिता, वणिगागतः पृच्छति—क पद्मश्रीः ?, दासीभिः कथितं, तत्रैवाभिगतः, प्रसादयति, न प्रसीदतीति, यदि नास्ति न जीवामि, तस्य मित्रं दृढमित्रो नाम, स आगतः, तेन पृष्टं, सर्वं कथयति, भणति—क्रियतां, माऽस्यां म्रियमाणायां त्वमपि मृथाः, त्वयि म्रियमाणेऽहं, राज्ञा च घोषितं, ततः प्रच्छन्नं करणीयं, तदा स दृढमित्रः पुलिन्द्रप्रायोग्याणि

[1]मणीयमलत्तगं कंकणं च गहाय अडविं गओ, दंता लद्धा पुंजो कओ, तेण तणपिंडिगाण मज्झे वंधित्ता सगडं भरेत्ता आणीया, णयरे पवेसिज्जंतेसु वसहेण तणपिंडगा कड्ढिया, तओ खडत्ति दंतो पडिओ, नगरगोत्तिएहिं दिट्ठो गहिओ रायाए उवणीओ, वज्झो णीणिज्जइ, धणमित्तो सोऊण आगओ, रायाए पायवडिओ विन्नवेइ, जहा एए मए आणाविया, सो पुच्छिओ भणइ-अहमेयं न याणामि कोत्ति, एवं ते अवरोप्परं भणंति, रायाए सवहसाविया पुच्छिया, अभओ दिण्णो, परिकहियं, पूएत्ता विसज्जिया, एवं निरवलावेण होयव्वं आयरिएणं। वितिओ-एगेण एगस्स हत्थे भाणं वा किंचि पणामियं, अंतरा पडियं, तत्थ भाणियव्वं-मम दोसो इयरेणावि ममंति। निरवलावेत्ति गयं २। इयाणिं आवईसु दढधम्मत्तणं कायव्वं, एवं जोगा संगहिया भवंति, ताओ य आवइओ चत्तारि, तं०-दव्वावई ४, उदाहरणगाहा—

उज्जेणीए धणवसु अणगारे धम्मघोस चंपाए। अडवीए सत्थविब्भम वोसिरणं सिज्झणा चेव ॥ १२८१ ॥

---

१ मणिकां अलक्तकं कङ्कणानि च गृहीत्वाऽटवीं गतः, दन्ता लब्धाः पुञ्जः कृतः, तेन तृणपिण्डीनां मध्ये वद्ध्वा शकटं भृत्वाऽऽनीताः, नगरे प्रविश्यमा, नेषु वृषभेण तृणपिण्ड्यः कृष्टाः, ततः खटदिति दन्तः पतितः, नगरगुप्तिकैर्दृष्टो गृहीतश्च, राज्ञ उपनीतः, वध्यो निष्काश्यते, धनमित्रः श्रुत्वाऽऽगतः, राज्ञः पादयोः पतितो विज्ञपयति-यथा मयैते आनायिताः, स पृष्टो भणति-अहमेनं न जानामि क इति, एवं तौ परस्परं भणतः, राज्ञा शपथशप्तौ पृष्टौ, अभयं दत्तं, परिकथितं, पूजयित्वा विसृष्टौ। एवं निरपलापेन भवितव्यं आचार्येण। द्वितीयः-एकेनैकस्य हस्ते भाजनं वा किञ्चिद्दत्तं, अन्तरा पतितं, तत्र भणितव्यं-मम दोषः, इतरेणापि ममेति। निरपलापमिति गतम् २। इदानीमापत्सु दृढधर्मता कर्त्तव्या, एवं योगाः संगृहीता भवन्ति, ताश्चापदश्चतस्रः, तद्यथा-द्रव्यापद् ४, उदाहरणगाथा-

अस्या व्याख्या कथानकादवसेया, तच्चेदं—उज्जेणी णयरी, तत्थ वसू वाणियओ, सो चंपं जातुकामो उग्घोसणं कारेइ जह [नाए] धन्नो, एयं अणुन्नवेइ धम्मघोसो नामणगारो, तेसु दूरं अडविमइगएसु पुलिंदेहिं विलोलिओ सत्थो इओ तइओ नट्ठो, सो अणगारो अण्णेण लोएण समं अडविं पविट्ठो, ते मूलाणि खायंति पाणियं च पियंति, सो निमंतिज्जइ, नेच्छइ आहारज्जाए, एगत्थ सिलायले भत्तं पच्चक्खायं, अदीणस्स अहियासेमाणस्स केवलणाणमुप्पण्णं सिद्धो, दढधम्मयाए जोगा संगहिया, एसा दव्वावई, खेत्तावई खेत्ताणं असईए कालावई ओमोदरियाइ, भावावईए उदाहरणगाहा—

महुराए जउण राया जउणावंकेण दंडमणगारे । वहणं च कालकरणं सक्कागमणं च पव्वज्जा ॥ १२८२ ॥

व्याख्या कथानकादवसेया, तच्चेदं-महुराए णयरीए जउणो राया, जउणावंकं उज्जाणं अवरेण, तत्थ जउणाए कोप्परो दिण्णो, तत्थ दंडो अणगारो आयावेइ, सो रायाए निंतेण दिट्ठो, तेण रोसेण असिणा सीसं छिन्नं, अन्ने भणंति—फलेण आहओ, सव्वेहिंवि मणुस्सेहिं पत्थररासी कओ, कोवोदयं पइ तस्स आवई, कालगओ सिद्धो, देवागमणं महिमाकरणं

१ उज्जयिनी नगरी, तत्र वसुर्वणिक्, स चम्पां यातुकाम उद्घोषणां कारयति, यथा धन्यः, एतमनुज्ञापयति धर्मघोषो नामानगारः, तेषु दूरमटवीमतिगतेषु पुलिन्द्रैर्विलोलितः सार्थः इतस्ततो नष्टः, सोऽनगारोऽन्येन लोकेन सममटवीं प्रविष्टः, ते मूलानि खादन्ति पानीयं च पिबन्ति, स निमन्त्र्यते, नेच्छति आहारजातं, एकत्र शिलातले भक्तं प्रत्याख्यातं, अदीनस्याध्यासीनस्य केवलज्ञानमुत्पन्नं सिद्धः, दृढधर्मतया योगाः संगृहीताः, एषा द्रव्यापद्, क्षेत्रापत् क्षेत्राणामसति कालापत् अवमोदरिकादि भावापद्युदाहरणगाथा । २ मथुरायां नगर्यां यमुनो राजा यमुनावक्रमुद्यानमपरस्यां, तत्र यमुनायां स्कन्धावारो दत्त, तत्र दण्डोऽनगार आतापयति, स राज्ञा निर्गच्छता दृष्टः, तेन रोषेणासिना शीर्षं छिन्नं, अन्ये भणन्ति—बीजपूरेणाहतः, सर्वैरपि मनुष्यैः प्रस्तरराशिः कृतः, कोपोदयं प्रति तस्य आपत्, कालगतः सिद्धः, देवागमनं महिमकरणं

संक्कागमणं पालएणं विमाणेण, तस्सवि य रण्णो अधिती जाया, वज्जेण भेसिओ सक्केण—जइ पव्वइसितो मुच्चसि, पव्वइओ, थेराण अंतिए अभिग्गहं गेण्हइ—जइ भिक्खागओ संभरामि ण जेमेमि, जइ दरजिमिओ ता सेसगं विगिंचामि, एवं तेण किर भगवया एगमवि दिवसं नाऽऽहारियं, तस्सवि दव्वावई, दंडस्स भावावई, आवईसु दढधम्मतत्ति गयं ३। इयाणिं अणिस्सिओवहाणेत्ति, न निश्रितमनिश्रितं, द्रव्योपधानं उपधानकमेव भावोपधानं तपः, सो किर अणिस्सिओ कायव्वो इह परत्थ य, जहा केण कओ ?, एत्थोदाहरणगाहा—

पाडलिपुत्त महागिरि अज्जसुहत्थी य सेट्ठि वसुभूती। वइदिस उज्जेणीए जियपडिमा एलकच्छं च ॥ १२८३ ॥

इमीए[2] वक्खाणं—अज्जथूलभद्दस्स दो सीसा—अज्जमहागिरी अज्जसुहत्थी य, महागिरी अज्जसुहत्थिस्स उवज्झाया, महागिरी गणं सुहत्थिस्स दाऊण वोच्छिण्णो जिणकप्पोत्ति, तहवि अपडिबद्धया होउत्ति गच्छपडिबद्धा जिणकप्पपरिकम्मं

---

१ शक्रागमनं पालकेन विमानेन, तस्यापि च राज्ञोऽधृतिर्जाता, वज्रेण भापितः शक्रेण—यदि प्रव्रजसि तर्हि मुच्यसे, प्रव्रजितः, स्थविराणामन्तिकेऽभिग्रहं गृह्णाति—यदि भिक्षागतः स्मरामि न जेमामि, यदि अर्धजिमितस्तदा शेषं त्यजामि, एवं तेन किल भगवतैकस्मिन्नपि दिवसे नाहृतं, तस्यापि द्रव्यापत्, दण्डस्य भावापत्, आपत्सु दृढधर्मेतेति गतं ३। इदानीमनिश्रितोपधानमिति, तत् किलानिश्रितं कर्त्तव्यं इह परत्र च, यथा केन कृतं ?, अत्रोदाहरणगाथा—
२ अस्या व्याख्यानं—आर्यस्थूलभद्रस्य द्वौ शिष्यौ—आर्यमहागिरिरार्यसुहस्ती च, महागिरिरार्यसुहस्तिन उपाध्यायः, महागिरिर्गणं सुहस्तिने दत्त्वा व्युच्छिन्नो जिनकल्प इति, तथाप्यप्रतिबद्धता भवत्विति गच्छप्रतिबद्धाः जिनकल्पपरिकर्मणां

करेंति, ते विहरंता पाडलिपुत्तं गया, तत्थ वसुभूती सेट्ठी, तेसिं अंतियं धम्मं सोच्चा सावगो जाओ, सो अण्णया भणइ अज्जसुहत्थिं—भयवं! मज्झ दिन्नो संसारनित्थरणोवाओ, मए सयणस्स परिकहियं तं न तहा लग्गई, तुब्भेवि ता अणभिजोएणं गंतूणं कहेहित्ति, सो गंतूण पकहिओ, तत्थ य महागिरी पविट्ठो, ते दट्ठूण सहसा उट्ठिओ, वसुभूती भणइ—तुब्भवि अन्ने आयरिया?, ताहे सुहत्थी तेसिं गुणसंथवं करेइ, जहा—जिणकप्पो अतीतो तहावि एए एवं परिकम्मं करेंति, एवं तेसिं चिरं कहित्ता अणुव्वयाणि य दाऊण गओ सुहत्थी, तेण वसुभूइणा जेमित्ता ते भणिया—जइ एरिसो साहू एज्जतो से तुब्भे उज्झंतगाणि एवं करेज्ज, एवं दिण्णे महाफलं भविस्सइ, बीयदिवसे महागिरी भिक्खस्स पविट्ठा, तं अपुव्वकरणं दट्ठूण चिंतेइ—दव्वओ ४, णायं जहा णाओ अहंति तहेव अब्भमिते नियत्ता भणंति—अज्जो! अणेसणा कया, केणं? तुमे जेणसि कल्लं अब्भुट्ठिओ, दोवि जणा वतिदिसं गया, तत्थ जियपडिमं वंदित्ता अज्जमहागिरी एलकच्छं गया

---

१ कुर्वन्ति, ते (सुहस्तिनः) विहरन्तः पाटलीपुत्रं गताः, तत्र वसुभूतिः श्रेष्ठी, तेषामन्तिके धर्मं श्रुत्वा श्रावको जातः, सोऽन्यदा भणति आर्यसुहस्तिनं—भगवन्! मह्यं दत्तः संसारनिस्तरणोपायः, मया स्वजनाय परिकथितं तत्र तथा लगति, यूयमपि तत् अनभियोगेन गत्वा कथयतेति, स गत्वा प्रकथितः, तत्र च महागिरिः प्रविष्टः, तान् दृष्ट्वा सहसोत्थितः, वसुभूतिर्भणति—युष्माकमप्यन्ये आचार्याः?, तदा सुहस्तिनस्तेषां गुणसंस्तवं कुर्वन्ति, यथा जिनकल्पोऽतीतस्तथाप्येते एवं परिकर्म कुर्वन्ति, एवं तेभ्यश्चिरं कथयित्वाऽणुव्रतानि च दत्त्वा गतः सुहस्ती, तेन वसुभूतिना जिमित्वा ते भणिताः—यद्येतादृशः साधुरायायात् तदा तस्मै यूयमुज्झितकान्येवं कुर्यात्, एवं दत्ते महाफलं भविष्यति, द्वितीयदिवसे महागिरिर्भिक्षायै प्रविष्टः, तदपूर्वकरणं दृष्ट्वा चिन्तयति—द्रव्यतः ४, ज्ञातं यथा ज्ञातोऽहमिति तथैवाभ्रान्ता निर्गता भणन्ति—आर्य! अनेषणा कृता, कथं?, त्वं येनासि कल्येऽभ्युत्थितः, द्वावपि जनौ विदेशं गतौ, तत्र जीवप्रतिमां वन्दित्वा आर्यमहागिरय एडकाक्षं गता

गयग्गपदगं वंदया, तस्स कहं एलगच्छं नामं ?, तं पुव्वं दसण्णपुरं नगरमासी, तत्थ साविया एगस्स मिच्छदिट्ठिस्स दिण्णा, वेयालियं आवस्सयं करेति पच्चक्खाइ य, सो भणइ–किं रत्तिं उट्ठित्ता कोइ जेमेइ ?, एवं उवहसइ, अण्णया सो भणइ–अहंपि पच्चक्खामि, सा भणइ–भंजिहिसि, सो भणइ–किं अण्णयावि अहं रत्तिं उट्ठेत्ता जेमेमि ?, दिन्नं, देवया चिंतेइ–साविग्रं उवासेइ अज्ज णं उवालभामि, तस्स भगिणी तत्थेव वसइ, तीसे रूवेण रत्तिं पहेणयं गहाय आगया, पच्चक्खइओ, सावियाए वारिओ भणइ–तुब्भच्चएहिं आलपालेहिं किं ?, देवयाए पहारो दिण्णो, दोवि अच्छिगोलगा भूमीए पडिया, सा मम अयसो होहित्ति काउस्सग्गं ठिया, अड्ढरत्ते देवया आगया भणइ–किं साविए !, सा भणइ–मम एस अजसोत्ति ताहे अण्णस्स एलगस्स अच्छीणि सप्पएसाणि तक्खणमारियस्स आणेत्ता लाइयाणि, तओ से सयणो भणइ–तुब्भं अच्छीणि एलगस्स जारिसाणित्ति, तेण सव्वं कहियं, सड्ढो जाओ, जणो कोउहल्लेण एति पेच्छगो, सव्वरज्जे फुडं भणइ–

---

१ गजाग्रपदकवन्दकाः, तस्य कथमेडकाक्षं नाम ?, तत् पूर्वं दशार्णपुरं नगरमासीत्, तत्र श्राविका एकस्मै मिथ्यादृष्टये दत्ता, विकाले आवश्यकं करोति प्रत्याख्याति च, स भणति–किं रात्रावुत्थाय कोऽपि जेमति ?, एवमुपहसति, अन्यदा स भणति–अहमपि प्रत्याख्यामि, सा भणति–भङ्क्ष्यसि, स भणति–किमन्यदाऽप्यहं रात्रावुत्थाय जेमामि, दत्तं, देवता चिन्तयति–श्राविकामुद्भ्राजते अद्यैनमुपालभे, तस्य भगिनी तत्रैव वसति, तस्या रूपेण रात्रौ प्रहेणकं गृहीत्वाऽऽगता, प्रत्याख्यायकः श्राविकया वारितो भणति–त्वदीयैः प्रलापैः किं ?, देवतया प्रहारो दत्तः, द्वावप्यक्षिगोलकौ भूमौ पतितौ, सा ममायशो भविष्यतीति कायोत्सर्गे स्थिता, अर्धरात्रे देवताऽऽगता भणति–किं श्राविके ?, सा भणति–ममैतदयश इति, तदाऽन्यस्यैडकस्याक्षिणी सप्रदेशे तत्क्षणमारितस्यानीय योजितानि, ततस्तस्य स्वजनो भणति–तवाक्षिणी एडकस्य यादृशे इति, तेन सर्वं कथितं, श्राद्धो जातः, जनः कुतूहलेनायाति प्रेक्षकः, सर्वराज्ये स्फुटं भण्यते—

कओ एसि ?, जत्थ सो एलकच्छओ, अण्णे भणंति—सो चेव राया, ताहे दसण्णपुरस्स एलकच्छं नामं जायं, तत्थ गयग्गपयओ पव्वओ, तस्स उप्पत्ती, तत्थेव दसण्णपुरे दसण्णभद्दो राया, तस्स पंचसयाणि देवीणोरोहो, एवं सो जोव्वणेण रूवेण य पडिबद्धो एरिसं अण्णस्स नत्थित्ति, तेणं कालेणं तेणं समएणं भगवओ महावीरस्स दसण्णकूडे समोसरणं, ताहे सो चिंतेइ—तहा कल्ले वंदामि जहा केणइ न अण्णेण वंदियपुव्वो, तं च अज्झत्थियं सक्को णाऊण एइ, इमोवि महया इड्डीए निग्गओ वंदिओ य सव्विड्डीए, सक्कोवि एरावणं विलग्गो, तत्थ अट्ठ दंते विउव्वेइ, एक्केक्के दंते अट्ठट्ठ वावीओ एक्केक्काए वावीए अट्ठट्ठ पउमाइं एक्केक्कं पउमं अट्ठपत्तं पत्ते य २ बत्तीसइबद्धनाडगं, एवं सो सव्विड्डीए एरावणविलग्गो आयाहिणं पयाहिणं करेइ, ताहे तस्स हत्थिस्स दसण्णकूडे पव्वए य पयाणि देवप्पहावेण उट्ठियाणि, तेण णामं कयं गयग्गपदग्गोत्ति, ताहे सो दसन्नभद्दो तं पेच्छिऊण एरिसा कओ अम्हारिसाणमिद्धी ?, अहो कएल्लओऽणेण धम्मो, अहमवि करेमि, ताहे सो पव्वयइ,

---

१ कुत आगतासि ?, यत्र स एडकाक्षः, अन्ये भणन्ति—स एव राजा, तदा दशार्णपुरस्यैडकाक्षं नाम जातं, तत्र गजाग्रपदः पर्वतः, तस्योत्पत्तिः—दशार्णपुरे दशार्णभद्रो राजा, तस्य पञ्चशतानि देवीनामवरोधः, एवं स यौवनेन रूपेण च प्रतिबद्धोऽन्यस्येदृशं नास्तीति, तस्मिन् काले तस्मिन् समये भगवतो महावीरस्य दशार्णकूटे समवसरणं, तदा स चिन्तयति—तथा कल्ये वन्दिताहे यथा केनचिदन्येन वन्दितपूर्वः, तदध्यवसितं च शक्रो ज्ञात्वाऽऽयाति, अयमपि महत्या ऋद्ध्या निर्गतो वन्दितश्च सर्वर्द्ध्या, शक्रोऽप्यैरावणं विलग्नः, तत्राष्ट दन्तान् विकुर्वति, एकैकस्मिन् दन्ते अष्टाष्ट वापीः एकैकस्यां वाप्यामष्टाष्ट पद्मानि एकैकं पद्ममष्टपत्रं पत्रे पत्रे च द्वात्रिंशद्बद्धं नाटकं, एवं स सर्वर्द्ध्या ऐरावणविलग्न आदक्षिणं प्रदक्षिणं करोति, तदा तस्य हस्तिनो दशार्णकूटे पर्वते च पादा देवताप्रभावेनोत्थिताः, तेन नाम कृतं गजाग्रपदक ( दाग्र ) इति, तदा स दशार्णभद्रस्तां प्रेक्ष्य ईदृशी कुतोऽस्माकमृद्धिः ?, अहो कृतोऽनेन धर्मः, अहमपि करोमि, तदा स प्रव्रजति,

सा गयग्गपयस्स उप्पत्ती, तत्थ महागिरीहिं भत्तं पच्चक्खायं देवत्तं गया, सुहत्थीवि उज्जेणिं जियपडिमं वंदया गया' ज्जाणे ठिया, भणिया य साहुणो–वसहिं मग्गहत्ति, तत्थ एगो संघाडगो सुभद्दाए सिट्ठिभज्जाए घरं भिक्खस्स अइगओ' च्छिया ताए–कओ भगवंतो ?, तेहिं भणियं–सुहत्थिस्स, वसहिं मग्गामो, जाणसालाउ दरिसियाउ, तत्थ ठिया, अन्न- ा पओसकाले आयरिया नलिणिगुम्मं अज्झयणं परियट्टंति, तीसे पुत्तो अवंतिसुकुमालो सत्ततले पासाए बत्तीसाहिं ज्जाहिं समं उवललइ, तेण सुत्तविबुद्धेण सुयं, न एयं नाडगंति भूमीओ भूमीयं सुणंतो २ उदिण्णो, वाहिं निग्गओ, त्थ एरिसंति जाई सरिया, तेसिं मूलं गओ, साहइ–अहं अवंतिसुकुमालोत्ति नलिणिगुम्मे देवो आसि, तस्स उस्सुग्गो वयामि, असमत्थो य अहं सामन्नपरियागं पालेउं, इंगिणिं साहेमि, तेवि मोयावित्ता, तेणं पुच्छियत्ति, नेच्छति, सयमेव ोयं करेंति, मा सयंगिहीयलिंगो हवउत्ति लिंगं दिण्णं, मसाणे कंथरे कुंडगं, तत्थ भत्तं पच्चक्खायं, सुकुमालएहिं

---

१ एषा गजाग्रपदकस्य उत्पत्तिः, तत्र महागिरिभिर्भक्तं प्रत्याख्यातं देवत्वं गताः, सुहस्तिनोऽपि उज्जयिनीं जीवत्प्रतिमावन्दका गताः, उद्याने स्थिताः णितश्च साधवः वसतिं मार्गयतेति, तत्रैकः संघाटकः सुभद्रायाः श्रेष्ठिभार्याया गृहं भिक्षायातिगतः, पृष्टास्तया–कुतो भगवन्तः ?, तैर्भणितं–सुहस्तिनः, सतिं मार्गयामः, यानशाला दर्शिताः, तत्र स्थिता , अन्यदा प्रदोषकाले आचार्या नलिनीगुल्मसध्ययनं परिवर्त्तयन्ति, तस्याः, पुत्रोऽवन्तीसुकुमालः सप्ततले ासादे द्वात्रिंशता भार्याभिः सममुपललति, तेन सुप्तावबुद्धेन श्रुतं, नैतन्नाटकमिति भूमेर्भूमिमुत्तीर्णः शृण्वन् , बहिर्निर्गतः, क्वेदृशमिति जातिः स्मृता, तेषां ूलं गतः, कथयति–अहं अवन्तिसुकुमाल इति नलिनीगुल्मे देवोऽभवं, तस्यायुत्सुकः प्रव्रजामि, असमर्थश्चाहं श्रामण्यं पालयितुं इङ्गिनीं करोमि, तेऽपि भणन्ति– ) मातुर्मोचयित्वा, तेन पृष्टेति, नेच्छति, स्वयमेव लोचं करोति, मा स्वयंगृहीतलिङ्गो भूदिति लिङ्गं दत्तं, श्मशाने कंथेरकुडङ्गं, तत्र भक्तं प्रत्या- ख्यातं, सुकुमालयोः

पाएहिं लोहियगंधेण सिवाए सपेल्लियाए आगमणं, सिवा एगं पायं खायइ, एगं चिल्लगाणि, पढमे जामे जण्णुयाणि बीए ऊरू तइए पोट्टं कालगओ, गंधोदगपुप्फवासं, आयरियाणं आलोयणा, भज्जाणं परंपरं पुच्छा, आयरिएहिं कहियं, सब्बिड्ढीए सुण्हाहिं समं गया मसाणं, पव्वइयाओ य, एगा गुव्विणी नियत्ता, तेसिं पुत्तो तत्थ देवकुलं करेइ, तं इयाणिं महाकालं जायं, लोएण परिग्गहियं, उत्तरचूलियाए भणियं पाडलिपुत्तेति, समत्तं अणिस्सियतवो महागिरीणं ४ । इयाणिं सिक्खत्ति पयं, सा दुविहा-गहणसिक्खा आसेवणासिक्खा य, तत्थ—

खितिवणउसभकुसग्गं रायगिहं चंपपाडलीपुत्तं । नंदे सगडाले थूलभद्दसिरिए वररुची य ॥ १२८४ ॥

एईए वक्खाणं—अतीतअद्धाए खिइपइट्ठियं णयरं, जियसत्तू राया, तस्स णयरस्स वत्थूणि उस्सण्णाणि, अण्णं णयरट्ठाणं वत्थुपाढएहिं मग्गावेइ, तेहिं एगं चणयक्खेत्तं अतीव पुप्फेहिं फलेहि य उववेयं दट्ठुं, चणयणयरं निवेसियं,

१ पादयोः रुधिरगन्धेन शिवायाः सशिशुकाया आगमनं, एकं पादं शिवा खादति, एकं शिशवः, प्रथमे यामे जानुनी द्वितीये ऊरुणी तृतीये उदरं कालगतः, गन्धोदकपुष्पवर्षं, आचार्येभ्य आलोचना, भार्याणां परम्परकेण पृच्छा, आचार्यैः कथितं, सर्वर्द्ध्या स्नुषाभिः समं गता श्मशानं, प्रव्रजिताश्च, एका गर्भिणी निवृत्ता, तेषां पुत्रस्तत्र देवकुलं करोति, तदिदानीं महाकालं जातं, लोकेन परिगृहीतं, उत्तरचूलिकायां भणितं पाटलिपुत्रमिति, समाप्तं अनिश्रितोपधानं महागिरीणां ४। इदानीं शिक्षेति पदं, सा द्विविधा-ग्रहणशिक्षाऽऽसेवनाशिक्षा च, तत्र-अस्या व्याख्यानं-अतीताद्धायां क्षितिप्रतिष्ठितं नगरं, जितशत्रू राजा, तस्य नगरस्य वस्तून्युत्सन्नानि, अन्यन्नगरस्थानं वास्तुपाठकैर्मार्गयति, तैरेकं चणकक्षेत्रं अतीव पुष्पैः फलैश्चोपपेतं दृष्ट्वा चणकनगरं निवेशितं,

[1]कालेण तस्स वत्थूणि खीणाणि, पुणोवि वत्थुं मग्गिज्जइ, तत्थ एगो वसहो अण्णेहिं पारद्धो एगंमि रण्णे अच्छइ, न तीरइ अन्नेहिं वसहेहिं पराजिणिउं, तत्थ उसभपुरं निवेसियं, पुणरवि कालेण उच्छन्नं, पुणोवि मग्गंति, कुसथंत्रो दिट्ठो अतीवपमाणाकितिविसिट्ठो, तत्थ कुसग्गपुरं जायं, तंमि य काले पसेणई राया, तं च णयरं पुणो २ अग्गिणा डज्झइ, ताहे लोगभयजणणनिमित्तं घोसावेइ–जस्स घरे अग्गी उट्ठेइ सो णगराओ निच्छुब्भइ, तत्थ महाणसियाणं पमाएण रण्णो चेव घराओ अग्गी उट्ठिओ, ते सच्चपइण्णा रायाणो–जइ अप्पगं ण सासयामि तो कहं अन्नंति निग्गओ णयराओ, तस्स गाउयमित्ते ठिओ, ताहे दंडभडभोइया वाणियगा य तत्थ वच्चंति भणंति–कहिं वच्चह?, आह–रायगिहंति, कओ एह? रायगिहाओ, एवं णयरं रायगिहं जायं, जया य राइणो गिहे अग्गी उट्ठिओ तओ कुमारा जं जस्स पियं आसो हत्थी वा तं तेण णीणिए सेणिएण भंभा णीणिया, राया पुच्छइ–केण किं णीणियंति ?, अण्णो भणइ–मए हत्थी आसो एवमाइ,

---

१ कालेन तस्य वस्तूनि क्षीणानि, पुनरपि वास्तु मार्गयति, तत्रैको वृषभोऽन्यैः प्रारब्ध एकस्मिन्नरण्ये तिष्ठति, न शक्यतेऽन्यैर्वृषभैः पराजेतुं, तत्र वृषभपुरं निवेशितं, पुनरपि कालेनोच्छिन्नं, पुनरपि मार्गयन्ति, कुशस्तम्बो दृष्टोऽतीवप्रमाणाकृतिविशिष्टः, तत्र कुशाग्रपुरं जातं, तस्मिंश्च काले प्रसेनजित् राजा, तच्च नगरं पुनः २ अग्निना दह्यते, तदा लोकभयजननिमित्तं घोषयति–यस्य गृहेऽग्निरुत्तिष्ठति स नगरात् निष्काश्यते, तत्र महानसिकानां प्रमादेन राज्ञ एव गृहात् अग्निरुत्थितः, ते सत्यप्रतिज्ञा राजानः–यद्यात्मानं न शास्मि तदा कथमन्यमिति निर्गतो नगरात्, तस्मात् गव्यूतमात्रे स्थितः, तदा दण्डिकभटभोजिका वणिजश्च तत्र व्रजन्तः भणन्ति–क्व व्रजथ ?, आह राजगृहमिति, कुत आयाथ ?, राजगृहात्, एवं नगरं राजगृहं जातं, यदा च राज्ञो गृहेऽग्निरुत्थितस्ततः कुमारा यद्यस्य प्रियमश्वो हस्ती वा तत्तेन निष्काशिते श्रेणिकेन ढक्का नीता, राजा पृच्छति–केन किं नीतमिति ?, अन्यो भणति–मया हस्ती अश्वः एवमादिः,

[1]सेणिओ पुच्छिओ–भंभा, ताहे राया भणइ सेणियं–एस ते तत्थ सारो भंभित्ति ?, सेणिओ भणइ–आमं, सो य रण्णो अच्चंतपिओ, तेण से णामं कयं–भंभिसारोत्ति, सो रण्णो पिओ लक्खणजुत्तोत्ति, मा अण्णेहिं मारिज्जिहित्ति न किंचिवि देइ, सेसा कुमारा भडचडगरेण निंति, सेणिओ ते दट्ठूण अधितिं करेति, सो तओ निप्फिडिओ बेण्णायडं गओ, जहा नमोक्कारे–अचियत्त भोगऽदाणं निग्गम विण्णायडे य कासवए । लाभ घरनयण नत्तुग धूया सुस्सूसिया दिण्णा ॥१॥ पेसण आपुच्छणया पंडरकुडुत्ति गमणमभिसेओ । दोहल णाम णिरुत्ती कहं पिया मेत्ति रायगिहे ॥ २ ॥ आगमणऽमच्च-मग्गण खुड्डुग छगणे य कस्स तं ? तुज्झं । कहणं माऊआणण विभूसणा वारणा माऊ ॥ ३ ॥ तं च सेणियं उज्जेणिओ पज्जोओ रोहओ जाइ, सो य उइण्णो, सेणिओ बीहेइ, अभओ भणइ–मा संकह, नासेमि से वायंति, तेण खंधावार-णिवेसजाणएण भूमीगया दिणारा लोहसंघाडएसु निक्खाया दंडवासत्थाणेसु, सो आगओ रोहइ, जुज्झिया कईवि दिवसे,

---

१ श्रेणिकः पृष्टः–भम्भा, तदा राजा भणति श्रेणिकं–एप ते सारो भम्भेति ?, श्रेणिको भणति–ओम्, स च राज्ञोऽत्यन्तप्रियः, तेन तस्य नाम कृतं–भम्भसार इति, स राज्ञः प्रियो लक्षणयुक्त इति, मा अन्यैर्मारीति न किञ्चिदपि ददाति, शेपाः कुमारा भटसमूहेन निर्गच्छन्ति, श्रेणिकस्तान् दृष्ट्वाऽधृतिं करोति, स ततः निर्गतो बेन्नातटं गतः, यथा नमस्कारे–अप्रीतिर्भोगादानं निर्गमो बेन्नातटे च लेखहारः । लाभो गृहनयनं नप्ता दुहिता शुश्रूपिका दत्ता ॥ १ ॥ प्रेपणं आपृच्छा पाण्डुरकुड्या इति गमनमभिपेकः । दौहदः नाम निरुक्ति. क पिता मे इति राजगृहे ॥ २ ॥ आगमनं अमात्यमार्गणं मुद्रिका गोमयं च कस्य त्वं ? तव । कथनं मातुरानयनं विभूपणं वारण मातुः ॥ ३ ॥ तं च श्रेणिकं उज्जयिनीतः प्रद्योतो रोधक आयाति, स चोदित, श्रेणिको बिभेति, अभयो भणति–मा शङ्कध्वं, नाशयामि तस्य वादमिति, तेन स्कन्धावारनिवेशज्ञायकेन भूमिगता दीनारा लोहशृङ्गाटकेपु निखाता दण्डावासस्थानेपु, स आगतो रुणद्धि, योधिताः कतिचिद्दिवसान्,

[1]पंच्छा अभओ लोहं देइ, जहा तव दंडिया सवे सेणिएण भिण्णा णास माऽप्पिहिसि, अहव ण पच्चओ अमुगस्स दंडस्स अमुगं पएसं खणह, तेण खयं, दिट्ठो, नट्ठो य, पच्छा सेणिएण बलं विलोलियं, ते य रायाणो सवे पकहिंति–न एयस्स कारी अम्हे, अभएण एसा माया कया, तेण पत्तीयं । अण्णया सो अत्थाणीए भणइ–सो मम नत्थि ? जो तं आणेज्ज, अण्णया एगा गणिया भणइ–अहं आणेमि, नवरं मम बितिज्जिगा दिज्जंतु, दिण्णाओ से सत्त बितिज्जिगाओ जाओ से रुच्चंति मज्झिमवयाओ, मणुस्सावि थेरा, तेहिं समं पवहणेसु बहुएण य भत्तपाणेण य पुवं व संजइमूले कवडसड्ढत्तणं गहेऊण गयाओ, अन्नेसु य गामणयरेसु जत्थ संजया सड्ढा य तहिं २ अइंतिओ सुट्ठुयरं बहुसुयाओ जायाओ, रायगिहं गयाओ, बाहिं उज्जाणे ठियाउ चेइयाणि वंदंतीउ घरचेइयपरिवाडीए अभयघरमइगयाओ निसीहियत्ति, अभओ दट्ठूणं उम्मुक्कभूसणाउ उट्ठिओ सागयं निसीहियाएत्ति?, चेइयाणि दरिसियाणि वंदियाणि य, अभयं वंदिऊण निविट्ठाओ,

---

१ पश्चादभयो लेखं ददाति, यथा तव दण्डिकाः सर्वे श्रेणिकेन भेदिता नश्य माऽप्र्यैथाः, अथ च न प्रत्ययोऽमुकस्य दण्डिकस्यामुकं प्रदेशं खन, तेन खातं, दृष्टो, नष्टश्च, पश्चाच्छ्रेणिकेन बलं विलोलितं, ते च राजानः सर्वे प्रकथयन्ति–नैतस्य कर्त्तारो वयं, अभयेनैषा माया कृता, तेन प्रत्ययितं । अन्यदा स आस्थान्यां भणति–स मम नास्ति? यस्तमानयेत्, अन्यदैका गणिका भणति–अहमानयामि, नवरं मम साहाय्यिका दीयन्तां, दत्तास्तस्याः सप्त द्वैतीयिका यास्तस्यै रोचन्ते मध्यवयसः, मनुष्या अपि स्थविराः, तैः समं प्रवहणेषु च बहुकेन भक्तपानेन च पूर्वमेव संयतीमूले कपटश्राद्धत्वं गृहीत्वा गताः, अन्येषु च ग्रामनगरेषु यत्र संयताः श्राद्धाश्च तत्रातिगच्छन्त्यः सुष्ठुतरं बहुश्रुता जाताः, राजगृहं गताः, बहिरुद्याने स्थिताश्चैत्यानि वन्दमाना गृहचैत्यपरिपाट्याऽभयगृहमतिगता नैषेधिकीति ( भणितवन्त्यः ), अभयो दृष्ट्वोन्मुक्तभूषणा उत्थितः स्वागतं नैषेधिकीनामिति, चैत्यानि दर्शितानि वन्दितानि च, अभयं वन्दित्वा निविष्टाः,

जम्मभूमीउ णिक्खमणणाणणिव्वाणभूमीओ वंदावेति, पुच्छइ-कओ ?, ताओ कहेंति-उज्जेणीए अमुगो वाणियपुत्तो तस्स य भज्जा, सो कालगओ, तस्स भज्जाओ अम्हे पव्वइउंकामाओ, न तीरंति पव्वइएहिं चेइयाहिं वंदिउं पट्ठियव्वए, भणियाओ पाहुणियाउ होइ, भणंति-अब्भत्तट्ठियाओ अम्हे, सुचिरं अच्छित्ता गयाओ, बितियदिवसे अभओ एक्कगो आसेणं पगे पगओ, एह मम घरे पारेधत्ति, भणंति-इमं पारगं तुब्भे पारेह, चिंतेइ-मा मम घरं न जाहिंति भणइ-एवं होउ, पजिमिओ, संजोइउं महुं पाइओ सुत्तो, ताहे आसरहेण पलाविओ, अंतरा अण्णेवि रहा पुव्वट्ठिया, एवं परंपरेण उज्जेणिं पाविओ, उवणीओ पज्जोयस्स, भणिओ-कहिं ते पंडिच्चं ?, धम्मच्छलेण वंचिओ, बद्धो, पुव्वाणीया से भज्जा सा उवणीया, तीसे का उप्पत्ती-सेणियस्स विज्जाहरो मित्तो तेण मित्तया थिरा होउत्ति सेणिएण से सेणा नाम भगिणी दिन्ना निबंधे कए, साविय विज्जाहरस्स इट्ठा, एसा धरणिगोयरा अम्हं पव्वहाएत्ति विज्जाहरिहिं मारिया, तीसे धूया सा तेण मा एसावि

---

१ जन्मभूमीर्निष्क्रमणज्ञाननिर्वाणभूमीर्वन्दयति, पृच्छति-कुतः ?, ताः कथयन्ति-उज्जयिन्याममुको वणिक्पुत्रः तस्य च भार्याः, स कालगतः, तस्य भार्या वयं प्रव्रजितुकामाः, न शक्यते प्रव्रजिताभिश्चैत्यानि वन्दितुं प्रस्थातुं, भणिताः-प्राघूर्णिका भवत, भणन्ति-अभक्तार्थिन्यो वयं, सुचिरं स्थित्वा गताः, द्वितीयदिवसे अभयः एकाकी अश्वेन प्रभाते प्रगतः, आयात मम गृहे पारयतेति, भणन्ति-इदं पारणकं यूयं पारयत, चिन्तयति-मा मम गृहं नायासिष्ट, भणति-एवं भवतु, प्रजिमितः, सांयोगिकं मधु पायगित्वा स्वपितः, तदाऽश्वरथेन परिप्रापितः, अन्तरा अन्येऽपि रथाः पूर्वस्थापिताः, एवं परम्परकेणोज्जयिनीं प्रापितः, प्रद्योतायोपनीतः, भणितः-क्व ते पाण्डित्यं ?, धर्मच्छलेन वञ्चितो, बद्धः, पूर्वानीता तस्य भार्या सोपनीता, तस्याः कोत्पत्तिः ?, श्रेणिकस्य विद्याधरो मित्रं, ततो मैत्री स्थिरा भवत्विति श्रेणिकेन तस्मै सेनानाम्नी भगिनी दत्ता निर्बन्धं कृत्वा, सापिच विद्याधरस्येष्टा, एषा धरणीगोचराऽस्माकं प्रवधायेति विद्याधरीभिर्मारिता, तस्या दुहिता सा तेन मैषाऽपि

मारिज्जिहितित्ति सेणियस्स उवणीया खिज्जिओ ( उज्झिया ) य, सा जोव्वणत्था अभयस्स दिण्णा, सा विज्जाहरी अभयस्स इट्ठा, सेसाहिं महिलाहिं मायंगी उलग्गिया, ताहिं विज्जाहिं जहा नमोक्कारे चक्खिदियउदाहरणे जाव पच्चंतेहिं उज्झिया तावसेहिं दिट्ठा पुच्छिया कओसित्ति ?, तीए कहियं, ते य सेणियस्स पव्वया तावसा, तेहिं अम्ह नत्तुगित्ति सारविया, अन्नया पट्ठविया सिवाए उज्जेणीं नेऊण दिण्णा, एवं तीए समं अभओ वसइ, तस्स पज्जोयस्स चत्तारि रयणाणि— लोहजंघो लेहारओ अग्गिभीरुरहोऽनलगिरी हत्थि सिवा देवित्ति, अन्नया सो लोहजंघो भरुयच्छं विसज्जिओ, ते लोका य चिंतेन्ति–एस एगदिवसेण एइ पंचवीसजोयणाणि, पुणो २ सद्दाविज्जामो, एयं मारेमो, जो अण्णो होहिति सो गणिएहिं दिवसेहिं एहिति, एच्चिरंपि कालं सुहिया होमो, तस्स संवलं पदिण्णं, सो नेच्छइ, ताहे विहीए से दवावियं, तत्थवि से विससंजोइया मोयगा दिण्णा, सेसगं संवलं हरियं, सो कइवि जोयणाणि गंतुं नदीतीरे खामित्ति जाव सउणो वारेइ,

---

१ मार्यंतामिति श्रेणिकायोपनीता, रुष्टश्च ( अवरोधाय ), सा यौवनस्थाऽभयाय दत्ता, सा विद्याधर्यभयस्येष्टा, शेषाभिर्महेलाभिर्मातङ्गी अवलगिता, ताभिर्विद्याभिर्यथा नमस्कारे चक्षुरिन्द्रियोदाहरणे यावत् प्रत्यन्तैरुज्झिता तापसैर्दृष्टा पृष्टा–कुतोऽसीति ?, तया कथितं, ते च श्रेणिकस्य पर्वगास्तापसाः, तैरस्माकं नप्त्रीति संरक्षिता, अन्यदा प्रस्थापिता उज्जयिनीं नीत्वा शिवायै दत्ता, एवं तया सममभयो वसति, तस्य प्रद्योतस्य चत्वारि रत्नानि–लोहजङ्घो लेखहारकोऽग्निभीरू रथोऽनलगिरिर्हस्ती शिवा देवीति, अन्यदा स लोहजङ्घो भृगुकच्छं प्रति विसृष्टः, ते लोकाश्च चिन्तयन्ति–एष एकदिवसेनायाति पञ्चविंशतियोजनानि, पुनः पुनः शब्दापयिष्यामहे, एनं मारयामः, योऽन्यो भविष्यति स बहुभिर्दिनैरायास्यति, इयच्चिरं कालं सुखिनो भविष्यामः, तस्मै शम्बलं प्रदत्तं, स नेच्छति, तदा विधिना ( वीथ्यां ) तस्मै दापितं, तत्रापि विषसंयुक्ता मोदकास्तस्मै दत्ताः, शेषं शम्बलं हृतं, स कतिचिद्योजनानि गत्वा नदीतीरे खादामीति यावच्छकुनो वारयति,

उंट्ठेत्ता पहाविओ, पुणो दूरं गंतुं पक्खाइओ, तत्थवि वारिओ तइयंपि वारिओ, तेण चिंतियं—भवियबं कारणेणंति पज्जोयस्स मूलं गओ, निवेइयं रायकज्जं, तं च से परिकहियं, अभओ वियक्खणोत्ति सद्दाविओ, तं च से परिकहियं, अभओ तं अग्घाइउं संबलं भणइ—एत्थ दबसंजोएण दिट्ठीविसो सप्पो सम्मुच्छिमो जाओ, जइ उग्घाडियं होंतं तो दिट्ठीविसेण सप्पेण खाइओ होइ(न्तो), तो किं कज्जउ ?, वणनिउंजे मुएज्जह, परंमुहो मुक्को, वणाणि दड्ढाणि, सो अन्तोमुहुत्तेण मओ, तुट्ठो राया, भणिओ—बंधणविमोक्खवज्जं वरं वरेहित्ति, भणइ—तुब्भं चेव हत्थे अच्छउ, अण्णयाऽनलगिरी वियट्टो न तीरइ घेत्तुं, अभओ पुच्छिओ, भणइ—उदायणो गायउत्ति, तो उदायणो कहं बद्धोत्ति—तस्स य पज्जोयस्स धूया वासवदत्ता नाम, सा बहुयाउ कलाउ सिक्खाविया, गंधवेण उदयणो पहाणो सो घेप्पउत्ति, केण उवाएणंति ?, सो किर जं हत्थिं पेच्छइ तत्थ गायइ जाव बंधंपि न याणइ, एवं कालो वच्चइ, इमेण जंतमओ हत्थी काराविओ, तं सिक्खावेइ, तस्स विसयए

१ उत्थाय प्रधावितः, पुनर्दूरं गत्वा प्रखादितस्तत्रापि वारितः तृतीयमपि वारितः, तेन चिन्तितं—भवितव्यं कारणेनेति प्रद्योतस्य मूले गतो, निवेदितं राज्यकार्यं, तच्च तस्मै परिकथितं. अभयो विचक्षण इति शब्दितः, तच्च तस्मै परिकथितं, अभयस्तत् आघ्राय शम्बलं भणति—अत्र द्रव्यसंयोगेन दृष्टिविषः सर्पः संमूर्च्छिमो जातः, यद्युद्घाटितमभविष्यत्तदा दृष्टिविषेण सर्पेण खादितोऽभविष्यत्, तत् किं क्रियतां ?, वननिकुञ्जे मुञ्चत, पराङ्मुखो मुक्त, वनानि दग्धानि, सोऽन्तर्मुहूर्त्तेन मृतः, तुष्टो राजा, भणित—बन्धनविमोक्षवर्जं वरं वृणुष्वेति, भणति—युष्माकमेव हस्ते तिष्ठतु, अन्यदाऽनलगिरिर्विकलो न शक्यते ग्रहीतुं, अभयः पृष्टः, भणति—उदायनो गायत्विति, तत् उदायनः कथं बद्ध इति, तस्य च प्रद्योतस्य दुहिता वासवदत्ता नाम्नी, सा बहुकाः कलाः शिक्षिता, गान्धर्वेणोदायनः प्रधानः स गृह्यतामिति, केनोपायेनेति, स किल यं हस्तिनं प्रेक्षते तत्र गायति यावद् बन्ध ( वध ) मपि न जानाति, एवं कालो व्रजति, अनेन यन्त्रमयो हस्ती कारितः त शिक्षयति, तस्य विषये

दारओ पुच्छिओ–किं न देसि ?, भणइ–अहं एयस्स दंडगस्स पहावेणं राया भविस्सामि, ताहे कारणिया हसिऊण भणंति–जया तुमं राया भविज्जासि तया एयस्स मरुयस्स गामं देज्जाहि, पडिवण्णं तेण, मरुएण अण्णे मरुया वितिज्जा गहिया जहा मारेमो तं, तस्स पिउणा सुयं, ताणि तिण्णिवि नट्ठाणि जाव कंचणपुरं गयाणि, तत्थ राया मरइ, रज्जारिहो अण्णो नत्थि, आसो अहिवासिओ, सो तस्स सुत्तगस्स मूलमागओ पयाहिणं काऊण ठिओ, जाव लक्खणपाढएहि दिट्ठो लक्खणजुत्तोत्ति जयसद्दो कओ, नंदितूराणि आहयाणि, इमोवि वियंभंतो वीसत्थो उट्ठिओ, आसे विलग्गो, मायंगोत्ति धिज्जाइया न देंति पवेसं, ताहे तेण दंडरयणं गहियं, जलिउमारद्धं, भीया ठिया, ताहे तेण वाडहाणगा हरिएसा धिज्जाइया कया, उक्तं च–दधिवाहनपुत्रेण, राज्ञा तु करकण्डुना। वाटहानकवास्तव्याश्चाण्डाला ब्राह्मणीकृताः ॥ १ ॥ तस्स पिइघरनामं अवइन्नगोत्ति, पच्छा से तं चेडगरूवकयं नामं पइट्ठियं, करकंडुत्ति, ताहे सो मरुगो आगओ, भणइ–देह

---

१ दारकः पृष्टः–किं न ददासि ?, भणति–अहमेतस्य दण्डकस्य प्रभावेण राजा भविष्यामि, तदा कारणिका हसित्वा भणन्ति–यदा त्वं राजा भवेस्तदै-तस्मै ब्राह्मणाय ग्रामं दद्याः, प्रतिपन्नं तेन, मरुकेण अन्ये ब्राह्मणाः साहाय्यका गृहीता यथा मारयामस्तं, तस्य पित्रा श्रुतं, ते त्रयोऽपि नष्टाः यावत् काञ्चनपुरं गताः,तत्र राजा मृतः, राज्यार्होऽन्यो नास्ति, अश्वोऽधिवासितः, स तस्य सुप्तस्य पार्श्वमागतः प्रदक्षिणां कृत्वा स्थितो, यावल्लक्षणपाठकैर्दृष्टो लक्षणयुक्त इति जयशब्दः कृतः, नन्दीतूर्याण्याहतानि, अयमपि विजृम्भमाणो विश्वस्त उत्थितः, अश्वे विलग्नः, मातङ्ग इति धिग्जातीया न ददति प्रवेशं, तदा तेन दण्डरत्नं गृहीतं, ज्वलितुमारब्धं, भीताः स्थिताः, तदा तेन वाटधानवास्तव्या हरिकेशा धिग्जातीयाः कृताः। तस्य पितृगृहनामावकीर्णक इति, पश्चात्तस्य तत् चेटककृतं नाम प्रतिष्ठितं, करकण्डूरिति, तदा स ब्राह्मण आगतः, भणति–देहि

मम गामंति, भणइ–जं ते रुच्चइ तं गेण्ह, सो भणइ–ममं चंपाए घरं तहिं देहि, ताहे दहिवाहणस्स लेहं देइ, देहि मम एगं गामं अहं तुज्झ जं रुच्चइ गामं वा णयरं वा तं देमि, सो रुट्ठो–दुट्ठमायंगो न जाणइ अप्पयं तो मम लेहं देइत्ति, दूएण पडियागएण कहियं, करकंडुओ रुट्ठो, गओ रोहिज्जइ, जुद्धं च वट्टइ, तीए संजतीए सुयं, मा जणक्खओ होउत्ति करकंडुं ओसारेत्ता रहस्सं भिंदइ–एस तव पियत्ति, तेण ताणि अम्मापियराणि पुच्छियाणि, तेहिं सब्भावो कहिओ, नाममुद्दा कंबलरयणं च दावियं, भणइ, माणेण–ण ओसरामि, ताहे सा चंपं अइगया, रण्णो घरमतेंती णाया, पायवडियाओ दासीओ परुण्णाओ, रायाएवि सुयं, सोवि आगओ वंदित्ता आसणं दाऊण तं गब्भं पुच्छइ, सा भणइ–एस तुमं जेण रोहिओत्ति, तुट्ठो निग्गओ, मिलिओ, दोवि रज्जाइं दहिवाहणो तस्स दाऊण पव्वइओ, करकंडू महासासणो जाओ, सो य किर गोउलप्पिओ, तस्स अणेगाणि गोउलाणि, अण्णया सरयकाले एगं गोवच्छगं गोरगत्तं सयं पेच्छइ, भणइ–एयस्स

---

१ मह्यं ग्राममिति, भणति–यस्ते रोचते तं गृहाण, स भणति–मम चम्पायां गृहं तत्र देहि, तदा दधिवाहनाय लेखं ददाति, देहि मे एकं ग्रामं अहं तव यो रोचते ग्रामो वा नगरं वा तं ददामि, स रुष्टः–दुष्टमातङ्गो न जानाति आत्मानं ततो मह्यं लेखं ददातीति, दूतेन प्रत्यागतेन कथितं, करकण्डू रुष्टः, गतो रोधयति, युद्धं च वर्त्तते, तया संयत्या श्रुतं, मा जनक्षयो भूदिति करकण्डूमपसार्य रहस्यं भिनत्ति–एष तव पितेति, तेन तौ मातापितरौ पृष्टौ, ताभ्यां सद्भावः कथितः, नाममुद्रा कम्बलरत्नं च दर्शिते, भणति मानेन–नापसरामि, तदा सा चम्पामतिगता, राज्ञो गृहमायान्ती ज्ञाता, पादपतिता दास्यो रोदितुं लग्नाः, राज्ञाऽपि श्रुतं, सोऽपि आगतो वन्दित्वाऽऽसनं दत्त्वा तं गर्भं पृच्छति, सा भणति–एष त्वं येन रुद्ध इति, तुष्टो निर्गतः, मिलितौ, द्वे अपि राज्ये दधिवाहनस्तस्मै दत्त्वा प्रव्रजितः, करकण्डूर्महाशासनो जातः, स च किल गोकुलप्रियः, तस्यानेकानि गोकुलानि, अन्यदा शरत्काले एकं गोवत्सकं गौरगात्रं स्वयं प्रेक्षते, भणति–एतस्य

[1]मायरं मा दुहेज्जह, जया वड्ढिओ होइ तया अन्नाणं गावीणं दुद्धं पाएज्जह, तो गोवाला पडिसुणेंति, सोवि उच्चत्तविसाणो खंधवसहो जाओ, राया पेच्छइ, सो जुद्धिक्कओ कओ, पुणो कालेण आगओ पेच्छइ महाकायं वसहं पड्डुएहिं घडिज्जंतं, गोवे पुच्छइ–कहिं सो वसहोत्ति ?, तेहिं दाविओ, पेच्छंतो तओ विसण्णो चिंतेंतो संवुद्धो, तथा चाह भाष्यकारः—

सेयं सुजायं सुविभत्तसिंगं, जो पासिया वसभं गोट्ठमज्झे ।
रिद्धिं अरुद्धिं समुपेहिया णं, कलिंगरायावि समिक्ख धम्मं ॥ २०७ ॥ ( भा० ) ॥
गोट्ठंगणस्स मज्झे ढेक्कियसद्देण जस्स भज्जंति । दित्तावि दरियवसहा सुतिक्खसिंगा सरीरेण* ॥ २०८ ॥ ( भा० ) ॥
पोराणयगयदप्पो गलंतनयणो चलंतवसभोट्ठो । सो चेव इमो वसहो पड्डुयपरिघट्टणं सहइ ॥ २०९ ॥ ( भा० ) ॥

गाथात्रयस्य व्याख्या—श्वेतं–शुक्लं सुजातं–गर्भदोषविकलं ( सुविभक्त ) शृङ्गं–विभागस्थसमशृङ्गं यं राजा दृष्ट्वा–अभिसमीक्ष्य वृषभं–प्रतीतं गोष्ठमध्ये–गोकुलान्तः पुनश्च तेनैवानुमानेन ऋद्धिं–समृद्धिं सम्पदं विभूतिमित्यर्थः, तद्विपरीतां चाऋद्धिं च संप्रेक्ष्य–असारतयाऽऽलोच्य कलिङ्गा–जनपदास्तेषु राजा कलिङ्गराजः, असावपि समीक्ष्य धर्मं–पर्यालोच्य धर्मं सम्बुद्ध इति वाक्यशेषः । किं चिन्तयन् ?–'गोट्ठंगणस्स मज्झे' त्ति गोष्ठाङ्गणस्यान्तः ढेक्कितशब्दस्य यस्य भग्न-

---

१ मातरं मा दोग्ध, यदा वर्धितो भवेत् तदाऽन्यासां गवां दुग्धं पाययेत, ततो गोपालाः प्रतिशृण्वन्ति, सोऽप्युच्चतमविषाणः स्कन्धवृषभो जातः, राजा प्रेक्षते, स युद्धीयः कृतः, पुनः कालेनागतः प्रेक्षते महाकायं वृषभं महिषीवत्सैर्घट्टयमानं, गोपान् पृच्छति–क्व स वृषभ इति, तैर्दर्शितः, प्रेक्षमाणस्ततो विषण्णश्चिन्तयन् संवुद्धः । * समत्थाइ प्र०

वन्तः, के ?–दीप्ता अपि–रोषणा अपीत्यर्थः, दर्पितवृषभा–बलोन्मत्तबलीवर्दा इत्यर्थः, सुतीक्ष्णश्रृङ्गा अपि शारीरेण बलेन । पौराणः गतदर्पः गलन्नयनः चलद्वृषभोष्ठः, स एवायं वृषभोऽधुना पड्डुगपरिघट्टणं सहइ, धिगसारः संसार इति, सर्वप्राणभृतां चैवेयं वार्तेति तस्मादलमनेनेति, एवं सम्बुद्धो, जातीसरणं, निग्गओ, विहरइ । इओ पंचालेसु जणवएसु कंपिल्ले णयरे दुम्मुहो राया, सोवि इंदकेउं पासइ लोएण महिज्जंतं अणेयकुडभीसहस्सपडिमंडियाभिरामं, पुणोवि लुप्पंतं, पडियं च अमेज्झमुत्ताणमुवरिं, सो संबुद्धो, तथाऽऽह भाष्यकारः—

जो इंदकेउं समलंकियं तु, दट्टुं पडंतं पविलुप्पमाणं ।
रिद्धिं अरिद्धिं समुपेहिया णं, पंचालराया वि समिक्ख धम्मं ॥ २१० ॥ ( भा० )

निगदसिद्धैव, विहरइ । इओ य विदेहाजणवए महिलाए णयरीए नमी राया, गिलाणो जाओ, देवीओ चंदणं घसंति तस्स दाहपसमणनिमित्तं, वलयाणि खलखलंति, सो भणइ–कन्नाघाओ, न सहामि, एक्केकं अवणीए जाव एक्केको अच्छइ,

---

१ एवं संबुद्धः, जातेः स्मरणं, निर्गतः, विहरति। इतश्च पाञ्चालेषु जनपदेषु काम्पील्ये नगरे दुर्मुखो राजा, सोऽपि इन्द्रकेतुं पश्यति लोकेन मह्यमानं अनेकलघुपताकासहस्रपरिमण्डिताभिरामं, पुनरपि लुप्यमानं, पतितं चामेध्यमूत्राणामुपरि, स संबुद्धः, विहरति। इतश्च विदेहजनपदे मिथिलायां नगर्यां नमी राजा, ग्लानो जातः, देव्यश्चन्दनं घर्षयन्ति तस्य दाहप्रशमननिमित्तं, वलयानि शब्दयन्ति, स भणति–कर्णाघातः, न सहे, एकैकस्मिन्नपनीते यावदेकैकस्तिष्ठति,

सद्दो नत्थि, राया भणइ–ताणि वलयाणि न खलखलेंति ?, अवणीयाणि, सो तेण दुक्खेण अब्भाहओ परलोगाभिमुहो चिंतेइ–बहुयाण दोसो एगस्स न दोसो, संवुद्धो, तथा चाह—

**बहुयाण सद्दयं सोच्चा, एगस्स य असद्दयं। वलयाणं नमीराया, निक्खंतो मिहिलाहिवो ॥ २११ ॥ ( भा० )**

कण्ठ्या, विहरइ। इओ य गंधारविसए पुरिमपुरे णयरे नग्गई राया, सो अन्नया अणुजत्तं निग्गओ, पेच्छइ चूयं कुसुमियं, तेण एगा मंजरी गहिया, एवं खंधावारेण लयंतेण कट्ठावसेसो कओ, पडिनियत्तो पुच्छइ–कहिं सो चूयरुक्खो ?, अमच्चेण कहियं–एस सोत्ति, कहं कट्ठाणि कओ ?, तओ भणइ–जं तुब्भेहिं मंजरी गहिया पच्छा सव्वेण खंधावारेण गहिया, सो चिंतेइ–एवं रज्जसिरित्ति, जाव रिद्धी ताव सोहेइ, अलाहि एयाए, संवुद्धो। तथा चाह—

**जो चूयरुक्खं तु मणाहिरामं, समंजरिं पल्लवपुप्फचित्तं।**
**रिद्धिं अरिद्धिं समुपेहिया णं, गंधाररायावि समिक्ख धम्मं ॥ २१२ ॥ ( भा० ) ॥**

---

१ शब्दो नास्ति, राजा भणति–तानि वलयानि न शब्दयन्ति ?, अपनीतानि, स तेन दुःखेनाभ्याहतः परलोकाभिमुखश्चिन्तयति–बहूनां दोषो नैकस्य दोषः, संबुद्धः। विहरति, इतश्च गान्धारविषये पुरिमपुरे नगरे नग्गती राजा, सोऽन्यदाऽनुयात्रायै निर्गतः, प्रेक्षते चूतं कुसुमितं, तेनैका मञ्जरी गृहीता, एवं स्कन्धावारेण गृह्णता काष्ठावशेषः कृतः, प्रतिनिवृत्तः पृच्छति–क्व स चूतवृक्षः ?, अमात्येन कथितं–स एष इति, कथं काष्ठीकृतः, ?, ततो भणति–यत्त्वया मञ्जरी गृहीता पश्चात् सर्वेण स्कन्धावारेण गृहीता, स चिन्तयति–एवं राज्यश्रीरिति, यावदृद्धिस्तावत् शोभते, अलमनया, संबुद्धः।

कण्ठ्या । एवं सो विहरइ । ते चत्तारि विहरमाणा खिइपइट्ठियणयरमज्झे चउद्दारं देवउलं, पुव्वेण करकंडू पविट्ठो, दक्खिणेणं दुम्मुहो, एवं सेसावि, किह साहुस्स अन्नहामुहो अच्छामित्ति तेण दक्खिणेणावि मुहं कयं, नमी अवरेण, तओवि मुहं, गंधारो उत्तरेण, तओ वि मुहं कयंति । तस्स य करकंडुस्स बहुसो कंडू, सा अत्थि चेव तेण कंडूयणगं गहाय मसिणं मसिणं कण्णो कंडूइओ, तं तेण एगत्थ संगोवियं, तं दुम्मुहो पेच्छइ,–'जया रज्जं च रट्ठं च, पुरं अंतेउरं तहा । सव्वमेयं परिच्चज्ज, संचयं किं करेसिमं ? ॥ १ ॥ सिलोगो कंठो जाव करकंडू पडिवयणं न देइ ताव नमी वयणमिमं भणइ– जया ते पेइए रज्जे, कया किच्चकरा बहू । तेसिं किच्चं परिच्चज्ज, अन्नकिच्चकरो भवं ? ॥ २ ॥ सिलोगो कंठो, किं तुमं एयस्स आउत्तिगोत्ति । गंधारो भणइ–जया सव्वं परिच्चज्ज मोक्खाय घडसी भवं । परं गरिहसी कीस ?, अत्तनीसेसकारए ॥ ३ ॥ सिलोगो कंठो, तं करकंडू भणइ–मोक्खमग्गं पवण्णाणं, साहूणं बंभयारिणं । अहियत्थं निवारन्ते, न दोसं वत्तुमरिहसि ॥ ४ ॥ सिलोगो–'रूसउ वा परो मा वा, विसं वा परिअत्तउ । भासियव्वा हिया भासा, सपक्खगुणकारिणी ॥ ५ ॥ सिलोगो, श्लोकद्वयमपि कण्ठ्यं । तथा—

---

१ एवं स विहरति । ते चत्वारो विहरन्तः क्षितिप्रतिष्ठितनगरमध्ये चतुर्द्वारं देवकुलं ( तत्र ) पूर्वेण करकण्डुः प्रविष्टः, दक्षिणेन दुर्मुखः, एवं शेपा-अपि, कथं साधोरन्यतोमुखस्तिष्ठामीति तेन दक्षिणस्यामपि मुखं कृतं, नमिरपरेण, तस्यामपि मुखं, गान्धार उत्तरेण, तस्यामपि मुखं कृतमिति । तस्य च करकण्डोर्बह्वी कण्डूः, साऽस्त्येव, तेन कण्डूयनं गृहीत्वा मसृणं मसृणं कर्णः कण्डूयितः, तत् तेनैकत्र संगोपितं, तत् दुर्मुखः प्रेक्षते, श्लोकः कण्ठ्यः यावत् करकण्डुः प्रतिवचनं न ददाति तावत् नमिर्वचनमिदं भणति । श्लोकः कण्ठ्यः, किं त्वमेतस्याऽऽयुक्तक इति ?, गान्धारो भणति–श्लोकः कण्ठ्यः, तं करकण्डुर्भणति–श्लोकः, श्लोकः,

जहा जलंताइ(त) कट्ठाइं, उवेहाइँ न चिरं जले। घट्टिया घट्टिया झत्ति, तम्हा सहह घट्टणं ॥ १३१२ ॥
सुचिरंपि वंकुडाइं होहिंति अणुपमज्जमाणाइं। करमद्दिदारुयाइं गयंकुसागारवेंटाइं ॥ १३१३ ॥

इदमपि गाथाद्वयं कण्ठ्यमेव, ताणं सव्वाण दव्वविउस्सग्गो, जं रज्जाणि उज्झियाणि, भावविउस्सग्गो कोहादीणं, विउस्सग्गेत्ति गयं २५, इयाणिं अप्पमाएत्ति, ण पमाओ अप्पमाओ, तत्थोदाहरणगाहा—

रायगिहमगहसुंदरि मगहसिरी पउमसत्थपक्खेवो। परिहरियअप्पमत्ता नट्टं गीयं नवि य चुक्का ॥ १३१४ ॥

इमीए वक्खाणं—रायगिहे णयरे जरासंधो राया, तस्स सव्वप्पहाणाओ दो गणियाओ—मगहसुंदरी मगहसिरी य, मगहासिरी चिंतेइ—जइ एस न होज्जा ता मम अन्नो माणं न खंडेज्जा, राया य करयलत्थो होज्जत्ति, सा य तीसे छिद्दाणि मग्गइ, ताहे मगहासिरी नट्टदिवसंमि कण्णियारेसु सोवन्नियाओ संवलियाओ विसधूवियाओ सूचीओ केसरसरिसियाओ खित्ताओ, ताओ पुण तीसे मगहसुंदरीए मयहरियाए ऊहियाओ, कहं भमरा कण्णियाराणि न अल्लियंति चूएसु निलेंति?,

---

१ तेषां सर्वेषां द्रव्यव्युत्सर्गः, यत् राज्यान्युज्झितानि, भावव्युत्सर्गः क्रोधादीनां। व्युत्सर्ग इति गतं, इदानीमप्रमाद इति, न प्रमादोऽप्रमादः, तत्रोदाहरणगाथा। अस्या व्याख्यानं—राजगृहे नगरे जरासन्धो राजा, तस्य सर्वप्रधाने द्वे गणिके—मगधसुन्दरी मगधश्रीश्च, मगधश्रीश्चिन्तयति, यद्येषा न भवेत् तदा मम नान्यो मानं खण्डयेत्, राजा च करतलस्थो भवेदिति, सा च तस्याश्छिद्राणि मार्गयति, तदा मगधश्रीर्नृत्यदिवसे कर्णिकारेषु सौवर्णिका मञ्जर्यः विषवासिताः सूचयः केशरसदृशाः क्षेपितवती, ताः पुनस्तस्या मगधसुन्दर्या महत्तरिकया ज्ञाताः, कथं भ्रमराः कर्णिकारेषु नागच्छन्ति? चूतेषु लगन्ति

नूणं सदोसाणि पुप्फाणि, जइ य भणीहामि एएहिं पुप्फेहिं अच्चणिया अचोक्खा विसभावियाणि वा ता गामेल्लगत्तणं होहित्ति उवाएणं वारेमित्ति, सा य रंगओइण्णिया, अण्णया मंगलं गिज्जइ, सा इमं गीतियं पगीया—

पत्ते वसंतमासे आमोअ पमोअए पवत्तंमि । मुत्तूण कण्णिआरए भमरा सेवंति चूअकुसुमाइं ॥ १३१५ ॥

गीतिं, इमा निगदसिद्धैव, सो चिंतेइ—अपुव्वा गीतिया, तीए णायं—सदोसा कणियारत्ति परिहरंतीए गीयं नच्चियं च सविलासं, न य तत्थ छलिया, परिहरिय अप्पमत्ता नट्टं गीयं न कीर चुक्का, एवं साहुणावि पंचविहे पमाए रक्खंतेणं जोगा संगहिया २६ । इयाणिं लवालवेत्ति, सो य अप्पमाओ लवे अद्धलवे वा पमायं न जाइयव्वं, तत्थोदाहरणगाहा—

भरुयच्छंमि य विजए नडपिडए वासवासनागघरे । ठवणा आयरियस्स (उ) सामायारीपउंजणया ॥१३१६॥

इमीए वक्खाणं—भरुअच्छे णयरे एगो आयरिओ, तेण विजओ नाम सीसो उज्जेणी कज्जेण पेसिओ, सो जाइ, तस्स गिलाणकज्जेण केणइ वक्खेवो, सो अंतरा अकालवासेण रुद्धो, अंडगतणउज्झियंति नडपिडए गामे वासावासं ठिओ, सो

१ नूनं सदोषाणि पुष्पाणि, यदि चाभणिष्यं एतैः पुष्पैरर्चनिकाऽचोक्षा विषभावितानि वा तदा ग्रामेयकत्वमभविष्यदिति उपायेन वारयामि इति, सा च रङ्गावतीर्णाऽन्यदा मङ्गलं गायति, सेमां गीतिं प्रगीतवती—गीतिः इयं, स चिन्तयति-अपूर्वा गीतिः, तया ज्ञातं—सदोषाणि कर्णिकाराणि इति परिहरन्त्या गीतं नर्तितं च सविलासं, न च तत्र छलिता, परिहृत्य (तानि), अप्रमत्ता नृत्ये गीते च न किल स्खलिता, एवं साधुनाऽपि पञ्चविधान् प्रमादान् रक्षयता योगाः संगृहीताः । इदानीं लवालव इति, स चाप्रमादः लवेऽर्धलवे वा प्रमादं न यातव्यं, तत्रोदाहरणगाथा—अस्या व्याख्यानं—भृगुकच्छे नगरे एक आचार्यः, तेन विजयो नाम शिष्य उज्जयिनीं कार्येण प्रेषितः, स याति, तस्य ग्लानकार्येण केनचिद् व्याक्षेपः, सोऽन्तराऽकालवर्षेण रुद्धः, अण्डकतृणोज्झितमिति नटपेटके ग्रामे वर्षावासं स्थितः, स

चिंतेइ–गुरुकुलवासो न जाओ, इहंपि करेमि जो उवएसो, तेण ठवणायरिओ कओ, एवमावासगमादीचक्कवालसामायारी सव्वा विभासियव्वा, एवं किल सो सव्वत्थ न चुक्को, खणे २ उवजुज्जइ–किं मे कयं ?, एवं किर साहुणा कायव्वं, एवं तेण जोगा संगहिया भवंति २७। लवालवेत्ति गयं, इयाणिं झाणसंवरजोगेत्ति, झाणेण जोगा संगहिया, तत्थोदाहरणं—

णयरं च सिंबवद्धण मुंडिम्बयअज्जपूसभूई य। आयाणपूसमित्ते सुहुमे झाणे विवादो य ॥ १३१७ ॥

इमीए वक्खाणं—सिंबवद्धणे णयरे मुंडिम्बगो राया, तत्थ पूसभूई आयरिया बहुस्सुया, तेहिं सो राया उवसामिओ सड्ढो जाओ, ताण सीसो पूसमित्तो बहुस्सुओ ओसण्णो अण्णत्थ अच्छइ, अण्णया तेसिं आयरियाणं चिंता–सुहुमं झाणं पविस्सामि, तं महापाणसमं, तं पुण जाहे पविसइ ताहे एवं जोगसंनिरोहं करेइ ज न किंचिह चेएइ, तेसिं च जे मूले ते अगीयत्था, तेसिं पूसमित्तो सद्दाविओ, आगओ, कहियं, स तेण पडिवन्नं, ताहे एगत्थ उवयरए निव्वाघाए झाएंति, सो तेसिं ढोयं न

---

१ चिन्तयति–गुरुकुलवासो न जातः, इहापि करोमि य उपदेशः, तेन स्थापनाचार्यः कृतः, एवमावश्यकादिचक्रवालसामाचारी सर्वा विभाषितव्या, एवं किल स सर्वत्र न स्खलितः, क्षणे क्षणे उपयुज्यते–किं मे कृतं ?, एवं किल साधुना कर्त्तव्यं, एवं तेन योगाः संगृहीता भवन्ति। लवालव इति गतं, इदानीं ध्यानसंवरयोग इति, ध्यानेन योगाः संगृहीताः, तत्रोदाहरणं। अस्या व्याख्यानं–शिम्बावर्धने नगरे मुण्डिकाम्रको राजा, तत्र पुष्पभूतय आचार्या बहुश्रुताः, तैः स राजोपशमितः श्राद्धो जातः, तेषां शिष्यः पुष्पमित्रो बहुश्रुतोऽवसन्नोऽन्यत्र तिष्ठति, अन्यदा तेषामाचार्याणां चिन्ता–सूक्ष्मं ध्यानं प्रविशामि, तत् महाप्राणसमं, तत् पुनर्यदा प्रविशति तदैवं योगसंनिरोधः क्रियते यथा न किञ्चित् चित्यते, तेषां च ये पार्श्वे तेऽगीतार्थाः, तैः पुष्यमित्रः शब्दितः, आगतः, कथितं, स (तत्) तेन प्रतिपन्नं, तदैकत्रापवरके निर्व्याघाते ध्यायन्ति, स तेषामागन्तुं न

देई, भणइ–एत्तो ठियगा वंदह, आयरिया वाउला, अण्णया ते अवरोप्परं मंतंति–किं मण्णे होज्जा गवेसामोत्ति, एगो ओवरगबारे ठिओ निवन्नेइ, चिरं च ठिओ, आयरिओ न चलइ न भासइ न फंदइ ऊसासनिस्सासोवि नत्थि, सुहुमो किर तेसिं भवइ, सो गंतूण कहेइ अण्णेसिं, ते रुट्ठा, अज्जो ! तुमं आयरिए कालगएवि न कहेसि ?, सो भणइ–न कालगयत्ति, झाणं झायइत्ति, मा वाघायं करेहित्ति, अण्णे भणंति–पव्वइओ एसो लिंगी मन्ने वेयालं साहेउकामो लक्खणजुत्ता आयरिया तेण ण कहेइ, अज्ज रत्तिं पेच्छहिह, ते आरद्धा तेण समं भंडिउं, तेण वारिया, ताहे ते राया ऊस्सारेऊण कहित्ता आणीओ, आयरिया कालगया सो लिंगी न देइ नीणेउं, सोवि राया पिच्छइ, तेणवि पत्तीयं कालगओत्ति, पूसमित्तस्स ण पत्तियइ, सीया सज्जीया, ताहे णिच्छयो णायो, विणासिया होहिंति, पुव्वं भणिओ सो आयरिएहिं–जाहे अगणी अन्नो वा अच्चओ होज्जत्ति ताहे मम अंगुट्ठए छिवेज्जाहि, छिन्नो, पडिबुद्धो भणइ–किं अज्जो ! वाघाओ कओ ?, पिच्छह

१ ददाति, भणति–अत्र स्थिता वन्दध्वं, आचार्या व्यापृता', अन्यदा ते परस्परं मन्त्रयन्ते–किं मन्ये भवेद् गवेषयाम इति, एकोऽपवरकद्वारे स्थितो निभालयति, चिरं च स्थितः, आचार्यो न चलति न भाषते न स्पन्दते उच्छ्वासनिःश्वासावपि न स्तः, सूक्ष्मौ किल तेषां भवतः, स गत्वा कथयति अन्येषां, ते रुष्टा, आर्य ! त्वमाचार्यान् कालं गतानऽपि न कथयसि, स भणति–न कालगता इति, ध्यानं ध्यायन्ति, मा व्याघातं कार्षैति, अन्यान् भणन्ति–प्रव्रजित एष लिङ्गी मन्ये वैतालं साधयितुकामो लक्षणयुक्ता आचार्यास्तेन न कथयति, अद्य रात्रौ प्रेक्षध्वं, ते आरब्धास्तेन समं भण्डयितुं, तेन वारिताः, तदा ते राजानमपसार्य कथयित्वाऽऽनीतवन्तः, आचार्याः कालगताः स लिङ्गी न ददाति निष्काशयितुं, सोऽपि राजा प्रेक्षते, तेनापि प्रत्ययितं कालगत इति, पुष्यमित्राय न प्रत्यायति शिबिका सज्जिता, तदा निश्चयो ज्ञातो, विनाशिता भविष्यन्ति, पूर्वं भणितः स आचार्यैः–यदाऽग्निरन्यो वाऽत्ययो भवेद् तदा ममाङ्गुष्ठः स्प्रष्टव्यः, स्पृष्टः, प्रतिबुद्धो भणति–किमार्य ! व्याघातः कृतः ?, प्रेक्षध्वमेते–

[1]एएहिं सीसेहिं तुज्झ कयंति, अंबाडिया, एरिसयं किर झाणं पविसियव्वं, तो जोगा संगहिया भवंति २८ । झाणसंवरजोगे यत्ति गयं, इयाणिं उदए मारणंतिएत्ति, उदए जइ किर उदओ मारणंतिओ मारणंती वेयणा वा तो अहियासेयव्वं, तत्थोदाहरणगाहा—

रोहीडगं च नयरं ललिआ गुट्ठी अ रोहिणी गणिआ। धम्मरुइ कडुअदुद्धियदाणायणे अ कंमुदए ॥१३१८॥

इमीए वक्खाणं—रोहिडए णयरे ललियागोट्ठी रोहिणी जुण्णगणिया अण्णं जीवणिउवायं अलभंती तीसे गोट्ठीए भत्तं परंधिया, एवं कालो वच्चइ, अण्णया तीए कडुयदोद्धियं गहियं, तं च बहुसंभारसंभियं उवक्खडियं विण्णस्सइ जाव मुहे ण तीरइ काउं, तीए चिंतियं—खिंसीया होमि गोट्ठीएत्ति अण्णं उवक्खडेइ, एयं भिक्खचराण दिज्जहित्ति, मा दव्वमेवं चेव णासउ, जाव धम्मरुई णाम अणगारो मासक्खमणपारणए पविट्ठो, तस्स दिन्नं, सो गओ उवस्सयं, आलोएइ गुरूणं, तेहि भायणं गहियं, खारगंधो य णाओ, अंगुलिए विण्णासियं, तेहि चिंतियं—जो एयं आहारेइ सो मरइ, भणिओ

---

१ युष्माकं शिष्यैः कृतमिति, निर्भर्त्सिताः, ईदृशं किल ध्यानं प्रवेष्टव्यं, ततो योगाः संगृहीता भवन्ति। ध्यानसंवरयोगा इति गतं, इदानीमुदयो मारणान्तिक इति, यदि किलोदयो मारणान्तिको मारणान्तिकी वेदना वा तदाऽध्यासितव्यं तत्रोदाहरणगाथा। अस्या व्याख्यानं—रोहिडके नगरे ललितागोष्ठी रोहिणी जीर्णगणिका अन्यं आजीविकोपायमलभमाना तस्या गोष्ठया भक्तं प्रराद्धवती, एवं कालो व्रजति, अन्यदा तया कटुकं दौग्धिकं गृहीतं, तच्च बहुसंभारसंभृतमुपस्कृतं विनश्यति यावत् मुखे न शक्यते कर्त्तुं, तया चिन्तितं—निन्दिता भविष्यामि गोष्ठयां इति, अन्यदुपस्करोति, एतत् भिक्षाचरेभ्यो दीयते इति, मा द्रव्यमेवमेव विनङ्क्षीद्, यावत् धर्मरुचिरनगारो मासक्षपणपारणके प्रविष्टः, तस्मै दत्तं, स गत उपाश्रयं, आलोचयति गुरून्, तैर्भाजनं गृहीतं, विषगन्धश्च ज्ञातः, अङ्गुल्या जिज्ञासितं, तैश्चिन्तितं—य एनमाहारयति स म्रियते, भणितः—

'विगिंचेहित्ति, सो तं गहाय अडविं गओ, एगत्थ रुक्खदड्डुच्छायाए विगिंचामि, पत्ताबंधं मुयंतस्स हत्थो लित्तो, सो तेण एगत्थ फुसिओ, तेण गंधेण कीडियाओ आगयाओ, जा जा खाइ सा सा मरइ, तेण चिंतियं—मए एगेण समप्पउ मा जीवघाओ होउत्ति एगत्थ थंडिले आलोइयपडिक्कंतेणं मुहाणंतगं पडिलेहित्ता अणिंदंतेण आहारियं, वेयणा य तिव्वा जाया अहियासिया, सिद्धो, एवं अहियासेयव्वं, उदए मारणंतियत्तिगयं २९। इयाणिं संगाणं च परिहरणंति, संगो नाम 'षञ्ज सङ्गे' भावतोऽभिष्वङ्गः स्नेहगुणतो रागः भावो उ अभिसंगो येनास्य सङ्गेन भयमुत्पद्यते तं जाणणापरिण्णाए णाऊण पच्चक्खाणपरिण्णाए पच्चक्खाएयव्वं, तत्थोदाहरणगाहा—

**नयरी य चंपनामा जिणदेवो सत्थवाहअहिछत्ता। अडवी य तेण अगणी सावयसंगाण वोसिरणा ॥१३१९॥**

इमीए वक्खाणं—चंपाए जिणदेवो नाम सावगो सत्थवाहो उग्घोसेत्ता अहिछत्तं वच्चइ, सो सत्थो पुलिंदएहिं विलोलिओ, सो सावगो नासंतो अडविं पविठ्ठो जाव पुरओ अग्गिभयं मग्गओ वग्घभयं दुहओ पवायं, सो भीओ, असरणं

---

१ त्यजेति, स तं गृहीत्वाऽटवीं गतः, एकत्र दग्धवृक्षच्छायायां त्यजामीति, पात्रबन्धं मुञ्चतो हस्तो लिप्तः, स तेनैकत्र स्पृष्टः, तेन गन्धेन कीटिका आगताः, या या खादति सा सा म्रियते, तेन चिन्तितं—मयैकेन समाप्यतां मा जीवघातो भूदिति एकत्र स्थण्डिले मुखानन्तकं प्रतिलिख्य आलोचितप्रतिक्रान्तेनानिन्दयताऽऽहारितं, वेदना च तीव्रा जाताऽध्यासिता, सिद्धः, एवमध्यासितव्यं, उदयो मारणान्तिक इति गतं, इदानीं सङ्गानां च परिहरणमिति, सङ्गो नाम, भावस्वभिष्वङ्गः स ज्ञानपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्यातव्यः, तत्रोदाहरणगाथा। अस्या व्याख्यानं—चम्पायां जिनदेवो नाम श्रावकः सार्थवाह उद्घोष्याहिच्छत्रां व्रजति, स सार्थः पुलिन्द्रैर्विलोलितः, स श्रावको नश्यन् अटवीं प्रविष्टो यावत् पुरतोऽग्निभयं पृष्ठतो व्याघ्रभयं द्विधातः प्रपातं, स भीतः, अशरणं

[1]णाऊण सयमेव भावलिंगं पडिवज्जित्ता कयसामाइओ पडिमं ठिओ, सावएहिं खइओ, सिद्धो, एवं संगपरिण्णाए जोगा संगहिया भवंति ३०। संगाणं च परिण्णत्ति गयं, इयाणिं पायच्छित्तकरणन्ति, जहाविहीए दत्तस्स, विही नाम जहा सुत्ते भणियं जो जित्तिएण सुज्झइ तं सुट्ठु उवउंजिउं देंतेण जोगा संगहिया भवंति दोण्हवि करेंतदेंतयाणं, तत्थोदाहरणं प्रति गाथापूर्वार्धमाह—

पायच्छित्तपरूवण आहरणं तत्थ होइ धणगुत्ता ।

इमस्स वक्खाणं—एगत्थ णयरे धणगुत्ता आयरिया, ते किर पायच्छित्तं जाणंति दाउं छउमत्थगावि होंतगा जहा एत्तिएण सुज्झइ वा नवत्ति, इंगिएण जाणइ, जो ताण मूले वहइ ताहे सो सुहेण णित्थरइ तं चाइयारं ठिओ य सो होइ अब्भहियं च निज्जरं पावेइ, तहा कायव्वं, एवं दाणे य करणे य जोगा संगहिया भवंति, पायच्छित्तकरणेत्ति गयं ३१। इयाणिं आराहणा य मारणंतित्ति, आराहणाए मरणकाले योगाः सङ्गृह्यन्ते, तत्रोदाहरणं प्रति गाथापश्चार्धमाह—

---

१ ज्ञात्वा स्वयमेव भावलिङ्गं प्रतिपद्य कृतसामायिकः प्रतिमां स्थितः, श्वापदैः खादितः, सिद्धः, एवं सङ्गपरिज्ञया योगाः संगृहीता भवन्ति । सङ्गानां च परिज्ञेति गतं । इदानीं प्रायश्चित्तकरणमिति यथाविधि दत्तस्य, विधिर्नाम यथा सूत्रे भणितं यो यावता शुध्यति तं सुष्ठु उपयुज्य ददता योगाः संगृहीता भवन्ति द्वयोरपि कुर्वद्ददतोः, तत्रोदाहरणं । अस्य व्याख्यानं–एकत्र नगरे धनगुप्ता आचार्याः, ते किल प्रायश्चित्तं जानन्ति दातुं छद्मस्था अपि सन्तो यथेयता शुध्यति वा नवेति, इङ्गितेन जानाति, यस्तेषां मूले वहति तदा स सुखेन निस्तरति तं चातिचारं, स्थिरश्च भवति सः अभ्यधिकां च प्राप्नोति निर्जरां, तथा कर्त्तव्यं, एवं दाने करणे च योगाः संगृहीता भवन्ति, प्रायश्चित्तकरणमिति गतं । इदानीमाराधना च मारणान्तिकीति, आराधनया मरणकाले योगाः संगृह्यन्ते,

आराहणाएँ मरुदेवा ओसप्पिणीए पढम सिद्धो ॥ १३२० ॥

अस्य व्याख्या—विणीयाए णयरीए भरहो राया, उसहसामिणो समोसरणं, प्राकारादिः सर्वः समवसरणवर्णकोऽभिधातव्यो यथा कल्पे,—सा मरुदेवा भरहं विभूसियं दट्ठूण भणइ–तुज्झ पिया एरिसिं विभूतिं चइत्ता एगो समणो हिंडइ, भरहो भणइ–कत्तो मम तारिसा विभूई जारिसा तातस्स?, जइ न पत्तियसि तो एहि पेच्छामो, भरहो निग्गओ सव्वबलेण, मरुदेवावि निग्गया, एगंमि हत्थिंमि विलग्गा, जाव पेच्छइ छत्ताइछत्तं सुरसमूहं च ओवयंतं, भरहस्स वत्थाभरणाणि ओमिलायंताणि दिट्ठाणि, दिट्ठा पुत्तविभूई ? कओ मम एरिसत्ति, सा तोसेण चिंतिउमारद्धा, अपुव्वकरणमणुपविट्ठा, जाती नत्थि, जेण वणस्सइकाएहिंतो उवट्टित्ता, तत्थेव हत्थिवरगयाए केवलनाणं उप्पण्णं, सिद्धा, इमीए ओसप्पिणीए पढमसिद्धो। एवमाराधनां प्रति योगसङ्ग्रहः कर्तव्य इति ३२।

१ विनीतायां नगर्यां भरतो राजा, ऋषभस्वामिनः समवसरणं, सा मरुदेवी भरतं विभूषितं दृष्ट्वा भणति–तव पितेदृशीं विभूतिं त्यक्त्वैकः श्रमणो हिण्डते, भरतो भणति–कुतो मम तादृशी विभूतिर्यादृशी तातस्य ?, यदि न प्रत्येषि तदेहि प्रेक्षावहे, भरतो निर्गतः सर्वबलेन, मरुदेव्यपि निर्गता, एकस्मिन् हस्तिनि विलग्ना, यावत् प्रेक्षते छत्रातिच्छत्रं सुरसमूहं चावपतन्तं, भरतस्य वस्त्राभरणान्यवम्लायमानानि दृष्टानि, दृष्टा पुत्रविभूतिः ? कुतो ममेदृशी ? इति, सा तोषेण चिन्तयितुमारब्धा, अपूर्वकरणमनुप्रविष्टा, जातिस्मृतिर्नास्ति येन वनस्पतिकायिकादुद्वृत्ता, तत्रैव वरहस्तिस्कन्धगतायाः केवलज्ञानमुत्पन्नं, सिद्धा, अस्यामवसर्पिण्यां प्रथमः सिद्धः।

## तेत्तीसाए आसायणाहिं (सूत्रं)

त्रयस्त्रिंशद्भिराशातनाभिः, क्रिया पूर्ववत्, आयः—सम्यग्दर्शनाद्यवाप्तिलक्षणः तस्या शातना, तदुपदर्शनायाह सङ्ग्रहणिकारः—

पुरओ पक्खासन्ने गंता चिट्ठणनिसीयणायमणे । आलोयणपडिसुणणा पुव्वालवणे य आलोए ॥ १ ॥
तह उवदंसनिमंतण खद्धाईयाण तह अपडिसुणणे । खद्धंति य तत्थ गए किं तुम तज्जाइ णो सुमणे ॥ २ ॥
णो सरसि कहं छेत्ता परिसं भित्ता अणुट्ठियाइ कहें । संथारपायघट्टण चिट्ठे उच्चासणाईसु ॥ ३ ॥

आसां व्याख्या—इहाकारणे रत्नाधिकस्याऽऽचार्यादेः शिक्षकेणाऽऽशातनाभीरुणा सामान्येन पुरतो गमनादि न कार्यं, कारणे तु मार्गादिपरिज्ञानादौ ध्यामलदर्शनादौ च विपर्ययः अत्र सामाचार्यनुसारेण स्वबुद्ध्याऽऽलोचनीयः, तत्र पुरतः—अग्रतो गन्ताऽऽशातनावानेव, तथाहि—अग्रतो न गन्तव्यमेव, विनयभङ्गादिदोषात्, 'पक्ख'त्ति पक्षाभ्यामपि गन्ताऽऽशातनावानेव, अतः पक्षाभ्यामपि न गन्तव्यमुक्तदोषप्रसङ्गादेव, आसन्नः पृष्ठतोऽप्यासन्नं गन्तैवमेव वक्तव्यः, तत्र निःश्वासक्षुतश्लेष्मकणपातादयो दोषाः, ततश्च यावता भूभागेन गच्छत एते न भवन्ति तावता गन्तव्यमिति, एवमक्षरगमनिका कार्या, असम्मोहार्थं तु दशासूत्रैरेव प्रकटार्थैर्व्याख्यायन्ते, तद्यथा—'पुरओ'त्ति सेहे रायणियस्स पुरओ गंता भवइ आसायणा सेहस्स १, पक्खत्ति सेहे राइणियस्स पक्खे गंता भवइ आसायणा सेहस्स २, आसण्णत्ति सेहे राइणियस्स णिसीययस्स

१ पुरत इति शैक्षो रात्निकस्य पुरतो गन्ता भवत्याशातना शैक्षस्य १, पक्षेति शैक्षो रात्निकस्य पक्षयोर्गन्ता भवत्याशातना शैक्षस्य, २ आसन्नमिति शैक्षो रत्नाधिकस्य निषीदत

आसन्नं गंता भवइ आसायणा सेहस्स ३, चिट्ठत्ति सेहे रायणियस्स पुरओ चिट्ठेत्ता भवइ आसायणा सेहस्स ४, सेहे राइणियस्स पक्खं चिट्ठेत्ता भवइ आसायणा सेहस्स ५, सेहे राइणियस्स आसण्णं चिट्ठेत्ता भवइ आसायणा सेहस्स ६, निसीयणत्ति सेहे रायणियस्स पुरओ निसीइत्ता भवइ आसायणा सेहस्स ७, सेहे राइणियस्स सपक्खं निसीइत्ता भवइ आसायणा सेहस्स ८, सेहे राइणियस्स आसण्णं निसीयित्ता भवइ आसायणा सेहस्स ९, 'आयमणे'त्ति सेहे राइणिएणं सद्धिं बहिया विचारभूमीं निक्खंते समाणे तत्थ सेहे पुव्वतरायं आयामति पच्छा रायणिए आसायणा सेहस्स १०, 'आलोयणे'त्ति सेहे रायणिएणं सद्धिं बहिया विचारभूमीं निक्खंते समाणे तत्थ सेहं पुव्वतरायं आलोएइ आसायणा सेहस्स, 'गमणागमणे'त्ति भावणा ११ 'अपडिसुणणे'त्ति सेहे राइणियस्स राओ वा वियाले वा वाहरमाणस्स अज्जो! के सुत्ते के जागरइ?, तत्थ सेहे जागरमाणे रायणियस्स अपडिसुणेत्ता भवइ आसायणा सेहस्स १२, 'पुव्वालवणे'त्ति केइ रायणियस्स पुव्वसंलत्तए सिया तं सेहे पुव्वतरायं आलवइ पच्छा रायणिए आसायणा सेहस्स १३, आलोएइत्ति असणं वा ४ पडिग्गाहेत्ता तं

---

१ आसन्नं गन्ता भवति आशातना शैक्षस्य ३, 'तिष्ठ'त्ति शैक्षो रत्नाधिकस्य पुरतः स्थाता भवति आशातना शैक्षस्य ४, शैक्षो रत्नाधिकस्य पार्श्वे स्थाता भवत्याशातना शैक्षस्य ५, शैक्षो रत्नाधिकस्यासन्नं स्थाता भवत्याशातना शैक्षस्य ६, 'निषदन'मिति शैक्षो रत्नाधिकस्य पुरतो निषीदयिता भवत्याशातना शैक्षस्य ७, शैक्षो रत्नाधिकस्य पार्श्वे निषीदयिता भवत्याशातना शैक्षस्य ८, शैक्षो रत्नाधिकस्यासन्नं निषीदयिता भवत्याशातना शैक्षस्य ९, 'आचमन'मिति शैक्षो रत्नाधिकेन सार्धं बहिर्विचारभूमिं निष्क्रान्तः सन् तत्र शैक्षः पूर्वमेवाचामति पश्चाद् रात्निकः आशातना शैक्षस्य १०, 'आलोचने'ति शैक्षो रात्निकेन सार्धं बहिर्विचारभूमिं निष्क्रान्तः सन् तत्र शैक्षः पूर्वमेवालोचयति आशातना शैक्षस्य, गमनागमनमिति भावना ११, अप्रतिश्रवणमिति शैक्षो रत्नाधिके रात्रौ वा विकाले वा व्याहरति आर्य! कः सुप्तो कः जागर्ति?, तत्र शैक्षो जागरन् रात्निकस्याप्रतिश्रोता भवत्याशातना शैक्षस्य १२, 'पूर्वालपन'मिति कश्चित् रत्नाधिकस्य पूर्वसंलप्तः स्यात् तं शैक्षः पूर्वमेवालपति पश्चात् रात्निकः आशातना शैक्षस्य १३, 'आलोचयती'ति अशनं वा ४ प्रतिगृह्य तत्

[1]पुव्वामेव सेहतरागस्स आलोएति पच्छा रायणियस्स आसायणा सेहस्स १४, 'उवदंसे'त्ति सेहे असणं वा ४ पडिग्गाहेत्ता तं पुव्वामेव सेहतरागस्स उवदंसेइ पच्छा रायणियस्स आसायणा सेहस्स १५, निमंतणेत्ति सेहे असणं वा ४ पडिग्गाहेत्ता पुव्वामेव सेहतरागं निमंतेइ पच्छा राइणियं आसायणा सेहस्स १६, खद्धत्ति सेहे राइणिएण सद्धिं असणं वा ४ पडिग्गाहेत्ता तं राइणियं अणापुच्छित्ता जस्स जस्स इच्छइ तस्स २ खद्धं खद्धं दलयइ आसायणा सेहस्स १७, 'आइयण'त्ति सेहे असणं वा ४ पडिगाहित्ता राइणिएण सद्धिं भुंजमाणे तत्थ सेहे खद्धं २ दायं २ ऊसढं २ रसियं २ मणुण्णं २ मणामं २ णिद्धं २ लुक्खं २ आहरेत्ता भवइ आसायणा सेहस्स, इहं च खद्धंति वड्डुवड्डुणं लंबणेणं डायं डायंति पत्रशाकः वाइंगणचिब्भड-गएत्तिगादि ऊसढंति वन्नगंधरसफरिसोववेयं रसियंति रसालं रसियं दाडिमंवादि 'मणुण्णं'ति मणसो इट्ठं, 'मणामं'ति २ मणसा मण्णं मणामं 'निद्धं'ति २ नेहावगाढं 'लुक्खं'ति नेहवज्जियं १८,'अप्पडिसुणणे'त्ति सेहे राइणियस्स वाहरमाणस्स अप-डिसुणेत्ता भवइ आसायणा सेहस्स, सामान्येन दिवसओ अपडिसुणेत्ता भवइ १९ 'खद्धंति य'त्ति सेहे राइणियस्स खद्धं

---

१ पूर्वमेवावमरात्निकस्य आलोचयति पश्चाद्रात्निकस्याशातना शैक्षस्य १४, 'उपदर्शन'मिति शैक्षोऽशनं वा ४ प्रतिगृह्य तत् पूर्वमेवावमरात्निकायो-पदर्शयति पश्चाद्रात्निकायाशातना शैक्षस्य १५, निमन्त्रणमिति शैक्षोऽशनं वा ४ प्रतिगृह्य पूर्वमेवावमरात्निकं निमन्त्रयते पश्चाद् रात्निकं आशातना शैक्षस्य १६ 'खद्ध'मिति शैक्षो रात्निकेन सार्धमशनं वा ४ प्रतिगृह्य तत् रात्निकमनापृच्छ्य यो य इच्छति तं तं प्रचुरं प्रचुरं ददाति आशातना शैक्षस्य १७, 'अदन'मिति शैक्षोऽशनं वा ४ प्रतिगृह्य रात्निकेन सार्धं भुञ्जानस्तत्र शैक्षः प्रचुरं २ शाकं २ संस्कृतं रस्यं मनोज्ञं मनअपं स्निग्धं रूक्षं२ आहारयिता भवति आशातना शैक्षस्य, इह च खद्धंति बृहता बृहता लम्बनेन ऊसढमिति वर्णगन्धरसस्पर्शोपेतं रसितमिति रसयुक्तं दाडिमाम्रादि 'मनोज्ञ'मिति मनस इष्टं 'मनोऽम'मिति मनसा मन्यं मनामं, स्निग्धमिति स्नेहावगाढं 'रूक्षमिति स्नेहवर्जितं, १८ अप्रतिश्रवणमिति शैक्षकः रात्निके व्याहरति अप्रतिश्रोता भवति आशातना शैक्षकस्य, सामान्येन दिवसेऽप्रतिश्रोता भवति १९, खद्धेति चेति शैक्षो रात्निकं खद्धं

खद्धं वत्ता भवइ आसायणा सेहस्स, इमं च खद्धं—वड्डुसद्देणं खरकक्कसनिठुरं भणइ २०, 'तत्थ गए'त्ति सेहे राइणिए वाहरिए जत्थ गए सुणइ तत्थ गए चेव उल्लावं देइ आसायणा सेहस्स २१, 'किंति'त्ति सेहे राइणिएण आहूए किंति वत्ता भवइ आसायणा सेहस्स, किंति—किं भणसित्ति भणइ, मत्थएण वंदामोत्ति भणियव्वं २२, 'तुमं'ति सेहे राइणियं तुमंति वत्ता भवइ आसायणा सेहस्स, को तुमंति चोएत्तए, २३ 'तज्जाए'त्ति सेहे राइणियं तज्जाएणं पडिहणित्ता भवति आसायणा सेहस्स, 'तज्जाएणं'ति कीस अज्जो ! गिलाणस्स न करेसि ?, भणइ—तुमं कीस न करेसि ?, आयरिओ भणइ—तुमं आलसिओ, सो भणइ—तुमं चेव आलसिओ इत्यादि २४, 'णो सुमणो'त्ति सेहे राइणियस्स कहं कहेमाणस्स नो सुमणसो भवइ आसायणा सेहस्स, इह नो सुमणसेत्ति ओहयमणसंकप्पे अच्छइ न अणुवूहइ कहं अहो सोहणं कहियंति २५, 'णो सरसि'त्ति सेहे राइणियस्स कहं कहेमाणस्स णो समरसित्ति वत्ता भवइ आसायणा सेहस्स, इह च 'णो सुमरसि'त्ति न सुमरसि तुमं एयं अत्थं,

---

१ खद्धं वक्ता भवति आशातना शैक्षस्य, एवं च खद्धं—बृहच्छब्देन खरकर्कशनिष्ठुरं भणति २०, 'तत्र गते' इति शैक्षो रात्निकेन व्याहृतो यत्र गतः शृणोति तत्र गत एवोल्लापं ददाति आशातना शैक्षस्य २१, 'किं' मितीति शैक्षो रात्निकेनाहूतः किमिति वक्ता भवत्याशातना शैक्षस्य, किमिति किं भणसीति भणति, मस्तकेन वन्द इति भणितव्यं २२, 'त्व'मिति शैक्षो रात्निकं त्वमिति वक्ता भवति आशातना शैक्षस्य, कस्त्वमिति नोदयिता २३, 'तज्जात' इति शैक्षो रात्निकं तज्जातेन प्रतिहन्ता भवत्याशातना शैक्षस्य, तज्जातेनेति कथमार्य ! ग्लानस्य न करोषि ?, भणति—त्वं कथं न करोषि ?, आचार्यो भणति—त्वमलसः, स भणति—त्वमेवालस इत्यादि २४, 'न सुमना' इति शैक्षो रात्निके कथां कथयति नो सुमना भवत्याशातना शैक्षस्य, इह न सुमना इति उपहतमनःसंकल्पस्तिष्ठति नानुबृंहति कथां अहो शोभनं कथितमिति २५, न स्मरसीति शैक्षो रात्निके कथां कथयति न स्मरसीतिवक्ता भवति आशातना शैक्षस्य, इह च न स्मरसीति न स्मरसि त्वमेनमर्थं

[1]न एस एवं भवइ २६, कहं छेत्त'त्ति रायणियस्स कहं कहेमाणस्स तं कहं अच्छिंदित्ता भवइ आसायणा सेहस्स, अच्छिं-दित्ता भवइत्ति भणइ अहं कहेमि २७, 'परिसं भेत्ते'ति रायणियस्स कहं कहेमाणस्स परिसं भेत्ता भवति आसायणा सेहस्स, इह च परिसं भेत्तत्ति एवं भणइ–भिक्खावेला समुद्दिसणवेला सुत्तत्थपोरिसिवेला, भिंदइ वा परिसं २८, 'अणु-ट्ठियाए कहेइ' राइणियस्स कहं कहेमाणस्स तीए परिसाए अणुट्ठियाए अव्वोच्छिन्नाए अव्वोगडाए दोच्चंपि तच्चंपि कहं कहेत्ता भवइ आसायणा सेहस्स, इह तीसे परिसाए अणुट्ठियाएत्ति–निविट्ठाए चेव अवोच्छिन्नाएत्ति–जावेगोवि अच्छइ अव्वोगडाएत्ति अविसंसारियत्ति भणियं होइ, दोच्चंपि तच्चंपि–बिहिं तिहिं चउहिं तमेवत्ति जो आयरिएण कहिओ अत्थो तमेवाहिगारं विगप्पइ, अयमवि पगारो अयमवि पगारो तस्सेवेगस्स सुत्तस्स २९, 'संथारपायघट्टण'त्ति सेज्जासंथारगं पाएण संघट्टेत्ता हत्थेण ण अणुण्णवित्ता भवइ आसायणा सेहस्स, इह च सेज्जा–सव्वंगिया संथारो–अड्ढाइज्जहत्थो जत्थ वा

---

1 नैप एवं भवति २६, कथां छेत्तेति रात्निके कथां कथयति तां कथां छेदयति आशातना शैक्षस्य, आच्छेत्ता भवतीति भणति–अहं कथयामि २७, पर्षदं भेत्तेति रात्निके कथां कथयति पर्षदो भेत्ता भवति आशातना शैक्षस्य, इह च पर्षदो भेत्तेति एवं भणति–भिक्षावेला भोजनवेला सूत्रार्थपौरुषीवेला, भिनत्ति वा पर्षदं २८, अनुत्थितायां कथयति रात्निके कथां कथयति तस्यां पर्षदि अनुत्थितायामव्युच्छिन्नायामव्याकृतायां ( असंविप्रकीर्णायां ) द्विरपि त्रिरपि कथायाः कथयिता भवत्याशातना शैक्षस्य, इह तस्यां पर्षदि अनुत्थितायामिति निविष्टायामेव अव्युच्छिन्नायामिति यावदेकोऽपि तिष्ठति, अव्याकृतायामिति अविसंसृतायामिति भणितं भवति, द्विरपि त्रिरपि–द्विकृत्वस्त्रिकृत्वः चतुर्भिः तमेवेति य आचार्येण कथितोऽर्थस्तमेवाधिकारं विकल्पयति, अयमपि प्रकारः अयमपि प्रकारः तस्यैवैकस्य सूत्रस्य २९, संस्तारपादघट्टनमिति शय्यासंस्तारकौ पादेन संघट्टयित्वा हस्तेन नानुज्ञापयिता भवति आशातना शैक्षस्य, इह च शय्या–सर्वाङ्गिकी संस्तारकः–अर्धतृतीयहस्तः यत्र वा

ठाणे अच्छइ संथारो बिदलकट्ठमओ वा, अहवा सेज्जा एव संथारओ तं पाएण संघट्टेइ, णाणुजाणावेइ-न खामेइ, भणियं च-'संघट्टेत्ताण काएणं' त्यादि ३०, 'चेट्ठ'त्ति सेहे राइणियस्स सेज्जाए संथारे वा चिट्ठित्ता वा निसिइत्ता वा तुयट्टित्ता वा भवइ आसायणा सेहस्स ३१, 'उच्च'त्ति सेहे राइणियस्स उच्चासणं चिट्ठित्ता वा निसिइत्ता वा भवइ आसायणा सेहस्स ३२, 'समासणे यावि'त्ति सेहे राइणियस्स समासणं चिट्ठित्ता वा निसीइत्ता वा तुयट्टित्ता वा भवइ आसायणा सेहस्सत्ति ३३ गाथात्रितयार्थः ॥ ॥ सूत्रोक्ताशातनासम्बन्धाभिधित्सयाह सङ्ग्रहणिकारः—

अहवा-अरहंताणं आसायणादि सज्झाए किंचिणाहीयं । जा कंठसमुद्दिट्ठा तेत्तीसासायणा एया ॥ १ ॥ प्रतिक्रमणसङ्ग्रहणी समाप्ता ॥

व्याख्या—अथवा-अयमन्यः प्रकारः, 'अर्हतां' तीर्थकृतामाशातना, आदिशब्दात्सिद्धादिग्रहः यावत्स्वाध्याये किञ्चिन्नाधीतं 'सज्झाए ण सज्झाइयंति वुत्तं भवइ,' एताः 'कण्ठसिद्धाः' निगदसिद्धा एवेत्यर्थः, त्रयस्त्रिंशदाशातना इति गाथार्थः ॥ साम्प्रतं सूत्रोक्ता एव त्रयस्त्रिंशद्व्याख्यायन्ते, तत्र—

---

१ स्थाने तिष्ठति संस्तारको द्विदलकाष्ठमयो वा, अथवा शय्यैव संस्तारकः तं पादेन संघट्टयति, नानुज्ञापयति-न क्षमयति, भणितं च 'कायेन संघट्टयित्वे'त्यादि ३०, स्थातेति शैक्षो रात्निकस्य शय्यायां संस्तारके वा स्थाता वा निषीदयिता वा त्वग्वर्त्तयिता वा भवत्याशातना शैक्षस्य ३१, उच्च इति शैक्षो रात्निकासनात् उच्च आसने स्थाता निषीदयिता वा भवत्याशातना शैक्षस्य ३२, समासने चापीति शैक्षो रात्निकासनस्य सम आसने स्थाता वा निषीदयिता वा त्वग्वर्त्तयिता वा भवत्याशातना शैक्षस्येति ।

अरिहंताणं आसायणाए सिद्धाणं आसायणाए आयरियाणं आसायणाए उवज्झायाणं आसायणाए साहूणमासायणाए साहुणीणं आसायणाए सावगाणं आसायणाए साविंयाणं आसायणाए देवाणं आसायणाए देवीणं आसायणाए इहलोगस्सासायणाए परलोगस्स आसायणाए केवलिपन्नत्तस्स धम्मस्स आसायणाए सदेवमणुयासुरस्स लोगस्स आसायणाए सव्वपाणभूयजीवसत्ताणं आसायणाए कालस्स आसायणाए सुयस्स आसायणाए सुयदेवयाए आसायणाए वायणायरियस्स आसायणाए ( सूत्रं )

अर्हतां—अनिरूपितशब्दार्थानां सम्बन्धिन्याऽऽशातनया यो मया दैवसिकोऽतिचारः कृतस्तस्य मिथ्या दुष्कृतमिति क्रिया, एवं सिद्धादिपदेष्वपि योज्यते, इत्थं चाभिदधतोऽर्हतामाशातना भवति–नत्थी अरहंतत्ती जाणंतो कीस भुंजई भोए। पाहुडियं उवजीवे एव वयंतुत्तरं इणमो ॥ १ ॥ भोगफलं निव्वत्तियपुण्णपगडीणमुदयबाहल्ला । भुंजइ भोए एवं पाहुडियाए इमं सुणसु ॥ २ ॥ णाणाइअणवरोहकअघातिसुहपायवस्स वेयाए। तित्थंकरनामाए उदया तह वीयरायत्ता ॥ ३ ॥ सिद्धानामाशातनया, क्रिया पूर्ववत्–सिद्धाणं आसायण एव भणंतस्स होइ मूढस्स । नत्थी निच्चेट्ठा

---

१ न सन्ति अर्हन्त इति जानतो वा कथं भुनक्ति भोगान्?। प्राभृतिकां (समवसरणादिकं) उपजीवति कथं ? एवं वदत उत्तरमिदम् ॥ १ ॥ निर्वर्तितभोगफलपुण्यप्रकृतीनामुदयबाहुल्यात्। भुनक्ति भोगान् एवं प्राभृतिकायां इदं शृणु ॥ २ ॥ ज्ञानाद्यनवरोधकाघातिसुखपादपस्य वेदनाय । तीर्थंकरनाम्न उदयात् तथा वीतरागत्वात् ॥ ३ ॥ सिद्धानामाशातना एवं भणतो भवति मूढस्य । न सन्ति निश्चेष्टा

वा सइवावी अहव उवओगे ॥ १ ॥ रागद्दोसधुवत्ता तहेव अण्णन्नकालमुवओगो । दंसणणाणाणं तू होइ असवण्णुया चेव ॥ २ ॥ अण्णोण्णावरणभ(ता)वा एगत्तं वावि णाणदंसणओ । भण्णइ नवि एएसिं दोसो एगोवि संभवइ ॥ ३ ॥ अत्थित्ति नियम सिद्धा सद्दाओ चेव गम्मए एवं । निच्छिन्नावि भवंती वीरियकुखयओ न दोसो हु ॥४॥ रागद्दोसो न भवे सवकसायाण निरवसेसखया । जियसाभव्वा ण जुगवमुवओगो नयमयाओ य ॥ ५ ॥ न पिहूआवरणाओ दवट्ठिनयस्स वा मयेणं तु । एगत्तं वा भवई दंसणणाणाण दोण्हंपि ॥ ६ ॥ णाणणय दंसणणए पडुच्च णाणं तु सवमेवेयं । सवं च दंसणंती एवमसवण्णुया का उ? ॥ ७ ॥ पासणयं व पडुच्चा जुगवं उवओग होइ दोण्हंपि । एवमसवण्णुत्ता एसो दोसो न संभवइ ॥ ८ ॥ आचार्याणामाशातना, क्रिया पूर्ववत्, आशातना तु—डहरो अकुलीणोत्ति य दुम्मेहो दमगमंदबुद्धित्ति । अवियप्पलाभलद्धी सीसो परिभवइ आयरिए ॥ १ ॥ अहवावि वए एवं उवएस परस्स देंति एवं तु । दसविहवेयावच्चे कायवे

---

१ वा सदा वाऽपि उपयोगेऽथवा ॥ १ ॥ ध्रुवरागद्वेषत्वात्तथैवान्यान्यकाल उपयोगात् । दर्शनज्ञानयोस्तु भवत्यसर्वज्ञतैव ॥ २ ॥ अन्योऽन्यावारकता वा एकत्वं वाऽपि ज्ञानदर्शनयोः । भण्यते नैवैतेषां दोष एकोऽपि संभवति ॥ ३ ॥ सन्तीति नियमतः सिद्धाः शब्दादेव गम्यन्ते एवम् । निश्छिद्रा अपि भवन्ति वीर्यक्षयतो नैव दोषः ॥ ४ ॥ रागद्वेषौ न स्यातां सर्वकषायाणां निरवशेषक्षयात् । जीवस्वाभाव्यात् नोपयोगयौगपद्यं नयमताच्च ॥ ५ ॥ न पृथगावरणात् (ऐक्यं) द्रव्यार्थिकनयस्य वा मतेन तु । एकत्वं वा भवति ज्ञानदर्शनयोर्द्वयोरपि ॥ ६ ॥ ज्ञाननयं प्रतीत्य सर्वमेवेदं ज्ञानं दर्शननयं प्रतीत्य सर्वमेवेदं दर्शनमिति एवमसर्वज्ञता का तु? ॥ ७ ॥ पश्यत्तां वा प्रतीत्य युगपदुपयोगो भवति द्वयोरपि । एवमसर्वज्ञता एष दोषो न संभवति ॥ ८ ॥ बालोऽकुलीन इति च दुर्मेधा द्रमको मन्दबुद्धिरिति । अपि चाल्पलाभलब्धिः शिष्यः परिभवत्याचार्यान् ॥ १ ॥ अथवाऽपि वदत्येवं—उपदेशं परस्मै ददति एवं तु । दशविधं वैयावृत्त्यं कर्त्तव्यं

सयं न कुव्वंति ॥ २ ॥ डहरोवि णाणवुड्ढो अकुलीणोत्ति य गुणालओ किह णु ? । दुम्मेहाईणिवि एवं भणंतऽसंताइ दुम्मेहो ॥ ३ ॥ जाणंति नविय एवं निद्धम्मा मोक्खकारणं णाणं । निच्चं पगासयंता वेयावच्चाइ कुव्वंति ॥ ४ ॥ उपाध्यायानामाशातनया, क्रिया पूर्ववत्, आशातनाऽपि साक्षेपपरिहारा यथाऽऽचार्याणां नवरं सूत्रप्रदा उपाध्याया इति, साधूनामाशातनया, क्रिया पूर्ववत्,—जोऽमुणियसमयसारो साहुसमुद्दिस्स भासए एवं । अविसहणातुरियगई भंडणमामुंडणा चेव ॥ १ ॥ पाणसुणया व भुंजंति एगओ तह विरूवनेवत्था । एमाइ वयदवण्णं मूढो न मुणेइ एयं तु ॥ २ ॥ अविसहणादिसमेया संसारसहावजाणणा चेव । साहू चेवऽकसाया जओ पभुंजंति ते तहवि ॥ ३ ॥ साध्वीनामाशातनया, क्रिया पूर्ववत्,—कलहणिया वहुउवही अहवावि समणुवद्दवो समणी । गणियाण पुत्तभण्डा दुमवेल्लि जलस्स सेवालो ॥ १ ॥ अत्रोत्तरं—कलहंति नेव नाऊण कसाए कम्मबंधबीए उ । संजलणाणमुदयओ ईसिं कलहेवि को दोसो ? ॥ २ ॥ उवही य बहुविगप्पो बंभव्वयरक्खणत्थमेयासिं । भणिओ जिणेहि जम्हा तम्हा उवहिंमि नो दोसो ॥ ३ ॥ समणाण नेय एया उवद्दवो

---

१ स्वयं न कुर्वन्ति ॥ २ ॥ बालोऽपि ज्ञानवृद्धोऽकुलीन इति गुणालयः कथं नु ? । दुर्मेधआदीन्यपि एवं भणति असन्ति दुर्मेधः ॥ ३ ॥ जानन्ति नापि चैवं च निर्धर्माणो मोक्षकारणं ज्ञानं । नित्यं प्रकाशयन्तो वैयावृत्त्यादि कुर्वन्ति ॥४॥ योऽज्ञातसमयसारः साधून् समुद्दिश्य भाषते एवम् । अविषहणा अत्वरितगतय भण्डनमामुण्डनं चैव ॥ १ ॥ पाणा इव श्वान इव भुञ्जन्ति एकतस्तथा विरूपनेपथ्याः । एवमादिं वदत्यवर्णं मूढो न जानात्येतत्तु ॥ २ ॥ अविषहणादिसमेताः संसारस्वभावज्ञानादेव । साधव एवाकषाया यतोऽतः प्रभुञ्जन्ति ते तथैव ॥ ३ ॥ कलहकारिका बहूपधिका अथवाऽपि श्रमणोपद्रवः श्रमणी । गणिकानां पुत्रभाण्डा द्रुमस्य वल्ली जलस्य शैवालः ॥ १ ॥ कषायान् कर्मबन्धबीजानि ज्ञात्वा नैव कलहयन्ति । संज्वलनानामुदयात् ईषत् कलहेऽपि को दोषः ? ॥ २ ॥ उपधिश्च बहुविकल्पो ब्रह्मव्रतरक्षणार्थमेतासाम् । भणितो जिनैर्यस्मात् तस्मादुपधौ न दोषः ॥ ३ ॥ श्रमणानां नैता उपद्रवः

सम्ममणुसरंताणं । आगमविहिं महत्थं जिणवयणसमाहियप्पाणं ॥ ४॥ श्रावकाणामाशातनया, क्रिया तथैव, जिनशासनभक्ता गृहस्थाः श्रावका उच्यन्ते, आशातना तु—लद्धूण माणुसत्तं नाऊणवि जिणमयं न जे विरइं । पडिवज्जंति कहं ते धण्णा वुच्चंति लोगंमि ? ॥ १ ॥ सावगसुत्तासायणमत्थुत्तरं कम्मपरिणइवसाओ । जइवि पवज्जंति न तं तहावि धण्णत्ति मग्गठिया ॥ २ ॥ सम्यग्दर्शनमार्गस्थितत्वेन गुणयुक्तत्वादित्यर्थः, श्राविकाणामाशातनया, क्रियाऽऽक्षेपपरिहारौ पूर्ववत्, देवानामाशातनया, क्रिया तथैव, आशातना तु—कामपसत्ता विरईए वज्जिया अणिमिसया (३)निच्चिट्ठा। देवा सामत्थंमिवि न य तित्थस्सुन्नइकरा य ॥ १ ॥ एत्थ पसिद्धी मोहणियसायवेयणियकम्मउदयाओ । कामपसत्ता विरई कम्मोदयउ च्चिय न तेसिं ॥ २ ॥ अणिमिस देवसहावा णिच्चिट्ठाणुत्तरा उ कयकिच्चा । कालाणुभावा तित्थुन्नईवि अन्नत्थ कुव्वंति ॥ ३ ॥ देवीनामाशातनया, क्रियाक्षेपपरिहारौ प्राग्वत् । इहलोकस्याऽऽशातनया, क्रिया प्राग्वत् । इहलोको—मनुष्यलोकः, आशातना तस्य वितथप्ररूपणादिना, परलोकस्याऽऽशातनया, प्राग्वत्, परलोकः—नारकतिर्यगमराः, आशातना तस्य वितथप्ररूपणादिनैव, द्वितयेऽप्याक्षेपपरिहारौ स्वमत्या कार्यौ । केवलिप्रज्ञप्तस्य धर्मस्याऽऽशातनया, क्रिया प्राग्वत्, स च धर्मो

१ सम्यगनुसरतां। आगमविधिं महार्थं जिनवचनसमाहितात्मना ॥ ४ ॥ लब्ध्वा मानुष्यं ज्ञात्वाऽपि जिनवचनं न ये विरतिं। प्रतिपद्यन्ते कथं ते धन्या उच्यन्ते लोके ? ॥ १ ॥ श्रावकाशातनासूनमनोत्तरं कर्मपरिणतिवशात् । यद्यपि न तां प्रतिपद्यन्ते तथापि धन्या मार्गस्थिता इति ॥ २ ॥ कामप्रसक्ता विरत्या वर्जिता अनिमेषा निश्चेष्टाश्च । देवाः सामर्थ्येऽपि न च तीर्थोन्नतिकारकाश्च ॥ १ ॥ अत्रोत्तरं मोहनीयसातवेदनीयकर्मोदयात् । कामप्रसक्ता विरतिश्च कर्मोदयत एव न तेषाम् ॥ २ ॥ अनिमेषा देवस्वाभाव्यात् निश्चेष्टा अनुत्तरास्तु कृतकृत्याः । कालानुभावात् तीर्थोन्नतिमपि अन्यत्र कुर्वन्ति ॥ ३ ॥

द्विविधः—श्रुतधर्मश्चारित्रधर्मश्च, आशातना तु—पाययसुत्तनिवद्धं को वा जाणेइ पणीय केणेयं ?। किं वा चरणेणं तू दाणेण विणा उ हवइत्ति ॥१॥ उत्तरं—"वालस्त्रीमूढ(मन्द)मूर्खाणां, नृणां चारित्रकाङ्क्षिणाम्। अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ १ ॥" निपुणधर्मप्रतिपादकत्वाच्च सर्वज्ञप्रणीतत्वमिति, चरणमाश्रित्याह—'दानमौरभ्रिकेणापि, चाण्डालेनापि दीयते । येन वा तेन वा शीलं, न शक्यमभिरक्षितुम् ॥ १ ॥ दानेन भोगानाप्नोति, यत्र यत्रोपपद्यते । शीलेन भोगान् स्वर्गं च, निर्वाणं चाधिगच्छति ॥ २ ॥ तथाऽभयदानदाता चारित्रवान्नियत एवेति । सदेवमनुष्यासुरस्य लोकस्याऽऽशातनया, क्रिया प्राग्वत्, आशातना तु वितथप्ररूपणादिना, आह च भाष्यकारः—

देवादीयं लोयं विवरीयं भणइ सत्तदीवुदही । तह कइ पयावईणं पयईपुरिसाण जोगो वा ॥ २१३ ॥
उत्तरं—सत्तसु परिमियसत्ता मोक्खो सुण्णत्तणं पयावइ य । केण कउत्तऽणवत्था पयडीएँ कहं पवित्तित्ति ? ॥२१४॥
जमचेयणत्ति पुरिसत्थनिमित्तं किल पवत्तती सा य । तीसे च्चिय अपवित्ती परोत्ति सव्वं चिय विरुद्धं॥२१५॥ (भा०)

सर्वप्राणभूतजीवसत्त्वानामाशातनया, क्रिया प्राग्वत्, तत्र प्राणिनः—द्वीन्द्रियादयः व्यक्तोच्छ्वासनिःश्वासा अभूवन् भवन्ति भविष्यन्ति चेति भूतानि—पृथिव्यादयः जीवन्ति जीवा—आयुःकर्मानुभवयुक्ताः सर्व एवेत्यर्थः सत्त्वाः—सांसारिकसंसा-

---

१ प्राकृतः सूत्रनिबन्ध इति को वा जानाति केनेदं प्रणीतमिति । किं वा चारित्रेणैव दानेन विना भवति तु ॥ १ ॥ देवादिकं लोकं विपरीतं वदति सप्त द्वीपोदधयः । तथा कृतिः प्रजापतेः प्रकृतिपुरुषयोः संयोगो वा ॥ १ ॥ उत्तरं—सप्तसु परिमिताः सत्त्वा अमोक्षः शून्यत्वं वा प्रजापतिश्च । केन कृत इत्यनवस्था प्रकृतेः कथं प्रवृत्तिरिति ? ॥ २ ॥ यदचेतनेति पुरुषार्थनिमित्तं किल प्रवर्त्तते सा च । तस्या एवाप्रवृत्तावितरोऽपि सर्वमेवैवं विरुद्धम् ॥ ३ ॥

रातीतभेदाः, एकार्थिका वा ध्वनय इति, आशातना तु विपरीतप्ररूपणादिनैव, तथाहि—अङ्गुष्ठपर्वमात्रो द्वीन्द्रियाद्यात्मेति, पृथिव्यादयस्त्वजीवा एव, स्पन्दनादिचैतन्यकार्यानुपलब्धेः, जीवाः क्षणिका इति, सत्त्वाः संसारिणोऽङ्गुष्ठपर्वमात्रा एव भवन्ति, संसारातीता न सन्त्येव, अपि तु प्रध्यातदीपकल्पोपमो मोक्ष इति, उत्तरं—देहमात्र एवात्मा, तत्रैव सुखदुःखादितत्कार्योपलब्धेः, पृथिव्यादीनां त्वल्पचैतन्यत्वात् कार्यानुपलब्धिर्नाजीवत्वादिति, जीवा अप्येकान्तक्षणिका न भवन्ति, निरन्वयनाशे उत्तरक्षणस्यानुत्पत्तेर्निर्हेतुकत्वादेकान्तनष्टस्यासदविशेषत्वात्, सत्त्वाः संसारिणः ( देहप्रमाणाः ), प्रत्युक्ता एव संसारातीता अपि विद्यन्त एवेति, जीवस्य सर्वथा विनाशाभावात्, तथाऽन्यैरप्युक्तं—"नासतो विद्यते भावो, नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १ ॥" इत्यादि। कालस्याऽऽशातनया, क्रिया पूर्ववत्, आशातना तु नास्त्येव काल इति कालपरिणतिर्वा विश्वमिति, तथा च दुर्नयः—"कालः पचति भूतानि, कालः संहरते प्रजाः। कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥ १ ॥" इत्यादि, उत्तरं—कालोऽस्ति, तमन्तरेण बकुलचम्पकादीनां नियतः पुष्पादिप्रदानभावो न स्यात्, न च तत्परिणतिर्विश्वं, एकान्तनित्यस्य परिणामानुपपत्तेः। श्रुतस्याऽऽशातनया, क्रिया पूर्ववत्, आशातना तु—[1]को आउरस्स कालो ? मइलंबरधोवणे य को कालो ?। जइ मोक्खहेउ नाणं को कालो तस्सऽकालो वा ? ॥ १ ॥ इत्यादि, उत्तरं—जोगो जोग्गो जिणसासणंमि दुक्खक्खया पउंजंतो। अण्णोण्णमबाहाए

[1] क आतुरस्य ( औषधादाने ) कालो मलिनाम्बरप्रक्षालने च कः कालः। यदि मोक्षहेतुर्ज्ञानं कस्तस्य कालोऽकालो वा ?, ॥ १ ॥ दुःखक्षयकारणात् प्रयुज्यमानो योगो जिनशासने योग्य.। अन्योऽन्याबाधया

[1]असवत्तो होइ कायव्वो ॥ २ ॥ प्राग् धर्मद्वारेण श्रुताशातनोक्ता इह तु स्वतन्त्रविषयेति न पुनरुक्तं । श्रुतदेवताया आशातनया, क्रिया पूर्ववत्, आशातना तु श्रुतदेवता न विद्यतेऽकिञ्चित्करी वा, उत्तरं—न ह्यनधिष्ठितो मौनीन्द्रः खल्वागमः अतोऽसावस्ति, न चाकिञ्चित्करी, तामालम्ब्य प्रशस्तमनसः कर्मक्षयदर्शनात् । वाचनाचार्यस्याऽऽशातनया, क्रिया पूर्ववत्, तत्र वाचनाचार्यो ह्युपाध्यायसंदिष्टो य उद्देशादि करोति, आशातना त्वियं—निर्दुःखसुखः प्रभूतान् वारान् वन्दनं दापयति, उत्तरं—श्रुतोपचार एषः क इव तस्यात्र दोष इति—

जं वाइद्धं वच्चामेलियं हीणक्खरियं अच्चक्खरियं पयहीणं विणयहीणं घोसहीणं जोगहीणं सुट्ठुदिन्नं दुट्ठु पडिच्छियं अकाले कओ सज्झाओ काले न कओ सज्झाओ असज्झाए सज्झाइयं सज्झाए न सज्झाइयं तस्स मिच्छामि दुक्कडं (सूत्रं)

एए चोद्दस सुत्ता पुव्विल्लिया य एगूणवीसंति एए तेत्तीसमासायणसुत्तत्ति । एतानि चतुर्दश सूत्राणि श्रुतक्रियाकालगोचरत्वान्न पुनरुक्तभाञ्जीति, तथा दोषदुष्टपदं श्रुतं यदधीतं, तद्यथा—व्याविद्धं विपर्यस्तरत्नमालावद्, अनेन प्रकारेण याऽऽशातना तया हेतुभूतया योऽतिचारः कृतस्तस्य मिथ्यादुष्कृतमिति क्रिया, एवमन्यत्रापि योज्या, व्यत्याम्रेडितं कोलिकपायसवत्, हीनाक्षरम्—अक्षरन्यूनम्, अत्यक्षरम्—अधिकाक्षरं, पदहीनं—पदेनैवोनं, विनयहीनम्—अकृतोचितविनयं, घोषहीनम्—उदात्तादिघोषरहितं, योगरहितं—सम्यगकृतयोगोपचारं, सुष्ठुदत्तं गुरुणा दुष्ठु प्रतीच्छितं कलुषितान्तरात्मनेति, अकाले कृतः स्वाध्यायो—यो यस्य श्रुतस्य कालिकादेरकाल इति, काले न कृतः स्वाध्यायः—यो यस्याऽऽत्मीयोऽ-

१ असपत्नो भवति कर्त्तव्यः ॥ २ ॥ एतानि चतुर्दश सूत्राणि पूर्वाणि चैकान्नविंशतिः, एतानि त्रयस्त्रिंशदाशातनासूत्राणि

ध्ययनकाल उक्त इति, अस्वाध्यायिके स्वाध्यायितं ॥ किमिदमस्वाध्यायिकमित्यनेन प्रस्तावेनाऽऽयाताऽस्वाध्यायिकनिर्युक्तिरित्यस्यामेवाऽऽद्यद्वारगाथा—

असज्झाइयनिज्जुत्ती वुच्छामी धीरपुरिसपण्णत्तं । जं नाऊण सुविहिया पवयणसारं उवलहंति ॥ १३२१ ॥

असज्झायं तु दुविहं आयसमुत्थं च परसमुत्थं च । जं तत्थ परसमुत्थं तं पंचविहं तु नायव्वं ॥ १३२२ ॥

व्याख्या—आ अध्ययनमाध्ययनमाध्यायः शोभन आध्यायः स्वाध्यायः स एव स्वाध्यायिकं न स्वाध्यायिकमस्वाध्यायिकं तत्कारणमपि च रुधिरादि कारणे कार्योपचारात् अस्वाध्यायिकमुच्यते, तदस्वाध्यायिकं द्विविधं—द्विप्रकारं, मूलभेदापेक्षया द्विविधमेव, द्वैविध्यं प्रदर्शयति—'आयसमुत्थं च परसमुत्थं च' आत्मनः समुत्थं—स्वव्रणोद्भवं रुधिरादि, चशब्दः स्वगतानेकभेदप्रदर्शकः, परसमुत्थं—संयमघातकादि, चः पूर्ववत्, तत्थ जं परसमुत्थं—परोद्भवं तं पञ्चविधं तु—पञ्चप्रकारं 'मुणेयव्वं' ज्ञातव्यमिति गाथार्थः ॥ १३२१–१३२२ ॥ तत्र बहुवक्तव्यत्वात् परसमुत्थमेव पञ्चविधमादावुपदर्शयति—

संजमघाउवघाए सादिव्वे वुग्गहे य सारीरे । घोसणयमिच्छरण्णो कोई छलिओ पमाएणं ॥ १३२३ ॥

व्याख्या—'संयमघातकं' संयमविनाशकमित्यर्थः, तच्च महिकादि, उत्पातेन निर्वृत्तमौत्पातिकं, तच्च पांशुपातादि, सह दिव्यैः सादिव्यं तच्च गन्धर्वनगरादि दिव्यकृतं सदिव्यं वेत्यर्थः, व्युद्ग्रहश्चेति व्युद्ग्रहः—सङ्ग्रामः, असावप्यस्वाध्यायिकनिमित्तत्वात् तथोच्यते, शारीरं तिर्यग्मनुष्यपुद्गलादि, [1]एयंमि पंचविहे असज्झाए सज्झायं करेंतस्स आयसंजमविराहणा,

1 एतस्मिन् पञ्चविधेऽस्वाध्यायिके स्वाध्यायं कुर्वत आत्मसंयमविराधना,

तत्थ[1] दिट्ठंतो, घोसणयमिच्छ इत्यादेर्गाथाशकलस्यार्थः कथानकादवसेय इति गाथासमुदायार्थः, अधुना गाथापश्चार्धावयवार्थप्रतिपादनायाह—

**मिच्छभयघोसण निवे हियसेसा ते उ दंडिया रण्णा। एवं दुहओ दंडो सुरपच्छित्ते इह परे य ॥ १३२४ ॥**

व्याख्या—खिइपइट्ठियं णयरं, जियसत्तू राया, तेण सविसए घोसावियं जहा मेच्छो राया आगच्छइ, तो गामकूलणयराणि मोत्तुं समासन्ने दुग्गे ठायह, मा विणस्सिहिह, जे ठिया रण्णो वयणेण दुग्गादिसु ते ण विणट्ठा, जे पुण ण ठिया ते मिच्छया(पाई)हि विलुत्ता, ते पुणो रण्णा आणाभंगो मम कओत्ति जंपि कंपि हियसेसं तंपि दंडिया, एवमसज्झाए सज्झायं करेंतस्स उभओ दंडो, सुरत्ति देवया पछलइ पच्छित्तेत्ति—पायच्छित्तं च पावइ 'इह'त्ति इहलोए 'परे'त्ति परलोए णाणादि विफलत्ति गाथार्थः ॥ १३२४ ॥ ( १९५०० ) इमो दिट्ठंतोवणओ—

**राया इह तित्थयरो जाणवया साहू घोसणं सुत्तं। मेच्छो य असज्झाओ रयणधणाइं च नाणाई ॥ १३२५ ॥**

व्याख्या—जहा राया तहा तित्थयरो, जहा जाणवया तहा साहू, जहा घोसणं तहा सुत्तं—असज्झाइए सज्झायपडि-

---

१ तत्र दृष्टान्तः। क्षितिप्रतिष्ठितं नगरं जितशत्रू राजा, तेन स्वविषये घोषितं यथा म्लेच्छो राजा आगच्छति ततो ग्रामकूलनगरादीनि मुक्त्वा समासन्ने दुर्गे तिष्ठत, मा विनङ्क्षत, ये स्थिता राज्ञो वचनेन दुर्गादिषु ते न विनष्टाः, ये पुनर्न स्थितास्ते म्लेच्छपत्तिभिर्विलुप्ताः, ते पुना राज्ञा आज्ञाभङ्गो मम कृत इति यदपि किमपि हृतशेषं तदपि दण्डिताः, एवमस्वाध्यायिके स्वाध्यायं कुर्वत उभयतो दण्डः, सुर इति देवता प्रच्छलति, प्रायश्चित्तमिति प्रायश्चित्तं च प्राप्नोति, इहेति इहलोके पर इति परलोके ज्ञानादीनि विफलानीति। अयं दृष्टान्तोपनयः यथा राजा तथा तीर्थंकरो यथा जानपदास्तथा साधवो यथा घोषणं तथा सूत्रं अस्वाध्यायिके स्वाध्यायप्रति—

सेहंगति, जहा मेच्छो तहा असंज्ञाओ महिगादि, जहा रयणधणाइ तहा णाणादीणि महिगादीहिं अविहीकारिणो हीरंति गाथार्थः ॥ १३२५ ॥

**थोवावसेसपोरिसिमज्झयणं वावि जो कुणइ सो उ । णाणाइसाररहियस्स तस्स छलणा उ संसारो ॥ १३२६ ॥**

व्याख्या—'थोवावसेसपोरिसि' कालवेलत्ति जं भणियं होइ, एवं सो उत्ति संबंधो, अज्झयणं—पाठो अविसद्दाओ वक्खाणं वावि जो कुणइ आणादिलंघणे णाणाइसाररहियस्स तस्स छलणा उ संसारोत्ति—णाणादिवेफल्लत्तणओ चेव गाथार्थः ॥ १३२६ ॥ तत्राऽऽद्यद्वारावयवार्थप्रतिपादनायाह—

**महिया य भिन्नवासे सच्चित्तरए य संजमे तिविहं । दव्वे खित्ते काले जहियं वा जच्चिरं सव्वं ॥ १३२७ ॥**

व्याख्या—'महिय'त्ति धूमिगा 'भिन्नवासे य'त्ति बुब्बुदादौ 'सचित्तरए'त्ति अरण्णे वाउद्धुयपुढविरएत्ति भणियं होइ, संजमघाएयं एवं तिविहं होइ, इमं च 'दव्वे'त्ति तं चेव दव्वं महिगादि 'खेत्ते काले जहिं वे'ति जहिं खेत्ते महिगादि पडइ

१ वेधकमिति, यथा म्लेच्छस्तथाऽसंज्ञो महिकादिः, यथा रत्नधनानि तथा ज्ञानादीनि महिकादिभिरविधिकारिणो ह्रियन्ते । स्तोकावशेषा पौरुषीति कालवेलेति भणितं भवति, एवं स इति सम्बन्धः, अध्ययनं पाठः अपिशब्दात् व्याख्यानं वापि यः करोति आज्ञालङ्घने ज्ञानादिसाररहितस्य तस्य छलना तु संसार इति ज्ञानादिवैफल्यादेव । महिकेति धूमिका भिन्नवर्ष इति बुद्बुदादौ सति सचित्तं रज इति अरण्ये वातोद्धूतं पृथ्वीरज इति भणितं भवति, संयमघातकमेवं त्रिविधं भवति, एवं च द्रव्य इति तदेव द्रव्यं महिकादि क्षेत्रे काले यत्रेति-यत्र क्षेत्रे महिकादि पतति

इति गाथासमुदायार्थः ॥ १३२७ ॥ अवयवार्थं तु भाष्यकारः
जच्चिरं कालं 'सव्वं'ति भावओ ठाणभासादि परिहरिज्जइ, इह पञ्चविधासज्झाइयस्स, तं कहं परिहरियव्वमिति ?, तप्पसाहगो इमो दिट्ठंतो–
स्वयमेव व्याचष्टे,

दुग्गाइतोसियनिवो पंचण्हं देइ इच्छियपयारं। गहिए य देइ मुल्लं जणस्स आहारवत्थाई ॥ १३२८ ॥

व्याख्या—एगस्स रण्णो पंच पुरिसा, ते बहुसमरलद्धविजया, अण्णया तेहिं अच्चंतविसमं दुग्गं गहियं, तेसिं तुट्ठो राया इच्छियं नगरे पयारं देइ, जं ते किंचि असणाइ वा वत्थाइगं च जणस्स गिण्हंति तस्स वेयणयं सव्वं राया पयच्छइ इति गाथार्थः ॥ १३२८ ॥

इक्केण तोसियतरो गिहमगिहे तस्स सव्वहिं वियरे। रत्थाईसु चउण्हं एवं पढमं तु सव्वत्थ ॥ १३२९ ॥

व्याख्या—तेसिं पंचण्हं पुरिसाणं एगेण तोसियतरो तस्स गिहावणट्ठाणेसु सवत्थ इच्छियपयारं पयच्छइ, जो एते दिण्णपयारे आसाएज्जा तस्स राया दंडं करेइ, एस दिट्ठंतो, इमो उवसंहारो–जहा पंच पुरिसा तहा पंचविहासज्झाइयं, जहा सो एगो अब्भहिततरो पुरिसो एवं पढमं संजमोवघाइयं सव्वं तत्थ ठाणासणादि, तंमि वट्टमाणे ण सज्झाओ नेव

---

१ यावन्तं कालं ( वा पतति ) सर्वमिति भावतः स्थानभाषादि परिह्रियते। इह पञ्चविधास्वाध्यायिकस्य, तत् कथं परिहर्त्तव्यमिति ?, तत्प्रसाधकोऽयं दृष्टान्तः–एकस्य राज्ञः पञ्च पुरुषाः, ते बहुसमरलब्धविजयाः, अन्यदा तैरत्यन्तविषमो दुर्गो गृहीतः, तेभ्यस्तुष्टो राजा ईप्सितं नगरे प्रचारं ददाति, यत्ते किञ्चिदशनादि वा वस्त्रादिकं वा जनस्य गृह्णन्ति तस्य वेतनं सर्वं राजा प्रयच्छति। तेषां पञ्चानां पुरुषाणामेकेन तोषिततरः, तस्मै गृहापणस्थानेषु सर्वत्रेप्सितं प्रचारं प्रयच्छति, य एतान् दत्तप्रचारान् आशातयेत् तस्य राजा दण्डं करोति, एष दृष्टान्तोऽयमुपसंहारः–यथा पञ्च पुरुषास्तथा पञ्चविधास्वाध्यायिकं, यथा स एकोऽभ्यधिकतरः पुरुष एवं प्रथमं संयमोपघातिकं सर्वं तत्र स्थानासनादि, तस्मिन् वर्त्तमाने न स्वाध्यायो नैव

पडिलेहणादिकावि चेट्ठा कीरइ, इयरेसु चउसु असज्झाइएसु जहा ते चउरो पुरिसा रत्थाइसु चेव अणासाइणिज्जा तहा तेसु सज्झाओ चेव न कीरइ, सेसा सवा चेट्ठा कीरइ आवस्सगादि उक्कालियं च पढिज्जइ । महियाइतिविहस्स संजमोवघाइस्स इमं वक्खाणं—

**महिया उ गब्भमासे सच्चित्तरओ अ ईसिआयंबो । वासे तिन्नि पयारा बुब्बुअ तव्वज्ज फुसिए य ॥२१९॥(भा०)**

व्याख्या—'महिय'त्ति धूमिया, सा य कत्तियमग्गसिराइसु गब्भमासेसु हवइ, सा य पडणसमकालं चेव सुहुमत्तणओ सवं आउकायभावियं करेति, तत्थ तक्कालसमयं चेव सवचेट्ठा निरुंभंति, ववहारसच्चित्तो पुढविकाओ अरण्णो वाउब्भूओ आगओ रओ भन्नइ, तस्स सच्चित्तलक्खणं वण्णओ ईसिं आयंबो दिसंतरे दीसइ, सोवि निरंतरपाएण तिण्हं-तिदिणाणं परओ सवं पुढवीकायभावियं करेति, तत्रोत्पातशङ्कासंभवश्च । भिन्नवासं तिविहं—बुब्बुदादि, जत्थ वासे पडमाणे उदगे बुब्बुदा भवन्ति तं बुब्बुयवरिसं, तेहिं वज्जियं तवज्जं, सुहुमफुसारेहिं पडमाणेहिं फुसियवरिसं, एतेसिं जहासंखं

---

१ प्रतिलेखनादिकाऽपि चेष्टा क्रियते, इतरेषु चतुर्षु अस्वाध्यायिकेषु यथा ते चत्वारः पुरुषा रथ्यादिष्वेवानाशातनीयास्तथा तेषु स्वाध्याय एव न क्रियते शेषा सर्वा चेष्टा क्रियते आवश्यकादि उत्कालिकं च पठ्यते । महिकादित्रिविधस्य संयमोपघातिकस्येदं व्याख्यानं—महिकेति धूमिका, सा च कार्त्तिकमार्गशिरआदिषु गर्भमासेषु भवति, सा च पतनसमकालमेव सूक्ष्मत्वात् सर्वमप्कायभावितं करोति, तत्र तत्कालसमयमेव सर्वां चेष्टां निरुणद्धि, व्यवहारसचित्तः पृथ्वीकाय आरण्यं वायूद्धूतं आगतं रजो भण्यते, तस्य सचित्तलक्षणं वर्णत ईषदाताम्रं दिगन्तरे दृश्यते, तदपि निरन्तरपातेन त्रिदिन्याः परतः सर्वं पृथ्वीकायभावितं करोति । भिन्नवर्षः त्रिविधः, यत्र वर्षे पतति उदके बुद्बुदा भवन्ति स बुद्बुदवर्षः, तैर्वर्जितः तद्वर्जः, सूक्ष्मैर्बिन्दुभिः पतद्भिः बिन्दुवर्षः । एतेषां यथासंख्यं

आसज्जं न करेइ । कालभूमीउ गुरुसमीवं पट्ठवियस्स(पट्ठियस्स) जइ अंतरेण साणमज्जाराई छिंदंति, सेसपदा पुव्वभणिया, एएसु सव्वेसु कालवधो भवति ॥ १ ॥

गोणाइ कालभूमीइ हुज्ज संसप्पगा व उट्ठिज्जा ।
कविहसिअ विज्जुयंमी गज्जिय उक्काइ कालवहो ॥ २ ॥ ( प्र० सिद्ध० ) ॥

व्याख्या—पढमयाए आपुच्छित्ता गुरू कालभूमिं गओ, जइ कालभूमिए गोणं निसन्नं संसप्पगादि वा उट्ठि(ट्ठि)यादि पेच्छेज्ज तो नियत्तए, जइ कालं पडिलेहंतस्स गिण्हंतस्स वा निवेयणाए वा गच्छंतस्स कविहसियादि, तेहिं कालवहो भवति, कविहसियं नाम आगासे विकृतं मुखं वानरसरिसं हासं करेज्जा । सेसा पया गतार्था इति गाथार्थः ॥ २ ॥ कालग्गाही णिव्वाघातेण गुरुसमीवमागतो—

इरियावहिया हत्थंतरेऽवि मंगल निवेयणा दारे । सव्वेहि वि पट्ठविए पच्छा करणं अकरणं वा ॥ १३८३ ॥

व्याख्या—जदिवि गुरुस्स हत्थंतरमेत्ते कालो गहिओ तहावि कालपवेयणाए इरियावहिया पडिक्कमियव्वा, पंचुस्सास-

---

१–आशय्यं न करोति कालग्रहणभूमेः प्रस्थितस्य गुरुसमीपं यद्यन्तरा श्वमार्जारादि छिन्दति, शेषाणि पदानि पूर्वं भणितानि, एतेषु सर्वेषु कालवधो भवति । प्रथमतया आपृच्छ्य गुरुं कालभूमिं गतः यदि कालभूमौ गां निषण्णं संसर्पकादि वा उत्थिता(ग्रा)दि पश्येत् तर्हि निवर्त्तेत, यदि कालं प्रतिलिखतो गृह्णतः निवेदने वा गच्छतः कपिहसितादि, तैः कालवधो भवति, कपिहसितं नामाकाशे वानरसदृशं विकृतं मुखं हासं कुर्यात्, शेषाणि पदानि गतार्थानि । कालग्राही गुरुसमीपे निर्व्याघातेनागतः । यद्यपि गुरोर्हस्तान्तरमात्रे कालो गृहीतस्तथापि कालप्रवेदने ईर्यापथिकी प्रतिक्रान्तव्या, पञ्चोच्छ्वास–

मे[1]त्तकालं उस्सग्गं करेंति, उस्सारिएऽवि पंचमंगलयं कड्ढंति, ताहे वंदणं दाउं निवेएंति—सुद्धो पाओसिओ कालोत्ति, ताहे डंडधरं मोत्तुं सेसा सबे जुगवं पट्ठवेंति, किं कारणम् ?, उच्यते, पुव्वुत्तं जं मरुगदिट्ठंतोत्ति ॥ १३८३ ॥

सन्निहियाण वडारो पट्ठविय पमादि णो दए कालं । बाहि ठिए पडियरए विसई ताएऽवि दंडधरो ॥ १३८४ ॥

व्याख्या—वडो वंटगो विभागो एगट्ठं, आरिओ आगारिओ सारिओ वा एगट्ठं, वडेण आरिओ वडारो, जहा सो वडारो सन्निहियाण मरुगाण लब्भइ न परोक्खस्स तहा देसकहादिपमादिस्स पच्छा कालं न देंति, 'दारे'ति अस्य व्याख्या 'वाहि ठिए' पच्छद्धं कंठं ॥ १३८४ ॥ सबेहिवि पच्छद्धं अस्य व्याख्या—

पट्ठविय वंदिए वा ताहे पुच्छंति किं सुयं ? भंते ! । तेवि य कहेंति सव्वं जं जेण सुयं व दिट्ठं वा ॥ १३८५ ॥

व्याख्या—दंडधरेण पट्ठविए वंदिए, एवं सबेहि वि पट्ठविए वंदिए पुच्छा भवइ—अज्जो ! केण किं दिट्ठं सुयं वा ?

---

१ मात्रकालमुत्सर्गं कुर्वन्ति, उत्सारितेऽपि पञ्चमङ्गलं कथयन्ति, ततो वन्दनं दत्त्वा निवेदयतः—प्रादोषिकः कालः शुद्ध इति, तदा दण्डधरं मुक्त्वा शेषाः सर्वे युगपत् स्वाध्यायं प्रस्थापयन्ति, किं कारणं ?, उच्यते, पूर्वमुक्तं यस्मात् मरुकदृष्टान्त इति । वाटो वण्टको विभागः एकार्थाः, आरिक आगारिकः सारिक इति एकार्थाः । वाटेनारिको वाटारः, यथा स वाटारः सन्निहितैर्मरुकैर्लभ्यते न परोक्षेण, तथा देशादिविकथाप्रमादवतः पश्चात् कालं न ददति । द्वारमित्यस्य व्याख्या—बाह्यस्थितः पश्चार्धं, कण्ठ्यं । सर्वैरपि पश्चार्धं । दण्डधरेण प्रस्थापिते वन्दिते, एवं सर्वैरपि प्रस्थापिते वन्दिते पृच्छा भवति—आर्य ! केनचित् किञ्चिद् दृष्टं श्रुतं वा ?,

दंडधरो पुच्छइ अण्णो वा, तेवि सच्चं(चं)कहेंति, जति सव्वेहिवि भणियं—न किंचि सुयं दिट्ठं वा, तो सुद्धे करेंति सज्झायं। अह एगेणवि किंचि विज्जुमादि फुडं दिट्ठं गज्जियादि वा सुयं तो असुद्धे न करेंतित्ति गाथार्थः ॥ १३८५ ॥ अह संकियं—

इक्कस्स दोण्ह व संकियंमि कीरइ न कीरती तिण्हं। सगणंमि संकिए परगणं तु गंतुं न पुच्छंति ॥ १३८६ ॥

व्याख्या—जदि एगेण संदिद्धं—दिट्ठं सुयं वा, तो कीरइ सज्झाओ, दोण्हवि संदिद्धे कीरति, तिण्हं विज्जुमादि एगसंदेहे ण कीरइ सज्झाओ, तिण्हं अण्णाण्णसंदेहे कीरइ, सगणंमि संकिए परवयणाओऽसज्झाओ न कीरइ। खेत्तविभागेण तेसिं चेव असज्झाइयसंभवो ॥ १३८६ ॥ 'जं एत्थं णाणत्तं तमहं वोच्छं समासेणं'ति—अस्यार्थः

कालचउक्के णाणत्तगं तु पाओसियंमि सव्वेवि। समयं पट्ठवयंती सेसेसु समं च विसमं वा ॥ १३८७ ॥

व्याख्या—एयं सव्वं पाओसियकाले भणियं, इयाणिं चउसु कालेसु किंचि सामण्णं किंचि विसेसियं भणामि

---

१ दण्डधरः पृच्छति अन्यो वा, तेऽपि सत्यं कथयन्ति, यदि सर्वैरपि भणितं—न किञ्चित् दृष्टं श्रुतं वा, तदा शुद्धे कुर्वन्ति स्वाध्यायं, अथैकेनापि किञ्चिद्विद्युदादि स्फुटं दृष्टं गर्जितादि वा श्रुतं तदाऽशुद्धे न कुर्वन्ति। अथ शङ्कितं—यद्येकेन संदिग्धं—दृष्टं श्रुतं वा, तर्हि क्रियते स्वाध्यायः, द्वयोरपि संदेहे क्रियते, त्रयाणां विद्युदादिके एक (समान) संदेहे न क्रियते स्वाध्यायः, त्रयाणामन्यान्यसंदेहे क्रियते, स्वगणे शङ्किते परवचनात् अस्वाध्यायो न क्रियते, क्षेत्रविभागेन तेषामेवास्वाध्यायिकसंभवः। यदत्र नानात्वं तदहं वक्ष्ये समासेनेति। एतत् सर्वं प्रादोषिककाले भणितं, इदानीं चतुर्ष्वपि कालेषु किञ्चित् सामान्यं किञ्चित् विशेषितं भणामि—

पाओसियं दंडधरं एकं मोत्तुं सेसा सवे जुगवं पट्ठवेंति, सेसेसु तिसु अद्धरत्त वेरत्तिय पाभाइए य समं वा विसमं वा पट्ठवेंति ॥ १३८७ ॥ किं चान्यत्—

**इंदियमाउत्ताणं हणंति कणगा उ तिन्नि उक्कोसं। वासासु य तिन्नि दिसा उउबद्धे तारगा तिन्नि ॥ १३८८ ॥**

व्याख्या—सुट्ठु इंदियउवओगउवउत्तेहिं सवकाला पडिजागरियवा–घेत्तवा, कणगेसु कालसंखाकओ विसेसो भण्णइ–तिण्णि गिम्हे उवहणंतित्ति, तेण उक्कोसं भण्णइ, चिरेण उवघाउत्ति, तेण सत्त(तिण्णि)जहण्णं सेसं मज्झिमं, अस्य व्याख्या—

**कणगा हणंति कालं ति पंच सत्तेव गिम्हि सिसिरवासे। उक्का उ सरेहागा रेहारहितो भवे कणओ ॥ १३८९ ॥**

व्याख्या—कणगा गिम्हे तिन्नि सिसिरे पंच वासासु सत्त उवहणंति, उक्का पुणेगावि, अयं चासिं विसेसो–कणगो सण्हरेहो पगासरहिओ य, उक्का महंतरेहा पकासकारिणी य, अहवा रेहारहिओ विप्फुलिंगो पभाकरो उक्का चेव ॥१३८९॥ 'वासासु तिण्णि दिसा' अस्य व्याख्या—

**वासासु य तिन्नि दिसा हवंति पाभाइयंमि कालंमि। सेसेसु तीसु चउरो उडुंमि चउरो चउदिसिंपि ॥ १३९० ॥**

---

१ प्रादोषिकं दण्डधरमेकं मुक्त्वा शेषाः सर्वे युगपत् प्रस्थापयन्ति, शेषेषु त्रिषु अर्धरात्रिके वैरात्रिके प्राभातिके च समं वा वियुक्ता वा प्रस्थापयन्ति। सुष्ठु इन्द्रियोपयोगोपयुक्तैः सर्वे कालाः प्रतिजागरितव्या–ग्रहीतव्याः, कनकविषये कालकृतः संख्याविशेषो भण्यते–त्रयो ग्रीष्मे उपघ्नन्तीति तेनोत्कृष्टं भण्यते चिरेणोपघात इति, तेन सप्त जघन्यतः शेषं मध्यमं। कनका ग्रीष्मे त्रयः शिशिरे पञ्च वर्षासु सप्तोपघ्नन्ति, उल्का पुनरेकापि, अयं चानयोर्विशेषः–कनकः श्लक्ष्णरेखः प्रकाशरहितश्च, उल्का महद्रेखा प्रकाशकारिणी च, अथवा रेखारहितो विस्फुलिङ्गः प्रभाकर उल्कैव। वर्षासु तिस्रो दिशः

व्याख्या—जत्थ ठिओ वासाकाले तिन्निवि दिसा पेक्खइ तत्थ ठिओ पाभाइयं कालं गेण्हइ, सेसेसु तिसुवि कालेसु वासासु (उडुबद्धे सवेसु) जत्थ ठिओ चउरोवि दिसाभागे पेच्छइ तत्थ ठिओऽवि गेण्हइ ॥ १३९० ॥ 'उडुबद्धे तारगा तिन्नि' अस्य व्याख्या—

**तिसु तिन्नि तारगाओ उडुंमि पाभातिए अदिट्ठेऽवि । वासासु [य] तारगाओ चउरो छन्ने निविट्ठोऽवि ॥१३९१॥**

व्याख्या—तिसु कालेसु पाओसिए अड्ढरत्तिए वेरत्तिए, जति तिन्नि ताराओ जहण्णेण पेच्छंति तो गिण्हंति, उडुबद्धे चेव अब्भादिसंथडे जइवि एक्कंपि तारं न पिच्छंति तहावि पाभाइयं कालं गेण्हंति, वासाकाले पुण चउरोवि काला अब्भाइसंथडे तारासु अदीसंतासुवि गेण्हंति ॥ १३९१ ॥ 'छन्ने निविट्ठो'त्ति अस्य व्याख्या—

**ठाणासइ बिंदूसु अ गिण्हं चिट्ठोवि पच्छिमं कालं । पडियरइ बहिं एक्को एक्को [व] अंतट्ठिओ गिण्हे ॥ १३९२॥**

व्याख्या—जदिवि वसहिस्स बाहिं कालग्गाहिस्स ठाओ नत्थि ताहे अंतो छण्णे उद्धट्ठिओ गेण्हति, अह उद्धट्ठियस्सवि अंतो ठाओ नत्थि ताहे छण्णे चेव निविट्ठो गिण्हइ, बाहिट्ठिओवि एक्को पडियरइ, वासबिंदुसु पडंतीसु नियमा अंतोठिओ

---

१ यत्र स्थितो वर्षारात्रकाले तिस्रोऽपि दिशः प्रेक्षते तत्र स्थितः प्राभातिक कालं गृह्णाति, शेषेषु त्रिष्वपि कालेषु वर्षासु यत्र स्थितश्चतुरो दिग्विभागान् प्रेक्षते तत्र स्थितोऽपि गृह्णाति । ऋतुबद्धे तारकास्तिस्रः । त्रिषु कालेषु प्रादोषिके अर्धरात्रिके वैरात्रिके यदि तिस्रस्तारका जघन्येन प्रेक्षेत तदा गृह्णीयात्, ऋतुबद्धे एव अभ्राद्याच्छादिते यद्यपि एकामपि तारिकां न पश्यन्ति तथापि प्राभातिकं कालं गृह्णन्ति, वर्षाकाले पुनश्चत्वारोऽपि काला अभ्राद्याच्छादिते तारास्वदृश्यमानास्वपि गृह्णन्ति । छन्ने निविष्ट इति । यद्यपि वसतेर्बहिः कालग्राहिणः स्थानं नास्ति तदाऽन्तश्छन्ने ऊर्ध्वस्थितो गृह्णाति, अथोर्ध्वस्थितस्याप्यन्तः स्थानं नास्ति तदा छन्ने एव निविष्टो गृह्णाति, बहिःस्थितोऽप्येकः प्रतिचरति, वर्षाबिन्दुषु पतत्सु नियमादन्तःस्थितो

गिण्हइ, तत्थवि उद्धट्ठिओ निसण्णो वा, नवरं पडियरगोवि अंतो ठिओ चेव पडियरइ, एस पाभाइए गच्छुवग्गहट्ठा अववायविही, सेसा काला ठाणासति न घेत्तवा, आइण्णतो वा जाणियवं ॥ १३९२ ॥ कस्स कालस्स कं दिसमभि-मुहेहिं ठायवमिति भाष्यते—

पाओसि अड्ढरत्ते उत्तरदिसि पुव्व पेहए कालं । वेरत्तियंमि भयणा पुव्वदिसा पच्छिमे काले ॥ १३९३ ॥

व्याख्या—पाओसिए अड्ढरत्तिए नियमा उत्तराभिमुहो ठाइ, 'वेरत्तिए भयण'त्ति इच्छा उत्तराभिमुहो पुवाभिमुहो वा, पाभाइए नियमा पुवामुहो ॥ १३९३ ॥ इयाणिं कालग्गहणपरिमाणं भण्णइ—

कालचउक्कं उक्कोसएण जहन्न तियं तु बोद्धव्वं । बीयपएणं तु दुगं मायामयविप्पमुक्काणं ॥ १३९४ ॥

व्याख्या—उस्सग्गे उक्कोसेणं चत्तारि काला घेप्पंति, उस्सग्गे चेव जहण्णेण तिगं भवति, 'वितियपए'त्ति अववाओ, तेण कालदुगं भवति, अमायाविनः कारणे अगृह्यमाणस्येत्यर्थः, अहवा उक्कोसेणं चउक्कं भवति, जहण्णेण हाणिपदे तिगं

---

१ गृह्णाति, तत्राप्यूर्ध्वस्थितो निषण्णो वा, नवरं प्रतिचरकोऽपि अन्तःस्थित एव प्रतिचरति, एष प्राभातिके गच्छोपग्रहार्थायापवादविधिः, शेषाः कालाः स्थानेऽसति न ग्रहीतव्याः, आचरणातो वा ज्ञातव्यं । कस्मिन् काले कां दिशमभिमुखैः स्थातव्यमिति । प्रादोषिके अर्धरात्रिके नियमादुत्तरोन्मुखस्तिष्ठति, वैरात्रिके भजनेति इच्छा उत्तराभिमुखः पूर्वाभिमुखो वा, प्राभातिके नियमात् पूर्वोन्मुखः । इदानीं कालग्रहणपरिमाणं भण्यते—उत्सर्गे उत्कृष्टतश्चत्वारः काला गृह्यन्ते, उत्सर्गे एव जघन्येन त्रिकं भवति, द्वितीयपदमिति अपवादः, तेन कालद्विकं भवति । अथवोत्कृष्टतश्चतुष्कं भवति, जघन्येन हानिपदे त्रिकं

भवति, एक्कंमि अगहिए इत्यर्थः, बितिए हाणिपदे कए दुगं भवति, द्वयोरग्रहणत इत्यर्थः, एवममायाविणो तिन्नि वा अगिण्हंतस्स एक्को भवति, अहवा मायाविमुक्कस्य कारणे एकमपि कालमगृह्णतो न दोषः, प्रायश्चित्तं न भवतीति गाथार्थः ॥ १३९४ ॥ कहं पुण कालचउक्कं ?, उच्यते—

फिडियंमि अड्ढरत्ते कालं घित्तुं सुवंति जागरिया । ताहे गुरू गुणंती चउत्थि सव्वे गुरू सुअइ ॥ १३९५ ॥

व्याख्या—पादोसियं कालं घेत्तुं सव्वे सुत्तपोरिसिं काउं पुन्नपोरिसीए सुत्तपाढी सुवंति, अत्थचिंतया उक्कालियपाढिणो य जागरंति, जाव अड्ढरत्तो, ततो फिडिए अड्ढरत्ते कालं घेत्तुं जागरिया सुयंति, ताहे गुरू उट्ठेत्ता गुणेंति, जाव चरिमो पत्तो, चरिमजामे सव्वे उट्ठित्ता वेरत्तियं घेत्तुं सज्झायं करेंति, ताहे गुरू सुवंति । पत्ते पाभाइयकाले जो पाभाइयं कालं घेच्छिहिति सो कालस्स पडिक्कमिउं पाभाइयकालं गेण्हइ, सेसा कालवेलाए पाभाइयकालस्स पडिक्कमंति, ततो आवस्सयं करेंति, एवं चउरो काला भवंति ॥ १३९५ ॥ तिण्णि कहं ?, उच्यते, पाभाइए अगहिए सेसा तिन्नि, अहवा—

गहियंमि अड्ढरत्ते वेरत्तिय अगहिए भवइ तिन्नि । वेरत्तिय अड्ढरत्ते अइ उवओगा भवे दुण्णि ॥ १३९६ ॥

---

१ भवति, एकस्मिन्नगृहीते । द्वितीयस्मिन् हानिपदे कृते द्विकं भवति, एवममायाविनस्त्रीन् वाऽगृह्णत एको भवति, अथवा, कथं पुनः कालचतुष्कं ? । प्रादोषिकं कालं गृहीत्वा सर्वे सूत्रपौरुषीं कृत्वा पूर्णायां पौरुष्यां सूत्रपाठिनः स्वपन्ति, अर्थचिन्तका उत्कालिकपाठकाश्च जागरन्ति यावदर्धरात्रः, ततः स्फिटितेऽर्धरात्रे कालं गृहीत्वा जागरिताः स्वपन्ति, तदा गुरव उत्थाय गुणयन्ति यावच्चरमः प्राप्तः, चरमे यामे सर्वे उत्थाय वैरात्रिकं गृहीत्वा स्वाध्यायं कुर्वन्ति, तदा गुरवः स्वपन्ति, प्राप्ते प्राभातिककाले यः प्राभातिकं कालं ग्रहीष्यति स कालं प्रतिक्रम्य प्राभातिककालं गृह्णाति, शेषाः कालवेलायां प्राभातिककालस्य प्रतिक्राम्यन्ति, तत आवश्यकं कुर्वन्ति, एवं चत्वारः काला भवन्ति, त्रयः कथं ?, उच्यते, प्राभातिकेऽगृहीते शेषास्त्रयः, अथवा—

पडिजग्गियंमि पढमे बीयविवज्जा हवंति तिन्नेव । पाओसिय वेरत्तिय अड्ढउवओगा उ दुण्णि भवे ॥१३९७॥

गाथाद्वयस्यापि व्याख्या—वेरत्तिए अगहिए सेसेसु तिसु गहिएसु तिण्णि, अड्ढरत्तिए वा अगहिए तिण्णि, दोण्णि कहं ?, उच्यते, पाउसियअड्ढरत्तिएसु गहिएसु सेसेसु अगहिएसु दोण्णि भवे, अहवा पाउसियवेरत्तिए गहिए य दोन्नि, अहवा पाउसियपाभाइएसु अगहिएसु दोण्णि, एत्थवि कप्पे पाउसिए चेव अणुवहएण उवओगओ सुपडियग्गिएण सव्वकालेण पढंति न दोसो, अहवा वेरतिय अड्ढरत्तियेऽगहिए दोण्णि अहवा अड्ढरत्तियपाभाइयगहिएसु दोण्णि अहवा वेरत्तियपाभाइएसु गहिएसु, जदा एक्को तदा अण्णतरं गेण्हइ । कालचउक्ककारणा इमे कालचउक्के गहणं उस्सग्गविही चेव, अहवा पाओसिए गहिए उवहए अड्ढरत्तं घेत्तुं सज्झायं करेंति, पाभाइओ दिवसट्ठा घेतव्वो चेव, एवं कालचउक्कं दिट्ठं, अणुवहए पाओसिए सुपडियग्गिए सव्वं राइं पढंति, अड्ढरत्तिएणवि वेरत्तियं पढंति, वेरत्तिएणवि अणुवहएण सुपडियग्गिएण पाभाइय असुद्धे उद्दिट्ठं दिवसओवि पढंति । कालचउक्के अग्गहणकारणा इमे—पाउसियं न गिण्हंति असिवादिकारणओ न सुज्झति वा, अड्ढरत्तियं न गिण्हंति

---

१ वैरात्रिकेऽगृहीते शेषेषु त्रिषु गृहीतेषु त्रयः, अर्धरात्रिके वाऽगृहीते त्रयः, द्वौ कथं ?, उच्यते, प्रादोषिकार्धरात्रिकयोर्गृहीतयोः शेषयोरगृहीतयोर्द्वौ भवतः, अथवा प्रादोषिकवैरात्रिकयोर्गृहीतयोर्द्वौ च अथवा प्रादोषिकप्राभातिकयोरगृहीतयोर्द्वौ, अत्रापि कल्पे प्रादोषिकेणानुपहतेनैवोपयोगतः सुप्रतिजागरितेन सर्वकालेषु पठति न दोष., अथवा वैरात्रिके अर्धरात्रिकेऽगृहीते द्वौ अथवा अर्धरात्रिकप्राभातिकयोर्गृहीतयोर्द्वौ, अथवा वैरात्रिकप्राभातिकयोर्गृहीतयोर्द्वौ, यदैकस्तदाऽन्यतरं गृह्णाति । कालचतुष्ककारणानीमानि—कालचतुष्कग्रहणं उत्सर्गविधिरेव, अथवा प्रादोषिके गृहीते उपहतेऽर्धरात्रं गृहीत्वा स्वाध्यायं कुर्वन्ति, प्राभातिको दिवसार्थं ग्रहीतव्य एव, एवं कालचतुष्कं दृष्टं, अनुपहते प्रादोषिके सुप्रतिजागरिते सर्वां रात्रिं पठन्ति, अर्धरात्रिकेणापि वैरात्रिके पठन्ति, वैरात्रिकेणाप्यनुपहतेन सुप्रतिजागरितेन प्राभातिके कालेऽशुद्ध उद्दिष्टं दिवसतोऽपि पठन्ति । कालचतुष्केऽग्रहणकारणानीमानि—प्रादोषिकं न गृह्णन्ति अशिवादिकारणतः न शुध्यति वा, अर्धरात्रिकं न गृह्णन्ति

कारणतो °ण सुज्झति वा पाओसिएण वा सुपडियग्गिएण पढंति न गेण्हंति, वेरत्तियं कारणओ न गिण्हंति न सुज्झइ वा, पाओसिय अड्डरत्तेण वा पढंति, तिन्नि वा णो गेण्हंति, पाभाइयं कारणओ न गिण्हइ न सुज्झइ वा वेरत्तिएणेव दिवसओ पढंति ॥ १३९७ ॥ इयाणिं पाभाइयकालग्गहणविहिं पत्तेयं भणामि—

पाभाइयकालंमि उ संचिक्खे तिन्नि छीयरुन्नाणि । परवयणे खरमाई पावासुय एवमादीणि ॥ १३९८ ॥

व्याख्या त्वस्या भाष्यकारः स्वयमेव करिष्यति । तत्थ पाभाइयंमि काले गहणविही पट्ठवणविही य, तत्थ गहणविही इमा—

नवकालवेलसेसे उवग्गहियअट्ठया पडिक्कमइ । न पडिक्कमइ वेगो नववारहए धुवमसज्झाओ ! ॥(भा०२२४)॥

व्याख्या—दिवसओ सज्झायविरहियाण देसादिकहासंभववज्जणट्ठा मेहावीतराण य पलिभंगवज्जणट्ठा, एवं सव्वेसिमणुग्गहट्ठा नवकालग्गहणकाला पाभाइए अणुण्णाया, अओ नवकालग्गहणवेलाहिं सेसाहिं पाभाइयकालग्गाही

---

१ कारणतो न शुध्यति वा, प्रादोषिकेण वा सुप्रतिजागरितेन पठन्ति न गृह्णन्ति, वैरात्रिकं कारणतो न गृह्णन्ति न शुध्यति वा, प्रादोषिकार्धरात्रिकाभ्यामेव पठन्ति, त्रीन् वा न गृह्णन्ति, प्राभातिकं कारणतो न गृह्णाति न शुध्यति वा, वैरात्रिकेणैव दिवसे पठन्ति । इदानीं प्राभातिककालग्रहणविधिं पृथक् भणामि—तत्र प्राभातिके काले ग्रहणविधिः प्रस्थापनविधिश्च—तत्र ग्रहणविधिरयं- दिवसे स्वाध्यायविरहितानां देशादिकथासंभववर्जनाय मेधाविनामितरेषां च विघ्नवर्जनार्थं, एवं सर्वेषामनुग्रहार्थाय नवकालग्रहणकालाः प्राभातिकेऽनुज्ञाताः, अतो नवकालग्रहणवेलासु शेषासु प्राभातिककालग्राही

कालस्स[1] पडिक्कमति, सेसावि तं वेलं पडिक्कमंति वा न वा, एगो नियमा न पडिक्कमइ, जइ छीयरुदिदादीहिं न सुज्झइ तो सो चेव वेरत्तिओ सुपडियग्गिओ होहितित्ति। सोवि पडिक्कंतेसु गुरुणो कालं निवेदित्ता अणुदिए सूरिए कालस्स पडिक्कमति, जइ घेप्पंतो नववारे उवहओ कालो तो नज्जइ धुवमसज्झाइयमत्थित्ति न करेंति सज्झायं ॥ २२४ ॥

नववारगहणविही इमो—'संचिक्खे तिण्णि छीतरुण्णाणि'त्ति अस्य व्याख्या—

इक्किक्क तिन्नि वारे छीयाइहयंमि गिण्हए कालं।
चोएइ खरो वारस अणिट्ठविसए अ कालवहो ॥ २२५ ॥ ( भा० ) ॥

व्याख्या—एक्कस्स गिण्हओ छीयरुदादिहए संचिक्खइत्ति ग्रहणाद्विरमतीत्यर्थः, पुणो गिण्हइ, एवं तिण्णि वारा, तओ परं अण्णो अण्णंमि थंडिले तिण्णि वाराउ, तस्सवि उवहए अण्णो अण्णंमि थंडिले तिण्णि वारा, तिण्हं असई दोण्णि जणा णव वाराओ पूरेइ, दोण्हवि असतीए एक्को चेव णववाराओ पूरेइ, थंडिलेसुवि अववाओ, तिसु दोसु वा

---

१ कालस्य प्रतिक्राम्यति, शेषास्तु तस्यां वेलायां प्रतिक्राम्यन्ति वा न वा, एको नियमान्न प्रतिक्राम्यति, यदि क्षुतरोदनादिभिर्न शुध्यति तदा स एव वैरात्रिकः सुप्रतिजागरितो भविष्यतीति। सोऽपि प्रतिक्रान्तेषु गुरोः कालं निवेद्यानुदिते सूर्ये कालात् प्रतिक्राम्यति, यदि गृह्यमाणो नववारानुपहतः कालस्तर्हि ज्ञायते ध्रुवमस्वाध्यायिकमस्ति इति न कुर्वन्ति स्वाध्यायं। नववारग्रहणविधिरयं—एकस्मिन् गृह्णति क्षुतरुदितादिभिर्हते प्रतीक्षते। पुनर्गृह्णाति, एवं त्रीन् वारान्, ततः परमन्योऽन्यस्मिन् स्थण्डिले त्रीन् वारान्, तस्याप्युपहतेऽन्योऽन्यस्मिन् स्थण्डिले त्रीन् वारान्, त्रिष्वसत्सु द्वौ जनौ नव वारान् पूरयतः, द्वयोरप्यसतोरेक एव नव वारान् पूरयति, स्थण्डिलेष्वप्यसत्सु अपवादः, त्रिषु द्वयोर्वा

एक्कंमि वा गिण्हंतीति ॥ २२५॥ 'परवयणे खरमाई' अस्य व्याख्या 'चोएइ खरो पच्छद्धं' चोदक आह—जदि रुदतिमणिट्ठे कालवहो ततो खरेण रडिते बारह वरिसे उवहंमउ, अण्णेसुवि अणिट्ठइंदियविसएसु एवं चेव कालवहो भवतु ?, आचार्य आह—

चोअग माणुसऽणिट्ठे कालवहो सेसगाण उ पहारो । पावासुआइ पुव्विं पन्नवणमणिच्छ उग्घाडे ॥२२६(भा०)॥

व्याख्या—माणुससरे अणिट्ठे कालवहो 'सेसग'त्ति तिरिया तेसिं जइ अणिट्ठो पहारसद्दो सुव्वइ तो कालवधो, 'पावासिय'त्ति मूलगाथायां योऽवयवः अस्य व्याख्या—'पावासुयाय' पच्छद्धं, जइ पाभाइयकालग्गहणवेलाए पावासियभज्जा पइणो गुणे संभरंती दिवे दिवे रोएती, रुवणवेलाए पुव्वयरो कालो घेत्तव्वो, अहवा सावि पच्चुसे रोवेज्जा ताहे दिवा गंतुं पण्णविज्जइ, पण्णवणमनिच्छाए उग्घाडणकाउस्सग्गो कीरइ ॥ २२६ ॥ 'एवमादीणि'त्ति अस्यावयवस्य व्याख्या—

वीसरसद्दरुअंते अव्वत्तगडिंभगंमि मा गिण्हे । गोसे दरपट्ठविए छीए छीए तिगी पेहे ॥ २२७ (भा०)॥

व्याख्या—अच्चायासेण रुयंतं वीरसं भन्नइ, तं उवहणए, जं पुण महुरसद्दं घोलमाणं च तं न उवहणति, जावमजंपिरं

---

१ एकस्मिन् वा गृह्णन्ति । चोदयति खरः पश्चार्धं, यदि रोदत्यनिष्टे कालवधो रटिते ततः खरेण द्वादश वर्षाण्युपहन्यतां,(कालं)अन्येष्वपि अनिष्टेन्द्रियविषये ष्वप्येवमेव कालवधो भवतु । मनुष्यस्वरेऽनिष्टे कालवधः शेषाः—तिर्यञ्चस्तेषां यदि अनिष्टः प्रहारशब्दः श्रूयते तर्हि कालवधः, यदि प्राभातिककालग्रहणवेलायां प्रोषितपतिका स्त्री पत्युर्गुणान् स्मरन्ती दिवसे २ रोदिति, रोदनवेलायाः पूर्वमेव कालो ग्रहीतव्यः, अथ च साऽपि प्रत्युषसि रुद्यात् तदा दिवसे गत्वा प्रज्ञाप्यते, प्रज्ञापनामनिच्छन्त्यां उद्घाटनकायोत्सर्गः क्रियते । अत्यायासेन रोदनं तत् विरसं भण्यते, तदुपहन्ति, यत् पुनर्घोलमानं मधुरशब्दं च तन्नोपहन्ति यावदजल्पाकं

[1]तामव्वत्तं, तं अप्पेणवि वीसरेण उवहणइ, महंतं उस्सुंभरोवणेण उवहणइ, पाभाइयकालग्गहणविही गया, इयाणिं पाभाइयपट्ठवणविही, 'गोसे दर' पच्छद्धं, 'गोसि'त्ति, उदितमादिच्चे, दिसालोयं करेत्ता पट्ठवेंति, 'दरपट्ठविए'त्ति अद्ध-पट्ठविए जइ छीतादिणा भग्गं पट्ठवणं अण्णो दिसालोयं करेत्ता तत्थेव पट्ठवेति, एवं ततियवाराए। दिसावलोयकरणे इमं कारणं—

आइन्न पिसिय महिया पेहित्ता तिन्नि तिन्नि ठाणाइं। नववारहए काले हउत्ति पढमाइ न पढंति ॥ १३९९ ॥

व्याख्या—'आइण्णा पिसिय'त्ति आइण्णं–पोग्गलं तं कागमादीहिं आणियं होज्जा, महिया वा पडिउमारद्धा, एवमाई एगठाणे ततो वारा उवहए हत्थसयबाहिं अण्णं ठाणं गंतुं पेहंति–पडिलेहेंति, पट्ठविंतित्ति वुत्तं भवति, तत्थवि पुव्वुत्त-विहिणा तिन्नि वारा पट्ठवेंति, एवं. वितियठाणेवि असुद्धे तओवि हत्थसयं अन्नं ठाणं गंतुं तिन्नि वारा पुव्वुत्तविहाणेण

---

१ तावदव्यक्तं, तदल्पेनापि विस्वरेणोपहन्ति, महान् उदश्रुभररोदनेनोपहन्ति, प्राभातिककालग्रहणविधिर्गतः, इदानीं प्राभातिकप्रस्थापनविधिः—उदिते आदित्ये दिगवलोकं कृत्वा प्रस्थापयन्ति, अर्धप्रस्थापिते यदि क्षुतादिना भग्नं प्रस्थापनं अन्यो दिगवलोकं कृत्वा तत्रैव प्रस्थापयति, एवं तृतीयवारायामपि, दिगवलोककरणे इदं पुनः कारणं। आकीर्णं–पुद्गलं तत् काकादिभिरानीतं भवेत् महिका वा पतितुमारब्धा, एवमादिभिरेकस्थाने उपहते त्रीन् वारान् हस्तशतात् बहिरन्यस्मिन् स्थाने गत्वा प्रतिलेखयन्ति प्रस्थापयन्ति इत्युक्तं भवति, तत्रापि पूर्वोक्तविधिना तिस्रो वाराः प्रस्थापयन्ति, एवं द्वितीयस्थानेऽप्यशुद्धे ततोऽपि हस्तशतात्परतोऽन्यस्मिन् स्थाने गत्वा त्रीन् वारान् पूर्वोक्तविधानेन

पठ्ठवेंति, जइ सुद्धं तो करेंति सज्झायं, नववारहए खुताइणा णियमा हओ, (ततो)पढमाए पोरिसीए न करेंति सज्झायमिति गाथार्थः ॥ १३९९ ॥

पठ्ठवियंमि सिलोगे छीए पडिलेह तिन्नि अन्नत्थ । सोणिय मुत्तपुरीसे घाणालोअं परिहरिज्जा ॥ १४०० ॥

व्याख्या—जदा पठ्ठवणाए तिन्नि अज्झयणा समत्ता, तदा उवरिमेगो सिलोगो कड्ढियव्वो, तंमि समत्ते पठ्ठवणं समप्पइ, बितियपादो गयत्थो 'सोणिय'त्ति अस्य व्याख्या—

आलोअंमि चिलमिणी गंधे अन्नत्थ गंतु पकरंति । वाघाइयकालंमी दंडग मरुआ नवरि नत्थि ॥ १४०१ ॥

व्याख्या—जत्थ सज्झायं करेंतेहिं सोणियवच्चिगा दीसंति तत्थ न करेंति सज्झायं, कडगं चिलिमिलिं वा अंतरे दातुं करेंति, जत्थ पुण सज्झायं चेव करेन्ताण मुत्तपुरीसकलेवरादीयाण गंधे अण्णंमि वा असुभगंधे आगच्छंते तत्थ सज्झायं न करेंति, अण्णंपि बंधणसेहणादिआलोयं परिहरेज्जा, एयं सव्वं निव्वाघाए काले भणियं ॥ वाघाइमकालोऽपि एवं चेव, नवरं गंडगमरुगादिट्ठंता न संभवंति ॥ १४०१ ॥

---

१ प्रस्थापयन्ति, यदि शुद्धं तर्हि कुर्वन्ति स्वाध्यायं, नववारहते क्षुतादिना नियमात् हतस्ततः प्रथमायां पौरुष्यां न कुर्वन्ति स्वाध्यायं। यदि प्रस्थापने त्रीण्यध्ययनानि समाप्तानि तदोपर्येकः श्लोकः कथयितव्यः, तस्मिन् समाप्ते प्रस्थापनं समाप्यते, द्वितीयपादो गतार्थः, यत्र स्वाध्यायं कुर्वद्भिः शोणितवर्चिका दृश्यन्ते तत्र न कुर्वन्ति स्वाध्यायं, कटकं चिलिमिलिं वाऽन्तरा दत्त्वा कुर्वन्ति, यत्र पुनः स्वाध्यायमेव कुर्वतां मूत्रपुरीषादिकलेवरादिकानां गन्धोऽन्यो वा गन्धोऽशुभ आगच्छति तत्र स्वाध्यायं न कुर्वन्ति, अन्यमपि बन्धनसेधनाद्यालोकं परिहरेत्, एतत् सर्वं निर्व्याघाते काले भणितं, व्याघातकालोऽप्येवमेव, नवरं गण्डगमरुकदृष्टान्तौ न संभवतः ।

एएसामन्नयरेऽसज्झाए जो करेइ सज्झायं। सो आणाअणवत्थं मिच्छत्त विराहणं पावे ॥ १४०२ ॥

व्याख्या—निगदसिद्धा ॥ १४०२ ॥ 'असज्झाइयं तु दुविहं' इत्यादिमूलद्वारगाथायां परसमुत्थमस्वाध्यायिकद्वारं सप्रपञ्चं गतं, इदानीमात्मसमुत्थास्वाध्यायिकद्वारावयवार्थप्रतिपादनायाह—

आयसमुत्थमसज्झाइयं तु एगविध होइ दुविहं वा। एगविहं समणाणं दुविहं पुण होइ समणीणं ॥ १४०३ ॥

व्याख्या—पूर्वार्द्धं कण्ठ्यं, पश्चार्द्धव्याख्या त्वियं—[1]एगविहं समणाणं तच्च व्रणे भवति, समणीणं दुविहं—व्रणे ऋतुसंभवे चेति गाथार्थः ॥ १४०३ ॥ एवं व्रणे विधानं—

धोयंमि उ निप्पगले बंधा तिन्नेव हुंति उक्कोसं। परिगलमाणे जयणा दुविहंमि य होइ कायव्वा ॥ १४०४ ॥

व्याख्या—पढमं चिय वणो हत्थसय बाहिं धोवित्तु निप्पगलो कओ, ततो परिगलंते तिण्णि बंधा जाव उक्कोसेणं गालंतो वाएइ, तत्थ जयणा वक्खमाणलक्खणा, 'दुविह'मिति दुविहं वणसंभवं उउयं च। दुविहेऽवि एवं पट्टग-जयणा कायव्वा ॥ १४०४ ॥

समणो उ वणिव्व भगंदरिव्व बंधं करित्तु वाएइ। तहवि गलंते छारं दाउं दो तिन्नि बंधा उ ॥ १४०५ ॥

---

[1] एकविधं श्रमणानां तच्च व्रणे भवति, श्रमणीनां द्विविधं। एवं व्रणे विधानं—प्रथममेव व्रणो हस्तशतात् बहिः प्रक्षाल्य निष्प्रगलः कृतः, ततः परिगलति त्रयो बन्धाः यावदुत्कृष्टेन गलनान्वितो वाचयति, तत्र यतना वक्ष्यमाणलक्षणा, द्विविधं व्रणसंभवमार्त्तवं च, द्विविधेऽप्येवं पट्टकयतना कर्त्तव्या,

व्याख्या—वणे धोवंमि निप्पगले हत्थसय बाहिरओ पट्टगं दाउं वाएइ, परिगलमाणेण भिन्ने तंमि पट्टगे तस्स उवरिं छारं दाउं पुणो पट्टगं देइ वाएइ य, एवं तइयंपि पट्टगं बंधेज्ज वायणं देज्जा, तओ परं गलमाणे हत्थसय बाहिरं गंतुं व्रण-पट्टगे य धोविय पुनरनेनैव क्रमेण वाएइ। अहवा अण्णत्थ पढंति ॥ १४०५ ॥

एमेव य समणीणं वणंमि इअरंमि सत्त बंधा उ। तहविय अठायमाणे धोएउं अहव अन्नत्थ ॥ १४०६ ॥

व्याख्या—इयरं तु—उतुतं, तत्थवि एयं चेव नवरं सत्त बंधा उक्कोसेणं कायबा, तहवि अट्ठायंते हत्थसय बाहिरओ धोवेउं पुणो वाएति। अहवा अण्णत्थ पढंति ॥ १४०६ ॥

एएसामन्नयरेऽसज्झाए अप्पणो उ सज्झायं। जो कुणइ अजयणाए सो पावइ आणमाईणि ॥ १४०७ ॥

व्याख्या—निगदसिद्धा ॥ १४०७ ॥ न केवलमाज्ञाभङ्गादयो दोषा भवन्ति, इमे य—

सुअनाणंमि अभत्ती लोअविरुद्धं पमत्तछलणा य। विज्जासाहणवइगुन्नधम्मया एव मा कुणसु ॥ १४०८ ॥

व्याख्या—सुयणाणे अणुपयारओ अभत्ती भवति, अहवा सुयणाणभत्तिराएण असज्झाइए सज्झायं मा कुणसु,

१ व्रणे धौते निष्पगले हस्तशतात् बहिः पट्टकं दत्त्वा वाचयति, परिगलता भिन्ने तस्मिन् पट्टके तस्योपरि भस्म दत्त्वा पुनः पट्टकं ददाति वाचयति च, एवं तृतीयमपि पट्टकं बध्नीयात् वाचनां च दद्यात्, ततः परं गलति हस्तशतात् बहिर्गत्वा व्रणं पट्टकांश्च धावित्वा वाचयति, अथवाऽन्यत्र पठन्ति। इतरस्त्वार्त्तवं, तत्राप्येतदेव नवरं सप्त बन्धाः उत्कृष्टेन कर्त्तव्याः, तथाप्यतिष्ठति हस्तशताद्बहिर्धावित्वा पुनर्वाचयति, अथवाऽन्यत्र पठन्ति, इमे च। श्रुतज्ञानेऽनुपचारतोऽभक्तिर्भवति, अथवा श्रुतज्ञानभक्तिरागेणास्वाध्यायिके स्वाध्यायं मा कार्षीः,

[1]उवएसो एस, जंपि लोयधम्मविरुद्धं च तं न कायवं, अविहीए पमत्तो लब्भइ, तं देवया छलेज्जा, जहा विज्जासाहणवइ-गुण्णयाए विज्जा न सिज्झइ तहा इहंपि कम्मक्खओ न होइ। वैगुण्यं—वैधर्म्यं विपरीतभाव इत्यर्थः। धम्मयाते सुय-धम्मस्स एस धम्मो जं असज्झाइए सज्झाइयवज्जणं, करंतो य सुयणाणायारं विराहेइ, तम्हा मा कुणसु ॥ १४०८ ॥ चोदक आह—जइ दंतमंससोणियाए असज्झाओ नणु देहो एयमओ एव, कहं तेण सज्झायं कुणह ?, आचार्य आह—

कामं देहावयवा दंताई अवजुआ तहवि वज्जा। अणवजुआ न वज्जा लोए तह उत्तरे चेव ॥ १४०९ ॥

व्याख्या—कामं चोदकाभिप्रायअणुमयत्थे सच्चं तम्मओ देहो, तहवि जे सरीराओ अवजुत्तत्ति—पृथग्भूताः ते वज्ज-णिज्जा। जे पुण अणवजुत्ता—तत्थत्था ते नो वज्जणिज्जा, इत्युपदर्शने। एवं लोके दृष्टं लोकोत्तरेऽप्येवमेवेत्यर्थः ॥ १४०९ ॥ किं चान्यत्—

अब्भिंतरमललित्तोवि कुणइ देवाण अच्चणं लोए। बाहिरमललित्तो पुण न कुणइ अवणेइ य तओ णं ॥ १४१० ॥

---

१ उपदेश एषः, यदपि लोकधर्मविरुद्धं च तन्न कर्त्तव्यं, अविधौ प्रमत्तो जायते, तं देवता छलयेत्, यथा विद्यासाधनवैगुण्यतया विद्या न सिध्यति तथेहापि कर्मक्षयो न भवति। धर्मतया—श्रुतधर्मस्यैष धर्मो यदस्वाध्यायिके स्वाध्यायस्य वर्जनं, कुर्वंश्च श्रुतज्ञानाचारं विराधयति, तस्मात् मा कार्षीः। यदि दन्तमांसशोणितादिष्वस्वाध्यायिकं ननु देह एतन्मय एव, कथं तेन स्वाध्यायं कुरुत ?, चोदकाभिप्रायानुमतार्थे, सत्यं तन्मयो देहः, तथापि ये शरीरात् पृथग्भूतास्ते। वर्जनीयाः, ये पुनः तत्रस्थास्ते न वर्जनीयाः।

व्याख्या—अभ्यंतरा मूत्रपुरीषादयः, 'तेहिं चेव बाहिरे उवलित्तो न कुणइ, अणुवलित्तो पुण अब्भिंतरगतेसुवि तेसु अह अच्चणं करेइ ॥ १४१० ॥ किं चान्यत्—

**आउट्टियाऽवराहं संनिहिया न खमए जहा पडिमा । इह परलोए दंडो पमत्तछलणा इह सिआ उ ॥ १४११ ॥**

व्याख्या—जा पडिमा 'सन्निहिय'त्ति देवयाहिट्ठिया सा जइ कोइ अणाढिएण 'आउट्टिय'त्ति जाणंतो बाहिरमललित्तो तं पडिमं छिवइ अच्चणं व से कुणइ तो ण खमए—खित्तादि करेइ रोगं वा जणेइ मारइ वा, 'इय'त्ति एवं जो असज्झाइए सज्झायं करेइ तस्स णाणायारविराहणाए कम्मबंधो, एसो से परलोए उ दंडो, इहलोए पमत्तं देवया छलेज्जा, स्यात् आणाइ विराहणा धुवा चेव ॥ १४११ ॥ कोई इमेहिं अप्पसत्थकारणेहिं असज्झाइए सज्झायं करेज्जा—

**रागेण व दोसेण वऽसज्झाए जो करेइ सज्झायं । आसायणा व का से? को वा भणिओ अणायारो? ॥ १४१२ ॥**

व्याख्या—रागेण वा दोसेण वा करेज्जा, अहवा दरिसणमोहमोहिओ भणेज्जा—का अमुत्तस्स णाणस्स आसायणा? को वा तस्स अणायारो?, नास्तीत्यर्थः ॥ १४१२ ॥ तेसिमा विभासा—

१ तैरेव बहिरुपलिप्तो न करोति, अनुपलिप्तः पुनरभ्यन्तरगतेष्वपि तेष्वथार्चनां करोति, या प्रतिमा देवताधिष्ठिता सा यदि कोऽपि अनादरेण जानानो बाह्यमललिप्तस्तां प्रतिमां स्पृशति अर्चनं वा तस्याः करोति तर्हि न क्षमते—क्षिप्तचित्तादि करोति रोगं वा जनयति मारयति वा, एवं योऽस्वाध्यायिके स्वाध्यायं करोति तस्य ज्ञानाचारविराधनया कर्मबन्धः, एष तस्य पारलौकिकस्तु दण्डः, इहलोके प्रमत्तं देवता छलयेत्, आज्ञादिविराधना ध्रुवैव । कश्चिदेभिरप्रशस्तकारणैरस्वाध्यायिके स्वाध्यायं कुर्यात् । रागेण वा द्वेषेण वा कुर्यात्, अथवा दर्शनमोहमोहितो भणेत्—अमूर्तस्य ज्ञानस्य काऽऽशातना? को वा तस्यानाचारः?, तेषामियं विभाषा

इमहिओ रागे दोसंमि न सद्दए सद्द । सव्वमसज्झायमय एमाइ हुति मोहाओ ॥ १४१२ ॥
'महितो'त्ति हृष्टस्तुष्टो नन्दितो वा परेण गणिवायगो वाहरिज्जंतो वा भवति, तदभिलाषी असज्झाइएवि
एवं रागे, दोसे किं वा गणी वाहरिज्जति वायगो वा, अहंपि अहिज्जामि जेण एयस्स पडिसवत्तीभूओ
जीवसरीरावयवो असज्झाइयं तम्हा असज्झाइयमयं-न श्रद्धातीत्यर्थः ॥ १४१३ ॥ इमे य दोसा—
ळभेज्जा रोगायंकं व पाउणे दीहं । तित्थयरभासियाओ भस्सइ सो संजमाओ वा ॥ १४१४ ॥
खेत्तादिगो उम्माओ चिरकालिओ रोगो, आसुघाती आयंको, एतेण वा पावेज्जा, धम्माओ भंसेज्जा-मिच्छ-
ते, चरित्ताओ वा परिवडइ ॥ १४१४ ॥
नेयं परलोएँ फलं न दिंति विज्जाओ । आसायणा सुयस्स उ कुव्वइ दीहं च संसारं ॥ १४१५ ॥
सुयणाणायारविवरीयकारी जो सो णाणावरणिज्जं कम्मं बंधति, तदुदया य विज्जाओ कओवयारा-
देंति, न सिध्यन्ति इत्यर्थः । विहीए अकरणं परिभवो, एवं सुयासायणा, अविहीए वट्टंतो नियमा अट्ठ

---

ो वाचको व्याह्रियमाणो वा भवति। अस्वाध्यायिकेऽपि स्वाध्यायं करोति, एवं रागे, द्वेषे कि वा गणी व्याह्रियते वाचको वा, अहमप्यध्येष्ये
भूतो भवामि, यस्मात् जीवशरीरावयवोऽस्वाध्यायिकं तस्मादस्वाध्यायिकमयं। इमे च दोषाः-क्षिप्तचित्तादिक उन्मादः चिरकालिको रोग
, एतेन वा प्राप्नुयात्, धर्मात् भ्रश्येत्-मिथ्यादृष्टिर्वा भवेत्, चारित्राद्वा परिपतेत् । श्रुतज्ञानाचारविपरीतकारी यः स ज्ञानावरणीयं कर्म
विद्याः कृतोपचारा अपि फलं न ददति, विधेरकरणं परिभवः एवं श्रुताशातना, अविधौ वर्त्तमानो नियमात् अष्ट

पगडीओ बंधति हस्सठितियाओ य दीहठितियाओ करेइ मंदाणुभावा य तिव्वाणुभावाओ करेइ, अप्पपदेसाओ बहुपदेसाओ करेइ । एवंकारी य नियमा दीहकालं संसारं निवत्तेइ । अहवा नाणायारविराहणाए दंसणविराहणा, णाणदंसणविराहणाहिं नियमा चरणविराहणा, एवं तिण्ह विराहणाए अमोक्खे, अमोक्खे नियमा संसारो, तम्हा असज्झाइए ण सज्झाइयमिति गाथार्थः ॥ १४१५ ॥

असज्झाइयनिज्जुत्ती कहिया भे धीरपुरिसपन्नत्ता । संजमतवड्ढगाणं निग्गंथाणं महरिसीणं ॥ १४१६ ॥
असज्झाइयनिज्जुत्तिं जुंजंता चरणकरणमाउत्ता । साहू खवेंति कम्मं अणेगभवसंचियमणंतं ॥ १४१७ ॥

असज्झाइयनिज्जुत्ती समत्ता ॥

व्याख्या—गाथाद्वयं निगदसिद्धं ॥ १४१६–१४१७ ॥ अस्वाध्यायिकनिर्युक्तिः समाप्ता ॥

तथा सज्झाए न सज्झाइयं 'तस्स मिच्छामिदुक्कडं' तथा स्वाध्यायिके—अस्वाध्यायिकविपर्ययलक्षणे न स्वाध्यायितं । इत्थमाशातनया योऽतिचारः कृतस्तस्य मिथ्यादुष्कृतमिति पूर्ववत् ।

एयं सुत्तनिबद्धं अत्थेणऽण्णंपि होति विण्णेयं । तं पुण अव्वामोहत्थमोहओ संपवक्खामि ॥ १ ॥ तेत्तीसाए उवरिं चोत्तीसं बुद्धवयणअतिसेसा । पणतीस वयणअतिसय छत्तीसं उत्तरज्झयणा ॥ २ ॥ एवं जह समवाए जा सयभिसरिक्ख

१ प्रकृतीर्बध्नाति ह्रस्वस्थितिकाश्च दीर्घस्थितिकाः करोति मन्दानुभावाश्च तीव्रानुभावाः करोति अल्पप्रदेशाग्रा बहुप्रदेशाग्राः करोति, एवंकारी च नियमात् दीर्घकालिकं संसारं निर्वर्त्तयति, अथवा ज्ञानाचारविराधनायां दर्शनविराधना ज्ञानदर्शनविराधनयोर्नियमाच्चरणविराधना, एवं त्रयाणां विराधनयाऽमोक्षः, अमोक्षे नियमात् संसारः, तस्मादस्वाध्यायिके न स्वध्येयमिति

होइ सततारं । तथा चोक्तं—सयभिसया नक्खत्ते सएगतारे तहेव पण्णत्ते ॥ इय संखअसंखेहिं तहय अणंतेहिं ठाणेहिं ॥ ३ ॥ संजममसंजमस्स य पडिसिद्धादिकरणाइयारस्स । होति पडिक्कमणं तू तेत्तीसेहिं तु ताइं पुण ॥ ४ ॥ अवराहपदे सुत्तं अंतग्गय होति णियम सव्वेवि । सव्वो वऽइयारगणो दुगसंजोगादि जो एस ॥ ५ ॥ एगविहस्सासंजमस्सऽहव दीहपज्जवसमूहो । एवऽतियारविसोहिं काउं कुणती णमोक्कारं ॥ ६ ॥

णमो चउवीसाए इत्यादि, अथवा प्राक्तनाशुभसेवनायाः प्रतिक्रान्तः अपुनःकारणाय प्रतिक्रामन् नमस्कारपूर्वकं प्रतिक्रमन्नाह—

नमो चउवीसाए तित्थगराणं उसभादिमहावीरपज्जवसाणाणं ( सूत्रम् )

नमश्चतुर्विंशतितीर्थंकरेभ्य ऋषभादिमहावीरपर्यवसानेभ्यः, प्राकृते षष्ठी चतुर्थ्यर्थ एव भवति, तथा चोक्तं—“[1]बहुवयणेण दुवयणं छट्ठिविभत्तीएँ भन्नइ चउत्थी । जह हत्था तह पाया नमोऽत्थु देवाहिदेवाणं ॥ १ ॥” इत्थं नमस्कृतस्य प्रस्तुतस्य व्यावर्णनायाह—

इणमेव निग्गंथं पावयणं सच्चं अणुत्तरं केवलियं पडिपुण्णं नेआउयं संसुद्धं सल्लगत्तणं सिद्धिमग्गं मुत्तिमग्गं निव्वाणमग्गं निव्वाणमग्गं अवितहमविसंधिं सव्वदुक्खप्पहीणमग्गं, इत्थं ठिया जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति ( सूत्रं )

---

१ बहुवचनेन द्विवचनं षष्ठीविभक्त्या भण्यते चतुर्थी । यथा हस्तौ तथा पादौ नमोऽस्तु देवाधिदेवेभ्यः ॥ १ ॥

'इदमेवे'ति सामायिकादि प्रत्याख्यानपर्यन्तं द्वादशाङ्गं वा गणिपिटकं, निर्ग्रन्थाः—बाह्याभ्यन्तरग्रन्थनिर्गताः साधवः निर्ग्रन्थानामिदं नैर्ग्रन्थ्यं 'प्रावचन'मिति प्रकर्षेणाभिविधिनोच्यन्ते जीवादयो यस्मिन् तत्प्रावचनम्, इदमेव नैर्ग्रन्थ्यं प्रावचनं किमत आह—सतां हितं सत्यं, सन्तो—मुनयो गुणाः पदार्था वा सद्भूतं वा सत्यमिति, नयदर्शनमपि स्वविषये सत्यं भवत्यत आह—'अणुत्तरं'ति नास्योत्तरं विद्यत इत्यनुत्तरं, यथावस्थितसमस्तवस्तुप्रतिपादकत्वात् उत्तममित्यर्थः, यदि नामेदमीत्थम्भूतमन्यदप्येवम्भूतं भविष्यतीत्यत आह—'केवलियं' केवलमद्वितीयं नापर-मित्थंभूतमित्यर्थः यदि नामेदमित्थभूतं तथाप्यन्यस्याप्यसंभवादपवर्गप्रापकैर्गुणैः प्रतिपूर्णं न भविष्यतीत्यत आह—'पडिपुन्नं'ति प्रतिपूर्णमपवर्गप्रापकैर्गुणैर्भृतमित्यर्थः, भृतमपि कदाचिदात्मंभरितया न तन्नयनशीलं भवि-ष्यतीत्यत आह—'नेयाउयं'ति नयनशीलं नैयायिकं, मोक्षगमकमित्यर्थः, नैयायिकमप्यसंशुद्धं—सकीर्णं नाक्षेपेण नैयायिकं भविष्यति इत्यत आह—'संसुद्धं'ति सामस्त्येन शुद्धं संशुद्धं, एकान्ताकलङ्कमित्यर्थः, एवंभूतमपि कथ-ञ्चित्तथास्वाभाव्यान्नालंभवति बन्धननिकृन्तनाय (इदमपि तथा) भविष्यतीत्यत आह—'सल्लगत्तणं'ति कृन्ततीति कर्त्तनं शल्यानि—मायादीनि तेषां कर्त्तनं, भवनिबन्धनमायादिशल्यच्छेदकमित्यर्थः, परमतनिषेधार्थं त्वाह—'सिद्धिमग्गं मुत्तिमग्गं' सेधनं सिद्धिः—हितार्थप्राप्तिः सिद्धेर्मार्गः सिद्धिमार्गः, मोचनं मुक्तिः—अहितार्थकर्म-विच्युतिस्तस्या मार्गो मुक्तिमार्ग इति, मुक्तिमार्ग—केवलज्ञानादिहितार्थप्राप्तिद्वारेणाहितकर्मविच्युतिद्वारेण च मोक्ष-साधकमिति भावना, अनेन च केवलज्ञानादिविकलाः सकर्मकाश्च मुक्ता इति दुर्नयनिरासमाह, विप्रतिपत्तिनिरा-

ार्थमाह–'निज्जाणमग्गं निव्वाणमग्गं' यान्ति तदिति यानं 'कृत्यल्युटो बहुलं' ( पा० ३–३–११३ ) इति वचनात् कर्मणि ल्युट्, निरुपमं यानं निर्यानं, ईषत्प्राग्भाराख्यं मोक्षपदमित्यर्थः, तस्य मार्गो निर्याणमार्ग इति, निर्याणमार्गः–विशिष्टनिर्याणप्राप्तिकारणमित्यर्थः, अनेनानियतसिद्धिक्षेत्रप्रतिपादनपरदुर्णयनिरासमाह, निर्वृतिर्निर्वाणं–सकलकर्मक्षयजमात्यन्तिकं सुखमित्यर्थः, निर्वाणस्य मार्गो निर्वाणमार्ग इति, निर्वाणमार्गः परमनिर्वृतिकारणमिति हृदयं, अनेन च निःसुखदुःखा मुक्तात्मान इति प्रतिपादनपरदुर्णयनिरासमाह, निगमयन्नाह–इदं च "अवितहमविसंधिं सव्वदुक्खप्पहीणमग्गं" अवितथं–सत्यं अविसन्धि–अव्यवच्छिन्नं, सर्वदा अवरविदेहादिषु भावात्, सर्वदुःखप्रहीणमार्गं–सर्वदुःखप्रहीणो–मोक्षस्तत्कारणमित्यर्थः, साम्प्रतं परार्थकरणद्वारेणास्य चिन्तामणित्वमुपदर्शयन्नाह–"एत्थट्ठि (इत्थंट्ठि) या जीवा सिज्झंति'त्ति 'अत्र' नैर्ग्रन्थे प्रवचने स्थिता जीवाः सिध्यन्तीत्यणिमादिसंयमफलं प्राप्नुवन्ति 'बुज्झंती'ति बुध्यन्ते केवलिनो भवन्ति 'मुचंति'त्ति मुच्यन्ते भवोपग्राहिकर्मणा 'परिनिव्वायंति'त्ति परि–समन्तात् निर्वान्ति, किमुक्तं भवति ?–'सव्वदुक्खाणमंतं करिंति'त्ति सर्वदुःखानां शारीरमानसभेदानां अन्तं–विनाशं कुर्वन्ति–निर्वर्त्तयन्ति । इत्थमभिधायाधुनाऽत्र चिन्तामणिकल्पे कर्ममलप्रक्षालनसलिलौघं श्रद्धानमाविष्कुर्वन्नाह—

तं धम्मं सद्दहामि पत्तियामि रोएमि फासेमि अणुपालेमि, तं धम्मं सद्दहंतो पत्तिअंतो रोयंतो फासंतो अणुपालंतो तस्स धम्मस्स अब्भुट्ठिओमि आराहणाए विरओमि विराहणाए असंजमं परिआणामि संजमं उवसंपज्जामि अबंभं परिआणामि बंभं उवसंपज्जामि अकप्पं परियाणामि कप्पं उवसंपज्जामि

अण्णाणं परिआणामि नाणं उवसंपज्जामि अकिरियं परियाणामि किरियं उवसंपज्जामि मिच्छत्तं परियाणामि सम्मत्तं उवसंपज्जामि अबोहिं परियाणामि बोहिं उवसंपज्जामि अमग्गं परियाणामि मग्गं उवसंपज्जामि (सूत्रं)

य एष नैर्ग्रन्थ्यप्रावचनलक्षणो धर्म उक्तः तं धर्मं श्रद्दध्महे (धे) सामान्येनैवमयमिति 'पत्तियामि'त्ति प्रतिपद्यामहे (द्ये) प्रीतिकरणद्वारेण 'रोएमि'त्ति रोचयामि, अभिलाषातिरेकेणासेवनाभिमुखतया, तथा प्रीती रुचिश्च भिन्ने एव, यतः क्वचिद्दध्यादौ प्रीतिसद्भावेऽपि न सर्वदा रुचिः, 'फासेमि'त्ति स्पृशामि आसेवनाद्वारेणेति 'अणुपालेमि' अनुपालयामि पौनःपुन्यकरणेन 'तं धम्मं सद्दहंतो' इत्यादि, तं धर्मं श्रद्दधानः प्रतिपद्यमानः रोचयन् स्पृशन् अनुपालयन् 'तस्स धम्मस्स अब्भुट्ठिओमि आराधनाए'त्ति तस्य धर्मस्य प्रागुक्तस्य अभ्युत्थितोऽस्मि आराधनायाम्—आराधनविषये 'विरतोमि विराधनाए'त्ति विरतोऽस्मि—निवृत्तोऽस्मि विराधनायां—विराधनाविषये, एतदेव भेदेनाह—'असंजमं परियाणामि, संजमं उवसंपज्जामि' असंयमं—प्राणातिपातादिरूपं प्रतिजानामीति ज्ञपरिज्ञया विज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याख्यामीत्यर्थः, तथा संयमं—प्रागुक्तस्वरूपं उपसंपद्यामहे(द्ये),प्रतिपद्याम(हे)इत्यर्थः, तथा 'अबंभं परियाणामि बंभं उवसंपज्जामि' अब्रह्म—बस्त्यनियमलक्षणं विपरीतं ब्रह्म, शेषं पूर्ववत् , प्रधानासंयमाङ्गत्वाच्चाब्रह्मणो निदानपरिहारार्थमनन्तरमिदमाह, असंयमाङ्गत्वादेवाह—'अकप्पं परियाणामि कप्पं उवसंपज्जामि' अकल्पोऽकृत्यमाख्यायते कल्पस्तु कृत्यं इति, इदानीं द्वितीयं बन्धकारणमाश्रित्याह, यत उक्तं [च]—"अस्संजमो य एक्को अण्णाणं अविरई य दुविहं" इत्यादि । 'अण्णाणं परियाणामि नाणं उवसंपज्जामि' अज्ञानं सम्यग्ज्ञानादन्यत् ज्ञानं तु भगवद्वचनजं,

अज्ञानभेदपरिहरणायैवाह–'अकिरियं परियाणामि किरियं उवसंपज्जामि' अक्रिया–नास्तिवादः क्रिया–सम्यग्वादः। तृतीयं बन्धकारणमाश्रित्याह–'मिच्छत्तं परियाणामि सम्मत्तं उवसंपज्जामि' मिथ्यात्वं–पूर्वोक्तं सम्यक्त्वमपि, एतदङ्गत्वादेवाह–'अबोहिं परियाणामि बोहिं उवसंपज्जामि' अबोधिः–मिथ्यात्वकार्यं बोधिस्तु सम्यक्त्वस्येति, इदानीं सामान्येनाह–'अमग्गं परियाणामि मग्गं उवसंपज्जामि' अमार्गो–मिथ्यात्वादिः मार्गस्तु सम्यग्दर्शनादिरिति। इदानीं छद्मस्थत्वादशेषशुद्ध्यर्थमाह—

जं संभरामि जं च न संभरामि जं पडिक्कमामि जं च न पडिक्कमामि तस्स सव्वस्स देवसियस्स अइयारस्स पडिक्कमामि समणोऽहं संजयविरयपडिहयपच्चक्खायपावकम्मो अनियाणो दिट्ठिसंपण्णो मायामोसविवज्जिओ।(सूत्रं)

यत् किञ्चित् स्मरामि यच्च छद्मस्थानाभोगान्नेति, तथा 'जं पडिक्कमामि जं च न पडिक्कमामि' यत् प्रतिक्रमामि आभोगादिविदितं यच्च न प्रतिक्रमामि सूक्ष्ममविदितं, अनेन प्रकारेण यः कश्चिदतिचारः कृतः 'तस्स सव्वस्स देवसियस्स अतियारस्स पडिक्कमामि'त्ति कण्ठ्यं, इत्थं प्रतिक्रम्य पुनरकुशलप्रवृत्तिपरिहारायात्मानमालोचयन्नाह–'समणोऽहं संजयविरयपडिहयपच्चक्खायपावकम्मो अणियाणो दिट्ठिसंपन्नो मायामोसविवज्जिओ'त्ति श्रमणोऽहं तत्रापि न चरकादिः, किं तर्हि ?, संयतः सामस्त्येन यतः इदानीं, विरतो–निवृत्तः अतीतस्यैष्यस्य च निन्दासंवरणाद्वारेण अत एवाह–प्रतिहतप्रत्याख्यातपापकर्मा, प्रतिहतम्–इदानीमकरणतया प्रत्याख्यातमतीतं निन्दया एष्यमकरणतयेति, प्रधानोऽयं दोष इतिकृत्वा तत्शून्यतामात्मनो भेदेन प्रतिपादयन्नाह–'अनिदानो' निदानरहितः, सकलगुणमूलभूतगुणयुक्ततां दर्शयन्नाह–'दृष्टिसंपन्नः' सम्यग्दर्शनयुक्त इत्यर्थः । वक्ष्यमाणद्रव्यवन्दनपरिहारायाह—मायामृषाविवर्जकः ( विवर्जितः )–मायागर्भमृषा वादपरिहारीत्युक्तं भवति । एवंभूतः सन् किं ?—

अड्डाइज्जेसु दीवसमुद्देसु पनरससु कम्मभूमीसु जावंति केइ साहू रयहरणगुच्छपडिग्गहधारा पंचमहव्वयधारा। अड्डारसहस्ससीलंगधारा अक्खयायारचरित्ता ते सव्वे सिरसा मणसा मत्थएण वंदामि। (सूत्रं)

अर्द्धतृतीयेषु द्वीपसमुद्रेषु—जम्बूद्वीपधातकीखण्डपुष्करार्द्धेषु पञ्चदशसु कर्मभूमिषु—पञ्चभरतपञ्चैरावतपञ्चविदेहाभिधानासु यावन्तः केचन साधवः रजोहरणगुच्छप्रतिग्रहधारिणः, निह्नवादिव्यवच्छेदायाह—पञ्चमहाव्रतधारिणः, पञ्च महाव्रतानि—प्रतीतानि, अतस्तदेकाङ्गविकलप्रत्येकबुद्धसङ्ग्रहायाह—अष्टादशशीलाङ्गसहस्रधारिणः, तथाहि—केचिद् भगवन्तो रजोहरणादिधारिणो न भवन्त्यपि, तानि चाष्टादशशीलाङ्गसहस्राणि दर्श्यन्ते, तत्रेयं करणगाथा—जोए करणे सन्ना इंदिय भोमाइ समणधम्मे य। सीलंगसहस्साणं अड्डारसगस्स निप्फत्ती ॥ १ ॥

स्थापना त्वियं—

| म० | व० | का० | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ण क० | ण का० | ण अ० | | | | | | | |
| आ० | भ० | मै० | प० | | | | | | |
| सो० | च० | घा० | र० | फा० | | | | | |
| पु० | आ० | ते० | वा० | व० | बे० | ते० | च० | पं० | अ० |
| ख० | मा० | आ० | मु० | त० | सं० | स० | सो० | आ० | वं० |

इयं भावना—मणेण ण करेइ आहारसण्णाविप्पजढो सोतिंदियसंवुडो खंतिसंपन्नो पुढवीकायसंरक्खओ १, मणेण ण करेइ आहारसण्णाविप्पजढो सोतिंदियसंवुडो खंतिसंपन्नो आउक्कायसंरक्खओ २ एवं तेउ ३ वाउ ४ वणस्सति ५ बि० ६ ति० ७ च० ८ पं० ९

जे नो करिंति मणसा निज्जियआहारसन्नसोइंदि पुढवीकायारंभे खंतिजुआ ते मुणि वन्दे ॥ १ ॥

अजीवेसु दस भेदा, एते खंतिपयं अमुयंतेण लद्धा । एवं मद्दवादिसु एक्केक्के दस २ लब्भति, एवं सतं, एते सोतिंदियमसुयं-तेण लद्धा, एवं चक्खिदियादियेसुवि एक्केक्के सयं २ जाता सता ५००, एतेवि आहारसण्णाऽपरिच्चायगेण लद्धा, भयादि-सण्णादिसुवि पत्तेयं २ पंच सया, जाता दो सहस्सा, एते न करेंतित्ति एतेण लद्धा न कारवेदिएतेणवि दो करंते णाणु-जाणति एतेणवि दो सहस्सा २०००, जाता ६ सहस्सा, एते मणेण लद्धा ६०००, वायाएवि ६०००, काएणवि छत्ति ६०००, जाता अट्ठारसत्ति १८००० । 'अक्षताचारचारित्रिणः' अक्षताचार एव चारित्रं, तान् 'सर्वान्' गच्छगतनिर्गतभेदान् 'शिरसा' उत्तमाङ्गेन मनसा—अन्तःकरणेन मस्तकेन वन्दत(वन्दे) इति वाचा, इत्थमभिवन्द्य साधून् पुनरोघतः सकल-सत्त्वक्षामणमैत्रीप्रदर्शनायाह—

खामेमि सव्व जीवे, सव्वे जीवा खमंतु मे । मेत्ती मे सव्वभूएसु, वेरं मज्झं न केणइ ॥ १ ॥

एवमहं आलोइय निन्दिय गरहिय दुगुंछियं सम्मं । तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीसं ॥ २ ॥ (सूत्रं)

निगदसिद्धा एवेयं, सव्वे जीवा खमंतु मेत्ति, मा तेषामप्यक्षान्तिप्रत्ययः कर्मबन्धो भवत्विति करुणयेदमाह । समाप्तौ स्वरूपप्रदर्शनपुरःसरं मङ्गलगाहा—एवेत्यादि निगदसिद्धा, एवं दैवसिकं प्रतिक्रमणमुक्तं, रात्रिकमप्येवम्भूतमेव, नवरं यत्रैव दैवसिकातिचारोऽभिहितस्तत्र रात्रिकातिचारो वक्तव्यः । आह—यद्येवं 'इच्छामि पडिक्कमिउं गोयरचरियाए' इत्यादि सूत्रमनर्थकं, रात्रावस्य असंभवादिति, उच्यते, स्वप्नादौ संभवादित्यदोषः । इत्युक्तोऽनुगमः, नयाः प्राग्वत् ॥

इत्याचार्यश्रीमद्धरिभद्रसूरिशक्रविहितायां आवश्यकवृत्तौ शिष्यहितायां प्रतिक्रमणाध्ययनं समाप्तं ॥

इति श्रीमत्सूरिपुरन्दरभवविरहोपाधिशोभितश्रीमद्धरिभद्र-
सूरिविहितविवृतियुतं श्रीआवश्यकसूत्रीयं चतुर्थं प्रति-
क्रमणाख्यमध्ययनं संपूर्णतामगमत् उत्तरार्धे पूर्वविभागः

॥ अर्हम् ॥

श्रीमद्भद्रबाहुस्वामिप्रणीतनिर्युक्तियुतभाष्यकलितश्रीमद्धरिभद्रसूरिशेखरसूत्रितवृत्तिपरिवृतं

# श्रीमदावश्यकसूत्रस्योत्तरार्धं (उत्तरभागः)

प्रकाशयित्री–श्रीआगमोदयसमितिः पत्तननिवासिश्रीपन्नालालतनुजचुनीलालविहितद्रव्यसाहाय्येन
कार्यकृत्श्रेष्ठिसूरचन्द्रात्मजवेणीचन्द्रद्वारा

इदं पुस्तकं मुम्बय्यां निर्णयसागरमुद्रणास्पदे कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत्. २४४३. विक्रमसंवत्. १९७३. क्राइष्टस्य. १९१७.

पण्यं एको रूप्यकः

पत्रमहार्घता संग्रहणव्ययः पत्रस्थानावरोधः पुस्तकप्रेषणव्यवस्थापार्थक्यं इत्यादिभिरनेकैः कारणैः किञ्चिदधिकं पण्यमिति क्षन्तव्यं धीधनैः

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press 23, Kolbhat Lane, Bombay.
Published by Shah Venichand Surchand for Agamodaysamiti, Mehesana.

## अथ कायोत्सर्गाध्ययनं

व्याख्यातं प्रतिक्रमणाध्ययनमधुना कायोत्सर्गाध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः–अनन्तराध्ययने वन्दनाद्यकरणादिना स्खलितस्य निन्दा प्रतिपादिता, इह तु स्खलितविशेषतोऽपराधव्रणविशेषसंभवादेतावताऽशुद्धस्य सतः प्रायश्चित्तभेषजेनापराधव्रणचिकित्सा प्रतिपाद्यते, यद्वा प्रतिक्रमणाध्ययने मिथ्यात्वादिप्रतिक्रमणद्वारेण कर्मनिदानप्रतिषेधः प्रतिपादितः, यथोक्तं–'मिच्छत्तपडिक्कमण' मित्यादि, इह तु कायोत्सर्गकरणतः प्रागुपात्तकर्मक्षयः प्रतिपाद्यते, वक्ष्यते च–"जह करगओ निकंतइ दारुं जंतो पुणोऽवि वच्चंतो। इय किंतंति सुविहिया काउस्सग्गेण कम्माइं ॥ १ ॥ काउस्सग्गे जह सुट्ठियस्स भज्जंति अंगमंगाइं। इय भिंदंति सुविहिया अट्ठविहं कम्मसंघायं ॥ २ ॥" इत्यादि, अथवा सामायिके चारित्रमुपवर्णितं, चतुर्विंशतिस्तवे त्वर्हतां गुणस्तुतिः, सा च ज्ञानदर्शनरूपा, एवमिदं त्रितयमुक्तं, अस्य च वितथासेवनमैहिकामुष्मिकापायपरिजिहीर्षुणा गुरोर्निवेदनीयं, तच्च वन्दनपूर्वकमित्यतस्तन्निरूपितं, निवेद्य च भूयः शुभेष्वेव स्थानेषु प्रतीपं क्रमणमासेवनीयमित्यनन्तराध्ययने तन्निरूपितं, इह तु तथाप्यशुद्धस्यापराधव्रणचिकित्सा प्रायश्चित्तभेषजात् प्रतिपाद्यते, तत्र प्रायश्चित्तभेषजमेव तावद्विचित्रं प्रतिपादयन्नाह—

आलोयण पडिक्कमणे मीस विवेगे तहा विउस्सग्गे। तव छेय मूल अणवट्ठया य पारंचिए चेव ॥ १४१८ ॥

'आलोयणं'ति आलोचना प्रयोजनतो हस्तशताद् वहिर्गमनागमनादौ गुरोर्विकटना, 'पडिक्कमणे'त्ति प्रतीपं क्रमणं

१ यथा क्रकचो निकृन्तति दारु यान् पुनरपि व्रजन्। एवं कृन्तन्ति सुविहिताः कायोत्सर्गेण कर्माणि ॥ १ ॥ कायोत्सर्गे यथा सुस्थितस्य भज्यन्ते अङ्गोपाङ्गानि। एवं भिन्दन्ति सुविहिता अष्टविधं कर्मसंघातम् ॥ २ ॥

प्रतिक्रमणं, सहसाऽसमितादौ मिथ्यादुष्कृतकरणमित्यर्थः,'मीस'त्ति मिश्रं शब्दादिषु रागादिकरणे, विकटना मिथ्यादुष्कृतं
चेत्यर्थः, 'विवेगे'त्ति विवेकः अनेषणीयस्य भक्तादेः कथञ्चित् गृहीतस्य परित्याग इत्यर्थः, तथा 'विउस्सग्गे'त्ति तथा
व्युत्सर्गः कुस्वप्नादौ कायोत्सर्ग इति भावना, 'तवे'त्ति कर्म तापयतीति तपः—पृथिव्यादिसंघट्टनादौ निर्विग(क्र)तिकादि,
'छेदे'त्ति तपसा दुर्दमस्य श्रमणपर्यायच्छेदनमिति हृदयं, 'मूल'त्ति प्राणातिपातादौ पुनर्व्रतारोपणमित्यर्थः,'अणवठ्या य'त्ति
हस्ततालादिप्रदानदोषात् दुष्टतरपरिणामत्वाद् व्रतेषु नावस्थाप्यते इत्यनवस्थाप्यः तद्भावोऽनवस्थाप्यता, 'पारंचिए चेव'त्ति
पुरुषविशेषस्य स्वलिङ्गराजपत्न्याद्यासेवनायां पाराञ्चिकं भवति, पारं—प्रायश्चित्तान्तमञ्चति—गच्छतीति पाराञ्चिकं, न तत
ऊर्द्धं प्रायश्चित्तमस्तीति गाथार्थः ॥ १४१८ ॥ एवं प्रायश्चित्तभैषजमुक्तं, साम्प्रतं व्रणः प्रतिपाद्यते, स च द्विभेदः—द्रव्यव्रणो
भावव्रणश्च, द्रव्यव्रणः शरीरक्षतलक्षणः, असावपि द्विविध एव, तथा चाह—

दुविहो कायंमि वणो तदुब्भवागंतुओ अ णायव्वो । आगंतुयस्स कारइ सल्लुद्धरणं न इयरस्स ॥ १४१९ ॥
तणुओ अतिक्खतुंडो असोणिओ केवलं तए लग्गो । अवउज्झत्ति सल्लो सल्लो न मलिज्जइ वणो उ ॥ १४२० ॥
लग्गुद्धियंमि बीए मलिज्जइ परं अदूरगे सल्ले । उद्धरणमलणपूरण दूरयरगए तइयगंमि ॥ १४२१ ॥
मा वेअणा उ तो उद्धरित्तु गालंति सोणिय चउत्थे । रुज्झइ लहुंति चिट्ठा वारिज्जइ पंचमे वणिणो ॥ १४२२ ॥
रोहेइ वणं छट्ठे हियमियभोई अभुंजमाणो वा । तित्तिअमित्तं छिज्जइ सत्तमए पूइमंसाई ॥ १४२३ ॥
तहविय अठायमाणो गोणसखइयाइ रुप्फए वावि । कीरइ तयंगछेओ सअट्ठिओ सेसरक्खट्ठा ॥ १४२४ ॥

मूलुत्तरगुणरूवस्स ताइणो परमचरणपुरिसस्स । अवराहसल्लपभवो भाववणो होइ नायव्वो ॥ १ ॥ (प्र०)॥
भिक्खायरियाइ सुज्झइ अइआरो कोइ वियडणाए उ। बीओ असमिओमित्ति कीस सहसा अगुत्तो वा ?॥१४२५
सद्दाइएसु रागं दोसं च मणा गओ तइयगंमि । नाउं अणेसणिज्जं भत्ताइविगिंचण चउत्थे ॥ १४२६ ॥
उस्सग्गेणवि सुज्झइ अइआरो कोइ कोइ उ तवेणं । तेणवि असुज्झमाणं छेयविसेसा विसोहिंति ॥ १४२७ ॥

द्विविधो–द्विप्रकारः 'कायंमि वणो'त्ति चीयत इति कायः–शरीरमित्यर्थः तस्मिन् व्रणः–क्षतलक्षणः, द्वैविध्यं दर्शयति–तस्मादुद्भवोऽस्येति तदुद्भवो–गण्डादिः आगन्तुकश्च ज्ञातव्यः, आगन्तुकः कण्टकादिप्रभवः, तत्रागन्तुकस्य क्रियते शल्योद्धरणं नेतरस्य–तदुद्भवस्येति गाथार्थः ॥ यद्यस्य यथोद्ध्रियते–उत्तरपरिकर्म क्रियते द्रव्यव्रण एव तदेतदभिधित्सुराह–'तणुओ अतिक्खतुंडो' इति तनुरेव तनुकं कृशमित्यर्थः, न तीक्ष्णतुण्डमतीक्ष्णमुखमिति भावना, नास्मिन् शोणितं विद्यत इत्यशोणितं केवलं नवरं त्वग्लग्नं, उद्धृत्य 'अवउज्झत्ति सल्लो'त्ति परित्यज्यते शल्यं प्राकृतशैल्या तु पुल्लिङ्गनिर्देशः, 'सल्लो न मलिज्जइ वणो य' न च मृद्यते व्रणः, अल्पत्वात् शल्यस्येति गाथार्थः ॥ प्रथमशल्यजे अयं विधिः, द्वितीयादिशल्यजे पुनरयं–'लग्गुद्धियंमि' लग्नमुद्धृतं लग्नोद्धृतं तस्मिन् द्वितीये कस्मिन् ?–अदूरगते शल्य इति योगः; मनाग् दृढलग्न इति भावना, [illegible] 'मलिज्जइ परं'ति मृद्यते यदि परं व्रण इति उद्धरणं शल्यस्य, मर्दनं व्रणस्य, पूरणं कर्णमलादिना तस्यैवैतानि क्रि[illegible] दूरगते तृतीये शल्य इति गाथार्थः ॥ 'मा वेयणा उ तो उद्धरेत्तु गालंति सोणिय चउत्थे । रुज्झउ लहुंति चिट्ठा वारिज्जइ' इति मा वेदना भविष्यतीति तत उद्धृत्य शल्यं गालयन्ति शोणितं चतुर्थे शल्य इति, तथा रुह्यतां शीघ्रमिति चेष्टा–परि-

स्पन्दनादिलक्षणा वार्यते—निषिध्यते, पञ्चमे शल्ये उद्धृते व्रणोऽस्यास्तीति व्रणी तस्य व्रणिनः रौद्रतरत्वाच्छल्यस्येति गाथार्थः ॥

'रोहेइ वणं छट्ठे' इति रोहयति व्रणं षष्ठे शल्ये उद्धृते सति हितमितभोजी हितं—पथ्यं मितं—स्तोकं अभुञ्जन्वेति, यावच्छल्येन दूषितं 'तत्तियमित्तं'ति तावन्मात्रं छिद्यते, सप्तमे शल्य उद्धृते किं ?—पूतिमांसादीति गाथार्थः ॥ 'तहविय अठाये'ति तथापि च 'अठायमाणे'त्ति अतिष्ठति सति विसर्पतीत्यर्थः, गोनसभक्षितादौ रुष्क(रुम्फ)कैवापि क्रियते, तदङ्गछेदः सहास्थिकः, शेषरक्षार्थमिति गाथार्थः ॥ एवं तावद् द्रव्यव्रणस्तच्चिकित्सा च प्रतिपादिता, अधुना भावव्रणः प्रतिपाद्यते—

'मुलुत्तरगुणरूवस्स' गाहा, इयमन्यकर्तृकी सोपयोगा चेति व्याख्यायते, मूलगुणाः—प्राणातिपातादिविरमणलक्षणाः पिण्डविशुद्ध्यादयस्तु उत्तरगुणाः, एते एव रूपं यस्य स मूलगुणोत्तरगुणरूपस्तस्य, तायिनः, परमश्चासौ चरणपुरुषश्चेति समासः तस्य अपराधाः—गोचरादिगोचराः त एव शल्यानि तेभ्यः प्रभवः—सम्भवो यस्य स तथाविधः भावव्रणो भवति ज्ञातव्य इति गाथार्थः ॥ साम्प्रतमस्यानेकभेदभिन्नस्य भावव्रणस्य विचित्रप्रायश्चित्तभैषजेन चिकित्सा प्रतिपाद्यते, तत्र—

'भिक्खायरियाइ' भिक्षाचर्यादिः शुध्यत्यतिचारः कश्चिद्विकटनयैव—आलोचनयैवेत्यर्थः, आदिशब्दाद् विचारभूम्यादिगमनजो गृह्यते, इह चातिचार एव व्रणः २, एवं सर्वत्र योज्यं, 'बितिओ'त्ति द्वितीयो व्रणः अप्रत्युपेक्षिते खेलविवेकादौ हा असमितोऽस्मीति सहसा अगुप्तो वा मिथ्यादुष्कृतमिति विचिकित्सेत्ययं गाथार्थः ॥ 'शब्दादिषु इष्टानिष्टेषु रागं द्वेषं वा मनसा(मनाक) गतः अत्र 'तइओ' तृतीयो व्रणः मिश्रभैषज्यचिकित्स्यः, आलोचनाप्रतिक्रमणशोध्य इत्यर्थः, ज्ञात्वा अनेषणीयं भक्तादि विगिञ्चना चतुर्थ इति गाथार्थः ॥ 'उस्सग्गेणवि सुज्झइ' कायोत्सर्गेणापि शुद्ध्यति अतिचारः कश्चित्, कश्चित्

तपसा पृथिव्यादिसंघट्टनादिजन्यो निर्विंगतिकादिना पण्मासान्तेन, तेनाप्यशुद्ध्यमानस्तथाभूतं गुरुतरं छेदविशेषा विशोधयन्तीति गाथार्थः ॥ १४१९–१४२७ ॥ एवं सप्तप्रकारभावव्रणचिकित्सापि प्रदर्शिता, मूलादीनि तु विषयनिरूपणद्वारेण स्वस्थानादवसेयानि, नेह वितन्यन्ते, इत्युक्तमानुषङ्गिकं, प्रस्तुतं प्रस्तुमः—एवमनेनानेकस्वरूपेण—सम्बन्धेनायातस्य कायोत्सर्गाध्ययनस्य चत्वार्यनुयोगद्वाराणि सप्रपञ्चानि वक्तव्यानि, तत्र नामनिष्पन्ने निक्षेपे कायोत्सर्गाध्ययनमिति कायोत्सर्गः अध्ययनं च, तत्र कायोत्सर्गमधिकृत्य द्वारगाथामाह निर्युक्तिकारः—

निक्खेवे १ गट्ठ २ विहाणमग्गणा ३ काल ४ भेयपरिमाणे ५।
असढ ६ सढे ७ विहि ८ दोसा ९ कस्सत्ति १० फलं च ११ दाराइं ॥ १४२८ ॥

'निक्खेवेगट्ठविहाण' निक्खेवेति कायोत्सर्गस्य नामादिलक्षणो निक्षेपः कार्यः 'एगट्ठ'त्ति एकार्थिकानि वक्तव्यानि 'विहाणमग्गण' त्ति विधानं भेदोऽभिधीयते भेदमार्गणा कार्या 'कालभेदपरिमाणे'त्ति कालपरिमाणमभिभवकायोत्सर्गादीनां वक्तव्यं, भेदपरिमाणमुत्सृतादिकायोत्सर्गभेदानां वक्तव्यं यावन्तस्त इति, 'असढसढे'त्ति अशठः शठश्च कायोत्सर्गकर्त्ता वक्तव्यः 'विहि'त्ति कायोत्सर्गकरणविधिर्वाच्यः 'दोस'त्ति कायोत्सर्गदोषा वक्तव्याः 'कस्सत्ति' कस्य कायोत्सर्ग इति वक्तव्यं 'फल'त्ति ऐहिकामुष्मिकभेदं फलं वक्तव्यं 'दाराइं'ति एतावन्ति द्वाराणीति गाथासमासार्थः ॥ १४२८ ॥ व्यासार्थं तु प्रतिद्वारं भाष्यकृदेवाभिधास्यति । तत्र कायस्योत्सर्गः कायोत्सर्ग इति द्विपदं नामेतिकृत्वा कायस्य उत्सर्गस्य च निक्षेपः कार्य इति । तथा चाह भाष्यकारः—

काए उस्सग्गंमि य निक्खेवे हुंति दुन्नि उ विगप्पा । एएसिं दुण्हंपी पत्तेय परूवणं वुच्छं ॥ २२८ ॥ (भा०) ॥

'काए उस्सग्गंमि य' काये कायविषयः उत्सर्गे च–उत्सर्गविषयश्च एवं निक्षेपे–निक्षेपविषयौ भवतः द्वौ एव विकल्पौ–द्वावेव भेदौ, अनयोर्द्वयोरपि कायोत्सर्गविकल्पयोः प्रत्येकं प्ररूपणां वक्ष्य इति गाथार्थः ॥ २२८ ॥

कायस्स उ निक्खेवो बारसओ छक्कओ अ उस्सग्गे । एएसिं तु पयाणं पत्तेय परूवणं वुच्छं ॥ १४२९ ॥
नामं ठवणसरीरे गई निकायत्थिकाय दविए य । मांउय संगह पज्जव भारे तह भावकाए य ॥ १४३० ॥
काओ कस्सइ नामं कीरइ देहोवि वुच्चई काओ । कायमणिओवि वुच्चइ बद्धमवि निकायमाहंसु ॥ १४३१ ॥
अक्खे वराडए वा कट्ठे पुत्थे य चित्तकम्मे य । सब्भावमसब्भावं ठवणाकायं वियाणाहि ॥ १४३२ ॥
लिप्पगहत्थी हत्थित्ति एस सब्भाविया भवे ठवणा । होइ असब्भावे पुण हत्थित्ति निरागिई अक्खो ॥१४३३॥
ओरालियवेउव्वियआहारगतेयकम्मए चेव । एसो पंचविहो खलु सरीरकाओ मुणेयव्वो ॥ १४३४ ॥
चउसुवि गईसु देहो नेरइयाईण जो स गइकाओ । एसो सरीरकाओ विसेसणा होइ गइकाओ ॥ १॥ (प्र०) ॥
जेणुवगहिओ वच्चइ भवंतरं जच्चिरेण कालेण । एसो खलु गइकाओ सतेयगं कम्मगसरीरं ॥ १४३५ ॥
निययमहिओ व काओ जीवनिकाओ निकायकाओ य। अत्थित्तिबहुपएसा तेणं पंचत्थिकाया उ॥ १४३६ ॥
जं तु पुरक्खडभावं दवियं पच्छाकडं व भावाओ । तं होइ दव्वदवियं जह भविओ दव्वदेवाई ॥२२९॥ (भा०)
जइ अत्थिकायभावो अपएसो हुज्ज अत्थिकायाणं । पच्छाकडुव्व तो ते हविज्ज दव्वत्थिकाया व ॥२३०॥ (भा०) ॥

५ कायोत्सर्गाध्ययनं कायनिक्षेपः

तीयमणागयभावं जमत्थिकायाण नत्थि अत्थित्तं। तेन र केवलएसुं नत्थी दव्वत्थिकायत्तं ॥ १४३७ ॥
कामं भवियसुराइसु भावो सो चेव जत्थ वट्टंति। एस्सो न ताव जायइ तेन र ते दव्वदेवुत्ति ॥ १४३८ ॥
दुहओऽणंतररहिया जइ एवं तो भवा अणंतगुणा। एगस्स एगकाले भवा न जुज्जंति उ अणेगा ॥ १४३९ ॥
दुहओऽणंतरभवियं जह चिट्ठइ आउअं तु जं बद्धं। हुज्जियरेसुवि जइ तं दव्वभवा हुज्ज तो तेऽवि ॥ १४४० ॥
संझासु दोसु सूरो अदिस्समाणोऽवि पप्प समईयं। जह ओभासइ खित्तं तहेव एयंपि नायव्वं ॥ १४४१ ॥
माउयपयंति नेयं नवरं अन्नोवि जो पयसमूहो। सो पयकाओ भन्नइ जे एगपए बहू अत्था २३१ ॥ (भा०)॥
संगहकाओऽणेगावि जत्थ एगवयणेण घिप्पंति। जह सालिगामसेणा जाओ वसही (ति) निविट्ठत्ति ॥१४४२॥
पज्जवकाओ पुण हुंति पज्जवा जत्थ पिंडिया बहवे। परमाणुंमिविक्कंमिवि जह वन्नाई अणंतगुणा ॥ १४४३ ॥
एगो काओ दुहा जाओ एगो चिट्ठइ एगो मारिओ। जीवंतो अ मएण मारिओ तं लव माणव! केण हेउणा? ॥१४४४॥
दुग तिग चउरो पंच व भावा बहुआ व जत्थ वट्टंति। सो होइ भावकाओ जीवमजीवे विभासा उ॥ १४४५ ॥
काए सरीर देहे बुंदी य चय उवचए य संघाए। उस्सय समुस्सए वा कलेवरे भत्थ तण पाणू ॥ १४४६ ॥

तत्र 'कायस्स उ निक्खेवो' कायस्य तु निक्षेपः कार्य इति 'बारसउ'त्ति द्वादशप्रकारः। 'छक्कओ य उस्सग्गे' षट्कश्चोत्सर्गविषयः षट्प्रकार इत्यर्थः, पश्चार्द्धं निगदसिद्धं तत्र कायनिक्षेपप्रतिपादनायाह—'नामं ठवणा' नामकायः स्थापनाकायः शरीरकायः गतिकायः निकायकायः अस्तिकायः द्रव्यकायश्च मातृकायः संग्रहकायः पर्यायकायः भार-

काय: तथा भावकायश्चेति गाथासमासार्थ: ॥ व्यासार्थं तु प्रतिद्वारमेव व्याख्यास्याम:, तत्र नामकायप्रतिपादनायाह— 'काओ कस्सवि'त्ति काय: कस्यचित् पदार्थस्य सचेतनाचेतनस्य वा नाम क्रियते स नामकाय:, नामाश्रित्य कायो नामकाय:, तथा देहोऽपि—शरीरसमुच्छ्रयोऽपि उच्यते काय:, तथा काचमणिरपि कायो भण्यते, प्राकृते तु काय: । तथा बद्धमपि किञ्चिल्लेखादि 'निकायमाहंसु'त्ति निकाचितमाख्यातवन्त:, प्राकृतशैल्या निकायेति गाथार्थ:, गतं नामद्वारं, अधुना स्थापनाद्वारं व्याख्यायते—'अक्खे वराडए' अक्षे—चन्दनके वराटके वा—कपर्द्दके वा काष्ठे—कुट्टिमे पुस्ते वा—वस्त्रकृते चित्रकर्मणि वा प्रतीते, किमित्याह—सतो भाव: सद्भाव: तथ्य इत्यर्थ: तमाश्रित्य, तथा असतोभाव: असद्भाव: अतथ्य इत्यर्थ:, तं चाश्रित्य, किं ?—स्थापनाकायं विजानाहीति गाथार्थ ॥ १४३१ ॥ सामान्येन सद्भावासद्भावस्थापनोदाहरणमाह—'लेप्पगहत्थी' यदिह लेप्यकहस्ती हस्तीति स्थापनायां निवेश्यते 'एस सब्भाविया भवे ठवण'त्ति एषा सद्भावस्थापना भवतीति, भवत्यसद्भावे पुनर्हस्तीति निराकृति:—हस्त्याकृतिशून्य एव चतुरङ्गादाविति । तदेवं स्थापनाकायोऽपि भावनीय इति गाथार्थ: ॥ १४३२ ॥ शरीरकायप्रतिपादनायाह—'ओरालियवेउव्विय' उदारै: पुद्गलैर्निर्वृत्तमौदारिकं विविधा क्रिया विक्रिया तस्यां भवं वैक्रियं प्रयोजनार्थिना आह्रियत इत्याहारकं तेजोमयं तैजसं कर्मणा निर्वृत्तं कार्म्मणं, औदारिकं वैक्रियं आहारकं तैजसं कार्मणं चैव एष पञ्चविध: खलु शीर्यन्त इति शरीराणि शरीराण्येव पुद्गलसङ्घातरूपत्वात् काय: शरीरकाय: विज्ञातव्य इति गाथार्थ: ॥ गतिकायप्रतिपादनायाह— 'चउसुवि गइ' इयमप्यन्यकर्तृकी गाथा सोपयोगेति च व्याख्यायते—चतसृष्वपि गतिषु—नारकतिर्यग्नरामरलक्षणासु

५ कायोत्सर्गाध्ययनं कायनिक्षेप:

'देहो'त्ति शरीरसमुच्छ्रयो नारकादीनां यः स गतौ काय इतिकृत्वा गतिकायो भण्यते, अत्रान्तरे आह चोदकः—'एसो सरीरकाउ'त्ति नन्वेष शरीरकाय उक्तः, तथाहि—नौदारिकादिव्यतिरिक्ता नारकतिर्यगादिदेहा इति, आचार्य आह—'विसेसणा होति गतिकाओ'विशेषणाद्—विशेषणसामर्थ्याद् भवति गतिकायः, विशेषणं चात्र गतौ कायो गतिकायः, यथा द्विविधाः संसारिणः—त्रसाः स्थावराश्च, पुनस्त एव स्त्रीपुंनपुंसकविशेषेण भिद्यन्त इत्येवमत्रापीति गाथार्थः॥ अथवा सर्वसत्त्वानामपान्तरालगतौ यः कायः स गतिकायो भण्यते, तथा चाह—'जेणुवगहिओ' येनोपगृहीत—उपकृतो व्रजति—गच्छति भवादन्यो भवः भवान्तरं तत्, एतदुक्तं भवति—मनुष्यादिर्मनुष्यभवात् च्युतः येनाश्रयेणा(श्रितोऽ)पान्तराले देवादिभवं गच्छति स गतिकायो भण्यते, तं कालमानतो दर्शयति—यच्चिरेण 'कालेणं'ति स च यावता कालेन समयादिना व्रजति तावन्तमेव कालमसौ गतिकायो भण्यते एष खलु गतिकायः, स्वरूपेणैव दर्शयन्नाह—'सतेयगं कम्मगसरीरं' कार्मणस्य प्राधान्यात् सह तैजसेन वर्तत इति सतैजसं कार्मणशरीरं गतिकायस्तदाश्रयेणापान्तरालगतौ जीवगतेरिति भावनी(यम)यं गाथार्थः॥ निकायकायः प्रतिपाद्यते तत्र—'नियय'त्ति गाथार्द्धं व्याख्यायते 'निययमहिओ व काओ जीवनिकाय'त्ति नियतो—नित्यः कायो निकायः, नित्यता चास्य त्रिष्वपि कालेषु भावात् अधिको वा कायो निकायः, यथा अधिको दाहो निदाह इति, आधिक्यं चास्य धर्माधर्मास्तिकायापेक्षया स्वभेदापेक्षया वा, तथाहि—एकादयो यावदसङ्ख्येयाः पृथिवीकायिकास्तावत् कायस्त एव स्वजातीयान्यप्रक्षेपापेक्षया निकाय इति, एवमन्येष्वपि विभाषेत्येवं जीवनिकायसामान्येन निकायकायो भण्यते, अथवा जीवनिकायः पृथिव्यादिभेदभिन्नः षड्विधोऽपि निकायो भण्यते तत्समुदायः, एवं च निकायकाय इति, गतं निकायकायद्वारं। अधुनाऽस्तिकायः प्रतिपाद्यते,

तत्रेदं गाथाशकलं 'अत्थित्तिबहुपदेसा तेणं पंचत्थिकाया उ' अस्तीत्ययं त्रिकालवचनो निपातः, अभूवन् भवन्ति भविष्यन्ति चेति भावना, बहुप्रदेशास्तु यतस्तेन पञ्चैवास्तिकायाः तुशब्दस्यावधारणार्थत्वान्न न्यूना नाप्यधिका इति, अनेन च धर्माधर्माकाशानामेकद्रव्यत्वादस्तिकायत्वानुपपत्तिरद्धासमयस्य च ए (अने)कत्वादस्तिकायत्वापत्तिरित्येतत् परिहृतमवगन्तव्यं, ते चामी पञ्च, तद्यथा—धर्मास्तिकायोऽधर्मास्तिकायः आकाशास्तिकायः जीवास्तिकायः पुद्गलास्तिकायश्चेत्यस्तिकाया इति हृदयमयं गाथार्थः ॥ साम्प्रतं द्रव्यकायावसरस्ततस्तत्प्रतिपादनायाह—

'जं तु पुरक्खड'त्ति यद् द्रव्यमिति योगः तुशब्दो विशेषणार्थः किं विशिनष्टि?—जीवपुद्गलद्रव्यं, न धर्म्मास्तिकायादि, ततश्चैतदुक्तं भवति—यद् द्रव्यं—यद् वस्तु पुरस्कृतभावमिति—पुरः—अग्रतः कृतो भावो येनेति समासः, भाविनो भावस्य योग्यमभिमुखमित्यर्थः। 'पच्छाकडं व भावाओ'त्ति वाशब्दस्य व्यवहितः सम्बन्धः, ततश्चैवं प्रयोगः—पश्चात्कृतभावं, वाशब्दो विकल्पवचनः पश्चात् कृतः प्राप्योज्झितो भावः—पर्यायविशेषलक्षणो येन स तथोच्यते, एतदुक्तं भवति—यस्मिन् भावे वर्त्तते द्रव्यं ततो यः पूर्वमासीद् भावः तस्मादपेतं पश्चात्कृतभावमुच्यते, 'तं होति दवदवियं' तदित्थंभूतं द्विप्रकारमपि भाविनो भूतस्य च भावस्य योग्यं 'दवं'ति वस्तु वस्तुवचनो ह्येको द्रव्यशब्दः, किं?—भवति द्रव्यं, भवतिशब्दस्य व्यवहितः सम्बन्धः, इत्थं द्रव्यलक्षणमभिधायाधुनोदाहरणमाह—'जह भविओ दवदेवादि' यथेत्युदाहरणोपन्यासार्थः भव्यो—योग्यः द्रव्यदेवादिरिति, इयमत्र भावना—यो हि पुरुषादिर्मृत्वा देवत्वं प्राप्स्यति बद्धायुष्कः अभिमुखनामगोत्रो वा स योग्यत्वाद् द्रव्यदेवोऽभिधीयते, एवमनुभूतदेवभावोऽपि, आदिशब्दाद् द्रव्यनारकादिग्रहः परमाणुग्रहश्च, तथाहि—असावपि द्व्यणुकादि-

काययोग्यो भवत्येव, ततश्चेत्थंभूतं द्रव्यं कायो भण्यत इति गाथार्थः ॥१४३६ ॥ आह–किमिति तुशब्दविशेषणाज्जीवपुद्गलद्रव्यमङ्गीकृत्य धर्मास्तिकायादीनामिह व्यवच्छेदः कृत इति ?, अत्रोच्यते, तेषां यथोक्तप्रकारद्रव्यलक्षणायोगात्, सर्वदैवास्तिकायत्वलक्षणभावोपेतत्वाद्, आह च भाष्यकारः—'जइ अत्थिकायभावो' यद्यस्तिकायभावः अस्तिकायत्वलक्षणः, 'इय एसो होज्ज अत्थिकायाणं' 'इय' एवं यथा जीवपुद्गलद्रव्ये विशिष्टपर्याय इति एष्यन्–आगामी भवेत्, केषाम् ?–अस्तिकायानां–धर्मास्तिकायादीनामिति, व्याख्यानाद् विशेषप्रतिपत्तिः, तथा पश्चात्कृतो वा यदि भवेत् 'तो ते हविज्ज दव्वत्थिकाय'त्ति ततस्ते भवेयुरिति द्रव्यास्तिकाया इति गाथार्थः यतश्च—'तीयमणागय' अतीतम्–अतिक्रान्तमनागतं भावं यद्–यस्मात् कारणादस्तिकायानां–धर्मास्तिकायादीनां नास्ति–न विद्यते अस्तित्वं–विद्यमानत्वं, कायत्वापेक्षया सदैव योगादिति हृदयं, 'तेण र'त्ति तेन किल केवलं–शुद्धं 'तेसु' धर्मास्तिकायादिषु नास्ति–न विद्यते, किं ?–'दव्वत्थिकाय'त्ति द्रव्यास्तिकायत्वं, सदैव तद्भावयोगादिति गाथार्थः ॥ १४३७ ॥ आह–यद्येवं द्रव्यदेवाद्युदाहरणोक्तमपि द्रव्यं न प्राप्नोति, सदैव सद्भावयोगात्, तथाहि–स एव तस्य भावो यस्मिन् वर्त्तते इति। अत्र गुरुराह—'कामं भवियसुरादि' काममित्यनुमतं यथा 'भवियसुरादिषु' भव्याश्च ते सुरादयश्चेति विग्रहः आदिशब्दात् द्रव्यनारकादिग्रहः तेषु–तद्विपये विचारे भावः स एव यत्र वर्त्तते तदानीं मनुष्यादिभाव इति, किंतु एष्यो–भावी न तावज्जायते तदा, 'तेण र ते दव्वदेव'त्ति तेन ते किल द्रव्यदेवा इति, योग्यत्वाद्, योग्यस्य च द्रव्यत्वात्, न चैतद् धर्मास्तिकायादीनामस्ति, एष्यकालेऽपि तद्भावयुक्तत्वादेवेति गाथार्थः॥१४३८॥ यथोक्तं द्रव्यलक्षणमवगम्य तद्भावेऽतिप्रसङ्गं च मनस्याधा-

याह चोदकः—'दुहओऽणंतररहिया''दुहउ'त्ति वर्त्तमानभावस्थितस्य उभयत एष्यकालेऽतीतकाले च 'अणंतररहिय'त्ति अन-न्तरौ एष्यातीतौ अनन्तरौ च तौ रहितौ च वर्त्तमानभवभावेनेति प्रकरणाद् गम्यते अनन्तररहितौ तावपि 'जइ'त्ति यदि तस्यो-च्यते 'एवं तो भवा अणंतगुण'त्ति एवं सति ततो भवा अनन्तगुणाः, तद्भवद्वयव्यतिरिक्ता वर्त्तमानभवभावेन रहिता एष्या अतिक्रान्ताश्च तेऽप्युच्येरंस्ततश्च तदपेक्षयापि द्रव्यत्वकल्पना स्यात्, अथोच्येत—भवत्वेवमेव का नो हानिरिति ?, उच्यते, एकस्य—पुरुषादेरेककाले—पुरुषादिकाले भवा न युज्यन्ते—न घटन्ते अनेके—बहव इति गाथार्थः ॥१४३९॥ इत्थं चोदकेनोक्ते गुरुराह—'दुहओऽणंतरभवियं''दुहउ'त्ति वर्त्तमानभवे वर्त्तमानस्य उभयतः एष्येऽतीते चानन्तरभविकं,पुरस्कृतपश्चात्कृतभव-सम्बन्धीत्युक्तं भवति,यथा तिष्ठति आयुष्कमेव तुशब्दस्यावधारणार्थत्वात्,न शेषं कर्म विवक्षितं यद् बद्धमयं गाथार्थः॥१४४०॥ पुरस्कृतभवसम्बन्धि त्रिभागावशेषायुष्कः सामान्येन तस्मिन्नेव भवे वर्त्तमानो बध्नाति, पश्चात्कृतसम्बन्धि पुनस्तस्मिन्नेव भवे वेदयति । अतिप्रसङ्गनिवृत्त्यर्थमाह—'होज्जियरेसुवि जइ तं दव्वभवा होज्ज ता तेऽवि' भवेत् इतरेष्वपि—प्रभूतेष्वतीतेषु यद् बद्धमनागतेषु च यद् भोक्ष्यते यदि तस्मिन्नेव भवे वर्त्तमानस्य द्रव्यभवा भवेरंस्ततस्तेऽपि, तदायुष्ककर्मसम्बन्धादिति हृदयं, न चैतदस्ति, तस्मादसच्चोदकवचनमिति गाथार्थः ॥१४४१॥ अस्यैवार्थस्य प्रसाधकं लोकप्रतीतं निदर्शनमभिधातुकाम आह—'संझासु दोसु सूरो' सन्ध्या च सन्ध्या च सन्ध्ये तयोः सन्ध्ययोर्द्वयोः प्रत्यूषप्रदोषप्रतिबद्धयोः सूर्य—आदित्यः अदृश्य-मानोऽपि—अनुपलभ्यमानोऽपि प्रापणीयं—प्राप्यं समतिक्रान्तं—समतीतं च यथाऽवभासते—प्रकाशयति क्षेत्रं, तद्यथा—प्रत्युष-सन्ध्यायां पूर्वविदेहं भरतं च, प्रदोषसन्ध्यायां तु भरतमपरविदेहं च, तथैव—यथा सूर्यः इदमपि प्रक्रान्तं ज्ञातव्यं—विज्ञे-

यमिति, एतदुक्तं भवति—वर्त्तमानभवे स्थितः पुरस्कृतभवं पश्चात्कृतभवं च आयुष्ककर्म सद्द्रव्यतया स्पृशति, प्रकाशेनादित्यवदिति गाथार्थः ॥ १४४२ ॥ अधुना मातृकाकायः प्रतिपाद्यते, [ मातृकेऽपि ] मातृकापदानि 'उप्पण्णेति वे'त्यादीनि तत्समूहो मातृकाकायः, अन्योऽपि तथाविधपदसमूहो वह्वर्थ इति, तथाचाह भाष्यकारः—'माउयपयं'ति मातृकापदमिति 'णेमं' 'णेमं'ति चिह्नं, नवरमन्योऽपि यः पदसमूहः—पदसङ्घातः स पदकायो भण्यते मातृकापदकाय इति भावना, विशिष्टः पदसमूहः, किं०?—'जे एगपए वहू अत्था' यस्मिन्नेकपदे वहवः अर्थास्तेषां पदानां यः समूह इति, पाठान्तरं वा 'जस्सेकपदे वहू अत्थ'त्ति गाथार्थः ॥ १४४३ ॥ संग्रहकायप्रतिपादनायाह—'संगहकाओ णेगा' संग्रहणं संग्रहः स एव कायः, स किंविशिष्ट ? इत्याह—'णेगावि जत्थ एगवयणेण घेप्पंति'त्ति प्रभूता अपि यत्रैकवचनेन दिश्यन्तो गृह्यन्ते, यथा शालिर्ग्रामः सेना जातो वसति निविष्टत्ति, यथासङ्ख्यं, प्रभूतेष्वपि स्तम्बेषु सत्सु जातः शालिरिति व्यपदेशः, प्रभूतेष्वपि पुरुषविलयादिषु वसति ग्रामः, प्रभूतेष्वपि हस्त्यादिषु निविष्टा सेनेति, अयं शाल्यादिरर्थः सङ्ग्रहकायो भण्यते इति गाथार्थः ॥ १४४४ ॥ साम्प्रतं पर्यायकायं दर्शयति—

'पज्जवकाओ' पर्यायकायः पुनर्भवति, पर्याया—वस्तुधर्मा यत्र—परमाण्वादौ पिण्डिता वहवः, तथा च परमाणावपि कस्मिंश्चित् सांव्यवहारिके यथा वर्णगन्धरसस्पर्शा अनन्तगुणाः अन्यापेक्षया, तथा चोक्तम्—"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसवर्णगन्धो द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥" स चैकस्तिक्तादिरसस्तदन्यापेक्षया तिक्ततरतिक्ततमादिभेदादानन्त्यं प्रतिपद्यते, पञ्चवर्णादिष्वपि विभाषेत्ययं गाथार्थः ॥ अधुना भारकायस्तत्र गाथा—

एक्को काओ दुहा जाओ' एकः कायः—क्षीरकायः द्विधा जातः, घटद्वये न्यासात्, तत्र एकस्तिष्ठति, एको मारितः, जीवन् मृतेन मारितस्तदेतल्लवेति—ब्रूहि हे मानव ! केन कारणेन ?, कथानकं यथा प्रतिक्रमणाध्ययने परिहरणायामिति गाथार्थः, भारकायश्चात्र क्षीरभृतकुम्भद्वयोपेता कापोती भण्यते, भारश्चासौ कायश्च भारकायः, अण्णे भणंति—भारकायः कापोत्येवोच्यते इति ॥ १४४५ ॥ भावकायप्रतिपादनायाह—

'दुगतिगचउरो' द्वौ त्रयश्चत्वारः पञ्च वा भावा—औदयिकादयः प्रभूता वाऽन्येऽपि 'यत्र' सचेतनाचेतने वस्तुनि विद्यन्ते स भवति भावकायः, भावानां कायो भावकाय इति, 'जीवमजीवे विभासा उ' जीवाजीवयोर्विभाषा खल्वागमानुसारेण कार्येति गाथार्थः ॥ १४४६ ॥ मूलद्वारगाथायां कायमधिकृत्य गतं निक्षेपद्वारम्, अधुनैकार्थिकान्युच्यन्ते, तत्र गाथा—कायः शरीरं देहः बोन्दी चय उपचयश्च सङ्घात उच्छ्रयः समुच्छ्रयश्च कडेवरं भस्त्रा तनुः पाणुरिति गाथार्थः ॥ २३१ ॥ मूलद्वारगाथायां कायमधिकृत्योक्तान्येकार्थिकानि, अधुना उत्सर्गमधिकृत्य निक्षेपः एकार्थिकानि चोच्यन्ते, तत्र निक्षेपमधिकृत्याह—

नामंठवणादविए खित्ते काले तहेव भावे य। एसो उस्सग्गस्स उ निक्खेवो छव्विहो होइ ॥ १४४७ ॥
दव्वुज्झणा उ जं जेण जत्थ अवकिरइ दव्वभूओ वा। जं जत्थ वावि खित्ते जं जच्चिर जंमि वा काले ॥ १४४८ ॥
भावे पसत्थमियरं जेण व भावेण अवकिरइ जं तु। अस्संजमं पसत्थे अपसत्थे संजमं चयइ ॥ १४४९ ॥
खरफरुसाइसचेयणमचेयणं दुरभिगंधविरसाई। दवियमवि चयइ दोसेण जेण भावुज्झणा सा उ ॥ १४५० ॥

उस्सग्ग विउस्सरणुज्झणा य अवगिरण छड्डुण विवेगो। वज्जण चयणुम्मुअणा परिसाडण साडणा चेव ॥१४५१॥
उस्सगे निक्खेवो चउक्कओ छक्कओ अ कायव्वो । निक्खेवं काऊणं परूवणा तस्स कायव्वा ॥ १ ॥

सो उस्सग्गो दुविहो चिट्ठाए अभिभवे य नायव्वो ।
भिक्खायरियाइ पढमो उवसग्गभिजुंजणे विइओ ॥ १४५२ ॥

'नामंठवणादविए' अर्थमधिकृत्य निगदसिद्धा, विशेषार्थं तु प्रतिद्वारं प्रपञ्चेन वक्ष्यामः, तत्रापि नामस्थापने गतार्थे, द्रव्योत्सर्गाभिधित्सया पुनराह—'दव्वुज्झणा उ जं जेण' द्रव्योज्झना तु द्रव्योत्सर्गः स्वयमेव 'जं'न्ति यद् द्रव्यमनेषणीयं 'अवकिरति'त्ति योगः अवकिरति—उत्सृजति 'जेणे'ति येन करणभूतेन पात्रादिनोत्सृजति,'जत्थ'त्ति यत्र द्रव्ये उत्सृजति द्रव्यभूतो वा—अनुपयुक्तो वा उत्सृजति एष द्रव्योत्सर्गोऽभिधीयते । क्षेत्रोत्सर्ग उच्यते 'जं जत्थ वावि खेत्ते'त्ति यत्क्षेत्रं दक्षिणदेशाद्युत्सृजति यत्र वाऽपि क्षेत्रे उत्सर्गो व्यावर्ण्यते एष क्षेत्रोत्सर्गः, कालोत्सर्ग उच्यते—'जं जच्चिर जम्मि वा काले'त्ति यत्कालमुत्सृजति यथा भोजनमधिकृत्य रजनीं साधवः 'जच्चिरं'ति यावन्तं कालमुत्सर्गः, यस्मिन् वा काले उत्सर्गो व्यावर्ण्यते एष कालोत्सर्ग इति गाथार्थः ॥ १४४८ ॥ भावोत्सर्गप्रतिपादनायाह—

'भावे-पसत्थमियरं' 'भावे'त्ति द्वारपरामर्शः, भावोत्सर्गो द्विधा—प्रशस्तं—शोभनं वस्त्वधिकृत्य 'इतरं'ति अप्रशस्तमशोभनं च, तथा येन भावेनोत्सर्जनीयवस्तुगतेन खरादिना 'अवकिरति जन्तु' उत्सृजति यत् तत्र भावेनोत्सर्ग इति तृतीयासमासः, तत्र असंयमं प्रशस्ते भावोत्सर्गे त्यजति, अप्रशस्ते तु संयमं त्यजतीति गाथार्थः ॥ १४४९ ॥ यदुक्तं येन वा

भावेनोत्सृजति तत्प्रकटयन्नाह—'खरफरुसाइसचेयण' खरपरुषादिसचेतनं खरं—कठिनं परुषं—दुभाषणोपेतं अचेतनं दुरभिगन्धविरसादि यद् द्रव्यमपि त्यजति दोषेण येन खरादिनैव 'भावुज्झणा सा उ' भावेनोत्सर्ग इति गाथार्थः ॥ १४५० ॥ गतं मूलद्वारगाथायामुत्सर्गमधिकृत्य निक्षेपद्वारम्, अधुनैकार्थिकान्युच्यन्ते, तत्रेयं गाथा— 'उस्सग्ग विउस्सरणु' उत्सर्गः व्युत्सर्जना उज्झना च अवकिरणं छर्दनं विवेकः वर्जनं त्यजनं उन्मोचना परिशातना शातना चैवेति गाथार्थः ॥ १४५१ ॥ मूलद्वारगाथायामुक्तान्युत्सर्गैकार्थिकानि, ततश्च कायोत्सर्ग इति स्थितं, कायस्योत्सर्गः कायोत्सर्गः । इदानीं मूलद्वारगाथागतविधानमार्गणाद्वारावयवार्थव्याचिख्यासयाऽऽह—'सो उस्सग्गो दुविहो' स कायोत्सर्गो द्विविधः, 'चेट्ठाए अभिभवे य नायवो' चेष्टायामभिभवे च ज्ञातव्यः, तत्र 'भिक्खायरियादि पढमो' भिक्षाचर्यादौ विषये प्रथमः कायोत्सर्गः, तथाहि—चेष्टाविषय एवासौ भवति, 'उवसग्गऽभिजुंजणे बिइओ'त्ति उपसर्गा—दिव्यादयस्तैरभियोजनमुपसर्गाभियोजनं तस्मिन्नुपसर्गाभियोजने द्वितीयः—अभिभवकायोत्सर्ग इत्यर्थः, दिव्याद्यभिभूत एव महामुनिस्तदैवायं करोतीति हृदयम्, अथवोपसर्गाणामभियोजनं—सोढव्या मयोपसर्गास्तद्भयं न कार्यमित्येवंभूतं तस्मिन् द्वितीय इत्यर्थः । इत्थं प्रतिपादिते सत्याह चोदकः, कायोत्सर्गे हि साधुना नोपसर्गाभियोजनं कार्यं—

इयरहवि ता न जुज्जइ अभिओगो किं पुणाइ उस्सग्गे ? । नणु गव्वेण परपुरं अभिरुज्झइ एवमेयंति(पि)॥१४५३॥
मोहपयडीभयं अभिभवित्तु जो कुणइ काउस्सग्गं तु। भयकारणे य तिविहे णाभिभवो नेव पडिसेहो ॥१४५४॥
आगारेऊण परं रणिव्व जइ सो करिज्ज उस्सग्गं। जुंजिज्ज अभिभवो तो तदभावे अभिभवो कस्स ? ॥ १४५५॥

अट्ठविहंपि य कम्मं अरिभूयं तेण तज्जयट्ठाए। अब्भुट्ठिया उ तवसंजमंमि कुव्वंति निग्गंथा ॥ १४५६ ॥
तस्स कसाया चत्तारि नायगा कम्मसत्तुसिन्नस्स। काउस्सग्गमभग्गं करंति तो तज्जयट्ठाए ॥ १४५७ ॥
संवच्छरमुक्कोसं अंतमुहुत्तं च (त) अभिभवुस्सग्गे। चिट्ठाउस्सग्गस्स उ कालपमाणं उवरि वुच्छं ॥ १४५८ ॥

'इयरहवि ता ण' इतरथापि–सामान्यकार्येऽपि तावत् क्वचिदनवस्थानादौ न युज्यतेऽभियोगः कस्यचित् कर्त्तुं, 'किं पुणाइ उस्सग्गे' किं पुनः कायोत्सर्गे कर्मक्षयाय क्रियमाणे?, स हि सुतरां गर्वरहितेन कार्यः, अभियोगश्च गर्वो वर्त्तते, नन्वित्यसूयायां गर्वेण–अभियोगेन परपुरं–शत्रुनगरमभिरुध्यते, यथा तद्गर्वकरणमसाधु एवमेतदपि कायोत्सर्गाभियोजनमशोभनमेवेति गाथार्थः ॥ एवं चोदकेनोक्ते सत्याहाचार्यः—'मोहपयडीभयं' मोहप्रकृतौ भयं २ अथवा मोहप्रकृतिश्चासौ भयं चेति समासः, मोहनीयकर्मभेद इत्यर्थः, तथाहि–हास्यरत्यरतिभयशोकजुगुप्साषट्कं मोहनीयभेदतया प्रतीतं, तत् अभिभवतु अभिभूय यः कश्चित् करोति कायोत्सर्गं तुशब्दो विशेषणार्थः नान्यं कञ्चन बाह्यमभिभूयेति, 'भयकारणे तु तिविहे' बाह्ये भयकारणे त्रिविधे द्रव्यमनुष्यतिर्यग्भेदभिन्ने सति तस्य नाभिभवः, अथेत्थंभूतोऽप्यभियोग इत्यत्रोच्यते–'नेव पडिसेहो' इत्थंभूतस्याभियोगस्य नैव प्रतिषेध इति गाथार्थः ॥१४५४॥ किन्तु– 'आगारेऊण परं' 'आगारेऊण'त्ति आकार्य रे रे क्व यास्यसि इदानीं एवं परम्–अन्यं कञ्चन 'रणेव' संग्रामे इव यदि स कुर्यात् कायोत्सर्गं युज्येत अभिभवः, तदभावे–पराभिभवाभावेऽभिभवः कस्य?, न कस्यचिदिति गाथार्थः ॥ १४५५ ॥ तत्रैतत् स्यात्–भयमपि कर्मांशो वर्त्तते, कर्मणोऽपि चाभिभवः खल्वेकान्तेन नैव कार्य इत्येतच्चायुक्तम्, यतः—

‘अठ्ठविहंपि य कम्मं’ अष्टविधं–अष्टप्रकारमपि, चशब्दो विशेषणार्थः तस्य च व्यवहितः सम्बन्धः, अठ्ठविहंपि य कम्मं अरिभूतं च, ततश्चायमर्थः–यस्मात् ज्ञानावरणीयादि अरिभूतं–शत्रुभूतं वर्त्तते भवनिबन्धनत्वाच्चशब्दादचेतनं च तेन कारणेन तज्जयार्थं–कर्मजयनिमित्तं ‘अब्भुठ्ठिया उ’त्ति आभिमुख्येन उत्थिता एव एकान्तगर्वविकला अपि तपो द्वादशप्रकारं संयमं च सप्तदशप्रकारं कुर्वन्ति निर्ग्रन्थाः–साधव इत्यतः कर्मक्षयार्थमेव तदभिभवनाय कायोत्सर्गः कार्य एवेति गाथार्थः ॥ १४५६ ॥ तथा चाह—तस्स कसाया इति ‘तस्य’ प्रक्रान्तशत्रुसैन्यस्य कषायाः प्राग्निरूपितशब्दार्थाश्चत्वारः क्रोधादयो नायकाः–प्रधानाः, ‘काउस्सग्गमभग्गं करेंति तो तज्जयठ्ठाए’त्ति काउस्सग्गं–अभिभवकायोत्सर्गं अभग्नं–अपीडितं कुर्वन्ति साधवस्ततस्तज्जयार्थं–कर्मजयनिमित्तं तपःसंयमवदिति गाथार्थः ॥ १४५७ ॥ गतं मूलद्वारगाथायां विधानमार्गणाद्वारम्, अधुना कालपरिमाणद्वारावसरः, तत्रेयं गाथा—संवत्सरमुत्कृष्टं कालप्रमाणं, तथा च बाहुबलिना संवत्सरं कायोत्सर्गः कृत इति, ‘अन्तोमुहुत्तं च’ अभिभवकायोत्सर्गे अन्त्यं–जघन्यं कालपरिमाणं, चेष्टाकायोत्सर्गस्य तु कालपरिमाणमनेकभेदभिन्नं ‘उवरि वोच्छं’ति उपरिष्टाद् वक्ष्याम इति गाथार्थः ॥ १४५८ ॥ उक्तं तावदोघतः कालपरिमाणद्वारं, अधुना भेदपरिमाणद्वारमधिकृत्याह—

उसिउस्सिओ अ तह उस्सिओ अ उस्सिय निसन्नओ चेव। निसनुस्सिओ निसन्नो निस्सन्नगनिसन्नओ चेव १४५९॥
निवणुस्सिओ निवन्नो निवन्ननिवन्नगो अ नायव्वो। एएसिं तु पयाणं पत्तेय परूवणं वुच्छं ॥ १४६० ॥
उस्सिअनिसन्नग निवन्नगे य इक्किक्कगंमि उ पयंमि। दव्वेण य भावेण य चउक्कभयणा उ कायव्वा ॥ १४६१ ॥

कायोत्सर्ग-निक्षेपः

'उस्सिउस्सिओ' उच्छ्रितोच्छ्रितः उत्सृतश्च उत्सृतनिषण्णश्चैव निषण्णोत्सृतः. निषण्णो निषण्णनिषण्णश्चैवेति गाथार्थः ॥ 'निसणुस्सिओ निवन्नो' निषण्णोत्सृतः निष(व)ण्णः निषण्ण निषण्णश्च ज्ञातव्यः, एतेषां तु पदानां प्रत्येकं प्ररूपणां वक्ष्य इति गाथासमासार्थः, अवयवार्थं तु उपरिष्टाद्वक्ष्यामः 'उस्सिय' उत्सृतो निषण्णः निषण्णनिषण्णेषु एकैकस्मिन्नेव पदे 'दव्वेण य भावेण य चउक्कभयणा उ कायव्वा' द्रव्यत उत्सृत ऊर्द्ध्वस्थानस्थः भावत उत्सृत धर्मध्यानशुक्लध्यायी, अन्यस्तु द्रव्यत उत्सृतः ऊर्द्ध्वस्थानस्थः न भावतः उत्सृतः ध्यानचतुष्टयरहितः कृष्णादिलेश्यागतपरिणाम इत्यर्थः, अन्यस्तु न द्रव्यत उत्सृतः नोर्द्ध्वस्थानस्थः भावत उत्सृतः, शुक्लध्यायी अन्यस्तु न द्रव्यतो नापि भावत इत्ययं प्रतीतार्थ एवमन्यपदचतुर्भङ्गिका अपि वक्तव्याः ॥ १४५९–१४६१ ॥ इत्थं सामान्येन भेदपरिमाणे दर्शिते सत्याह चोदकः, ननु कार्योत्सर्गकरणे कः पुनर्गुण इत्याहाचार्यः—

देहमइजड्डसुद्धी सुहदुक्खतितिक्खया अणुप्पेहा । झायइ य सुहं झाणं एयग्गो काउसग्गंमि ॥ १४६२ ॥

अंतोमुहुत्तकालं चित्तस्सेगग्गया हवइ झाणं । तं पुण अट्टं रुद्दं धम्मं सुक्कं च नायव्वं ॥ १४६३ ॥

तत्थ य दो आइल्ला झाणा संसारवड्डणा भणिया ।
दुन्नि य विमुक्खहेऊ तेसिऽहिगारो न इयरेसिं ॥ १४६४ ॥

संवरियासवदारा अव्वाबाहे अकंटए देसे । काऊण थिरं ठाणं ठिओ निसन्नो निवन्नो वा ॥ १४६५ ॥

चेयणमचेयणं वा वत्थुं अवलंबिउं घणं मणसा । झायइ सुअमत्थं वा दवियं तप्पज्जए वावि ॥ १४६६ ॥

तत्थ उ भणिज्ज कोई झाणं जो माणसो परीणामो । तं न हवइ जिणदिट्ठं झाणं तिविहेवि जोगंमि ॥ १४६७ ॥

वायाईधाऊणं जो जाहे होइ उक्कडो धाऊ। कुविओत्ति सो पवुच्चइ न य इअरे तत्थ दो नत्थि ॥ १४६८ ॥
एमेव य जोगाणं तिण्हवि जो जाहि उक्कडो जोगो। तस्स तहिं निद्देसो इअरे तत्थिक्क दो व नवा ॥ १४६९ ॥
काएविय अज्झप्पं वायाइ मणस्स चेव जह होइ। कायवयमणोजुत्तं तिविहं अज्झप्पमाहंसु ॥ १४७० ॥
जइ एगग्गं चित्तं धारयओ वा निरुंभओ वावि। झाणं होइ नणु तहा इअरेसुवि दोसु एमेव ॥ १४७१ ॥
देसियदंसियमग्गो वच्चंतो नरवई लहइ सद्दं। रायत्ति एस वच्चइ सेसा अणुगामिणो तस्स ॥ १४७२ ॥
पढमिल्लुअस्स उदए कोहस्सिअरे वि तिन्नि तत्थत्थि। नय ते ण संति तहियं न य पाहन्नं तहेयंमि ॥ १४७३ ॥
मा मे एजउ काउत्ति अचलओ काइअं हवइ झाणं। एमेव य माणसियं निरुद्धमणसो हवइ झाणं ॥ १४७४ ॥
जह कायमणनिरोहे झाणं वायाइ जुज्जइ न एवं। तम्हा वई उ झाणं न होइ को वा विसेसुत्थ ? ॥ १४७५ ॥
मा मे चलउत्ति तणू जह तं झाणं निरेइणो होइ। अजयाभासविवज्जस्स वाइअं झाणमेवं तु ॥ १४७६ ॥
एवंविहा गिरा मे वत्तव्वा एरिसा न वत्तव्वा। इय वेयालियवक्कस्स भासओ वाइयं झाणं ॥ १४७७ ॥
मणसा वावारंतो कायं वायं च तप्परीणामो। भंगिअसुअं गुणंतो वट्टइ तिविहेवि झाणंमि ॥ १४७८ ॥

'देहमतिजड्डसुद्धी'ति देहजाड्यशुद्धिः—श्लेष्मादिप्रहाणतः मतिजाड्यशुद्धिः तथावस्थितस्योपयोगविशेषतः, 'सुहदुक्खतितिक्खय'त्ति सुखदुःखतितिक्षा सुखदुःखातिसहनमित्यर्थः, 'अणुप्पेहा' अनित्यत्वाद्यनुप्रेक्षा च तथाऽवस्थितस्य भवति, तथा 'झायइ य सुहं झाणं' ध्यायति च शुभं ध्यानं धर्मशुक्ललक्षणं, एकाग्रः—एकचित्तः शेषव्यापाराभावात् कायोत्सर्ग इति,

इहानुप्रेक्षा ध्यानादौ ध्यानोपरमे भवतीतिकृत्वा भेदेनोपन्यस्तेति गाथार्थः ॥ १४६२ ॥ इह ध्यायति च शुभं ध्यानमित्युक्तं, तत्र किमिदं ध्यानमित्यत आह—'अंतोमुहुत्तकालं' द्विघटिको मुहूर्त्तः भिन्नो मुहूर्त्तोऽन्तर्मुहूर्त इत्युच्यते, अन्तर्मुहूर्त्तकालं चित्तस्यैकाग्रता भवति ध्यानं 'एकाग्रचित्तनिरोधो ध्यान'(तत्त्वार्थे अ० सूत्र ९२७) मितिकृत्वा, तत् पुनरार्त्तं रौद्रं धर्मं शुक्लं च ज्ञातव्यमित्येषां च स्वरूपं यथा प्रतिक्रमणाध्ययने प्रतिपादितं तथैव द्रष्टव्यमिति गाथार्थः ॥१४६२–१४६३॥ 'तत्थ उ दो आइल्ला' गाथा निगदसिद्धा । साम्प्रतं यथाभूतो यत्र यथावस्थितो यच्च ध्यायति तदेतदभिधित्सुराह— 'संवरियासवदार'त्ति संवृतानि—स्थगितानि आश्रवद्वाराणि—प्राणातिपातादीनि येन स तथाविधः, क्व ध्यायति ?— 'अव्वाबाधे अकंटए देसे'त्ति' अव्याबाधे—गान्धर्वादिलक्षणभावव्याबाधाविकले अकण्टके—पाषाणकण्टकादिद्रव्यकण्टकविकले 'देशे' भूभागे, कथं व्यवस्थितो ध्यायति ?—'काऊण थिरं ठाणं ठितो निसण्णो निवन्नो वा' कृत्वा स्थिरं—निष्कम्पं [अव]स्थानं—अवस्थितिविशेषलक्षणं स्थितो निषण्णो निवण्णो वेति प्रकटार्थं, चेतनं—पुरुषादि अचेतनं—प्रतिमादि वस्तु अवलम्ब्य—विषयीकृत्वा(त्य) घनं—दृढं मनसा—अन्तःकरणेन यत् ध्यायति, किं ? तदाह—'झायति सुयमत्थं वा' ध्यायतीति सम्बध्यते, सूत्रं—गणधरादिभिर्बद्धं अर्थं वा—तद्गोचरं, किंभूतमर्थमत आह—'दवियं तप्पज्जवे वावि' द्रव्यं तत्पर्यायान् वा, इह च यदा सूत्रं ध्यायति तदा तदेव स्वगतधर्मैरालोचयति, न त्वर्थं, यदा त्वर्थं न तदा सूत्रमिति गाथार्थः ॥ १४६४–१४६६ ॥ अधुना प्रागुक्तचोद्यपरिहारायाह—तत्र भणेत्—ब्रूयात् कश्चित्, किं ब्रूयादित्याह—'झाणं जो माणसो परीणामो' ध्यानं यो मानसः परीणामः, 'ध्यै चिन्ताया'मित्यस्य चिन्तार्थत्वात्, इत्थमाशङ्क्योत्तरमाह—'तं

न भवति जिणदिट्ठं झाणं तिविहेवि जोगंमि' तदेतन्न भवति यत् परेणाभ्यधायि, कुतः ?, यस्माज्जिनैर्दृष्टं ध्यानं त्रिविधेऽपि योगे–मनोवाक्कायव्यापारलक्षण इति गाथार्थः ॥ १४६७ ॥ किं तु ?, कस्यचित् कदाचित् प्राधान्यमाश्रित्य भेदेन व्यपदेशः प्रवर्त्तते, तथा चामुमेव न्यायं प्रदर्शयन्नाह—'वायाईधाऊणं' वातादिधातूनां आदिशब्दात् पित्तश्लेष्मणोर्यो यदा भवत्युत्कटः–प्रचुरो धातुः कुपित इति स प्रोच्यते उत्कटत्वेन प्राधान्यात्, 'न य इतरे तत्थ दो नत्थि'त्ति न चेतरौ तत्र द्वौ न स्त इति गाथार्थः ॥ १४६८ ॥ 'एमेव य जोगाणं' एवमेव च योगानां–मनोवाक्कायानां त्रयाणामपि यो यदा उत्कटो योगस्तस्य योगस्य तदा–तस्मिन् काले निर्देशः, 'इयरे तत्थेक दो व णवा' इतरस्तत्रैको भवति द्वौ वा भवतः, न वा भवत्येव, इयमत्र भावना–केवलिनः वाचि उत्कटायां कायोऽप्यस्ति असमदादीनां तु मनः कायो न वेति, केवलिनः शैलेश्यवस्थायां काययोगनिरोधकाले स एव केवल इति, अनेन च शुभयोगोत्कटत्वं तथा निरोधश्च द्वयमिति(मपि) ध्यानमित्यावेदित[व्य]मिति गाथार्थः ॥१४६९॥इत्थं य उत्कटो योगः तस्यैवेतरसद्भावेऽपि प्राधान्यात् सामान्येन ध्यान[त्व]मभिधायाधुना विशेषेण त्रिप्रकारमप्युपदर्शयन्नाह—'काएवि य' कायेऽपि च अध्यात्मं अधि आत्मनि वर्त्तत इति अध्यात्मं ध्यानमित्यर्थः, एकाग्रतया एजनादिनिरोधात्, 'वायाए'त्ति तथा वाचि अध्यात्मं एकाग्रतयैवायतभाषानिरोधात्, 'मणस्स चेव जह होइ'त्ति मनसश्चैव यथा भवत्यध्यात्मं एवं कायेऽपि वाचि चेत्यर्थः, एवं भेदेनाभिधायाधुनैकादावपि दर्शयन्नाह–कायवाङ्मनोयुक्तं त्रिविधं अध्यात्ममाख्यातवन्त-

॥७७४॥

स्तीर्थकरा गणधराश्च, वक्ष्यते च–'भंगिअसुतं गुणंतो वट्टति तिविहेवि झाणंमि'त्ति गाथार्थः ॥ १४७० ॥ पराभ्युपगतध्या-
नसाम्यप्रदर्शनेनानभ्युपगतयोरपि ध्यानतां प्रदर्शयन्नाह—'जइ एगग्गं' गाहा, हे आयुष्मन् ! यद्यप्येकाग्रं चित्तं क्वचिद्
वस्तुनि धारयतो वा स्थिरतया देहव्यापिविषवत् डंक इति 'निरुंभओ वावि'त्ति निरुन्धानस्य वा तदपि योगनिरोध
इव केवलिनः किमित्याह–ध्यानं भवति मानसं यथा ननु तथा इतरयोरपि द्वयोर्वाक्काययोः, एवमेव–एकाग्रधारणा-
दिनैव प्रकारेण तल्लक्षणयोगाद् ध्यानं भवतीति गाथार्थः ॥ १४७१ ॥ इत्थं त्रिविधे ध्याने सति यस्य यदोत्कटत्वं
तस्य तदेतरसद्भावेऽपि प्राधान्याद् व्यपदेश इति, लोकलोकोत्तरानुगतश्चायं न्यायो वर्त्तते, तथा चाह—'देसिय'
गाहा, देशयतीति देशिकः–अग्रयायी देशिकेन दर्शितो मार्गः–पन्था यस्य स तथोच्यते व्रजन्–गच्छन् नरपती–राजा
लभते शब्दं–प्राप्नोति शब्दं, किंभूतमित्याह–'रायत्ति एस वच्चति' राजा एष व्रजतीति, न चासौ केवलः, प्रभूतलोकानुगत-
त्वात्, न च तदन्यव्यपदेशः, तेषामप्राधान्यात्, तथा चाह–'सेसा अणुगामिणो तस्स'त्ति शेषाः–अमात्यादयः अनुगामिनः-
अनुयातारस्तस्य–राज्ञ इत्यतः प्राधान्याद्राजेतिव्यपदेश इति गाथार्थः ॥१४७२॥ अयं लोकानुगतो न्यायः, अयं पुनर्लोकोत्तरा-
नुगतः–'पढमिल्लु' प्रथम एव प्रथमिल्लुकः, प्राथम्यं चास्य सम्यग्दर्शनाख्यप्रथमगुणघातित्वात् तस्य प्रथमिल्लुकस्य उदये, कस्य?,
क्रोधस्य अनन्तानुबन्धिन इत्यर्थः 'इतरेवि तिण्णि तत्थत्थि' शेषा अपि त्रयः–अप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनादय-
स्तत्र–जीवद्रव्ये सन्ति, न चातीताद्यपेक्षया तत्सद्भावः प्रतिपाद्यते, यत आह—'न य ते ण संति तहियं' न च ते–अप्र-
त्याख्यानप्रत्याख्यानावरणादयो न सन्ति, किंतु सन्त्येव, न च प्राधान्यं तेषामतो न व्यपदेशः, आद्यस्यैव व्यपदेशः,-

'तहेयंपि' तथा एतदपि अधिकृतं वेदितव्यमिति गाथार्थः ॥ १४७३ ॥ अधुना स्वरूपतः कायिकं मानसं च ध्यानमावेदयन्नाह—'मा मे एजउ काउ'त्ति एजतु–कम्पतां 'कायो' देह इति, एवं अचलत एकाग्रतया स्थितस्येति भावना, किं ?, कायेन निर्वृत्तं कायिकं भवति ध्यानं, एवमेव मानसं निरुद्धमनसो भवति ध्यानमिति गाथार्थः ॥ १४७४ ॥ इत्थं प्रतिपादिते सत्याह चोदकः—'जह कायमणनिरोहे' ननु यथा कायमनसोर्निरोधे ध्यानं प्रतिपादितं भवता 'वायाइ जुज्जइ न एवं'ति वाचि युज्यते नैवेति, कदाचिदप्रवृत्त्यैव निरोधाभावात्, तथाहि–न कायमनसी यथा सदा प्रवृत्ते तथा वागिति 'तम्हा वती उ झाणं न होइ' तस्माद् वाग् ध्यानं न भवत्येव, तुशब्दस्यैवकारार्थत्वात् व्यवहितप्रयोगाच्च, 'को वा विसेसोऽत्थ'त्ति को वा विशेषोऽत्र ? येनेत्थमपि व्यवस्थिते सति वाग् ध्यानं भवतीति गाथार्थः ॥ १४७५ ॥ इत्थं चोदकेनोक्ते सत्याह गुरुः—'मा मे चलउ'त्ति मा मे चलतु–कम्पतामितिशब्दस्य व्यवहितः प्रयोगः तं च दर्शयिष्यामः, तनुः–शरीरमिति–एवं चलनक्रियानिरोधेन यथा तद् ध्यानं कायिकं 'निरेइणो' निरेजिनो–निष्प्रकम्पस्य भवति 'अजताभासविवज्जिस्स वाइयं झाणमेवं तु' अयताभाषाविवर्जिनो–दुष्टवाक्परिहर्तुरित्यर्थः, वाचिकं ध्यानमेव यथा कायिकं, तुशब्दोऽवधारणार्थ इति गाथार्थः ॥ १४७६ ॥ साम्प्रतं स्वरूपत एव वाचिकध्यानमुपदर्शयन्नाह—'एवंविहा गिरा' एवंविधेति निरवद्या गीः–वागुच्यते 'मे'त्ति मया वक्तव्या 'एरिस'त्ति ईदृशी सावद्या न वक्तव्या, एवमेकाग्रतया विचारितवाक्यस्य सतो भाषमाणस्य वाचिकं ध्यानमिति गाथार्थः ॥ १४७७ ॥ एवं तावद् व्यवहारतो भेदेन त्रिविधमपि ध्यानमावेदितं, अधुनैकदैव एकत्रैव त्रिविधमपि दर्श्यते—'मणसा वावारंतो' मनसा–अन्तःकरणेनोपयुक्तः सन् व्यापारयन् कायं–देहं वाचं–भारतीं च 'तप्परी-

५ कायोत्सर्गाध्य० ध्यानत्रैविध्यं योगवत्

णामो' तत्परिणामो विवक्षितश्रुतपरीणामः, अथवा तत्परिणामो–योगत्रयपरिणामः स तथाविधः शान्तो योगत्रयपरिणामो यस्यासौ तत्परिणामः, भङ्गिकश्रुतं–दृष्टिवादान्तर्गतमन्यद् वा तथाविधं 'गुणंतो'त्ति गुणयन् वर्त्तते त्रिविधेऽपि ध्याने मनोवाक्कायव्यापारलक्षणे इति गाथार्थः ॥ १४७८ ॥ अवसितमानुषङ्गिकं, साम्प्रतं भेदपरिमाणं प्रतिपादयताऽध उत्सृतोच्छ्रितादिभेदो यो नवधा कायोत्सर्ग उपन्यस्तः स यथायोगं व्याख्यायत इति, तत्र—

धम्मं सुक्कं च दुवे झायइ झाणाइँ जो ठिओ संतो । एसो काउस्सग्गो उसिउसिओ होइ नायव्वो ॥ १४७९ ॥
धम्मं सुक्कं च दुवे नवि झायइ नवि य अट्टरुद्दाइं । एसो काउस्सग्गो दव्वुसिओ होइ नायव्वो ॥ १४८० ॥
पयलायंत सुसुत्तो नेव सुहं झाइ झाणमसुहं वा । अव्वावारियचित्तो जागरमाणोवि एमेव ॥ १४८१ ॥
अचिरोववन्नगाणं मुच्छियअव्वत्तमत्तसुत्ताणं । ओहाडियमव्वत्तं च होइ पाएण चित्तंति ॥ १४८२ ॥
गाढालंबणलग्गं चित्तं वुत्तं निरेयणं झाणं । सेसं न होइ झाणं मउअमवत्तं भमंतं वा ॥ १४८३ ॥
उम्हासेसोवि सिही होउं लद्धिंधणो पुणो जलइ । इय अवत्तं चित्तं होउं वत्तं पुणो होइ ॥ १४८४ ॥
पुव्वं च जं तदुत्तं चित्तस्सेगग्गया हवइ झाणं । आवन्नमणेगग्गं चित्तं चिय तं न तं झाणं ॥ १४८५ ॥
आ० मणसहिएण उ काएण कुणइ वायाइ भासई जं च । एयं च भावकरणं मणरहियं दव्वकरणं च ॥ १४८६ ॥
चो० जइ ते चित्तं झाणं एवं झाणमवि चित्तमावन्नं । तेन र चित्तं झाणं अह नेवं झाणमन्नं ते ॥ १४८७ ॥
आ० नियमा चित्तं झाणं झाणं चित्तं न यावि भइयव्वं । जह खइरो होइ दुमो दुमो य खइरो अखयरो वा ॥१४८८॥

अट्टं रुद्दं च दुवे झायइ झाणाइं जो ठिओ संतो। एसो काउस्सग्गो दव्वुसिओ भावउ निसन्नो ॥ १४८९ ॥
धम्मं सुक्कं च दुवे झायइ झाणाइं जो निसन्नो अ। एसो काउस्सग्गो निसनुसिओ होइ नायव्वो ॥ १४९० ॥
धम्मं सुक्कं च दुवे नवि झायइ नवि य अट्टरुद्दाइं। एसो काउस्सग्गो निसण्णओ होइ नायव्वो ॥ १४९१ ॥
अट्टं रुद्दं च दुवे झायइ झाणाइँ जो निसन्नो य। एसो काउस्सग्गो निसन्नगनिसन्नओ नामं ॥ १४९२ ॥
धम्मं सुक्कं च दुवे झायइ झाणाइँ जो निवन्नो उ। एसो काउस्सग्गो निवनुसिओ होइ णायव्वो ॥ १४९३ ॥
धम्मं सुक्कं च दुवे नवि झायइ नवि य अट्टरुद्दाइं। एसो काउस्सग्गो निवण्णओ होइ नायव्वो ॥ १४९४ ॥
अट्टं रुद्दं च दुवे झायइ झाणाइँ जो निवन्नो उ। एसो काउस्सग्गो निवन्नगनिवन्नओ नाम ॥ १४९५ ॥
अतरंतो उ निसन्नो करिज्ज तहवि य सट्ठ निवन्नो उ। संबाहुवस्सए वा कारणियसट्ठवि य निसन्नो ॥ १४९६ ॥

धर्मं च शुक्लं च प्राक्प्रतिपादितस्वरूपे ते एव द्वे ध्यायति ध्याने यः कश्चित् स्थितः सन् एष कायोत्सर्ग उत्सृतोत्सृतो भवति ज्ञातव्यः, यस्मादिह शरीरमुत्सृतं भावोऽपि धर्मशुक्लध्यायित्वादुत्सृत एवेति गाथार्थः॥ गतः खल्वेको भेदोऽधुना द्वितीयः प्रतिपाद्यते–'धम्मं सुक्कं' धर्मं शुक्लं च द्वे नापि ध्यायति नापि आर्त्तरौद्रे एष कायोत्सर्गो द्रव्योत्सृतो भवतीति ज्ञातव्य इति गाथार्थः॥ १४७९–१४८०॥ आह–कस्यां पुनरवस्थायां न शुभं ध्यानं ध्यायति नाप्यशुभमिति ?, अत्रोच्यते—'पयलायंत' प्रचलायमान ईषत् स्वपन्नित्यर्थः, 'सुसुत्त'त्ति सुष्ठु सुप्तः स खलु नैव शुभं ध्यायति ध्यानं–धर्मशुक्ललक्षणं अशुभं वा–आर्त्तरौद्रलक्षणं न व्यापारितं क्वचिद् वस्तुनि चित्तं येन सोऽव्यापारितचित्तः जाग्रदपि एवमेव–नैव

५कायोत्सर्गाध्य०उत्सृतादिकाः कायोत्सर्गभेदाः

शुभं ध्यायति ध्यानं नाशुभमिति गाथार्थः ॥ १४८१ ॥ किंच—'अचिरोववन्नगाणं' 'न चिरोपपन्नका अचिरोपपन्नकाः तेषामचिरोपपन्नकानामचिरजातानामित्यर्थः, मूर्च्छिताव्यक्तमत्तसुत्तानां–मूर्च्छितानामभिघातादिना अव्यक्तानाम्–अव्यक्तचेतसां मत्तानां मदिरादिना सुप्तानां निद्रया, इहाव्यक्तानामिति यदुक्तं तत्राव्यक्तचेतसः अव्यक्ताः, तत् पुनरव्यक्तं कीदृगित्याह–'ओहाडियमवत्तं च होइ पाएण चित्तं तु' 'ओहाडिय'न्ति स्थगितं विषादिना तिरस्कृतस्वभावं अव्यक्तं च–अव्यक्तमेव चशब्दोऽवधारणे भवति प्रायश्चित्तमपि, प्रायोग्रहणादन्यथाऽपि सम्भवमाहेति गाथार्थः ॥ १४८२ ॥ स्यादेतत्–एवंभूतस्यापि चेतसो ध्यानताऽस्तु को विरोध इति ?, अत्रोच्यते, नैतदेवं, यस्मात्—आलम्बने लग्नं २ गाढमालम्बने लग्नं २ एकालम्बने स्थिरतया व्यवस्थितमित्यर्थः, चित्तं–अन्तःकरणं उक्तं–भणितं, निरेजनं–निष्प्रकम्पं ध्यानं, यतश्चैवमतः शेषं–यदस्मादन्यत् तन्न भवति ध्यानं, किंभूतं ?–'मदुयमवत्तं भमन्तं वा' मृदु–भावनायामकठोरं अव्यक्तं पूर्वोक्तं भ्रमन्वा–अनवस्थितं वेति गाथार्थः॥१४८३॥ आह–यदि मृद्वादि चित्तं ध्यानं न भवति वस्तुतः अव्यक्तत्वात् तत् कथमस्य पश्चादपि व्यक्ततेति ?, अत्रोच्यते—'उम्हासेसोवि'उष्मावशेषो मनागपि उष्णमात्र इत्यर्थः, शिखी–अग्निर्भूत्वा लब्धेन्धनः–प्राप्तकाष्ठादिः सन् पुनर्ज्वलति,'इय' एवं अव्यक्तं चित्तं मदिरादिसम्पर्कादिना भूत्वा व्यक्तं पुनर्भवत्यग्निवदिति गाथार्थः ॥ १४८४ ॥ इत्थं प्रासङ्गिकं कियदप्युक्तं, अधुना प्रकान्तवस्तुशुद्धिः क्रियते, किंच प्रक्रान्तं?, कायिकादि त्रिविधं ध्यानं, यत उक्तं–'भंगियसुयं गुणतो वट्टइ तिविहेऽवि झाणंमि' इत्यादि, एवं च व्यवस्थिते 'अन्तोमुहुत्तकालं चित्तस्सेगग्गया भवति झाणं' यदुक्तमस्माइ विनेयस्य विरोधशङ्कया सम्मोहः स्यादतस्तदपनोदाय शङ्कामाह—'पुव्वं च जं तदुत्तं' ननु

त्रिविधे ध्याने सति पूर्वं यदुक्तं चित्तस्यैकाग्रता भवति ध्यानं 'अन्तोमुहुत्तकालं चित्तस्सेगग्गया भवति झाणं'ति वचनात् चशब्दाच्च तदूर्ध्वमुक्तं-'भंगियसुयं गुणंतो वट्टइ तिविहेवि झाणंमि' तदेतत् परस्परविरुद्धं कथयतस्त्रिविधे ध्याने सति आपन्नमनेकविषयं ध्यानमिति, तथा च मनसा किञ्चिद् ध्यायति वाचाऽभिधत्ते कायेन क्रियां करोतीति अनेकाग्रता, आचार्य इदमनादृत्य सामान्येनैकाग्रं चित्तं हृदि कृत्वा काक्काऽऽह-'चित्तं चिय तं न तं झाणं' यदनेकाग्रं तच्चित्तमेव न ध्यानमिति गाथार्थः ॥ १४८५ ॥ आह-उक्तन्यायादनेकाग्रं त्रिविधं ध्यानं तस्य तर्हि ध्यानत्वानुपपत्तिः, न, अभिप्रायापरिज्ञानात्, तथाहि-आ०—'मणसहिएण' मनःसहितेनैव कायेन करोति, यदिति सम्बध्यते, उपयुक्तो यत् करोतीत्यर्थः, वाचा भापते यच्च मनःसहितया, तदेव भावकरणं वर्त्तते, भावकरणं च ध्यानं, मनोरहितं तु द्रव्यकरणं भवति, ततश्चैतदुक्तं भवति-इहानेकाग्रतैव नास्ति सर्वेषामेव मनःप्रभृतीनामेकविषयत्वात्, तथाहि-स यत् मनसा ध्यायति तदेव वाचाऽभिधत्ते तत्रैव च कायक्रियेति गाथार्थः ॥१४८६॥ इत्थं प्रतिपादिते सत्यपरस्त्वाह—'जइ ते चित्तं झाणं' यदि ते-तव चित्तं ध्यानं 'अन्तोमुहुत्तकालं चित्तस्सेगग्गया हवइ झाणं'ति वचनात्, एवं ध्यानमपि चित्तमापन्नं, ततश्च कायिकवाचिकध्यानासम्भव इत्यभिप्रायः, तेन किल चित्तमेव ध्यानं नान्यदिति हृदयं, अथ नैवमिष्यते-मा भूत्, कायिकवाचिके ध्याने न भविष्यत इति, इत्थं तर्हि ध्यानमन्यत्ते-तव चित्तादिति गम्यते, यस्मान्नावश्यं ध्यानं चित्तमिति गाथार्थः॥१४८७॥ अत्र चाचार्य आह-अभ्युपगमाददोपः, तथाहि-'नियमा चित्तं झाणं' नियमात्-नियमेन उक्तलक्षणं चित्तं ध्यानमेव, 'झाणं चित्तं न यावि भइयव्वं' ध्यानं तु चित्तं न चाप्येवं भक्तव्यं-विकल्पनीयं, अत्रैवार्थे दृष्टान्तमाह-'जह खइरो होइ दुमो दुमो य खइरो

५कायोत्सर्गाध्य० उत्सृतादिकाः कायोत्सर्गभेदाः

अखइरो वा' यथा खदिरो भवति द्रुम एव, द्रुमस्तु खदिरः अखदिरो वा-धवादिर्वेत्ययं गाथार्थः ॥ १४८८ ॥ अन्ये पुनरिदं गाथाद्वयमतिक्रान्तगाथावयवाक्षेपद्वारेणान्यथा व्याचक्षते, यदुक्तं 'चित्तं चिय तं न तं झाणंती' त्येतदसत्, कथं ?, यदि ते 'चित्तं झाणं एवं झाणमवि चित्तमावन्नं' सामान्येन 'तेन र चित्तं झाणं' किमुच्यते 'चित्तं चित्तं न झाणं'ति 'अह नेयं झाणमन्नं ते' चित्तात्, अत्र पाठान्तरेणोत्तरगाथा 'नियमा चित्तं झाणं झाणं चित्तं न यावि भइयव्वं' यतोऽव्यक्तादि-चित्तं न ध्यानमिति, 'जह खदिरो' इत्यादि निदर्शनं पूर्वं, अलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, प्रकृतश्च द्वितीयः उच्छ्रिताभि-धानः कायोत्सर्गभेद इति, स च व्याख्यात एव, नवरं तत्र ध्यानचतुष्टयाध्यायी लेश्यापरिगतो वेदितव्य इति, अथेदानीं तृतीयः कायोत्सर्गभेदः प्रतिपाद्यते—निगदसिद्धैव, अधुना चतुर्थः कायोत्सर्गभेदः प्रदर्श्यते तत्रेयं गाथा—निगदसिद्धैव, नवरं कारणिक एव ग्लानस्थविरादिर्निषण्णकारी वेदितव्यः, वक्ष्यते च-'अतरंतो उ' इत्यादि, अधुना पञ्चमः कायोत्स-र्गभेदः प्रदर्श्यते, तत्रेयं गाथा—निगदसिद्धा, नवरं प्रकरणान्निपण्णः स धर्मादीनि न ध्यायतीत्यत्रगन्तव्यम्, अधुना षष्ठः कायोत्सर्गभेदः प्रदर्श्यते, तत्रेयं गाथा—निगदसिद्धा, अधुना सप्तमः कायोत्सर्गभेदः प्रतिपाद्यते, इह च-निगदसिद्धा, नवरं कारणिक एव ग्लानस्थविरादियों निपण्णोऽपि कर्त्तुमसमर्थः स निप(व)ण्णकारी गृह्यते, साम्प्रतमष्टमः कायोत्सर्गभेदः प्रदर्श्यते, निगदसिद्धा, इहापि च प्रकरणान्निप(व)ण्णः,स च धर्मादीनि न ध्यायतीत्यवगन्तव्यम्,अधुना नवमः कायोत्सर्गभेदःप्रदर्श्यते, इह च—'अट्टं रुद्दं च दुवे' गाहा निगदसिद्धा। 'अतरंतो' गाहा निगदसिद्धैव, नवरं 'कारणियसहूवि य निसण्णो'त्ति यो हि गुरुवैयावृत्त्यादिना व्यापृतः कारणिकः स समर्थोऽपि निपण्णः करोतीति ॥१४९५-१४९६॥ इत्थं तावत् कायोत्सर्ग उक्तः,

अत्रान्तरे अध्ययनशब्दार्थो निरूपणीयः, स चान्यत्र न्यक्षेण निरूपितत्वान्नेहाधिकृतः, गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रालापकनिष्पन्नस्य निक्षेपस्यावसरः, स च सूत्रे सति भवति, सूत्रं च सूत्रानुगम इत्यादिप्रपञ्चो वक्तव्यः यावत् तच्चेदं सूत्रं—'करेमि भंते! सामाइयमित्यादि यावत् अप्पाणं वोसिरामि' अस्य संहितादिलक्षणा व्याख्या यथा सामायिकाध्ययने तथा मन्तव्या पुनरभिधाने च प्रयोजनं वक्ष्यामः, इदमपरं सूत्रं—

इच्छामि ठाइउं काउस्सग्गं जो मे देवसिओ अइआरो कओ काइओ वाइओ माणसिओ उस्सुत्तो उम्मग्गो अकप्पो अकरणिज्जो दुज्झाओ दुव्विचिंतिओ अणायारो अणिच्छिअव्वो असमणपाउग्गो नाणे दंसणे चरित्ते सुए सामाइए तिण्हं गुत्तीणं चउण्हं कसायाणं पंचण्हं महव्वयाणं छण्हं जीवनिकायाणं सत्तण्हं पिंडेसणाणं अट्ठण्हं पवयणमाऊणं नवण्हं बंभचेरगुत्तीणं दसविहे समणधम्मे समणाणं जोगाणं जं खंडिअं जं विराहिअं तस्स मिच्छामि दुक्कडं ॥ ( सूत्रम् )

अस्य व्याख्या—तल्लक्षणं चेदं—संहितेत्यादि, तत्र इच्छामि स्थातुं कायोत्सर्गं यो मे दैवसिकोऽतिचारः कृत इत्यादि संहिता, पदानि तु इच्छामि स्थातुं कायोत्सर्गं मया दैवसिकोऽतिचारः कृत इत्यादीनि, पदार्थस्तु 'इषु इच्छाया'मित्यस्योत्तमपुरुषस्यैकवचनान्तस्य 'इषुगमिष्यमां छ' इति ( पा०७-३-७७ ) छत्वे इच्छामि भवति, इच्छामि—अभिलषामि स्थातुमिति 'ष्ठा गतिनिवृत्तौ' इत्यस्य तुमुन्प्रत्ययान्तस्य स्थातुमिति भवति, 'कायोत्सर्ग'मिति 'चिञ् चयने' अस्य घञन्तस्य 'निवासचितिशरीरोपसमाधानेष्वादेश्च क इति ( पा० ३-३-४१ ) चीयते इति कायः देह इत्यर्थः 'सृज विसर्गे' इत्यस्य उत्पूर्वस्य

घञि उत्सर्ग इति भवति, शेषपदार्थो यथा प्रतिक्रमणे तथैव, पदविग्रहस्तु यानि समासभाञ्जि पदानि तेषामेव भवति नान्येषामिति, तत्र इच्छामि स्थातुं, कं ?—कायोत्सर्ग—कायस्योत्सर्गः कायोत्सर्गः तमिति, शेषपदविग्रहो यथा प्रतिक्रमणे, एवं चालना प्रत्यवस्थानं च यथासम्भवमुपरिष्टाद् वक्ष्यामः । तथेदमन्यत्तु सूत्रं—

तस्सुत्तरीकरणेणं पायच्छित्तकरणेणं विसोहीकरणेणं विसल्लीकरणेणं पावाणं कम्माणं निग्घायणट्ठाए ठामि काउस्सग्गं अन्नत्थ ऊससिएणं नीससिएणं खासिएणं छीएणं जंभाइएणं उड्डुएणं वायनिसग्गेणं भमलिए पित्तमुच्छाए सुहुमेहिं अंगसंचालेहिं सुहुमेहिं खेलसंचालेहिं सुहुमेहिं दिट्ठिसंचालेहिं एवमाइएहिं आगारेहिं अभग्गो अविराहिओ हुज्ज मे काउस्सग्गो जाव अरिहंताणं भगवंताणं नमुक्कारेणं न पारेमि ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि ॥ ( सूत्रम् ) ॥

अस्य व्याख्या—'तस्योत्तरीकरणेन''तस्ये'ति तस्य—अनन्तरं प्रस्तुतस्य श्रामण्ययोगसङ्घातस्य कथञ्चित् प्रमादात् खण्डितस्य विराधितस्य वोत्तरीकरणेन हेतुभूतेन 'ठामि काउस्सग्ग'मिति योगः, तत्रोत्तरकरणं पुनः संस्कारद्वारेणोपरिकरणमुच्यते, उत्तरं च तत् करणं च इत्युत्तरकरणं अनुत्तरमुत्तरं क्रियत इत्युत्तरीकरणं, कृतिः—करणमिति, तच्च प्रायश्चित्तद्वारेण भवति अत आह—'पायच्छित्तकरणेणं' प्रायश्चित्तशब्दार्थं वक्ष्यामः तस्य करणं प्रायश्चित्तकरणं तेन, अथवा सामायिकादीनि प्रतिक्रमणावसानानि विशुद्धौ कर्त्तव्यायां मूलकरणं, इदं पुनरुत्तरकरणमतस्तेनोत्तरकरणेन—प्रायश्चित्तकरणेनेति, क्रिया पूर्ववत्, प्रायश्चित्तकरणं च विशुद्धिद्वारेण भवत्यत आह—'विसोहीकरणेणं' विशोधनं विशुद्धिः अपराधमलिनस्यात्मनः प्रक्षालन-

मित्यर्थः तस्याः करणं तेन हेतुभूतेन, विशुद्धिकरणं च विशल्यकरणद्वारेण भवत्यत आह—'विसल्लीकरणेणं' विगतानि शल्यानि—मायादीनि यस्यासौ विशल्यस्तस्य करणं विशल्यकरणं तेन हेतुभूतेन, 'पावाणं कम्माणं णिग्घायणट्ठाए ठामि काउस्सग्गं' पापानां संसारनिबन्धनानां कर्मणां—ज्ञानावरणीयादीनां निर्घातार्थं—निर्घातननिमित्तं व्यापत्तिनिमित्तमित्यर्थः, किं ?—'तिष्ठामि कायोत्सर्गं' कायस्योत्सर्गः—कायपरित्याग इत्यर्थः तं, एतदुक्तं भवति—अनेकार्थत्वाद् धातूनां तिष्ठामीति—करोमि कायोत्सर्गं, व्यापारवतः कायस्य परित्यागमिति भावना, किं सर्वथा ? नेत्याह—'अन्नत्थूससिएणं'ति अन्यत्रोच्छ्वसितेन, उच्छ्वसितं मुक्त्वा योऽन्यो व्यापारस्तेन व्यापारवत इत्यर्थः, एवं सर्वत्र भावनीयं, तत्रोर्ध्वं प्रबलं वा श्वसितमुच्छ्वसितं तेन,'नीससिएणं'ति अधःश्वसितं निःश्वसितं तेन निःश्वसितेन, 'खासिएणं'ति कासितं प्रतीतं, 'छीएणं'ति क्षुतं प्रतीतमेव तेनैतदपि,'जंभाइएणं'ति जृम्भितेन, विवृतवदनस्य प्रबलपवननिर्गमो जृम्भितमुच्यते,'उड्डुएणं'ति उद्गारितं प्रतीतं,'वायनिसग्गेणं'ति अपानेन पवननिर्गमो वातनिसर्गो भण्यते तेन,'भमलीए'त्ति भ्रमल्या,इयमाकस्मिकी शरीरभ्रमिलक्षणा प्रतीतैव'पित्तसंमूर्च्छया' पित्तमूर्च्छयाऽपि, पित्तप्राबल्यात् मनाग् मूर्च्छा भवति, 'सुहुमेहिं अंगसंचालेहिं' सूक्ष्मैरङ्गसञ्चारैर्लक्ष्यालक्ष्यैर्गात्रविचलनप्रकारै रोमोद्गमादिभिः, 'सुहुमेहिं खेलसंचालेहिं' सूक्ष्मैः खेलसञ्चारैर्यस्मात् सयोगिवीर्यसद्द्रव्यतया ते खल्वन्तर्भवन्ति 'सुहुमेहिं दिट्ठिसंचालेहिं' सूक्ष्मैर्दृष्टिसञ्चारैः—निमेषादिभिः, 'एवमाइएहिं आगारेहिं अभग्गो अविराहिओ होज्ज मे काउस्सग्गो' एवमादिभिरित्यादिशब्दं वक्ष्यामः, आक्रियन्त इत्याकारा आगृह्यन्त इति भावना, सर्वथा कायोत्सर्गापवादप्रकारा इत्यर्थः, तैराकारैर्विद्यमानैरपि न भग्नोऽभग्नः, भग्नः सर्वथा नाशितः, न विराधितोऽविराधितो, विराधितो देशभग्नोऽभिधीयते, भवेत्

मम कायोत्सर्गः, कियन्तं कालं यावदित्याह—'जाव अरहंताणं भगवंताणं नमोक्कारेणं न पारेमि' यावदर्हतां भगवतां नमस्कारेण न पारयामि, यावदिति कालावधारणं, अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तस्तेषामर्हतां भगः—ऐश्वर्यादिलक्षणः स विद्यते येषां ते भगवन्तस्तेषां भगवतां सम्बन्धिना नमस्कारेण 'नमो अरहंताणं'इत्यनेन न पारयामि—न पारं गच्छामि, तावत् किमित्याह—'ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि'त्ति तावच्छब्देन कालनिर्देशमाह, कायं—देहं स्थानेन—ऊर्द्ध्वस्थानेन तथा मौनेन—वाग्निरोधलक्षणेन, तथा ध्यानेन शुभेन, 'अप्पाणं'ति प्राकृतशैल्या आत्मीयं, अन्ये न पठन्त्येवैनमालापकं, व्युत्सृजामि—परित्यजामि, इयमत्र भावना—कायं स्थानमौनध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासद्वारेण व्युत्सृजामि, नमस्कारपाठं यावत् प्रलम्बभुजो निरुद्धवाक्प्रसरः प्रशस्तध्यानानुगतस्तिष्ठामीति, तथाच कायोत्सर्गपरिसमाप्तौ नमस्कारमपठतस्तद्भङ्ग एव द्रष्टव्य इत्येष तावत् समासार्थः, अवयवार्थं तु भाष्यकारो वक्ष्यति, तत्रेच्छामि स्थातुं कायोत्सर्गमित्याद्यं सूत्रावयवमधिकृत्याह—कायोत्सर्गस्थानं न कार्यं, प्रयोजनरहितत्वात्, तथाविधपर्यटनवदिति, अत्रोच्यते, प्रयोजनरहितत्वमसिद्धं, यतः—

काउस्सग्गंमि ठिओ निरेयकाओ निरुद्धवइपसरो। जाणइ सुहमेगमणो मुणि देवसियाइअइयारं॥ १ ॥ (प्र०)
परिजाणिऊण य जओ सम्मं गुरुजणपगासणेणं तु। सोहेइ अप्पगं सो जम्हा य जिणेहिं सो भणिओ ॥ २॥(प्र०)
काउस्सग्गं मुक्खपहदेसियं जाणिऊण तो धीरा। दिवसाइयारजाणणट्ठयाइ ठायंति उस्सग्गं ॥ १४९७ ॥

व्याख्या—इह च सम्बद्धगाथाद्वयमन्यकर्तृकं तथापि सोपयोगमितिकृत्वा व्याख्यायते, कायोत्सर्गे उक्तस्वरूपे स्थितः

सन् निरेजकायो—निष्प्रकम्पदेह इति भावना, निरुद्धवाक्प्रसरः—मौनव्यवस्थितः सन् जानीते सुखमेकमना—एकाग्रचित्तः, सन् कोऽसौ ?—मुनिः—साधुः, किं ?—दैवसिकातिचारं आदिशब्दाद्रात्रिकग्रह इति गाथार्थः ॥ ततः किमित्याह—यस्मात् कारणात् सम्यग्—अशठभावेन गुरुजनप्रकाशनेन—गुरुजननिवेदनेनेति हृदयं, तुशब्दात् तदादिष्टप्रायश्चित्तकरणेन चः शोधयत्यात्मानमसौ, अतिचारमलिनं क्षालयतीत्यर्थः, तच्चातिचारपरिज्ञानमविकलं कायोत्सर्गव्यवस्थितस्य भवत्यतः कायोत्सर्गस्थानं कार्यमिति, किंच—यस्माज्जिनैर्भगवद्भिरयं कायोत्सर्गो भणित—उक्तः, तस्मात् कायोत्सर्गस्थानं कार्यमिति गाथार्थः ॥ १—२ ॥ यतश्चैवमतः 'काउस्सग्गं मुक्खपहदेसियं'ति मोक्षपन्थास्तीर्थकर एव भण्यते तत्प्रदर्शकत्वात्, कारणे कार्योपचारात्, तेन मोक्षपथेन देशितः—उपदिष्टः मोक्षपथदेशितस्तं, 'जाणिऊणं'ति दिवसाद्यतिचारपरिज्ञानोपायतया विज्ञाय ततो धीराः—साधवः, दिवसातिचारज्ञानार्थमित्युपलक्षणं रात्र्यतिचारज्ञानार्थमपि, 'ठायंति उस्सग्गं'ति तिष्ठन्ति कायोत्सर्गमित्यर्थः, ततश्च कायोत्सर्गस्थानं कार्यमेव, सप्रयोजनत्वात्, तथाविधवैयावृत्यवदिति गाथार्थः ॥१४९७॥ साम्प्रतं यदुक्तं 'दिवसातिचारज्ञानार्थ'मिति, तत्रौघतो विषयद्वारेण तमतिचारमुपदर्शयन्नाह—

**सयणासणण्णपाणे चेइय जइ सेज्ज काय उच्चारे । समितीभावणगुत्ती वितहायरणंमि अइयारो ॥ १४९८ ॥**

व्याख्या—शयनीयवितथाचरणे सत्यतिचारः, एतदुक्तं भवति—संस्तारकादेरविधिना ग्रहणादौ अतिचार इति, 'आसण'त्ति आसनवितथाचरणे सत्यतिचारः पीठकादेरविधिना ग्रहणादतिचार इति भावना, 'अण्णपाण'त्ति अन्नपानवितथाचरणे सत्यतिचारः अन्नपानस्याविधिना ग्रहणादावतिचार इत्यर्थः, 'चेतिय'त्ति चैत्यवितथाचरणे सत्यतिचारः, चैत्यविषयं

वितथाचरणमविधिना वन्दने अकरणे चेत्यादि, 'जइ'त्ति यतिवितथाचरणे सत्यतिचारः, यतिविषयं च वितथाचरणं यथार्हं विनयाद्यकरणमिति, 'सेज्ज'त्ति शय्यावितथाचरणे सत्यतिचारः, शय्या वसतिरुच्यते, तद्विषयं वितथाचरणमविधिना प्रमार्जनादौ स्त्र्यादिसंसक्तायां वा वसत इत्यादि, 'काय' इति कायिकवितथाचरणे सत्यतिचारः, वितथाचरणं चास्थण्डिले कायिकं व्युत्सृजतः स्थण्डिले वाऽप्रत्युपेक्षितादावित्यादि, 'उच्चारे'त्ति उच्चारवितथाचरणे सत्यतिचारः उच्चारः–पुरीषं भण्यते वितथाचरणं चैतद्विषयं यथा कायिकायां, 'समिति'त्ति समितिवितथाचरणे सत्यतिचारः, समितयश्चेर्यासमिति-प्रमुखाः पञ्च यथा प्रतिक्रमणे, वितथाचरणं चासामविधिनाऽऽसेवनेऽनासेवने चेत्यादि, 'भावने'ति भावनावितथाचरणे सत्यतिचारः, भावनाश्चानित्यत्वादिगोचरा द्वादश, तथा चोक्तम्–'भावयितव्यमनित्यत्वमशरणत्वं तथैकतान्यत्वे। अशुचित्वं संसारः कर्माश्रवसंवरविधिश्च ॥ १ ॥ निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च। बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः ॥ २ ॥" अथवा पञ्चविंशतिभावना यथा प्रतिक्रमणे, वितथाचरणं चासामविधिसेवनेनेत्यादि, 'गुत्ति'त्ति गुप्ति-वितथाचरणे सत्यतिचारः, तत्र मनोगुप्तिप्रमुखास्तिस्रो गुप्तयः यथा प्रतिक्रमणे, वितथाचरणमपि गुप्तिविषयं यथा समिति-ष्विति गाथार्थः ॥१४९८॥ इत्थं सामान्येन विषयद्वारेणातिचारमभिधायाधुना कायोत्सर्गगतस्य मुनेः क्रियामभिधित्सुराह—

**गोसमुहणंतगाई आलोए देसिए य अइयारे। सव्वे समाणइत्ता हियए दोसे ठविज्जाहि ॥ १४९९ ॥**
**काउं हिअए दोसे जहक्कमं जा न ताव पारेइ। ताव सुहुमाणुपाणू धम्मं सुक्कं च झाइज्जा ॥ १५०० ॥**

गोपः प्रत्यूषो भण्यते, 'मुहणंतगं' मुखवस्त्रिका आदिशब्दाच्छेषोपकरणग्रहः, ततश्चैतदुक्तं भवति–गोपादारभ्य मुखवस्त्रि-

कादौ विषये 'आलोए देसिए य अतिचारे'त्ति अवलोकयेत्—निरीक्षेत दैवसिकानतिचारान्—अविधिप्रत्युपेक्षिताप्रत्युपेक्षितादीनिति, ततः 'सवे समणाइत्ता' सर्वानतिचारान् मुखवस्त्रिकाप्रत्युपेक्षणादारभ्य यावत् कायोत्सर्गावस्थानमंत्रान्तरे य इति 'समाणइत्ता' समाप्य बुद्ध्यवलोकनेन समाप्तिं नीत्वा एतावन्त एत इति, नातः परमतिचारोऽस्ति ततो 'हृदये' चेतसि दोषान्—प्रतिषिद्धकरणादिलक्षणान् आलोचनीयानित्यर्थः, स्थापयेदिति गाथार्थः ॥ १४९९ ॥ कृत्वा हृदये दोषान् यथाक्रममिति प्रतिसेवनानुलोम्येन आलोचनानुलोम्येन च, प्रतिसेवनानुलोम्यं नाम ये यथाऽऽसेविता इति, आलोचनानुलोम्यं तु पूर्वं लघव आलोच्यन्ते पश्चाद् गुरव इति, 'जा न ताव पारेति'त्ति यावन्न तावत् पारयति गुरुर्नमस्कारेण, 'ताव सुहुमाणुपाणु'त्ति तावदिति कालावधारणं, सूक्ष्मप्राणापानः, सूक्ष्मोच्छ्वासनिश्वास इत्यर्थः, किं ?—'धम्मं सुक्कं च झाएज्जा' धर्मध्यानं प्रतिक्रमणाध्ययनोक्तस्वरूपं शुक्लं ध्यानं च ध्यायेदिति गाथार्थः ॥ १५०० ॥ एवं—

देसिय राइय पक्खिय चाउम्मासे तहेव वरिसे य । इक्किक्के तिन्नि गमा नायव्वा पंचसेएसु ॥ १५०१ ॥

व्याख्या—'देवसिय'त्ति दैवसिके प्रतिक्रमणे दिवसेन निर्वृत्तं दैवसिकं, 'राइय'त्ति रात्रिके, 'पक्खिए'त्ति पाक्षिके 'चाउम्मासे'त्ति चातुर्मासिके तथैव 'वरिसि'त्ति तथैव वार्षिके च, वर्षेण निर्वृत्तं वार्षिकं—सांवत्सरिकमिति भावना, एकैकस्मिन् प्रतिक्रमणे दैवसिकादौ त्रयो गमा ज्ञातव्याः, पञ्चस्वेतेषु दैवसिकादिषु, कथं त्रयो गमाः ?, सामायिकं कृत्वा कायोत्सर्गकरणं, सामायिकमेव कृत्वा प्रतिक्रमणं, सामायिकमेव कृत्वा पुनः कायोत्सर्गम्, इह च यस्माद् दिवसादि तीर्थं दिवसप्रधानं च तस्माद् दैवसिकमादाविति गाथार्थः ॥ १५०१ ॥ अत्राह चोदकः—

आइमकाउस्सग्गे पडिकमणे ताव काउ सामइयं। तो किं करेह बीयं तइअं च पुणोऽवि उस्सग्गे? ॥ १५०२ ॥
समभावंमि ठियप्पा उस्सग्गं करिय तो पडिक्कमइ। एमेव य समभावे ठियस्स तइयं तु उस्सग्गे ॥ १५०३ ॥
सज्झायज्झाणतवओसहेसु उवएसथुइपयाणेसु। संतगुणकित्तणेसु अ न हुंति पुणरुत्तदोसा उ ॥ १५०४ ॥

व्याख्या—'आदिमकायोत्सर्गे' इति प्रथमकायोत्सर्गे कृत्वा सामायिकमिति योगः 'पडिक्कमणे ताव वितियं काउं सामाइयं'ति योगः, ता किं करेह तइयं च सामाइयं पुणोऽवि उस्सग्गो' यः प्रतिक्रान्तोपरीति गाथार्थः ॥ १५०२ ॥ चालना चेयम्, अत्रोच्यते—'समभावंमि' गाहा व्याख्या—इह समभावस्थितस्य भावप्रतिक्रमणं भवति नान्यथा, ततश्च समभावे-रागद्वेषमध्यवर्त्तिनि स्थित आत्मा यस्यासौ स्थितात्मा, 'उस्सग्गं काउ (करिय) तो पडिक्कमति' दिवसातिचारपरिज्ञानाय कायोत्सर्गं कृत्वा गुरोरतिचारं निवेद्य तत्प्रदत्तप्रायश्चित्तं समभावपूर्वकमेव प्रपद्य ततः प्रतिक्रामति, 'एमेव य समभावे ठितस्स ततियं तु उस्सग्गे' एवमेव च समभावे व्यवस्थितस्य सतश्चारित्रशुद्धिरपि भवतीतिकृत्वा तृतीयं सामायिकं कायोत्सर्गे प्रतिक्रान्तोत्तरकालभाविनि क्रियत इति गाथार्थः ॥ १५०३ ॥ प्रत्यवस्थानमिदम्—'सज्झायज्झाण' गाहा व्याख्या निगदसिद्धा, इदानीं 'जो मे देवसिओ अइयारो कओ' इत्यादि सूत्रमधो व्याख्याततत्वादनादृत्य 'तस्स मिच्छामि दुक्कडं'ति सूत्रावयवं व्याचिख्यासुराह—

मित्ति मिउमद्दवत्ते छत्ति अ दोसाण छायणे होइ। मित्ति य मेराइ ठिओ दुत्ति दुगुंछामि अप्पाणं ॥ १५०५ ॥
कत्ति कडं मे पावं डत्तिय डेवेमि तं उवसमेणं। एसो मिच्छाउक्कडपयक्खरत्थो समासेणं ॥ १५०६ ॥

इत्थं(दं) गाथायुगलं यथा सामायिकाध्ययने व्याख्यातं तथैव द्रष्टव्यमिति, साम्प्रतं 'तस्योत्तरीकरणेने'ति सूत्रावयवं विवृण्वन्नाह—

खंडियविराहियाणं मूलगुणाणं सउत्तरगुणाणं । उत्तरकरणं कीरइ जह सगडरहंगगेहाणं ॥ १५०७ ॥
पावं छिंदइ जम्हा पायच्छित्तं तु भन्नई तेणं । पाएण वावि चित्तं विसोहए तेण पच्छित्तं ॥ १५०८ ॥
दव्वे भावे य दुहा सोही सल्लं च इक्कमिक्कं तु । सव्वं पावं कम्मं भामिज्जइ जेण संसारे ॥ १५०९ ॥

व्याख्या—'खण्डितविराधितानां' खण्डिताः—सर्वथा भग्ना विराधिताः—देशतो भग्ना मूलगुणानां—प्राणातिपातादिविनिवृत्तिरूपाणां सह उत्तरगुणैः—पिण्डविशुध्ध्यादिभिर्वर्त्तत इति सोत्तरगुणास्तेषामुत्तरकरणं क्रियते, आलोचनादिना पुनः संस्करणमित्यर्थः, दृष्टान्तमाह—यथा शकटरथाङ्गगेहानां—गन्त्रीचक्रगृहाणामित्यर्थः, तथा च शकटानां खण्डितविराधितानां अक्षावलकादिनोत्तरकरणं क्रियत इति गाथार्थः ॥ १५०७ ॥ अधुना 'प्रायश्चित्तकरणेने'ति सूत्रावयवं व्याचिख्यासुराह—'पावं' गाहा, व्याख्या—पापं—कर्मोच्यते तत् पापं छिनत्ति यस्मात् कारणात् प्राकृतशैल्या 'पायच्छित्तं'ति भण्यते, तेन कारणेन, संस्कृते तु पापं छिनत्तीति पापच्छिदुच्यते, प्रायसो वा चित्तं—जीवं शोधयति—कर्ममलिनं विमलीकरोति तेन कारणेन प्रायश्चित्तमुच्यते, प्रायो वा—बाहुल्येन चित्तं स्वेन स्वरूपेण अस्मिन् सतीति प्रायश्चित्तं, प्रायोग्रहणं संवरादेरपि तथाविधचित्तसद्भावादिति गाथार्थः ॥ १५०८ ॥ अधुना 'विशोधिकरणे'त्यादिसूत्रावयवव्याचिख्यासयाऽऽह—'दव्वे भावे य दुहा सोही' गाहा—द्रव्यतो भावतश्च द्विविधा विशुद्धिः, शल्यं च, 'एक्कमेक्कं तु'त्ति एकैकं शुद्धिरपि द्रव्यभावभेदेन

द्विधा, शल्यमपीत्यर्थः। तत्र द्रव्यशुद्धिः रूपादिना वस्त्रादेर्भावशुद्धिः प्रायश्चित्तादिनाऽऽत्मन एव, द्रव्यशल्यं कण्टक-शिलीमुखफलादि, भावशल्यं तु मायादि, सर्वं ज्ञानावरणीयादि कर्म पापं वर्त्तते, किमिति ?–भ्राम्यते येन कारणेन तेन कर्मणा जीवः संसारे–तिर्यग्नारकामरभवानुभवलक्षणे, तथा च दग्धरज्जुकल्पेन भवोपग्राहिणाऽल्पेनापि सता केवलिनोऽपि न मुक्तिमासादयन्तीति दारुणं संसारभ्रमणनिमित्तं कर्मेति गाथार्थः ॥ १५०९ ॥ साम्प्रतम् 'अन्यत्रोच्छ्वसितेने'-त्यवयवं विवृणोति—

उस्सासं न निरुंभइ आभिग्गहिओवि किमुअ चिट्ठा उ?। सज्जमरणं निरोहे सुहुमुस्सासं तु जयणाए ॥ १५१० ॥
कासखुअजंभिए मा हु सत्थमणिलोऽनिलस्स तिव्वुण्हो। असमाही य निरोहे मा मसगाई अ तो हत्थो ॥१५११॥
वायनिसग्गुड्डोए जयणासद्दस्स नेव य निरोहो। उड्डोए वा हत्थो भमलीमुच्छासु अ निवेसो ॥ १५१२ ॥
वीरियसजोगयाए संचारा सुहुमबायरा देहे। बाहिं रोमंचाई अंतो खेलाणिलाईया ॥ १५१३ ॥
आ(अव)लोअचलं चक्खू मणुव्व तं दुक्करं थिरं काउं। रूवेहिं तयं खिप्पइ सभावओ वा सयं चलइ ॥ १५१४ ॥
न कुणइ निमेसजुत्तं तत्थुवओगे ण झाण झाइज्जा। एगनिसिं तु पवन्नो झायइ साहू अणिमिसच्छोऽवि ॥१५१५॥
अगणीओ छिंदिज्ज व बोहियखोभाइ दीहडक्को वा। आगारेहिं अभग्गो उस्सग्गो एवमाईहिं ॥ १५१६ ॥

ऊर्ध्वं प्रबलः श्वास उच्छ्वासः तं 'न निरुंभइ'त्ति न निरुणद्धि, 'आभिग्गहिओवि' अभिगृह्यत इति अभिग्रहः अभिग्रहेण निर्वृत्त आभिग्रहिकः–कायोत्सर्गस्तदव्यतिरेकात् तत्कर्त्ताऽप्याभिग्रहिको भण्यते, असावप्यभिभवकायोत्सर्गकार्य-

पीत्यर्थः, 'किमुत चेट्ठा उ'त्ति किं पुनश्चेष्टाकायोत्सर्गकारी, स तु सुतरां न निरुणद्धि इत्यर्थः, किमित्यत आह—'सज्जमरणं निरोहे'त्ति सद्योमरणं निरोधे उच्छ्वासस्य, ततश्च 'सुहुमुस्सासं तु जयणाए'त्ति सूक्ष्मोच्छ्वासमेव यतनया मुञ्चति, नोल्वणं, मा भूत् सत्त्वघात इति गाथार्थः ॥ १५१० ॥ अधुना 'कासिते'त्यादिसूत्रार्थप्रचिकटिषयेदमाह—'कासखुयजंभिए' गाहा व्याख्या—इह कायोत्सर्गे कासक्षुतजृम्भितादीनि यतनया क्रियन्ते, किमिति ?—'मा हु सत्थमणिलोऽणिलस्स तिव्वुण्हो'त्ति मा शस्त्रं भविष्यति कासितादिसमुद्भवोऽनिलो—वायुरनिलस्य—बाह्यस्य वायोः, किंभूतः ?—तीव्रोष्णः, बाह्यानिलापेक्षया अत्युष्ण इत्यर्थः । न च न क्रियन्ते न च निरुध्यन्त एव न 'असमाही य निरोहे'त्ति (सर्वथारोधे) असमाधिश्च चशब्दात् मरणमपि सम्भाव्यते कासितादिनिरोधे सति, 'मा मसगाई'त्ति मा मसकादयश्च कासितादिसमुद्भवपवनश्लेष्माभिहता मरिष्यन्ति जृम्भिते च वदनप्रवेशं करिष्यन्ति ततो हस्तोऽग्रतो दीयत इति यतनेयमिति गाथार्थः ॥ १५११ ॥ आह—निःश्वसितेनेति सूत्रावयवो न व्याख्यायते इति किमत्र कारणम् ?, उच्यते, उच्छ्वसितेन तुल्ययोगक्षेमत्वादिति, इदानीम् 'उद्गारितेने'त्यादिसूत्रावयवव्याचिख्यासयाऽऽह—वातनिसर्गः—उक्तस्वरूप उद्गारोऽपि, तत्रायं विधिः—यतना शब्दस्य क्रियते न निसृष्टं मुच्यत इति, 'नेव य निरोहो'त्ति नैव च निरोधः क्रियते, असमाधिभावादेव, उद्गारे वा हस्तोऽन्तरे दीयत इति 'भमलीमुच्छाए य निवेसो' मा सहसापतितस्यात्मविराधना भविष्यतीति गाथार्थः ॥ १५१२ ॥ साम्प्रतं 'सूक्ष्मैरङ्गसञ्चारै'रित्यादिसूत्रावयवव्याचिख्यासयाऽऽह—वीर्यसयोगतया कारणेन संचाराः सूक्ष्मबादरा देहे अवश्यंभाविनो, वीर्यं वीर्यान्तरायक्षयोपशमक्षयजं खल्वात्मपरिणामो भण्यते योगास्तु—मनोवाक्कायास्तत्र वीर्यसयोग-

तथैवातिचाराः सूक्ष्मवादरा भवन्ति न केवलात् वीर्यादिति देह एव च भवति नादेहस्य, तत्र वही रोमञ्चादय आदि-शब्दादुत्कम्पग्रहः 'अन्तो खेलानिलादीया' अन्तः-मध्ये श्लेष्मानिलादयो विचरन्तीत्यर्थः, इति गाथार्थः ॥१५१३॥ अधुना 'सूक्ष्मैर्दृष्टिसञ्चारै'रिति सूत्रावयवं व्याख्यानयति—अवलोकनमालोकस्तस्मिन्नवलोके चलं अवलोकचलं दर्शनलालसमित्यर्थः, किं ?-चक्षुः-नयनं, यतश्चैवमतो मनोवद्-अन्तःकरणमिव तच्चक्षुर्दुष्करं स्थिरं कर्तुं, न शक्यत इत्यर्थः, यतो रूपैस्तदाक्षिप्यते स्वभावतो वा-स्वभावेन वा नैसर्गिकेण स्वयं चलति, आत्मनैव चलतीति गाथार्थः ॥१५१४॥ यस्मादेवं तस्मात् न करोति निमेष(रोध)यत्नं कायोत्सर्गकारी, किमिति ?,-'तत्थुवओगे ण झाण झाएज्ज'त्ति तत्र-निर्निमेषयत्ने य उपयोगस्तेन सता मा न ध्यानं ध्यायेत् अभिप्रेतमिति, 'एगनिसं तु पवन्नो झायइ साहू अणिमिसच्छोऽवि' एकरात्रिकीं तु प्रतिमां प्रतिपन्नो महासत्त्वो ध्यायति समर्थः अनिमेषाक्षोऽपि-अनिमिषे अक्षिणी यस्य सः अनिमिषाक्षः निश्चलनयन इति गाथार्थः ॥ १५१५ ॥ अधुना एवमादिभिराकारैरित्यादिसूत्रावयवव्याचिख्यासयाह—'अगणि'त्ति यदा ज्योतिः स्पृशति तदा प्रावरणाय कल्पग्रहणं कुर्वतो न कायोत्सर्गभङ्गः, आह-नमस्कारमेवाभिधाय किमिति तद्ग्रहणं न करोति ? येन तद्भङ्गो न भवति, उच्यते, नात्र नमस्कारपारणमेवाविशिष्टं कायोत्सर्गमानं क्रियते, किं तु यो यत्परिमाणो यत्र कायोत्सर्ग उक्तस्तत ऊर्ध्वं परिसमाप्तेऽपि तस्मिन्नमस्कारमपठतो भङ्ग इत्यादि, अपरिसमाप्तेऽपि च पठतो भङ्ग एव, स चात्र न भवतीति, एवं सर्वत्र भावनीयं, 'छिंदिज्ज व'त्ति मार्जारीमूषकादिभिर्वा पुरतो यायात्, अत्राप्यग्रतः सरतो न कायोसर्गभङ्गः, 'वोहियखोभाइ'त्ति वोधिकाः-स्तेनकास्तेभ्यः क्षोभः-संभ्रमः, आदिशब्दाद्राजादिक्षोभः परिगृह्यते, तत्रास्थानेऽप्युच्चारयतो(ऽनुच्चारयतो)वा न

कायोत्सर्गभङ्गो 'दीहडक्को वे'ति सर्पदष्टे चात्मनि परे वा सहसा—अकाण्ड एवोच्चारयतः, तथैव आक्रियन्त इत्याकारा-स्तैराकारैरभग्नः स्यात् कायोत्सर्ग एवमादिभिरिति गाथार्थः ॥ १५१६ ॥ अधुनौघतः कायोत्सर्गविधिप्रतिपादनायाह—

ते पुण ससूरिए च्चिय पासवणुच्चारकालभूमीओ । पेहित्ता अत्थमिए ठंतुस्सग्गं सए ठाणे ॥ १५१७ ॥
जइ पुण निव्वाघाए आवासं तो करिंति सव्वेवि । सड्ढाइकहणवाघायाइ पच्छा गुरू ठंति ॥ १५१८ ॥
सेसा उ जहासत्तिं आपुच्छित्ताण ठंति सट्ठाणे । सुत्तत्थसरणहेउं आयरिए ठियंमि देवसियं ॥ १५१९ ॥
जो हुज्ज उ असमत्थो बालो वुड्ढो गिलाण परितंतो । सो विकहाइविरहिओ झाइज्जा जा गुरू ठंति ॥ १५२० ॥
जा देवसिअं दुगुणं चिंतइ गुरू अहिंडओऽचिट्ठं । बहुवावारा इअरे एगगुणं ताव चिंतंति ॥ १५२१ ॥
पव्वइयाण व चिट्ठं नाऊण गुरू बहुं बहुविहीअं । कालेण तदुचिएणं पारेई थोवचिट्ठोऽवि ॥ (प्र०१) ॥
नमुक्कारचउवीसगकिइकम्मालोअणं पडिक्कमणं । किइकम्मदुरालोइअ दुप्पडिक्कंते य उस्सग्गो ॥ १५२२ ॥
एस चरित्तुस्सग्गो दंसणसुद्धीइ तइयओ होइ । सुअनाणस्स चउत्थो सिद्धाण थुई अ किइकम्मं ॥ १५२३ ॥

व्याख्या—ते पुनः—कायोत्सर्गकर्त्तारः ससूर्य एव दिवसे प्रश्रवणोच्चारकालभूमयः (मीः) प्रत्युपेक्षन्ते, द्वादश प्रश्रवण-भूमयः आलयपरिभोगान्तः षट् षट् बहिः, एवमुच्चारभूमयो द्वादश, प्रमाणं चासां तिर्यग् जघन्येन हस्तमात्रमधश्चत्वार्यङ्गु-लानि यावत् अचेतनं, उत्कृष्टतस्तु स्थण्डिलं द्वादश योजनमानं, न च तेनेहाधिकारः, तिस्रस्तु कालभूमयः—कालमण्डलाख्याः, यावच्चैनमन्यं च श्रमणयोगं कुर्वन्ति कालवेलायां तावत् प्रायसोऽस्तमुपयात्येव सविता ततश्च 'अत्थमिए ठंति उस्सग्गं

सए ठाणे'त्ति उक्तमन्यथा यस्य यदैव व्यापारपरिसमाप्तिर्भवति स तदैव सामयिकं कृत्वा तिष्ठतीति गाथार्थः ॥ १५१७ ॥ अयं च विधिः केनचित् कारणान्तरेण गुरोर्व्याघाते सति। 'जइ पुण निव्वाघाओ' व्याख्या—यदि पुनर्निर्व्याघात एव सर्वेषामावश्यकं–प्रतिक्रमणं ततः कुर्वन्ति सर्वेऽपि सहैव गुरुणा 'सड्ढादिकहणवाघाते पच्छा गुरू ठंति'त्ति निगदसिद्धमिति गाथार्थः ॥ १५१८ ॥ यदा च पश्चाद् गुरवस्तिष्ठन्ति तदा—'सेसा उ जहासत्ती' गाहा व्याख्या—शेषास्तु साधवो यथाशक्ति–शक्त्यनुरूपं यो हि यावन्तं कालं स्थातुं समर्थः '[1]आपुच्छित्ता गुरू ठंति सट्ठाणे सामायिकं काऊण, किंनिमित्तं ?–'सुत्तत्थसरणहेउं' सूत्रार्थस्मरणनिमित्तं–'आयरिए ठियंमि देवसियं' आयरिए पुरओ ठिए तस्स सामाइयावसाणे देवसियं अइयारं चिंतेंति, अण्णे भणंति–जाहे आयरिओ सामाइयं कड्ढइ ताहे तेवि तयट्ठिया चेव सामाइयसुत्तमणुपेहंति गुरुणा सह पच्छा देवसियं'ति गाथार्थः ॥ १५१९ ॥ शेषाश्च यथा शक्तिरित्युक्तं, यस्य कायोत्सर्गेण स्थातुं शक्तिरेव नास्ति स किं कुर्यादिति तद्गतं विधिमभिधित्सुराह—'जो हुज्ज उ असमत्थो' गाहा व्याख्या—यः कश्चित् साधुर्भवेदसमर्थः कायोत्सर्गेण स्थातुं, स किंभूत इत्याह–बालो वृद्धो ग्लानः 'परितंतो'त्ति परिश्रान्तो गुरुवैयावृत्यकरणादिना असावपि विकथादिविरहितः सन् ध्यायेत् सूत्रार्थं 'जा गुरू ठंति'त्ति यावद् गुरवस्तिष्ठन्ति कायोत्सर्गमिति गाथार्थः ॥ १५२० ॥

---

१ आपृच्छय गुरून् तिष्ठन्ति स्वस्थाने सामायिकं कृत्वा, किंनिमित्तं ?, सूत्रार्थस्मरणहेतोः । आचार्ये स्थिते दैवसिकं–आचार्ये पुरतः स्थिते तस्य सामायिकावसाने दैवसिकमतिचारं चिन्तयन्ति, अन्ये भणन्ति–यदाऽऽचार्याः सामायिकं कथयन्ति तदा तेऽपि तदवस्थिता एव सामायिकसूत्रमनुप्रेक्षन्ते गुरुणा सह पश्चाद्दैवसिकं

आचार्ये स्थिते दैवसिकमित्युक्तं तद्गतं विधिमभिधित्सुराह—'जा देवसियं दुगुणं चिंतइ' गाहा व्याख्या—निगदसिद्धा, नवरं चेष्टा व्यापाररूपाऽवगन्तव्या ॥१५२१॥'नमोकारचउवीसग' गाहा व्याख्या–'नमोक्कारे'त्ति काउस्सग्गसमत्तीए नमोकारेण पारेंति नमो अरहंताणंति, 'चउवीसग'त्ति पुणो जेहिं इमं तित्थं देसियं तेसिं तित्थगराणं उसभादीणं चउवीसत्थएणं उक्कित्तणं करेंति, लोगस्सुज्जोयगरेणंति भणियं होति, 'कितिकम्मे'ति तओ वंदिउंकामा गुरुं संडासयं पडिलेहित्ता उवविसंति, ताहे मुहणंतगं पडिलेहिय ससीसोवरियं कायं पमज्जंति, पमज्जित्ता परेण विणएण तिकरणविसुद्धं कितिकम्मं करेंति, वन्दनकमित्यर्थः, उक्तं च–"आलोयणवागरणासंपुच्छणपूयणाए सज्झाए । अवराहे य गुरूणं विणओ मूलं च वंदणग ॥१॥" मित्यादि 'आलोयणं'ति एवं च वंदित्ता उत्थाय उभयकरगहियरओहरणाद्धावणयकाया पुव्वपरिचिंतिए दोसे जहारायणियाए संजयभासाए जहा गुरू सुणेइ तहा पवड्ढमाणसंवेगा भयविप्पमुक्का अप्पणो विसुद्धिनिमित्तमालोयंति, उक्तं च–"विणएण विणयमूलं गंतूणायरियपायमूलंमि । जाणाविज्ज सुविहिओ जह अप्पाणं तह परंपि ॥ १ ॥ कयपावोवि मणुस्सो

---

१ कायोत्सर्गसमाप्तौ नमस्कारेण पारयंति नमोऽर्हद्भ्य इति, चतुर्विंशतिरिति, पुनर्यैरिदं तीर्थं देशितं तेषां तीर्थंकराणामृषभादीनां चतुर्विंशतिस्तवेनोत्कीर्तनं कुर्वन्ति, लोकस्योद्योतकरेणेति भणितं भवति, कृतिकर्मेति ततो वन्दितुकामा गुरुं संदंशकान् प्रमार्ज्योपविशन्ति, ततो मुखानन्तकं प्रतिलिख्य सशीर्षमुपरितनं कायं प्रमार्जयन्ति, प्रमृज्य परेण विनयेन त्रिकरणविशुद्धं कृतिकर्म कुर्वन्ति । आलोचनाव्याकरणसंप्रश्नपूजनासु स्वाध्याये । अपराधे च गुरूणां विनयो मूलं च वन्दनकं । एवं च वन्दित्वोत्थायोभयकरगृहीतरजोहरणा अर्धावनतकायाः पूर्वपरिचिन्तितान् दोषान् यथारत्नाधिकं संयतभाषया यथा गुरुः शृणोति तथा प्रवर्धमानसंवेगा भयविप्रमुक्ता आत्मनो विशुद्धिनिमित्तमालोचयन्ति–विनयेन विनयमूलं गत्वाऽऽचार्यपादमूले । ज्ञापयेत् सुविहितो यथाऽऽत्मानं तथा परमपि ॥ १ ॥ कृतपापोऽपि मनुष्य

[1]आलोइउ निंदिउ गुरुसयासे। होइ अइरेगलहूओ ओहरियभरोव भारवहो ॥ २ ॥ तथा—उप्पण्णाणुप्पन्ना माया अणुमग्गओ निहंतव्वा। आलोयणनिंदणगरहणाहिं ण पुणो सिया त्रितियं ॥ ३ ॥ तस्स य पायच्छित्तं जं मग्गविऊ गुरू उवइसंति। तं तह अणुचरियव्वं अणवत्थपसंगभीएणं ॥ ४ ॥ 'पडिक्कमणं'ति—'आलोइऊण दोसे गुरुणा पडिदिण्णपायच्छित्ता उ। सामाइयपुव्वगं समभा(त्रा)वठिया पडिकमंति ॥ १ ॥ सम्ममुवउत्ता पयंपएण पडिक्कमणं कहुंति, अणवत्थपसंगभीया, अणवत्थाए पुण उदाहरणं तिलहारगकप्पष्ठगोत्ति, 'कितिकम्मं'ति तओ पडिकमित्ता खामणानिमित्तं पडिकंतायवत्तनिवेयणत्थं च वंदंति, तओ आयरियमादी पडिक्कमणत्थमेव दंसेमाणा खामेंति, उक्तं च—आयरिउवज्झाए सीसे साहंमिए कुलगणे य। जे मे केऽवि कसाया सव्वे तिविहेण खामेमि ॥ १ ॥ सव्वस्स समणसंघस्स भगवओ अंजलिं करिय सीसे। सव्वं खमावइत्ता खमामि सव्वस्स अहयंपि ॥ २ ॥ सव्वस्स जीवरासिस्स भावओ धम्मनिहियनियचित्तो। सव्वं खमावइत्ता

---

१ आलोच्य निन्दित्वा गुरुसकाशे। भवत्यतिशयेन लघुरुद्धृतभर इव भारवाहः ॥ २ ॥ उत्पन्नाऽनुत्पन्ना माया प्रतिमार्गं निहन्तव्या। आलोचनानिन्दनागर्हनाभिर्न स्याद् द्वितीयवारम् ॥३॥ तस्य च प्रायश्चित्तं यन्मार्गविदो गुरव उपदिशन्ति। तत्तथाऽनुचरितव्यमनवस्थाप्रसङ्गभीतेन ॥४॥ आलोच्य दोषान् गुरुणा प्रतिदत्तप्रायश्चित्तास्तु। सामायिकपूर्वं समभावावस्थिताः प्रतिक्राम्यन्ति ॥ १ ॥ सम्यगुपयुक्ताः पदंपदेन प्रतिक्रमणसूत्रं कथयन्त्यनवस्थाप्रसङ्गभीताः, अनवस्थायां पुनरुदाहरणं तिलहारकशिशुरिति। ततः प्रतिक्रम्य क्षामणानिमित्तं प्रतिक्रान्ताआत्मवृत्तनिवेदनार्थं च वन्दन्ते, तत आचार्यादीन् प्रतिक्रमणार्थमेव दर्शयन्तः क्षमयन्ति। आचार्योपाध्यान् शिष्यान् साधर्मिकान् कुलगणांश्च। ये मया केऽपि कषायिताः सर्वान् त्रिविधेन क्षमयामि ॥ १ ॥ सर्वश्रमणसङ्घस्य भगवतेऽञ्जलिं कृत्वा शीर्षे। सर्वं क्षमयित्वा क्षमे सर्वस्याहमपि ॥ २ ॥ सर्वस्मिन् जीवराशौ भावतो धर्मनिहितनिजचित्तः। सर्वं क्षमयित्वा

खमामि सव्वस्स अहयंपि ॥ ३ ॥" इत्यादि 'दुरालोइयदुप्पडिक्कंते य उस्सग्गे'त्ति एवं खामित्ता आयरियमादी ततो दुरालोइयं वा होज्जा दुप्पडिकंतं वा होज्जा अणाभोगादिकारणेण ततो पुणोवि कयसामाइया चरित्तविसोहणत्थमेव काउस्सग्गं करेंतित्ति गाथार्थः ॥ १५२२ ॥ 'एस चरित्तुस्सग्गो' गाहा व्याख्या—एस चरित्तुसग्गोत्ति चरित्तातियारविसुद्धिनिमित्तोत्ति भणियं होइ, अयं च पंचासुस्सासपरिमाणो ॥१५२३॥ ततो नमोक्कारेण पारेत्ता विशुद्धचरित्ता विशुद्धदेसयाणं दंसणविसुद्धिनिमित्तं नामुक्कित्तणं करेंति, चरित्तं विसोहियमियाणिं दंसणं विसोहिज्जतित्तिकट्टु, तं पुण णामुक्कित्तणमेवं करेंति, 'लोगस्सुज्जोयगरे'त्यादि, अयं चतुर्विंशतिस्तवे न्यक्षेण व्याख्यात इति नेह पुनर्व्याख्यायते, चतुर्विंशतिस्तवं चाभिधाय दर्शनविशुद्धिनिमित्तमेव कायोत्सर्गं चिकीर्षवः पुनरिदं सूत्रं पठन्ति—

सव्वलोए अरिहंतचेइयाणं करेमि काउस्सग्गं वंदणवत्तियाए पूअणवत्तियाए सक्कारवत्तियाए सम्माणवत्तियाए बोहिलाभवत्तियाए निरुवसग्गवत्तियाए सद्धाए मेहाए धिइए धारणाए अणुप्पेहाए वड्ढमाणीए ठामि काउस्सग्गं ( सूत्रं ) ॥

---

१ क्षमे सर्वस्याहमपि ॥ ३ ॥ एवं क्षमयित्वाऽऽचार्यादीन् ततो दुरालोचितं वा भवेत् दुष्प्रतिक्रान्तं वा भवेत् अनाभोगादिकारणेन ततः पुनरपि कृतसामायिकाश्चारित्रविशोधनार्थमेव कायोत्सर्गं कुर्वन्ति । एष चारित्रोत्सर्ग इति चारित्रातिचारविशुद्धिनिमित्त इति भणितं भवति, अयं च पञ्चाशदुच्छ्वासपरिमाणः, ततो नमस्कारेण पारयित्वा विशुद्धचारित्रा विशुद्धदेशकानां दर्शनशुद्धिनिमित्तं नामोत्कीर्त्तनं कुर्वन्ति, चारित्रं विशोधितमिदानीं दर्शनं विशुध्यत इतिकृत्वा, तत्पुनर्नामोत्कीर्त्तनमेवं कुर्वन्ति ।

अस्य व्याख्या—सर्वलोकेऽर्हच्चैत्यानां करोमि कायोत्सर्गमिति, तत्र लोक्यते—दृश्यते केवलज्ञानभास्वतेति लोकः—चतुर्दशरज्ज्वात्मकः परिगृह्यते इति, उक्तं च—"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥" सर्वः खल्वधस्तिर्यगूर्ध्वभेदभिन्नः, सर्वश्चासौ लोकश्च २ तस्मिन् सर्वलोके, त्रैलोक्ये इत्यर्थः, तथाहि—अधोलोके चमरादिभवनेषु तिर्यग्लोके द्वीपाचलज्योतिष्कविमानादिषु सन्त्येवार्हच्चैत्यानि ऊर्द्ध्वलोके सौधर्मादिषु सन्त्येवार्हच्चैत्यानि, तत्राशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तः—तीर्थकरास्तेषां चैत्यानि—प्रतिमालक्षणानि अर्हच्चैत्यानि, इयमत्र भावना—चित्तम्—अन्तःकरणं तस्य भावे कर्मणि वा वर्णदृढादिलक्षणे ष्यञि कृते चैत्यं भवति, तत्रार्हतां प्रतिमाः प्रशस्तसमाधिचित्तोत्पादनादर्हच्चैत्यानि भण्यन्ते, तेषां किं ?—करोमीत्युत्तमपुरुषैकवचननिर्देशेनात्माऽभ्युपगमं दर्शयति, किमित्याह—कायः—शरीरं तस्योत्सर्गः—कृताकारस्य स्थानमौनध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासमधिकृत्य परित्याग इत्यर्थः, तं कायोत्सर्गं, आह—कायस्योत्सर्ग इति षष्ठ्या समासः कृतः, अर्हच्चैत्यानामिति प्रागुक्तं, तत् किमर्हच्चैत्यानां कायोत्सर्गं करोति ?, नेत्युच्यते, षष्ठीनिर्दिष्टं तत्पदं पदद्वयमतिक्रम्य मण्डूकप्लुत्या वन्दनप्रत्ययमित्यादिभिः सम्बध्यते, ततोऽर्हच्चैत्यानां वन्दनप्रत्ययं करोमि कायोत्सर्गमिति द्रष्टव्यम्, तत्र वन्दनम्—अभिवादनं प्रशस्तकायवाङ्मनःप्रवृत्तिरित्यर्थः, तत्प्रत्ययं—तन्निमित्तं, तत्फलं मे कथं नाम कायोत्सर्गादित्यतोऽर्थमित्येवं सर्वत्र भावना कार्या, तथा 'पूयणवत्तियाए'त्ति पूजनप्रत्ययं—पूजानिमित्तं, तत्र पूजनं—गन्धमाल्यादिभिरभ्यर्च्चनं, तथा 'सक्कारवत्तियाए'त्ति सत्कारप्रत्ययं—सत्कारनिमित्तं, तत्र प्रवरवस्त्राभरणादिभिरभ्यर्च्चनं सत्कारः, आह—यदि पूजनसत्कारप्रत्ययः कायोत्सर्गः क्रियते

ततस्तावेव कस्मान्न क्रियेते ?, उच्यते, द्रव्यस्तवत्वादप्रधानत्वाद्, उक्तं च–'दव्वत्थउ भावत्थउ' इत्यादि, अतः श्रावकाः पूजनसत्कारावपि कुर्वन्त्येव,साधवस्तु प्रशस्ताध्यवसायनिमित्तमेवमभिदधति,तथा'सम्माणवत्तियाए'त्ति सन्मानप्रत्ययं–सन्माननिमित्तं, तत्र स्तुत्यादिभिर्गुणोन्नतिकरणं सन्मानः, तथा मानसः प्रीतिविशेष इत्यन्ये, अथ वन्दनपूजनसत्कारसन्माना एव किंनिमित्तमित्यत आह–'बोहिलाभवत्तियाए' बोधिलाभप्रत्ययं–बोधिलाभनिमित्तं प्रेत्य जिनप्रणीतधर्मप्राप्तिर्बोधिलाभो भण्यते, अथ बोधिलाभ एव किंनिमित्तमित्यत आह 'निरुवसग्गवत्तियाए' निरुपसर्गप्रत्ययं–निरुपसर्गनिमित्तं, निरुपसर्गो–मोक्षः, अयं च कायोत्सर्गः क्रियमाणोऽपि श्रद्धा(दि)विकलस्य नाभिलषितार्थप्रसाधनायालमित्यत आह–'सद्धाए मेहाए धिईए धारणाए अणुप्पेहाए वड्ढमाणीए ठामि काउस्सग्गं'ति श्रद्धया हेतुभूतया तिष्ठामि कायोत्सर्गं न बलाभियोगादिना श्रद्धा–निजोऽभिलाषः, एवं मेधया–पटुत्वेन, न जडतया, अन्ये तु व्याचक्षते–मेधयेति मर्यादावर्त्तित्वेन नासमञ्जसतयेति, एवं धृत्या–मनःप्रणिधानलक्षणया न पुना रागद्वेषाकुलतया, धारणया–अर्हद्गुणाविष्करणरूपया न तच्छून्यतया, अनुप्रेक्षया–अर्हद्गुणानामेव मुहुर्मुहुरविच्युतिरूपेणानुचिन्तनया न तद्वैकल्येन, वर्द्धमानयेति प्रत्येकमभिसम्बध्यते, श्रद्धया वर्द्धमानया एवं मेधयेत्यादि, एवं तिष्ठामि कायोत्सर्गम्, आह–उक्तमेव प्राक्करोमि कायोत्सर्गं साम्प्रतं तिष्ठामीति किमर्थमिति ?, उच्यते, 'वर्त्तमानसामीप्ये वर्तमानवद्वा (पा० ३-३-१३१) इतिकृत्वा करोमि करिष्यामीति क्रियाभिमुख्यमुक्तमिदानीं त्वासन्नतरत्वात् क्रियाकालनिष्ठाकालयोः कथञ्चिदभेदात् तिष्ठाम्येव, आह–किं सर्वथा ?, नेत्याह–'अन्नत्थूससिएणमित्यादि पूर्ववत् यावद्वोसिरामि'त्ति, एयं च सुत्तं पढित्ता पणवीसूसासपरिमाणं काउस्सग्गं करेंति, 'दंसणविसुद्धीय तइउ'त्ति,

तृतीयत्वं चास्यातीचारालोचनविषयप्रथमकायोत्सर्गापेक्षयेति, तओ नमोकारेण पारेत्ता सुयणाणपरिवुड्ढिनिमित्तं अतियारवि-सोहणत्थं च सुयधम्मस्स भगवओ पराए भत्तीए तप्परूवगनमोकारपुव्वयं थुइं पढंति, तंजहा—

पुक्खरवरदीवड्ढे धायइसंडे य जंबुद्दीवे य। भरहेरवयविदेहे धम्माइगरे नमंसामि ॥ १ ॥ तमतिमिरपडल-विद्धंसणस्स सुरगणनरिंदमहिअस्स। सीमाधरस्स वंदे पप्फोडियमोहजालस्स ॥ २ ॥ जाईजरामरणसोगप-णासणस्स, कल्लाणपुक्खलविसालसुहावहस्स। को देवदानवनरिंदगणच्चिअस्स, धम्मस्स सारमुवलब्भ करे पमायं ?॥ ३ ॥ सिद्धे भो ! पयओ णमो जिणमए नंदी सया संजमे, देवंनागसुवण्णकिण्णरगणस्सब्भूअभाव-च्चिए। लोगो जत्थ पइट्ठिओ जगमिणं तेलुक्कमच्चासुरं, धम्मो वड्ढउ सासओ विजयऊ धम्मुत्तरं वड्ढउ ॥ ४ ॥ सुअस्स भगवओ करेमि काउस्सग्गं वंदण० अन्नत्थ०। (सूत्रम्)

अस्य व्याख्या—पुष्कराणि–पद्मानि तैर्वरः–प्रधानः पुष्करवरः २ श्चासौ द्वीपश्चेति समासः, तस्यार्धं मानुषोत्तराचलार्वाग्-वर्त्ति तस्मिन्, तथा धातकीनां खण्डानि यस्मिन् स धातकीखण्डो द्वीपस्तास्मिंश्च, तथा जम्ब्वोपलक्षितस्तत्प्रधानो वा द्वीपो जम्बूद्वीपस्तास्मिंश्च, एतेष्वर्द्धतृतीयेषु द्वीपेषु महत्तरक्षेत्रप्राधान्याङ्गीकरणतः पश्चानुपूर्व्योपन्यस्तेषु यानि भरतैरावतविदेहानि प्राकृतशैल्या त्वेकवचननिर्देशः द्वन्द्वैकवद्भावाद् भरतैरावतविदेह इत्यपि भवति, तत्र धर्मादिकरणान्नमस्यामि–'दुर्गति-प्रसृतान् जीवान्, यस्माद् धारयते ततः। धत्ते चैतान् शुभस्थाने, तस्माद् धर्म्म इति स्मृतः ॥ १ ॥' स च द्विभेदः—श्रुतधर्मश्चारित्रधर्मश्च, श्रुतधर्मेणेहाधिकारः, तस्य भरतादिष्वादौ करणशीलास्तीर्थकरा एवातस्तेषां स्तुतिरुक्ता, साम्प्रतं

श्रुतधर्मस्य प्रोच्यते–'तमतिमिरपडलविद्धंसणस्स सुरगणे'त्यादि, तमः–अज्ञानं तदेव तिमिरं अथवा तमः–बद्धस्पृष्टनि-
धत्तं ज्ञानावरणीयं निकाचितं तिमिरं तस्य पटलं–वृन्दं तमस्तिमिरपटलं तद् विध्वंसयति नाशयतीति तमस्तिमिरपट-
लविध्वंसनः तस्य, तथा चाज्ञाननिरासेनैवास्य प्रवृत्तिः, तथा सुरगणनरेन्द्रमहितस्य, तथा चागममहिमानं कुर्वन्त्येव
सुरादयः, तथा सीमां–मर्यादां धारयतीति सीमाधरः, सीम्नि वा धारयतीति तस्येति, तृतीयार्थे षष्ठी, तं वन्दे, तस्य वा
यत् माहात्म्यं तद् वन्दे, अथवा तस्य वन्द इति वन्दनं करोमि, तथाहि–आगमवन्त एव मर्यादां धारयन्ति, किं-
भूतस्य ?–प्रकर्षेण स्फोटितं मोहजालं–मिथ्यात्वादि येन स तथोच्यते तस्य, तथा चास्मिन् सति विवेकिनो मोहजालं
विलयमुपयात्येव, इत्थं श्रुतधर्ममभिवन्द्याधुना तस्यैव गुणोपदर्शनद्वारेण प्रमादागोचरतां प्रतिपादयन्नाह–'जाईजरामर-
णे'त्यादि, जातिः–उत्पत्तिः जरा–वयोहानिः मरणं–प्राणत्यागः शोकः–मानसो दुःखविशेषः, जातिश्च जरा च मरणं च शोक-
श्चेति द्वन्द्वः, जातिजरामरणशोकान् प्रणाशयति–अपनयति जातिजरामरणशोकप्रणाशनस्तस्य, तथा च श्रुतधर्मोक्तानु-
ष्ठानाज्जात्यादयः प्रणश्यन्त्येव, अनेन चास्यानर्थप्रतिघातित्वमाह, कल्यम्–आरोग्यं कल्यमणतीति कल्याणं, कल्यं शब्द-
यतीत्यर्थः, पुष्कलं–सम्पूर्णं न च तदल्पं किं तु विशालं–विस्तीर्णं सुखं–प्रतीतं कल्याणं पुष्कलं विशालं सुखमावहति––
प्रापयतीति कल्याणपुष्कलविशालसुखावहस्तस्य, तथा च श्रुतधर्मोक्तानुष्ठानादुक्तलक्षणमपवर्गसुखमवाप्यत एव, अनेन चास्य
विशिष्टार्थप्रसाधकत्वमाह, कः प्राणी देवदानवनरेन्द्रगणार्चितस्य श्रुतधर्मस्य सारं–सामर्थ्यमुपलभ्य-दृष्ट्वा विज्ञाय कुर्यात् प्रमादं
सचेतनः ? चारित्रधर्मे प्रमादः कर्तुं न युक्त इति हृदयम्, आह–सुरगणनरेन्द्रमहितस्येत्युक्तं पुनर्देवदानवनरेन्द्रगणार्चि-

तस्येति किमर्थमिति ?, अत्रोच्यते, तन्निगमनत्वाददोषः, तस्यैवंगुणस्य धर्मस्य सारमुपलभ्य कः सकर्णः प्रमादी भवेच्चारित्रधर्मे इति, यतश्चैवमतः 'सिद्धे भो पयओ नमो जिणमये'इत्यादि, सिद्धे–प्रतिष्ठिते प्रख्याते भो इत्येतदतिशयिनामामन्त्रणं पश्यन्तु भवन्तः प्रयतोऽहं–यथाशक्त्योद्यतः प्रकर्षेण यतः, इत्थं परसाक्षिकं भू(कृ)त्वा पुनर्नमस्करोति–'नमो जिनमते' अर्थाद् विभक्तिपरिणामो नमो जिनमताय, तथा चास्मिन् सति जिनमते नन्दिः–समृद्धिः सदा–सर्वकालं, क ?–संयमे–चारित्रे, यथोक्तं–'पढमं णाणं तओ दये'त्यादि, किंभूते संयमे ?–देवनागसुवर्णकिन्नरगणैः सद्भूतभावेनार्चिते, तथा च संयमवन्तः अर्च्यन्त एव देवादिभिः, किंभूते जिनमते ?–लोक्यतेऽनेनेति लोकः–ज्ञानमेव स यत्र प्रतिष्ठितः, तथा जगदिदं ज्ञेयतया, केचित् मनुष्यलोकमेव जगत् मन्यन्ते इत्यत आह–त्रैलोक्यमनुष्यासुरं, आधाराधेयरूपमित्यर्थः, अयमित्थंभूतः श्रुतधर्मो वर्द्धतां–वृद्धिमुपयातु शाश्वतः–द्रव्यार्थादेशान्नित्यः, तथा चोक्तं–'द्रव्यार्थादेशात् इत्येषा द्वादशाङ्गी न कदाचिद् नासीदि'त्यादि, अन्ये पठन्ति–धर्मो वर्द्धतां शाश्वतं इति, अस्मिन् पक्षे क्रियाविशेषणमेतत्, शाश्वतं वर्द्धतां अप्रच्युत्येति भावना, विजयतां कर्मपरप्रवादिविजयेनेति हृदयं, तथा धर्मोत्तरं–चारित्रधर्मोत्तरं वर्द्धतु, पुनर्वृद्ध्यभिधानं मोक्षार्थिना प्रत्यहं ज्ञानवृद्धिः कार्येति प्रदर्शनार्थं, तथा च तीर्थकरनामकर्महेतून् प्रतिपादयतोक्तं–"अप्पुवणाणगहणे"त्ति, 'सुयस्स भगवओ करेमि काउस्सग्गं वंदणवत्तियाए' इत्यादि प्रागवत्, यावद्वोसिरामि । एयं सुत्तं पढित्ता पणुवीसुस्सासमेव काउस्सग्गं करेमि, आह च–'सुयणाणस्स चउत्थो'त्ति, तओ नमोकारेण पारित्ता विसुद्धचरणदंसणसुयाइयारा मंगलनिमित्तं चरणदंसणसुयदेसगाणं सिद्धाणं थुइं कड्ढेंति, भणियं च—'सिद्धाण थुई य'त्ति, सा चेयं स्तुतिः—

सिद्धाणं बुद्धाणं पारगयाणं परंपरगयाणं । लोयग्गमुवगयाणं नमो सया सव्वसिद्धाणं ॥ १ ॥ जो देवाणवि देवो जं देवा पंजली नमंसंति । तं देवदेवमहिअं सिरसा वंदे महावीरं ॥ २ ॥ इक्कोऽवि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स । संसारसागराओ तारेइ नरं व नारिं वा ॥ ३ ॥ उज्जिंतसेलसिहरे दिक्खा नाणं निसीहिआ जस्स । तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ४ ॥ चत्तारि अट्ठ दस दो य वंदिआ जिणवरा चउव्वीसं । परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥ ५ ॥ ( सूत्रं )

अस्य व्याख्या—सितं ध्मातमेषामिति सिद्धा निर्दग्धकर्मेन्धना इत्यर्थस्तेभ्यः सिद्धेभ्यः, ते च सामान्यतो विद्यासिद्धा अपि भवन्त्यत आह–बुद्धेभ्यः, तत्रावगताशेषाविपरीततत्त्वा बुद्धा उच्यन्ते, तत्र कैश्चित् स्वतन्त्रतयैव तेऽपि स्वतीर्थोज्ज्वलनाय इहागच्छन्ति इत्यभ्युपगम्यन्ते अत आह–'पारगतेभ्यः' पारं–पर्यन्तं संसारस्य प्रयोजनव्रातस्य च गताः पारगताः तेभ्यः, तेऽपि चानादिसिद्धैकजगत्पतीच्छावशात् कैश्चित् तथाऽभ्युपगम्यन्ते अत आह–'परम्परगतेभ्यः' परम्परया एकेनाभिव्यक्तार्थादागमात् (कश्चित्) प्रवृत्तोऽन्येनाभिव्यक्तादर्थादन्योऽन्येनाप्यन्य इत्येवंभूतया गताः परंपरगतास्तेभ्यः, आह-प्रथमएव केनाभिव्यक्तार्थादागमात् प्रवृत्त इति ?, उच्यते, अनादित्वात् सिद्धानां प्रथमत्वानुपपत्तिरिति, अथवा कथञ्चित् कर्मक्षयोपशमात् दर्शनं दर्शनात् ज्ञानं ज्ञानाच्चारित्रमित्येवंभूतया परम्परया गतास्तेभ्यः, तेऽपि च कैश्चित् सर्वलोकापन्ना एवेष्यन्त इत्यत आह–'लोकाग्रमुपगतेभ्यः' लोकाग्रम्–ईषत्प्राग्भाराख्यं तमुपगताः तेभ्यः, आह–कथं पुनरिह सकलकर्मविप्रमुक्तानां लोकाग्रं यावद्गतिर्भवति ?, भावे वा सर्वदैव कस्मान्न भवतीति ?, अत्रोच्यते, पूर्वावेधवशाद् दण्डादिच-

कभ्रमणवत् समयमेवैकमवसेयेति, नमः सर्वदा–सर्वकालं 'सर्वसिद्धेभ्यः' तीर्थसिद्धादिभेदभिन्नेभ्यः, अथवा सर्वं साध्यं सिद्धं येषां ते तथा तेभ्यः, इत्थं सामान्येन सर्वसिद्धनमस्कारं कृत्वा पुनरासन्नोपकारित्वाद् वर्तमानतीर्थाधिपतेः श्रीमन्महावीरवर्द्धमानस्वामिनः स्तुतिं कुर्वन्ति–'जो देवाणवि देवो जं देवा पंजली'त्यादि, यो भगवान् महावीरः देवानामपि–भवनवास्यादीनां देवः, पूज्यत्वात्, तथा चाह–यं देवाः प्राञ्जलयो नमस्यन्ति–विनयरचितकरपुटाः सन्तः प्रणमन्ति, तं 'देवदेवमहियं' देवदेवाः–शक्रादयः तैः महितं–पूजितं शिरसा उत्तमाङ्गेनेत्यादरप्रदर्शनार्थमाह, वन्दे, तं कं ?–'महावीरं' 'ईर गतिप्रेरणयो'रित्यस्य विपूर्वस्य विशेषेण ईरयति–कर्म गमयति याति वा शिवमिति वीरः, महांश्चासौ वीरश्च महावीरः तं, इत्थं स्तुतिं कृत्वा पुनः फलप्रदर्शनार्थमिदं पठति—'एक्कोऽवि नमोक्कारो जिणवरवसहस्से'त्यादि, एकोऽपि नमस्कारो जिनवरवृषभस्य वर्द्धमानस्य संसारसागरात्तारयति नरं वा नारीं वा, इयमत्र भावना–सति सम्यग्दर्शने परया भावनया क्रियमाण एकोऽपि नमस्कारः तथाभूताध्यवसायहेतुर्भवति यथाभूताच्छ्रेणिमवाप्य निस्तरति भवोदधिमित्यतः कारणे कार्योपचारादेतदेवमुच्यते, अन्यथा चारित्रादिवैफल्यं स्यात् । एतास्तिस्रः स्तुतयो नियमेनोच्यन्ते, केचिदन्या अपि पठन्ति, न च तत्र नियमः, 'कितिकम्मं' पुणो संडंसयं पडिलेहिय उववसिंति, मुहपोत्तियं पडिलेहंति ससीसोवरियं कायं पडिलेहित्ता आयरियस्स वंदणं करेंति'त्ति गाथार्थः ॥ १५२३ ॥ आह—किंनिमित्तमिदं वन्दनकमिति ?, उच्यते—

सुकयं आणत्तिं पिव लोगे काऊण सुकयकिइकम्मं । वड्ढंतिया थुईओ गुरुथुइगहणे कए तिन्नि ॥ १५२४ ॥

'सुकयं आणत्तिंपिव लोए काऊणं'ति जहा रण्णो मणुस्सा आणत्तिगाए पेसिया पणामं काऊण गच्छंति, तं च काऊण पुणो पणामपुव्वगं निवेदेंति, एवं साहुणोऽवि सामाइयगुरुवंदणपुव्वगं चरित्तादिविसोहिं काऊण पुणो सुकयकितिकम्मा संतो गुरुणो निवेदंति—भगवं! कयं ते पेसणं आयविसोहिकारगंति, वंदणं च काऊण पुणो उक्कुडुया आयरियाभिमुहा विणयरतियंजलिपुडा चिट्ठंति, जाव गुरू थुइगहणं करेंति, ततो पच्छा समत्ताए पढमथुतीए थुई कड्ढिंति विणउत्ति, तओ थुई वड्ढंतियाओ कड्ढंति तिण्णि, अहवा वड्ढंतिया थुइओ गुरुथुतिगहणे कए तिण्णित्ति गाथार्थः ॥ १५२४ ॥ तओ पाउसियं करेंति, एवं ताव देवसियं करेंति, गतं देवसियं, राइयं इदाणिं, तत्थिमा विही, पढमं चिय सामाइयं कड्ढिऊण चरित्तविसुद्धिनिमित्तं पणुवीसुस्सासमित्तं काउस्सग्गं करेंति, तओ नमोक्कारेण पारित्ता दंसणविसुद्धीनिमित्तं चउवीसत्थयं पढंति, पणुवीसुस्सासमेत्तमेव काउस्सग्गं करेंति, एत्थवि नमोकारेण पारेत्ता सुयणाणविसुद्धीनिमित्तं सुयणाणत्थयं,

---

१ यथा राज्ञा मनुष्या आज्ञप्त्या प्रेषिताः प्रणामं कृत्वा गच्छन्ति, तच्च कृत्वा पुनः प्रणामपूर्वकं निवेदयन्ति, एवं साधवोऽपि सामायिकगुरुवन्दनपूर्वं चारित्रादिविशुद्धिं कृत्वा पुनः सुकृतकृतिकर्माणः सन्तो गुरुभ्यो निवेदयन्ति—भगवन्! कृतं तव प्रेषणमात्मविशुद्धिकारकमिति, वन्दनं च कृत्वा पुनरुत्कटुका आचार्याभिमुखा विनयरचिताञ्जलिपुटास्तिष्ठन्ति यावद्गुरवः स्तुतिग्रहणं कुर्वन्ति, ततः पश्चात् समाप्तायां प्रथमस्तुतौ स्तुतीः कथयन्ति विनय इति, ततः स्तुतीर्वर्धमानाः कथयन्ति तिस्रोऽथवा वर्धमानाः स्तुतयः। ततः प्रादोषिकं कालं कुर्वन्ति, एवं तावद्दैवसिकं कुर्वन्ति, गतं दैवसिकं, रात्रिकमिदानीं, तत्रायं विधिः—प्रथममेव सामायिकं कथयित्वा चारित्रविशुद्धिनिमित्तं पञ्चविंशत्युच्छ्वासमानं कायोत्सर्गं कुर्वन्ति, ततो नमस्कारेण पारयित्वा दर्शनविशुद्धिनिमित्तं चतुर्विंशतिस्तवं पठन्ति पञ्चविंशत्युच्छ्वासमात्रमेव कायोत्सर्गं कुर्वन्ति, अत्रापि नमस्कारेण पारयित्वा श्रुतज्ञानविशुद्धिनिमित्तं श्रुतज्ञानस्तवं.

कहेंति, काउस्सग्गं च तस्सुद्धिनिमित्तं करेंति, तत्थ य पाओसियथुइमादीयं अधिकयकाउस्सग्गपज्जंतमइयारं चिंतेइ, आह—किंनिमित्तं पढमकाउस्सग्गे एव राइयाइयारं ण चिंतेति ?, उच्यते,

निद्दामत्तो न सरइ अइआरं मा य घट्टणं ऽण्णोऽन्नं। किइअकरणदोसा वा गोसाई तिन्नि उस्सग्गा ॥ १५२५॥

निद्दामत्तो—निद्दाभिभूओ न सरइ—न संभरइ सुट्ठु अइयारं मा घट्टणं ऽण्णोऽण्णं अंधयारे वंदंतयाणं, कितिअकरणदोसा वा, अंधयारे अदंसणाओ मंदसद्धा न वंदंति, एएण कारणेणं गोसे—पच्चूसे आइए तिण्णि काउस्सग्गा भवन्ति, न पुण पाओसिए जहा एक्कोत्ति ॥ १५२५ ॥

एत्थ पढमो चरित्ते दंसणसुद्धीएँ बीयओ होइ। सुयनाणस्स य ततिओ नवरं चिंतंति तत्थ इमं ॥ १५२६ ॥
तइए निसाइयारं चिंतइ चरमंमि किं तवं काहं ?। छम्मासा एगदिणाइहाणि जा पोरिसि नमो वा ॥ १५२७॥
अहमवि भे खामेमी तुब्भेहिँ समं अहं च वंदामि। आयरियसंतियं नित्थारगा उ गुरुणो अ वयणाइं॥१५२८॥

ततो चिंतिऊण अइयारं नमोक्कारेण पारेत्ता सिद्धाण थुइं काऊण पुव्वभणिएण विहिणा वंदित्ता आलोएति, तओ-

---

१ कथयन्ति, कायोत्सर्गं च तच्छुद्धिनिमित्तं कुर्वन्ति, तत्र च प्रादोपिकस्तुत्यादिकं अधिकृतकायोत्सर्गपर्यन्तमतिचारं चिन्तयन्ति। आह—किंनिमित्तं प्रथमकायोत्सर्ग एव रात्रिकातिचारं न चिन्तयन्ति ?,—निद्रामत्तः—निद्राभिभूतो न स्मरति सुष्ठ्वतिचारं मा घट्टनमन्योऽन्यं वन्दमानानामन्धकारे कृतिकर्माकरणदोषा वा—अन्धकारेऽदर्शनात् मन्दश्रद्धा न वन्दन्ते, एतेन कारणेन प्रत्यूषे आदौ त्रयः कायोत्सर्गा भवन्ति, न पुनः प्रादोषिके यथैक इति, ततश्चिन्तयित्वाऽतिचारान् नमस्कारेण पारयित्वा सिद्धाणमिति स्तुतिं कृत्वा पूर्वभणितेन विधिना वन्दित्वाऽऽलोचयन्ति, ततः

सामाइयपुव्वयं पडिक्कमंति, तओ वंदणापुव्वयं खामेंति, वंदणं काऊणं तओ सामाइयपुव्वयं काउस्सग्गं करेंति, तत्थ चिंतयंति–कम्मि य निउत्ता वयं गुरूहिं ?, तो तारिसयं तवं पवज्जामो जारिसेण तस्स हाणि न भवति, तओ चिंतेति–छम्मासखमणं करेमो ?, न सक्केमो, एगदिवसेण ऊणं ?, तहवि न सक्केमो, एवं जाव पंच मासा, तओ चत्तारि तओ तिन्नि तओ दोन्नि, ततो एक्कं ततो अद्धमासं चउत्थं आयंबिलं एगठाणयं पुरिमड्ढं निव्विगइयं, नमोकारसहियं वत्ति, उक्तं च–'चरिमे किं तवं काहं'ति, चरिमे काउस्सग्गे छम्मासमेगूण ( दिणादि ) हाणी जाव पोरिसि नमो वा, एवं जं समत्था काउं तमसढभावा हिअए करेंति, पच्छा वंदित्ता गुरुसक्खयं पवज्जंति, सव्वे य नमोकारइत्तगा समगं उट्ठेंति वोसिरावेंति निसीयंति य, एवं पोरिसिमादिसु विभासा, तओ तिण्णि थुई जहा पुव्वं, नवरमप्पसद्दगं देंति जहा घरकोइलादी सत्ता न उट्ठेंति, तओ देवे वंदंति, तओ बहुवेलं संदिसावेंति, ततो रयहरणं पडिलेहंति, ततो उवधिं संदिसावेंति पडिलेहंति य,

---

१ सामायिकपूर्वकं प्रतिक्राम्यन्ति, ततो वन्दनकपूर्वकं क्षमयन्ति, वन्दनं कृत्वा ततः सामायिकपूर्वकं कायोत्सर्गं कुर्वन्ति, तत्र चिन्तयन्ति–कस्मिंश्चि-युक्ताश्च वयं गुरुभिः ततस्तादृशं तपः प्रपद्यामहे यादृशेन तस्य हानिर्न भवति, ततश्चिन्तयन्ति–षण्मासक्षपणं कुर्मः ?, न शक्नुमः, एकदिवसेनोनं ?, तथापि न शक्नुमः, एवं यावत् पञ्च मासाः, ततश्चतुरः, ततस्त्रीन् ततो द्वौ तत एकं ततोऽर्द्धमासं चतुर्थभक्तमाचाम्लं एकस्थानकं पूर्वार्धं निर्विकृतिकं नमस्कारसहितं वेति, चरमे कायोत्सर्गे षण्मासा एकदिनादिहानिर्यावत् पौरुषी नमस्कारसहितं वा, एवं यत् समर्थाः कर्तुं तदशठभावा हृदि कुर्वन्ति, पश्चात् वन्दित्वा गुरुसाक्षिकं प्रतिपद्यन्ते, सर्वे च नमस्कारसहिते पारकाः समकमुत्तिष्ठन्ति व्युत्सृजन्ति निषीदन्ति च, एवं पौरुष्यादिषु विभाषा, ततस्तिस्रः स्तुतीर्यथा पूर्वं, नवरमल्पशब्दं ददति यथा गृहकोकिलाद्याः सत्त्वा नोत्तिष्ठन्ति, ततो देवान् वन्दन्ते, ततो बहुवेलं संदिशन्ति, ततो रजोहरणं प्रतिलिखन्ति, तत उपधिं संदिशन्ति प्रतिलिखन्ति च

[1]तओ वसहिं पडिलेहिय कालं निवेदेंति, अण्णे य भणंति–थुइसमणंतरं कालं निवेएंति, एवं तु पडिक्कमणकालं तुलेंति जहा पडिक्कमंताणं थुइअवसाणे चेव पडिलेहणवेला भवति, गयं राइयं, इयाणिं पाक्खियं, तत्थिमा विही–जाहे देवसियं पडिक्कंता भवंति निवट्टगपडिक्कमणेणं ताहे गुरू निविसंति, तओ साहू वंदित्ता भणंति—

इच्छामि खमासमणो ! उवट्ठिओमि अब्भिंतरपक्खियं खामेउं, पन्नरसण्हं दिवसाणं पन्नरसण्हं राईणं जं किंचि अपत्तियं परपत्तियं भत्ते पाणे विणए वेयावच्चे आलावे संलावे उच्चासणे समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झ विणयपरिहीणं सुहुमं वा बायरं वा तुब्भे जाणह अहं न याणामि तस्स मिच्छामि दुक्कडं ( सूत्रं )

इदं च निगदसिद्धमेव, नवरमन्तरभाषा–आचार्यस्य भाषमाणस्यान्तरे भाषते, उपरिभाषा तूत्तरकालं तदेव किलाधिकं भाषते, अत्राचार्यो यदभिधत्ते तत् प्रतिपादयन्नाह—'अहमवि खामेमि' गाहा व्याख्या—अहमवि खामेमि तुब्भेत्ति

---

१ ततो वसतिं प्रतिलिख्य कालं निवेदयन्ति, अन्ये च भणन्ति–स्तुतिसमनन्तरं कालं निवेदयन्ति, एवं तु प्रतिक्रमणकालं तोलयन्ति यथा प्रतिक्राम्यतां स्तुत्यवसान एव प्रतिलेखनावेला भवति । गतं रात्रिकं, इदानीं पाक्षिकं, तत्रायं विधिः–यदा दैवसिकं प्रतिक्रान्ता भवन्ति निर्वर्त्तितप्रतिक्रमणेन तदा गुरवो निषीदन्ति, ततः साधवो वन्दित्वा भणन्ति–। अहमपि क्षमयामि युष्मान् इति भणितं भवति, एवं जघन्येन त्रय उत्कृष्टतः सर्वे.

भणियं होति, एवं जहण्णेणं तिण्णि उक्कोसेणं सव्वे खामिज्जंति, पच्छा गुरू उट्ठेऊणं जहाराइणियाए उद्धट्ठिओ चेव खामेति, इयरेवि जहाराइणियाए सव्वेवि अवणउत्तमंगा भणंति–देवसियं पडिक्कंतं पक्खियं खामेमो पण्णरसण्हं दिवसाणमित्यादि, एवं सेसगावि जहाराइणियाए खामेंति, पच्छा वंदित्ता भणंति–देवसियं पडिक्कंतं पक्खियं पडिक्कमावेह, तओ गुरू गुरुसंदिट्ठो वा पक्खियपडिक्कमणं कड्ढति, सेसगा जहासत्तिं काउस्सग्गादिसंठिया धम्मज्झाणोवगया सुणेंति, कड्ढिए मुलुत्तरगुणेहिं जं खंडियं तस्स पायच्छित्तनिमित्तं तिण्णि ऊसाससयाणि काउस्सग्गं करेंति, बारसउज्जोयकरेत्ति भणियं होति, पारिए उज्जोयकरे थुइं कड्ढंति, पच्छा उवविठ्ठा मुहणंतगं पडिलेहित्ता वंदंति पच्छा रायाण पूसमाणवा अतिक्कंते मंगलिज्जे कज्जे बहुमन्नंति, सत्तुपरक्कमेण अखंडियनियबलस्स सोभणो कालो गओ अण्णोऽवि एवं चेव उवट्ठिओ, एवं पक्खियविणओवयारं खामेंति बितियखामणासुत्तेणं, तच्चेदं—

---

१ क्षाम्यन्ते, पश्चात् गुरुरुत्थाय यथारात्निकमूर्ध्वस्थित एव क्षमयति, इतरेऽपि यथारात्निकं सर्वेऽप्यवनतोत्तमाङ्गा भणन्ति–दैवसिकं प्रतिक्रान्तं पाक्षिकं क्षमयामः पञ्चदशसु दिवसेषु, एवं शेषा अपि यथारात्निकं क्षमयन्ति, पश्चाद् वन्दित्वा भणन्ति–दैवसिकं प्रतिक्रान्तं पाक्षिकं प्रतिक्रामयत, ततो गुरुर्गुरुसंदिष्टो वा पाक्षिकप्रतिक्रमणं कथयति, शेषा यथाशक्ति कायोत्सर्गादिसंस्थिता धर्मध्यानोपगताः शृण्वन्ति, कथिते मूलोत्तरगुणेषु यत् खण्डितं तस्य प्रायश्चित्तनिमित्तं त्रीण्युच्छ्वासशतानि कायोत्सर्गं कुर्वन्ति, द्वादशोद्योतकरानिति भणितं भवति, पारिते उद्योतकरे स्तुतिं कथयन्ति, पश्चादुपविष्टा मुखानन्तकं प्रतिलिख्य वन्दन्ते, पश्चात् राजानं पुष्पमाणवा अतिक्रान्ते माङ्गलिके कार्ये बहुमन्यन्ते–शत्रुपराक्रमेणाखण्डितनिजबलस्य शोभनः कालो गतः एवमेवान्योऽपि उपस्थितः, एवं पाक्षिकविनयोपचारं क्षमयन्ति द्वितीयक्षामणासूत्रेण,

इच्छामि खमासमणो ! पियं च मे जं भे हट्ठाणं तुट्ठाणं अप्पायंकाणं अभग्गजोगाणं सुसीलाणं सुव्वयाणं सायरियउवज्झायाणं णाणेणं दंसणेणं चरित्तेणं तवसा अप्पाणं भावेमाणाणं बहुसुभेणं भे दिवसो पोसहो पक्खो वतिक्कंतो, अण्णो य भे कल्लाणेणं पज्जुवट्ठिओ सिरसा मणसा मत्थएण वंदामि ( सूत्रम् )

निगदसिद्धं, आयरिआ[1] भणंति—साहूहिं समं जमेयं भणियंति, तओ चेइयवंदावणं साधुवंदावणं च निवेदितुंकामा भणन्ति—

इच्छामि खमासमणो ! पुव्विं चेइयाइं वंदित्ता नमंसित्ता तुज्झं पायमूले विहरमाणेणं जे केइ बहुदेवसिया साहुणो दिट्ठा सम(मा)णा वा वसमाणा वा गामाणुगामं दुइज्जमाणा वा, राइणिया संपुच्छंति ओमराइणिया वंदंति अज्जा वंदंति अज्जियाओ वंदंति सावया वंदंति सावियाओ वंदंति अहंपि निस्सल्लो निक्कसाओ ( तिकट्टु ) सिरसा मणसा मत्थएण वंदामि ॥ अहमवि वंदावेमि चेइयाइं ( सूत्रम् )

निगदसिद्धं, नवरं समणो—वुड्ढवासी वसमाणो—णवविगप्पविहारी, वुड्ढवासी जंघाबलपरिहीणो णव विभागे खेत्तं काऊण विहरति, नवविगप्पविहारी पुण उउबद्धे अट्ठ मासा मासकप्पेण विहरति, एए अट्ठ विगप्पा, वासावासं एगंमि चेव ठाणे

---

[1] आचार्या भणन्ति—साधुभिः समं यदेतत् भणितमिति, ततश्चैत्यवन्दनं साधुवन्दनं च निवेदयितुकामा भणन्ति—नवरं श्रमणो—वृद्धावासः वैश्रमणो (वसन्)—नवविकल्पविहारः, वृद्धावासः परिक्षीणजङ्घाबलो नव विभागान् क्षेत्रं कृत्वा विहरति, नवकल्पविहारः पुनः ऋतुबद्धेऽष्ट मासान् मासकल्पेन विहरति, एतेऽष्ट विकल्पाः वर्षावासमेकस्मिन् स्थाने.

करेंति, एस णवविगप्पो, अत्राचार्यो भणति–मत्थएण वंदामि अहंपि तेसिंति, अण्णे भणंति–अहमवि वंदावेमित्ति, तओ अप्पगं गुरूणं निवेदंति चउत्थखामणासुत्तेणं, तच्चेदं—

इच्छामि खमासमणो! उवट्ठिओमि तुब्भण्हं संतियं अहा कप्पं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुच्छणं वा (रयहरणं वा) अक्खरं वा पयं वा गाहं वा सिलोगं वा (सिलोगद्धं वा) अट्ठं वा हेउं वा पसिणं वा वागरणं वा तुब्भेहिं (सम्मं) चियत्तेण दिण्णं मए अविणएण पडिच्छियं तस्स मिच्छामि दुक्कडं (सूत्रम्)

निगदसिद्धं, आयरिआ भणंति–'आयरियसंतियं'ति य अहंकारवज्जणत्थं, किं ममात्रेति, तओ जं विणइया तमणुसट्ठिं बहु मन्नंति पंचमखामणासुत्तेण, तच्चेदं—

इच्छामि खमासमणो! कयाइं च मे कितिकम्माइं आयारमंतरे विणयमंतरे सेहिओ सेहाविओ संगहिओ उवगहिओ सारिओ वारिओ चोइओ पडिचोइओ अब्भुट्ठिओऽहं तुब्भण्हं तवतेयसिरीए इमाओ चातुरंतसंसारकंताराओ साहट्टु नित्थरिस्सामित्तिकट्टु सिरसा मणसा मत्थएण वन्दामि (सूत्रं)

निगदसिद्धं, संगहिओ-णाणादीहिं सारिओ-हिए पवत्तिओ वारिओ-अहियाओ निवत्तिओ चोइओ-खलणाए पडिचोइओ—

---

१ करोति, एष नवमो विकल्पः। मस्तकेन वन्देऽहमपि तेषामिति, अन्ये भणन्ति–अहमपि वन्दयामीति, तत आत्मानं गुरुभ्यो निवेदयन्ति चतुर्थक्षामणासूत्रेण, आचार्या भणन्ति–आचार्यसत्कमिति चाहङ्कारवर्जनार्थं, ततो यत् विनायितास्तामनुशास्तिं बहु मन्यन्ते पञ्चमक्षामणासूत्रेण, संगृहीतः–ज्ञानादिभिः सारितः–हिते प्रवर्त्तितः वारितोऽहितात् निवर्त्तितः चोदितः स्खलनायां प्रतिचोदितः

पुणो २ अवत्थं उवट्ठिउत्ति, पच्छा आयरिओ भणइ–'नित्थारगपारग'त्ति नित्थारगपारगा होहत्ति, गुरुणोत्ति, एयाइं वयणाइंति वक्कसेसमयं गाथार्थः ॥ १५२९ ॥ एवं सेसाणवि साहूणं खामणावंदणं करेंति, अह वियालो वाघाओ वा ताहे सत्तण्हं पंचण्हं तिण्हं वा, पच्छा देवसियं पडिक्कमंति, केइ भणंति–सामण्णेणं, अन्ने भणंति–खामणाइयं, अण्णे चरित्तुस्सग्गाइयं, सेज्जदेवयाए य उस्सग्गं करेंति, पडिक्कंताणं गुरूसु वंदिएसु वड्ढमाणीओ तिण्णि थुइओ आयरिया भणंति, इमेवि अंजलिमउलियग्गहत्था समत्तीए नमोक्कारं करेंति, पच्छा सेसगावि भणंति, तद्दिवसं नवि सुत्तपोरिसी नवि अत्थपोरुसी थुईओ भणंति जस्स जत्तियाओ एंति, एसा पक्खियपडिक्कमणविही मूलटीकाकारेण भणिया, अण्णे पुण आयरणाणुसारेण भणंति–देवसिए पडिक्कंते खामिए य तओ पढमं गुरू चेव उट्ठित्ता पक्खियं खामेंति जहाराइणियाए, तओ उवविसंति, एवं सेसगावि जहाराइणिया खामेत्ता उवविसंति, पच्छा वंदित्ता भणंति–देवसियं पडिक्कंतं पक्खियं

---

१ पुनः पुनरवस्थामुपस्थापितः, पश्चादाचार्या भणन्ति–निस्तारकपारगा भवतेति, गुरूणामिति एतानि वचनानीति वाक्यशेषः। एवं शेषाणामपि साधूनां क्षामणावन्दनकं कुर्वन्ति, अथ विकालो व्याघातो वा तदा सप्तानां पञ्चानां त्रयाणां वा, पश्चाद्दैवसिकं प्रतिक्राम्यन्ति, केचित् भणन्ति–सामान्येन, अन्ये भणन्ति–क्षामणादिकं, अन्ये चारित्रोत्सर्गादिकं, शय्यादेवतायाश्चोत्सर्गं कुर्वन्ति, प्रतिक्राम्यत्सु गुरुषु वन्दितेषु (च) वर्धमानास्तिस्रः स्तुतीर्गुरवो भणन्ति, इमेऽपि अञ्जलिमुकुलिताग्रहस्ताः समाप्तौ नमस्कारं कुर्वन्ति, पश्चाच्छेषा अपि भणन्ति, तद्दिवसे नैव सूत्रपौरुषी नैवार्थपौरुषी, स्तुतीर्भणन्ति येन यावत्योऽधीताः, एष पाक्षिकप्रतिक्रमणविधिर्मूलटीकाकारेण भणितः, अन्ये पुनः आचरणानुसारेण भणन्ति–दैवसिके प्रतिक्रान्ते क्षामिते च ततः प्रथमं गुरुरेवोत्थाय पाक्षिकं क्षमयन्ति यथारात्निकं, तत उपविशन्ति, एवं शेषा अपि यथारात्निकं क्षमयित्वोपविशन्ति, पश्चाद्वन्दित्वा भणन्ति–दैवसिकं प्रतिक्रान्तं पाक्षिकं

पडिक्कमावेह, इत्यादि पूर्ववत्, एवं चाउमासियंपि, नवरं काउस्सग्गे पंचुस्सासंसयाणि, एवं संवच्छरियंपि नवरं काउस्सग्गो अट्ठसहस्सं उस्सासाणं, चाउमासियसंवच्छरिएसु सवेवि मूलगुणउत्तरगुणाणं आलोयणं दाउं पडिक्कमंति, खेत्तदेवयाए उस्सग्गं करेंति, केई पुण चाउमासिगे सिज्जदेवयाएवि उस्सग्गं करेंति, पभाए य आवस्सए कए पंचकल्लाणंगं गिण्हंति, पुव्वगहिए य अभिग्गहे निवेदेंति, अभिग्गहा जइ सम्मं णाणुपालिया तो कुइयककराइयस्स उस्सग्गं करेंति, पुणोऽवि अण्णे गिण्हंति, निरभिग्गहाण न वट्टइ अच्छिउं, संवच्छरिए य आवस्सए कए पाओसिए पज्जोसवणा कप्पो कड्ढिज्जति, सो पुण पुव्विं च अणागयं पंचरत्तं कहिज्जइ य, एसा सामायारित्ति, एनामेव कालतः उपसंहरन्नाह भाष्यकारः—

चाउम्मासियवरिसे आलोअण नियमसो उ दायव्वा। गहणं अभिग्गहाण य पुव्वगहिए निवेएउं ॥२३२॥ (भा०)

चाउम्मासियवरिसे उस्सग्गो खित्तदेवयाए उ। पक्खिय सिज्जसुरीए करिंति चउमासिए वेगे ॥ २३३॥ (भा०)

गाथाद्वयं गतार्थं। अधुना नियतकायोत्सर्गप्रतिपादनायाह—

१ प्रतिक्रामयत, एवं चातुर्मासिकमपि, परं कायोत्सर्गे पञ्चोच्छ्वासशतानि, एवं सांवत्सरिकमपि नवरं कायोत्सर्गोऽष्टसहस्रमुच्छ्वासानां। चातुर्मासिकसांवत्सरिकयोः सर्वेऽपि मूलोत्तरगुणानामालोचनां दत्त्वा प्रतिक्राम्यन्ति, क्षेत्रदेवताया उत्सर्गं कुर्वन्ति, केचित् पुनश्चातुर्मासिके शय्यादेवताया अपि कायोत्सर्गं कुर्वन्ति, प्रभाते चावश्यके कृते पञ्चकल्याणकं गृह्णन्ति, पूर्वगृहीतांश्चाभिग्रहान् निवेदयन्ति, अभिग्रहा यदि पुनः सम्यग् नानुपालितास्तदा कूजितकर्करायिततयोत्सर्गं कुर्वन्ति, पुनरपि अन्यान् गृह्णन्ति, निरभिग्रहैर्न वर्तते स्थातुं, सांवत्सरिके चावश्यके कृते प्रदोषे पर्युषणाकल्पः कथ्यते, स पुनः पूर्वमेवानागते पञ्चरात्रे कथ्यते च, एषा सामाचारीति।

देसिय राइय पक्खिय चउमासे या तहेव वरिसे य। एएसु हुंति नियया उस्सग्गा अनिअया सेसा ॥ १५२९ ॥
साय सयं गोसऽद्धं तिन्नेव सया हवंति पक्खंमि। पंच य चाउम्मासे अट्ठसहस्सं च वारिसए ॥ १५३० ॥
चत्तारि दो दुवालस वीसं चत्ता य हुंति उज्जोआ। देसिय राइय पक्खिय चाउम्मासे अ वरिसे य ॥ १५३१ ॥
पणवीसमद्धतेरस सिलोग पन्नत्तरिं च बोद्धव्वा । सयमेगं पणवीसं बे बावन्ना य वारिसिए ॥ १५३२ ॥

निगदसिद्धाः, नवरं शेषा–गमनादिविषया इति, साम्प्रतं नियतकायोत्सर्गाणामोघत उच्छ्वासमानं प्रतिपादयन्नाह— 'साय'त्ति सायं–प्रदोषः तत्र शतमुच्छ्वासानां भवति, चतुर्भिरुद्योतकैरिति, भावित एवायमर्थः प्राक्, 'गोसद्धं'ति प्रत्यूषे पञ्चाशद्यतस्तत्रोद्योतकरद्वयं भवति, शेषं प्रकटार्थमिति गाथार्थः ॥ १५३० ॥ उच्छ्वासमानं चोपरिष्टाद् वक्ष्यामः 'पायसमा उस्सासा' इत्यादिना । साम्प्रतं दैवसिकादिषूद्योतकरमानमभिधित्सुराह–'चत्तारि'त्तिगाहा भावितार्था ॥ १५३१ ॥ अधुना श्लोकमानमुपदर्शयन्नाह–'पणवीसे'तिगाहा निगदसिद्धैव, नवरं चतुर्भिरुच्छ्वासैः श्लोकः परिगृह्यते ॥ १५३२ ॥ इत्युक्ता नियतकायोत्सर्गवक्तव्यता, इदानीमनियतकायोत्सर्गवक्तव्यतावसरः, तत्रेयं गाथा—

गमणागमणविहारे सुत्ते वा सुमिणदंसणे राओ । नावानइसंतारे इरियावहियापडिक्कमणं ॥ १५३३ ॥
भत्ते पाणे सयणासणे य अरिहंतसमणसिज्जासु । उच्चारे पासवणे पणवीसं हुंति उस्सासा ॥ २३४ ॥ द्वारम् (भा०)
नियआलयाओ गमणं अन्नत्थ उ सुत्तपोरिसिनिमित्तं । होइ विहारो इत्थवि पणवीसं हुंति ऊसासा ॥ १ ॥ (प्र०)
उद्देससमुद्देसे सत्तावीसं अणुन्नवणियाए । अट्ठेव य ऊसासा पट्ठवण पडिक्कमणमाई ॥ १५३४ ॥

जुज्जइ अकालपढियाइएसु दुट्ठु अ पडिच्छियाईसु । समणुन्नसमुद्देसे काउस्सग्गस्स करणं तु ॥ १५३५ ॥
जं पुण उद्दिसमाणा अणइक्कंताव‍ि कुणह उस्सग्गं। एस अकओवि दोसो परिघिप्पइ किं मुहा भंते!१ ॥१५३६॥
पावुग्घाई कीरइ उस्सग्गो मंगलंति उद्देसो । अणुवहियमंगलाणं मा हुज्ज कहिंचि णे विग्घं ॥ १५३७ ॥
पाणवहमुसावाए अदत्तमेहुणपरिग्गहे चेव । सयमेगं तु अणूणं ऊसासाणं हविज्जाहि ॥ १५३८ ॥
नावा(ए) उत्तरिउं वहमाई तह नइं च एमेव । संतारेण चलेण व गंतुं पणवीस ऊसासा ॥ १ ॥ ( प्र० )

[1]गमणं भिक्षादिनिमित्तमन्यग्रामादौ, आगमणं तत्तो चेव, इत्थ इरियावहियं पडिक्कमिऊण पंचवीसुस्सासो काउस्सग्गो कायव्वो॥ १५३३ ॥ तथा चामुमेवावयवं विवृण्वन्नाह भाष्यकारः—'भत्ते पाणे सयणासणे' गाहा, भत्तपाणनिमित्तमन्नगामादिगया जइ न ताव वेलेति ता ईरियावहियं पडिक्कमिऊण अच्छंति । आगयावि पुणोऽवि पडिक्कमंति, एवं सयणासणनिमित्तंपि, सयणं—संथारगो वसही वा, आसणं—पीढगादि, 'अरहंतसमणसेज्जासु'त्ति चेइघरं गया पडिक्कमिऊणं अच्छंति, एवं समणसेज्जंमि—साहुवसतिमित्यर्थः, 'उच्चारपासवणे'त्ति उच्चारे वोसिरिए पासवणे य जतिवि हत्थमेत्तं गया

---

१ गमनं भिक्षादिनिमित्तमन्यग्रामादौ आगमनं तत एवाऽऽर्यापथिकीं प्रतिक्रम्य पञ्चविंशत्युच्छ्वासः कायोत्सर्गः कर्त्तव्यः, भक्तपाननिमित्तमन्यग्रामादिगता यदि तावन्न वेलेति तदैर्यापथिकीं प्रतिक्रम्य तिष्ठन्ति, आगता अपि पुनरपि प्रतिक्राम्यन्ति, एवं शयनासननिमित्तमपि, शयनं संस्तारको वसतिर्वा, आसनं पीठादि 'अर्हच्छ्रमणशय्यास्वि'ति चैत्यगृहं गताः प्रतिक्रम्य तिष्ठन्ति, एवं श्रमणशय्यास्विति साधुवसतौ 'उच्चारप्रस्रवण'इति उच्चारं व्युत्सृज्य प्रस्रवणं च यद्यपि हस्तमात्रं गता—

[1]तोऽवि आगया पडिक्कमंति, अह मत्तए वोसिरियं होज्ज ताहे जो तं परिठवेति सो पडिक्कमति, सठाणेसु पुण जइ हत्थसयं नियत्तस्स वाहिं तो पडिक्कमंति, अह अंतो न पडिक्कमंति, एतेसु ठाणेसु काउस्सग्गपरिमाणं पणुवीसं होति ऊसासत्ति गाथार्थः 'विहारे'त्ति विहारं व्याचिख्यासुराह–'निययालयाउ गमणं'गाहा [गाथा]ऽन्यकर्तृकी सोपयोगा च निगदसिद्धा च। 'सुत्ते व'त्ति सूत्रद्वारं व्याचिख्यासुराह–'उद्देससमुद्देसे' गाहा व्याख्या—सुत्तस्स उद्देसे समुद्देसे य जो काउस्सग्गो कीरइ तत्थ सत्तावीसमुस्सासा भवंति, अणुण्णवणयाए य, एत्थ जइ असढो सयं चेव पारेइ, अह सढो ताहे आयरिया अट्ठेव ऊसासा, 'पट्ठवणपडिक्कमणमाई' पट्ठविओ कज्जनिमित्तं जइ खलइ अट्ठुस्सासं उस्सग्गं करिय गच्छइ, वितियवारं जति तो सोलस्सुस्सासं, ततियवारं जइ तो न गच्छति, अण्णो पट्ठविज्जति, अवस्सकज्जे वा देवे वंदिय पुरओ साहू ठवेत्ता अण्णेण समं गच्छति, कालपडिक्कमणेवि अट्ठउस्सासा, आदिसद्दाओ कालगिण्हण पट्ठवणे य

---

१ ततोऽप्यागताः प्रतिक्राम्यन्ति, अथ मात्रके व्युत्सृष्टं भवेत् तदा यस्तं परिष्ठापयेत् स प्रतिक्राम्येत्, स्वस्थानात् पुनर्यदि हस्तशतनिर्वृत्ताद्बहिस्तदा प्रतिक्राम्यन्ति, अथान्तर्न प्रतिक्राम्यन्ति, एतेषु स्थानेषु कायोत्सर्गपरिमाणं पञ्चविंशतिरुच्छ्वासा इति। सूत्रस्योद्देशे समुद्देशे च यः कायोत्सर्गः क्रियते तत्र सप्तविंशतिरुच्छ्वासा भवन्ति, अनुज्ञायां च, अत्र यद्यशठः स्वयमेव पारयति, अथ शठस्तदाऽऽचार्या अष्टैवोच्छ्वासान्, प्रस्थापनप्रतिक्रमणादौ–प्रस्थापितः कार्यनिमित्तं यदि स्खलति अष्टोच्छ्वासमुत्सर्गं कृत्वा गच्छति, द्वितीयवारं यदि तदा षोडशोच्छ्वासं, तृतीयवारं यदि तदा न गच्छति, अन्यः प्रस्थाप्यते, अवश्यकार्ये वा देवान् वन्दित्वा पुरतः साधून् स्थापयित्वाऽन्येन समं गच्छति, कालप्रतिक्रमणेऽप्यष्टोच्छ्वासाः, आदिशब्दात् कालग्रहणे प्रस्थापने च.

गोयरचरियाए सुयखंधपरियट्टणे अट्ठ चेव, केसिंचि परियट्टणे पंचवीस, तथा चाह–'सुयखंधपरियट्टणं मंगलत्थं (उज्जोय) काउस्सग्गं काऊण कीरइ'त्ति गाथार्थः ॥ १५३४ ॥ अत्राह चोदकः—'जुज्जइ अकालपढियाइ' गाथा; युज्यते–संगच्छते घटते अकालपठितादिषु कारणेषु सत्सु अकालपठितमादिशब्दात् काले न पठितमित्यादि, दुट्ठु च प्रतीच्छितादि–दुष्टविधिना प्रतीच्छितं आदिशब्दात् श्रुतहीलनादिपरिग्रहः, 'समणुण्णसमुद्देसे'त्ति समनुज्ञासमुद्देशयोः, समनुज्ञायां च समुद्देशे च कायोत्सर्गस्य करणं युज्यत एवेति योगः, अतिचारसम्भवादिति गाथार्थः ॥ १५३५ ॥ यत् पुनरुद्दिश्यमानाः श्रुतमनतिक्रान्ता अपि निर्विषयत्वादपराधमप्राप्ता अपि 'कुणह उस्सग्गं'ति कुरुत कायोत्सर्गं एषः अकृतोऽपि दोषः कायोत्सर्गशोध्यः परिगृह्यते किं मुधा भदन्त !, न चेत् परिगृह्य(ते) न कर्त्तव्यः तदुद्देशकायोत्सर्ग इति गाथाभिप्रायः ॥ १५३६ ॥ अत्राहाचार्यः–'पावुग्घाई कीरइ' गाहा निगदसिद्धा ॥१५३७॥ 'सुमिणदंसणे राउ'त्ति द्वारं व्याख्यानयन्नाह–'पाणवहमुसावाए' गाहा, सुमिणंमि पाणवहमुसावाए अदत्तमेहुणपरिग्गहे चेव आसेविए समाणे सयमेगं तु अणूणं उस्सासाणं भविज्जाहि, मेहुणे दिट्ठिविप्परियासियाए सयं इत्थीविप्परियासयाए अट्ठसयंति ॥ उक्तं च—"दिट्ठीविप्परियासे सय मेहुन्नंमि थीविपरियासे । ववहारेणट्ठसयं अणभिस्संगस्स साहुस्स ॥ १ ॥" गाथार्थः ॥ १५३८ ॥ 'णावाणतिसंतार'त्ति द्वारत्रयं व्याचिख्यासुराह–'नावाए उत्तरिउं वहगाई' गाहा, गाथेयमन्यकर्तृकी सोपयोगा च निगदसिद्धा, इदानीमुच्छ्वासमानप्रतिपादनायाह—

---

१ गोचरचर्यायां श्रुतस्कन्धपरावर्त्तनेऽष्टैव, केषाञ्चित् परावर्त्तने पञ्चविंशतिः, श्रुतस्कन्धपरावर्त्तनं मङ्गलार्थं कायोत्सर्गं कृत्वा क्रियते । २ स्वप्ने प्राणवधमृषावादादत्तमैथुनपरिग्रहेष्वासेवितेषु सत्सु शतमेकमनूनमुच्छ्वासानां भवेत्, मैथुने दृष्टिविपर्यासे शतं स्त्रीविपर्यासेऽष्टशतमिति.

पायसमा ऊसासा कालपमाणेण हुंति नायव्वा । एयं कालपमाणं उस्सग्गेणं तु नायव्वं ॥ १५३९ ॥

'पायसमा उस्सासा काल' गाहा व्याख्या—नवरं पादः-श्लोकपादः ॥ १५३९ ॥ व्याख्याता गमनेत्यादिद्वारगाथा, अधुनाऽऽद्यद्वारगाथागतमशठद्वारं व्याख्यायते, इह विज्ञानवता शाठ्यरहितेनात्महितमितिकृत्वा स्ववलापेक्षया कार्योत्सर्गः कार्यः, अन्यथाकरणेऽनेकदोषप्रसङ्गः, तथा चाह भाष्यकारः—

जो खलु तीसइवरिसो सत्तरिवरिसेण पारणाइसमो । विसमे व कूडवाही निव्विन्नाणे हु से जड्डे ॥ २३५ ॥(भा०)
समभूमेवि अइभरो उज्जाणे किमुअ कूडवाहिस्स?। अइभारेणं भज्जइ तुत्तयघाएहि अ मरालो॥ २३६॥ (भा०)
एमेव बलसमग्गो न कुणइ मायाइ सम्ममुस्सग्गं । मायावडिअं कम्मं पावइ उस्सग्गकेसं च ॥ १ ॥ ( प्र० )
मायाए उस्सग्गं सेसं च तवं अकुव्वओ सहुणो । को अन्नो अणुहोही सकम्मसेसं अणिज्जरियं ? ॥ १५४० ॥
निकूडं सविसेसं वयाणुरूवं बलाणुरूवं च । खाणुव्व उद्धदेहो काउस्सग्गं तु ठाइज्जा ॥ १५४१ ॥

व्याख्या—यः कश्चित् साधुः, खलुशब्दो विशेषणार्थः, त्रिंशद्वर्षः सन् खलुशब्दाद् वलवानातङ्करहितश्च सप्ततिवर्षेणान्येन वृद्धेन साधुना पारणाइसमो—कायोत्सर्गप्रारम्भपरिसमाप्त्या तुल्य इत्यर्थः। विषम इव—उट्टंकादाविव कूटवाही वलीवर्द्द इव निर्विज्ञान एवासौ 'जड' जड्डः, स्वहितपरिज्ञानशून्यत्वात्, तथा चात्महितमेव सम्यक्कायोत्सर्गकरणं स्वकर्मक्षयफलत्वादिति गाथार्थः ॥ २३५ ॥ अधुना दृष्टान्तमेव विवृण्वन्नाह—'समभूमेवि अइभरो' गाहा व्याख्या—समभूमावपि अतिभरविषमवाहित्वात् 'उज्जाणे किमुत कूडवाहिस्स' ऊर्द्ध्वं यानमस्मिन्नित्युद्यानम्—उदकं तस्मिन्नुद्याने किमुत?, सुत-

रामित्यर्थः, कस्य ?–कूटवाहिनो–बलीवर्दस्य, तस्य च दोषद्वयमित्याह–'अतिभारेणं भज्जति तुत्तयघाएहि य मरालो'
त्ति अतिभारेण भज्यते यतो विषमवाहिन एवातिभारो भवति, तुत्तयघातैश्च विषमवाहोऽथ पीड्यते, तुत्तगो–पाइणगो
मरालो–गलिरिति गाथार्थः ॥ २३६ ॥ साम्प्रतं दार्ष्टान्तिकयोजनां कुर्वन्नाह–'एमेव बलसमग्गो'गाहा व्याख्या–इयमन्य-
कर्तृकी सोपयोगा च व्याख्यायते, 'एमेव'मरालबलीवर्दवत् बलसमग्रः सन्(यो)न करोति मायया करणेन सम्यक्–साम-
र्थ्यानुरूपं कायोत्सर्गं स मूढः मायाप्रत्ययं कर्म प्राप्नोति नियमत एव, तथा कायोत्सर्गक्लेशं च निष्फलं प्राप्नोति, तथाहि–
निर्मायस्यापेक्षारहितस्य स्वशक्त्यनुरूपं च कुर्वत एव सर्वमनुष्ठानं सफलं भवतीति गाथार्थः ॥ अधुना मायावतो
दोषानुपदर्शयन्नाह–'मायाए उस्सग्गं'गाहा, मायया कायोत्सर्गं शेषं च तपः–अनशनादि अकुर्वतः 'सहिष्णोः'समर्थस्य
कश्च तस्मादन्योऽनुभविष्यति ?, किं–स्वकर्म[वि]शेषमनिर्जरितं, शेषता चास्य सम्यक्त्वप्राप्त्योत्कृष्टकर्मापेक्षयेति, उक्तं च—
"सत्तण्हं पगडीणं अब्भिंतरओ उ कोडीकोडीए । काऊण सागराणं जइ लहइ चउण्हमण्णयरं ॥ १ ॥" अन्ये पठन्ति—
'एमेवय उस्सग्गं'ति, न चायमतिशोभनः पाठ इति गाथार्थः॥ १५४० ॥ यतश्चैवमतः–'निकूडं सविसेसं'गाहा, 'निष्कूट'–
मित्यशठं 'सविशेष'मिति समबलादन्यस्मात् सकाशात्, न चाहमहमिकया, किं तु वयोऽनुरूपं, स्थाणुरिवोर्द्ध्वदेहो
निष्कम्पः समशत्रुमित्रः कायोत्सर्गं तु तिष्ठेत्, तुशब्दादन्यच्च भिक्षाटनाद्येवंभूतमेवानुतिष्ठत(ष्ठेत्) इति गाथार्थः ॥ १५४१ ॥
इदानीं वयो बलं चाधिकृत्य कायोत्सर्गकरणविधिमभिधत्ते—

१ सप्तानां प्रकृतीनामभ्यन्तरे तु कोटीकोट्याः । कृत्वा सागरोपमाणां यदि लभते चतुर्णामन्यतरत् ( तर्हि लभते ) ॥ १ ॥

तरुणो वलवं तरुणो अ दुब्बलो थेरओ वलसमिद्धो। थेरो अवलो चउसुवि भंगेसु जहावलं ठाई ॥ १५४२ ॥

तरुणो वलवान् १ तरुणश्च दुर्वलः २ स्थविरो वलसमृद्धः ३ स्थविरो दुर्वलः ४ चतुर्ष्वपि भङ्गकेषु यथावलं तिष्ठति वलानुरूपमित्यर्थः, न त्वभिमानतः, कथमनेनापि वृद्धेन तुल्य इत्यवलवतापि स्थातव्यम्, उत्तरत्रासमाधानग्लानादावधिकरणसम्भवादिति गाथार्थः ॥ १५४२ ॥ गतं सप्रसङ्गमशठद्वारं, साम्प्रतं शठद्वारावसरस्तत्रेयं गाथा—

पयलायइ पडिपुच्छइ कंटययवियारपासवणधम्मे । नियडी गेलन्नं वा करेइ कूडं हवइ एयं ॥ १५४३ ॥

कायोत्सर्गकरणवेलायां मायया प्रचलयति–निद्रां गच्छति, प्रतिपृच्छति सूत्रमर्थं वा, कण्टकं अपनयति, 'वियार'त्ति पुरीषोत्सर्गाय गच्छति, 'पासवणे'त्ति कायिकां व्युत्सृजति, 'धम्मे'त्ति धर्मं कथयति, 'निकृत्या' मायया ग्लानत्वं वा करोति कूटं भवत्येतद्–अनुष्ठानमिति गाथार्थः ॥ १५४३ ॥ गतं शठद्वारम्, अधुना विधिद्वारमाख्यायते, तत्रेयं गाथा—

पुव्वं ठंति य गुरुणो गुरुणा उस्सारियंमि पारेंति। ठायंति सविसेसं तरुणा उ अनूणविरिया उ ॥ १५४४ ॥

चउरंगुल मुहपत्ती उज्जूए डव्वहत्थ रयहरणं । वोसट्ठचत्तदेहो काउस्सग्गं करिज्जाहि ॥ १५४५ ॥

घोडग लयाइ खंभे कुड्डे माले अ सवरि वहु नियले। लंवुत्तर थण उद्धी संजय खलि[णे य]वायसकविट्ठे ॥ १५४६ ॥

सीसुकंपिय सूई अंगुलिभमुहा य वारुणी पेहा। नाहीकरयलकुप्पर उस्सारिय पारियंमि थुई ॥ १५४७ ॥

'पुव्वं ठंति य गुरुणो' गाहा प्रकटार्था ॥ १५४४ ॥ 'चउरंगुल'त्ति चत्तारि अंगुलाणि पायाणं अंतरं करेयव्वं, मुहपोत्तिं 'उज्जुए'त्ति दाहिणहत्थेण मुहपोत्तिया घेत्तव्वा, डव्वहत्थे रयहरणं कायव्वं, एतेण विहिणा 'वोसट्ठचत्तदेहो'त्ति पूर्ववत्, काउस्सग्गं करिज्जाहित्ति गाथार्थः ॥ १५४५ ॥ गतं विधिद्वारम्, अधुना दोषावसरः, तत्रेदं गाथाद्वयं—'घोडगे'त्यादि—

आसुव्व विसमपायं गायं ठावित्तु ठाइ उस्सग्गे । कंपइ काउस्सग्गे लयव्व खरपवणसंगेणं ॥ १ ॥ खंभे वा कुड्डे वा अवठंभिय ठाइ काउसग्गं तु । माले य उत्तमंगं अवठंभिय ठाइ उस्सग्गं ॥ २ ॥ सबरी वसणविरहिया करेहि सागारियं जह ठवेइ । ठइऊण गुज्झदेसं करेहि तो कुणइ उस्सग्गं ॥ ३ ॥ अवणामिउत्तमंगो काउस्सग्गं जहा कुलवहुव्व । नियलियओविव चलणे वित्थारिय अहव मेलविउं ॥ ४ ॥ काऊण चोलपट्टं अविधीए नाभिमंडलस्सुवरिं । हिट्ठा य जाणुमित्तं चिट्ठई लंबुत्तरुस्सग्गं ॥ ५ ॥ उच्छाईऊण य थणे चोलगपट्टेण ठाइ उस्सग्गं । दंसाइरक्खणट्ठा अहवा अन्नाणदोसेणं ॥ ६ ॥ मेलित्तु पण्हियाओ चलणे वित्थारिऊण बाहिरओ । ठाउस्सग्गं एसो बाहिरउद्धी मुणेयव्वो ॥ ७ ॥ अंगुट्ठे मेलविउं वित्थारिय पण्हियाओ बाहिं तु । ठाउस्सग्गं एसो भणिओ अब्भिंतरुद्धित्ति ॥ ८ ॥ कप्पं वा पट्टं वा पाउणिउं संजइव्व उस्सग्गं । ठाइ य खलिणं व जहा रयहरणं अग्गओ काउं ॥ ९ ॥ भामेइ तहा दिट्ठिं चलचित्तो वायसुव्व उस्सग्गे । छप्पइआण भएणं कुणई अ पट्टं कविट्ठं व ॥ १० ॥ सीसं पंकपमाणो जक्खाइट्ठव्व कुणइ उस्सग्गं । मूयव्व हुअहुअंतो तहेव छिज्जंतमाईसु ॥ ११ ॥ अंगुलिभमुहाओवि य चालंतो तहय कुणइ उस्सग्गं । आलावगगणणट्ठा संठवणत्थं च जोगाणं ॥ १२ ॥ काउस्सग्गंमि ठिओ सुरा जह बुडबुडेइ अव्वत्तं । अणुपेहंतो तह वानरुव्व चालेइ ओट्ठउडे ॥ १३ ॥ एए काउस्सग्गं कुणमाणेण विबुहेण दोसा उ । सम्मं परिहरियव्वा जिणपडिकुट्ठत्तिकाऊणं ॥ १४ ॥

'नाभीकरयलकुप्पर उस्सारे पारियंमि थुइ'त्ति निर्युक्तिगाथाशकलं लेशतोऽदुष्टकायोत्सर्गावस्थानप्रदर्शनपरं विध्य-

न्तरसंग्रहपरं च, तत्र 'नाभि'त्ति नाभीओ हेट्ठो चोलपट्टो कायव्वो, करयलेत्ति सामण्णेणं हेट्ठा पलंबकरयले 'जाव कोप्परे'त्ति सोऽविय कोप्परेहिं धरेयव्वो, एवंभूतेन कायोत्सर्गः कार्यः, उस्सारिए य-काउस्सग्गे पारिए नमोक्कारेण अवसाणे थुई दायव्वेति गाथार्थः ॥ १५४७ ॥ गतं प्रासङ्गिकं, साम्प्रतं कस्येति द्वारं व्याख्यायते, तत्रोक्तदोषरहितोऽपि यस्यायं कायोत्सर्गो यथोक्तफलो भवति तमुपदर्शयन्नाह—

वासीचंदणकप्पो जो मरणे जीविए य समसण्णो । देहे य अपडिबद्धो काउस्सग्गो हवइ तस्स ॥ १५४८ ॥
तिविहाणुवसग्गाणं दिव्वाणं माणुसाण तिरियाणं । सम्ममहियासणाए काउस्सग्गो हवइ सुद्धो ॥ १५४९ ॥
इहलोगंमि सुभद्दा राया उइओद सिट्ठिभज्जा य । सोदासखग्गथंभण सिद्धी सग्गो य परलोए ॥ १५५० ॥

'वासीचंदनकप्पो'गाहा व्याख्या—वासीचन्दनकल्पः—उपकार्यपकारिणोर्मध्यस्थः, उक्तं च-"[2]जो चंदणेण बाहुं आलिंपइ वासिणा व तच्छेइ । संथुणइ जो व निंदइ महरिसिणो तत्थ समभावा ॥ १ ॥" अनेन परं प्रति माध्यस्थ्यमुक्तं भवति, तथा मरणे-प्राणत्यागलक्षणे जीविते च-प्राणसंधारणलक्षणे चशब्दादिहलोकादौ च समसञ्ज्ञः तुल्यबुद्धिरित्यर्थः, अनेन चात्मानं प्रति माध्यस्थ्यमुक्तं भवति, तथा देहे च-शरीरे चाप्रतिबद्धः चशब्दादुपकरणादौ च, कायो-

---

१ नाभितोऽधस्तात् चोलपट्टकः कर्त्तव्यः, करतलेति सामान्येन अधस्तात् प्रलम्बकरतलः यावत् कूर्पराभ्यां-सोऽपि च कूर्पराभ्यां धारयितव्यः, उत्सारिते च-कायोत्सर्गे पारिते नमस्कारेणावसाने स्तुतिर्दातव्या । २ यश्चन्दनेन बाहुमालिम्पति वास्या वा तक्षयति । संस्तौति यो वा निन्दति महर्षयस्तत्र समभावाः ॥ १ ॥

त्सर्गो यथोक्तफलो भवति तस्येति गाथार्थः ॥ १५४८ ॥ तथा–'तिविहाणुवसग्गाणं'गाहा, त्रिविधानां–त्रिप्रकाराणां
दिव्यानां–व्यन्तरादिकृतानां मानुषाणां–म्लेच्छादिकृतानां तैरश्चानां–सिंहादिकृतानां सम्यक्–मध्यस्थभावेन अतिसहनायां
सत्यां कायोत्सर्गो भवति शुद्धः–अविपरीत इत्यर्थः । ततश्चोपसर्गसहिष्णोः कायोत्सर्गो भवतीति गाथार्थः ॥१५४९॥ द्वारं।
साम्प्रतं फलद्वारमभिधीयते, तच्च फलमिहलोकपरलोकापेक्षया द्विधा भवति, तथा चाह ग्रन्थकारः–'इहलोगंमि' गाहा
व्याख्या–इहलोके यत् कायोत्सर्गफलं तत्र सुभद्रोदाहरणं–कथं?, वसंतपुरं नगरं, तत्थ जियसत्तुराया, जिणदत्तो सेट्ठी संजय-
सड्ढओ, तस्स सुभद्दा दारिया धुया, अतीवरूवस्सिणी ओरालियसरीरा साविगा य, सो तं असाहंमियाणं न देइ, तच्च-
नियसड्ढेणं चंपाओ वाणिज्जागएण दिट्ठा, तीए रूवलोभेण कवडसड्ढओ जाओ, धम्मं सुणेइ, जिणसाहू पूजेइ, अण्णया भावो
समुप्पण्णो, आयरियाणं आलोएइ, तेहिवि अणुसासिओ, जिणदत्तेण से भावं नाऊण धूया दिण्णा, वित्तो विवाहो,
केच्चिरकालस्सवि सो तं गहाय चंपं गओ, नणंदसासुमाइयाओ तच्चण्णियसड्ढिगाओ तं खिंसंति, तओ जुयगं घरं कयं,

---

१ वसन्तपुरं नगरं, तत्र जितशत्रू राजा, जिनदत्तः श्रेष्ठी संयतश्राद्धः, तस्य सुभद्रा बालिका दुहिताऽतीव रूपिणी उदारशरीरा श्राविका च, स ताम-साधर्मिकाय न ददाति, तच्चनिकश्राद्धेन चम्पातो वाणिज्यागतेन दृष्टा, तस्या रूपलोभेन कपटश्राद्धो जातः, धर्मं शृणोति, जिनसाधून् पूजयति, अन्यदा भावः समुत्पन्नः, आचार्याणां कथयति, तैरप्यनुशिष्टः, जिनदत्तेन तस्य भावं ज्ञात्वा दुहिता दत्ता, वृत्तो विवाहः, कियच्चिरेण कालेन सोऽपि तां गृहीत्वा चम्पां गतः, ननन्दृश्वश्र्वादिकास्तच्चनिकश्राद्धास्तां निन्दन्ति, ततः पृथग्गृहं कृतं,

तत्थाणेगे समणा समणीओ य पाउग्गनिमित्तमागच्छंति, तव्वण्णिगसड्ढिया भणंति, एसा संजयाणं दढं रत्तत्ति, भत्तारो से न पत्तियइत्ति, अण्णया कोई वण्णरूवाइगुणगणनिप्फणो तरुणभिक्खू पाउग्गनिमित्तं गओ, तस्स य वाउद्धुयं अच्छिमि कणगं पविट्ठं, सुभद्दाए तं जीहाए लिहिऊण अवणीयं, तस्स निलाडे तिलओ संकंतो, तेणवि वक्खित्तचित्तेण ण जाणिओ, सो नीसरति ताव तच्चणिगसड्ढिगाहिं अथक्कागयस्स भत्तारस्स स दंसिओ, पेच्छ इमं वीसत्थरमियसंकंतं भज्जाए संगतं तिलगंति, तेणवि चिंतियं–किमिदमेवंपि होज्जा ?, अहवा वलवंतो विसया अणेगभवब्भत्थगा य किन्न होइत्ति ?, मंदनेहो जाओ, सुभद्दाए कहवि विदिओ एस वुत्तंतो, चिंतियं च णाए–पावयणीओ एस उड्डाहो कहं फेडिज्ज ( डेमि ) त्ति, पवयणदेवयमभिसंधारिऊण रयणीए काउस्सग्गं ठिया, अहासंनिहिया काइ देवया तीए सीलसमायारं नाऊण आगया, भणियं च तीए–किं ते पियं करेमित्ति, तीए भणियं–उड्डाहं फेडेहि, देवयाए भणियं–फेडेमि, पच्चूसे इमाए नयरीए

---

१ तत्रानेके श्रमणाः श्रमण्यश्च प्रायोग्यनिमित्तमागच्छन्ति, तच्चनिकश्राद्धो भणन्ति–एषा संयतेषु दृढं रक्तेति, भर्त्ता तस्या न प्रत्येतीति, अन्यदा कोऽपि वर्णरूपादिगुणगणयुक्तस्तरुणभिक्षुः प्रायोग्यनिमित्तं गतः, तस्य च वायूद्धुतं रजोऽक्ष्णि प्रविष्टं, सुभद्रया तज्जिह्वयोल्लिख्यापनीतं, तस्य ललाटे तिलकः संक्रान्तः, तेनापि व्याक्षिप्तचित्तेन न ज्ञातः, स निस्सरति तावत्तच्चनिकश्राद्धीभिरकाण्डागताय भर्त्रे स दर्शितः, पश्येदं विश्वस्तरमणसंक्रान्तं भार्यायाः संगतं तिलकमिति, तेनापि चिन्तितं–किमिदमेवमपि भवेत् ?, अथवा वलवन्तो विषया अनेकभवाभ्यस्तकाश्चेति किं न भवतीति, मन्दस्नेहो जातः, सुभद्रया कथमपि ज्ञात एष वृत्तान्तः, चिन्तितं चानया–प्रावचनिक एष उड्डाहः कथं स्फेटयामीति ?, प्रवचनदेवतामभिसंधार्य रजनौ कायोत्सर्गे स्थिता, यथासन्निहिता काचिद्देवता तस्याः शीलसमाचारं ज्ञात्वाऽऽगता, भणितं च तया–किं ते प्रियं करोमीति, तया भणितं–उड्डाहं स्फेटय, देवतया भणितं–स्फेटयामि, प्रत्यूषेऽस्या नगर्यां

दाराणि थंभेमि, तओ आलग्गे(अद्दण्णे)सु नागरेसु आगासत्था भणिस्सामि—जाए परपुरिसो मणेणावि न चिंतिओ सा इत्थिया चालणीए पाणियं छोढूणं गंतूणं तिण्णि वारे छंटेउं उग्घाडाणि भविस्संति, तओ तुमं विण्णासिउं सेसनागरिएहिं बाहिं पच्छा जाएज्जासि, तओ उग्घाडेहिसि, तओ फिट्टिही उड्डाहो, पसंसं च पाविहिसि, तहेव कयं पसंसं च पत्ता, एयं ताव इहलोइयं काउस्सग्गफलं, अन्ने भणंति—वाणारसीए सुभद्दाए काउस्सग्गो कओ, एलगच्छुप्पत्ती भाणियव्वा। राया 'उदिओ-दए'त्ति, उदितोदयस्स रण्णो भज्जा(धम्म) लाभागयं णिवरोहियस्स उवसग्गए व समणजायं, कहाणगं जहा नमोक्कारे। 'सेट्ठि-भज्जा य'त्ति चंपाए सुदंसणो सेट्ठिपुत्तो, सो सावगो अट्ठमिचाउद्दसीसु चच्चरे उवासगपडिमं पडिवज्जइ, सो महादे-वीए पत्थिज्जमाणो णिच्छइ, अण्णया वोसट्ठकाओ देवपडिमत्ति वत्थे चेडीए वेढिउं अंतेउरं अतिणीओ, देवीए निब्बं-धेवि कए नेच्छइ, पउट्ठाए कोलाहलो कओ, रण्णा वज्झो आणत्तो, निज्जमाणे भज्जाए से मित्तवतीए सावियाए सुतं,

---

१ द्वाराणि स्थगिष्यामि, ततोऽधृतिमापन्नेषु नागरेषु आकाशस्था भणिष्यामि—यया परपुरुषो मनसाऽपि न चिन्तितः सा स्त्री चालिन्यामुदकं क्षिप्त्वा गत्वा त्रीन् वारान् छण्टयति उद्घाटानि भविष्यन्ति, ततस्त्वं परीक्ष्य शेषनागरैः सह बहिः पश्चाद्यायाः, तत उद्घाटयिष्यसि, ततः स्फेटिष्यत्युड्डाहः प्रशंसां च प्राप्स्यसि, तथैव कृतं, प्रशंसां च प्राप्ता, एतत्तावदैहलौकिकं कायोत्सर्गफलं, अन्ये भणन्ति—वाराणस्यां सुभद्रया कायोत्सर्गः कृतः, एडकाक्षोत्पत्तिर्भणितव्या। राजा उदितोदय इति, उदितोदयस्य राज्ञः भार्या धर्मलाभागतं अन्तःपुररुद्धं श्रमणमुपसर्गयति कथानकं यथा नमस्कारे। श्रेष्ठिभार्या चेति चम्पायां सुदर्शनः श्रेष्ठिपुत्रः, स श्रावकोऽष्टमीचतुर्दश्योश्चत्वरे उपासकप्रतिमां प्रतिपद्यते, स महादेव्या प्रार्थ्यमानो नेच्छति, अन्यदा व्युत्सृष्टकायो देवप्रतिमेति चेट्या वस्त्रैर्वेष्टयित्वा अन्तःपुर-मानीतः, देव्या निर्बन्धे कृतेऽपि नेच्छति, प्रद्विष्टया कोलाहलः कृतः, राज्ञा वध्य आज्ञप्तः, नीयमानो भार्यया तस्य मित्रवत्या श्राविकया श्रुतः,

[1]सच्चाणजक्खस्सासवण्णा काउस्सग्गे ठिता, सुदंसणस्सवि अट्ठखंडाणि कीरंतुत्ति खंधे असी वाहितो, सच्चाणजक्खेण पुप्फदामं कतो, मुक्को रन्ना पूइतो, ताधे मित्तवतीए पारियं । तथा 'सोदास'त्ति सोदासो राया, जहा नमोक्कारे, 'खग्गथंभणे'त्ति कोइ विराहियसामण्णो खग्गो समुप्पण्णो, वट्टाए मारेति साहू, पहाविया, तेण दिट्ठा आगओ, इयरवि काउस्सग्गेण ठिया, न पहवइ, पच्छा तं दट्ठूण उवसंतो । एतदैहिकं फलं, 'सिद्धी सग्गो य परलोए'सिद्धिः—मोक्षः स्वर्गो—देवलोकः चशब्दात् चक्रवर्त्तित्वादि च परलोके फलमिति गाथार्थः ॥ १५५० ॥ आह—सिद्धिः सकलकर्मक्षयादेवाप्यते, 'कृत्स्नकर्मक्षयान्मोक्षः' इति वचनात्, स कथं कायोत्सर्गफलमिति ?, उच्यते, कर्मक्षयस्यैव कायोत्सर्गफलत्वात्, परम्पराकारणस्यैव विवक्षितत्वात्, कायोत्सर्गफलत्वमेव कर्मक्षयस्य कथं ?, यत आह भाष्यकारः—

जह करगओ निकिंतइ दारुं इंतो पुणोवि वचंतो । इअ कंतंति सुविहिया काउस्सग्गेण कम्माइं ॥ २३७ ॥ (भा०)

काउस्सग्गे जह सुट्ठियस्स भज्जंति अंगमंगाइं । इय भिंदंति सुविहिया अट्ठविहं कम्मसंघायं ॥ १५५१ ॥

अन्नं इमं सरीरं अन्नो जीवुत्ति एव कयवुद्धी । दुक्खपरिकिलेसकरं छिंद ममत्तं सरीराओ ॥ १५५२ ॥

जावइया किर दुक्खा संसारे जे मए समणुभूया । इत्तो दुव्विसहतरा नरएसु अणोवमा दुक्खा ॥ १५५३ ॥

---

[1] सत्याणयक्षस्य आश्रवणाय (असपत्ना) कायोत्सर्गे स्थिता, सुदर्शनस्याप्यष्ट खण्डा भवन्त्विति स्कन्धेऽसिः प्रहृतः, सत्याणयक्षेण पुष्पदामीकृतः, मुक्तो राज्ञा पूजितः, तदा मित्रवत्या पारितः । सौदासेति सौदासो राजा, यथा नमस्कारे, खड्गस्तम्भनमिति, कश्चिद्विराद्धश्रामण्यः खड्गः समुत्पन्नः, वर्त्तन्यां मारयति साधून्, साधवः प्रधाविताः, तेन दृष्टा आगतः, इतरेऽपि कायोत्सर्गेण स्थिताः, न प्रभवति । पश्चात्तद्दृष्ट्वोपशान्तः,

तम्हा उ निम्ममेणं मुणिणा उवलद्धसुत्तसारेणं ।
काउस्सग्गो उग्गो कम्मखयट्ठाय कायव्वो ॥ १५५४ ॥ काउस्सग्गनिज्जुत्ती समत्ता ( ग्रन्थाग्र २५३९ )

व्याख्या—यथा 'करगतो'त्ति करपत्रं निकृन्तति—छिनत्ति विदारयति दारु—काष्ठं, किं कुर्वन् ?—आगच्छन् पुनश्च व्रजन्नित्यर्थः, 'इय' एवं कृन्तन्ति सुविहिताः—साधवः कायोत्सर्गेण हेतुभूतेन कर्माणि—ज्ञानावरणादीनि, तथाऽन्यत्राप्युक्तं-"संवरेण भवे गुत्तो, गुत्तीए संजमुत्तमे। संजमाओ तवो होइ, तवाओ होइ निज्जरा ॥ १ ॥ निज्जराएऽसुभं कम्मं, खिज्जई कमसो सया। आवस्सग(गेण)जुत्तस्स,काउस्सग्गो विसेसओ॥२॥"इत्यादि, अयं गाथार्थः॥२३७॥ अत्राह—किमिदमित्थमित्यत आह-'काउस्सग्गे'गाहा व्याख्या-कायोत्सर्गे सुस्थितस्य सतः यथा भज्यन्ते अङ्गोपाङ्गानि 'इय' एवं चित्तनिरोधेन 'भिन्दन्ति' विदारयन्ति मुनिवराः—साधवः अष्टविधं—अष्टप्रकारं कर्मसङ्घातं—ज्ञानावरणीयादिलक्षणमिति गाथार्थः ॥ १५५१॥ आह—यदि कायोत्सर्गे सुस्थितस्य भज्यन्ते अङ्गोपाङ्गानि ततश्च दृष्टापकारत्वादेवालमनेनेति ?, अत्रोच्यते, सौम्य ! मैवं—'अन्नं इमं' गाहा व्याख्या—अन्यदिदं शरीरं निजकर्मोपात्तमालयमात्रमशाश्वतम्, अन्यो जीवोऽस्याधिष्ठाता शाश्वतः स्वकृतकर्मफलोपभोक्ता य इदं त्यजत्येव, एवं कृतबुद्धिः सन् दुःखपरिक्लेशकरं छिन्द्धि ममत्वं शरीरात्, किं च—यद्यनेनाप्यसारेण कश्चिदर्थः सम्पद्यते पारलौकिकस्ततः सुतरां यत्नः कार्य इति गाथार्थः॥१५५२॥किं चैवं विभावनीयम्—'जावइया'गाहा व्याख्या—याव-

१ संवरेण भवेद्गुप्तो गुप्त्या संयमोत्तमो भवेत्। संयमात्तपो भवति तपसो भवति निर्जरा ॥ १ ॥ निर्जरयाऽशुभं कर्म क्षीयते क्रमशः सदा । आवश्यकेन युक्तस्य कायोत्सर्गो विशेषतः ॥ २ ॥

न्यकृतजिनप्रणीतधर्मेण किलशब्दः परोक्षाप्तागमवादसंसूचकः दुःखानि शारीरमानसानि संसारे-तिर्यग्नरनारकामरभवानुभवलक्षणे यानि मयाऽनुभूतानि ततः-तेभ्यो दुर्विषहतराण्यग्रतोऽप्यकृतपुण्यानां नरकेषु-सीमन्तकादिषु अनुपमानि-उपमारहितानि दुःखानि, दुर्विषहत्वमेतेषां शेषगतिसमुत्थदुःखापेक्षयेति गाथार्थः ॥ १५५३ ॥ यतश्चैवं 'तम्हा' गाथा, तस्मात् तु निर्ममेन-ममत्वरहितेन मुनिना-साधुना, किंभूतेन ?-उपलब्धसूत्रसारेण-विज्ञातसूत्रपरमार्थेनेत्यर्थः, किं ?-कायोत्सर्गः-उक्तस्वरूपः उग्रः-शुभाध्यवसायप्रबलः कर्मक्षयार्थं नतु स्वर्गादिनिमित्तं कर्तव्य इति गाथार्थः ॥१५५४॥ उक्तोऽनुगमः, नयाः पूर्ववत् ॥ शिष्यहितायां कायोत्सर्गाध्ययनं समाप्तम् ।

कायोत्सर्गविवरणं कृत्वा यदवाप्तमिह मया पुण्यम् । तेन खलु सर्वसत्त्वाः पञ्चविधं कायमुज्झन्तु ॥ १ ॥

॥ इत्याचार्यश्रीहरिभद्रकृतायां शिष्यहिताख्यायामावश्यकवृत्तौ कायोत्सर्गाध्ययनं समाप्तं ॥

## ॥ अथ प्रत्याख्यानाध्ययनं ॥

व्याख्यातं कायोत्सर्गाध्ययनं, अधुना प्रत्याख्यानाध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने स्खलनविशेषतोऽपराधव्रणविशेषसम्भवे निन्दामात्रेणाशुद्धस्यौघतः प्रायश्चित्तभेषजेनापराधव्रणचिकित्सोक्ता, इह तु गुणधारणा प्रतिपाद्यते, भूयोऽपि मूलगुणोत्तरगुणधारणा कार्येति, सा च मूलगुणोत्तरगुणप्रत्याख्यानरूपेति तदत्र निरूप्यते, यद्वा कायोत्सर्गाध्ययने कायोत्सर्गकरणद्वारेण प्रागुपात्तकर्मक्षयः प्रतिपादितः, यथोक्तं—'जह करगओ नियंतई'त्यादि, 'काउस्सग्गे जह सुट्ठियस्से'त्यादि, इह तु प्रत्याख्यानकरणतः कर्मक्षयोपशमक्षयजं फलं प्रतिपाद्यते, वक्ष्यते च—'इहलोइयपरलोइय दुविह फलं होइ पच्चखाणस्स । इहलोए धम्मिलादी दामण्णगमाइ परलोए ॥ १ ॥ पच्चक्खाणमिणं सेविऊण भावेण जिणवरुद्दिट्ठं । पत्ता अणंतजीवा सासयसोक्खं लहुं मोक्खं ॥ २ ॥' इत्यादि, अथवा सामायिके चारित्रमुपवर्णितं, चतुर्विंशतिस्तवेऽर्हतां गुणस्तुतिः, सा च दर्शनज्ञानरूपा, एवमिदं त्रितयमुक्तं, अस्य च वितथासेवनमैहिकामुष्मिकापायपरिजिहीर्षुणा गुरोर्निवेदनीयं, तच्च वन्दनपूर्वकमित्यतस्तन्निरूपितं, निवेद्य च भूयः शुभेष्वेव स्थानेषु प्रतीपं क्रमणमासेवनीयमिति तदपि निरूपितं, तथाऽप्यशुद्धस्य सतोऽपराधव्रणस्य चिकित्सा आलोचनादिना कायोत्सर्गपर्यवसानप्रायश्चित्तभेषजेनानन्तराध्ययन उक्ता, इह तु तथाप्यशुद्धस्य प्रत्याख्यानतो भवतीति तन्निरूप्यते, एवमनेकरूपेण सम्बन्धेनायातस्य प्रत्याख्यानाध्ययनस्य चत्वार्यनुयोगद्वाराणि सप्रपञ्चं वक्तव्यानि, तत्र नामनिष्पन्ने निक्षेपे प्रत्याख्यानाध्ययनमिति प्रत्याख्यानमध्ययनं च, तत्र प्रत्याख्यानमधिकृत्य द्वारगाथामाह निर्युक्तिकारः—

पच्चक्खाणं पच्चक्खाओ पच्चक्खेयं च आणुपुव्वीए। परिसा कहणविही या फलं च आईइ छब्भेया॥ १५५५॥

अस्या व्याख्या—'ख्या प्रकथने' इत्यस्य प्रत्याङ्पूर्वस्य ल्युडन्तस्य प्रत्याख्यानं भवति, तत्र प्रत्याख्यायते—निषिध्यतेऽनेन मनोवाक्कायक्रियाजालेन किञ्चिदनिष्टमिति प्रत्याख्यानं क्रियाक्रियावतोः कथञ्चिदभेदात् प्रत्याख्यानक्रियैव प्रत्याख्यानं प्रत्याख्यायतेऽस्मिन् सति वा प्रत्याख्यानं "कृत्यल्युटो वहुल"मिति (पा० ३–३–१२) वचनादन्यथाऽप्यदोषः प्रति आख्यानं प्रत्याख्यानमित्यादौ, तथा प्रत्याख्यातीति प्रत्याख्याता—गुरुर्विनेयश्च, तथा प्रत्याख्यायत इति प्रत्याख्येयं—प्रत्याख्यानगोचरं वस्तु, चशब्दस्त्रयाणामपि तुल्यकक्षतोद्भावनार्थं, आनुपूर्व्या—परिपाट्या कथनीयमिति वाक्यशेषः, तथा परिषद् वक्तव्या, किंभूतायाः परिषदः कथनीयमिति, तथा कथनविधिश्च—कथनप्रकारश्च वक्तव्यः, तथा फलं चैहिकामुष्मिकभेदं कथनीयं, आदावेते षड् भेदा इति गाथासमासार्थः। व्यासार्थं तु यथाऽवसरं भाष्यकार एव वक्ष्यति, तत्राद्यावयवव्यासार्थप्रतिपिपादयिषयाह—

नामंठवणादविए अइच्छ पडिसेहमेव भावे य। एए खलु छब्भेया पच्चक्खाणंमि नायव्वा॥ २३८॥ (भा०)
दव्वनिमित्तं दव्वे दव्वभूओ व तत्थ रायसुआ। अइच्छापच्चक्खाणं वंभणसमणा न(अ) इच्छन्ति॥ २३९॥ (भा०)
अमुगं दिज्जउ मज्झं नत्थि ममं तं तु होइ पडिसेहो। सेसपयाण य गाहा पच्चक्खाणस्स भावंमि॥ २४०॥ (भा०)
तं दुविहं सुअनोसुअ सुयं दुहा पुव्वमेव नोपुव्वं। पुव्वसुय नवमपुव्वं नोपुव्वसुयं इमं चेव॥ २४१॥ (भा०)
नोसुअपच्चक्खाणं मूलगुणे चेव उत्तरगुणे य। मूले सव्वं देसं इत्तरियं आवकहियं च॥ २४२॥ (भा०)

मूलगुणावि य दुविहा समणाणं चेव सावयाणं च। ते पुण विभज्जमाणा पंचविहा हुंति नायव्वा ॥ १ ॥ (प्र०)
पाणिवहमुसावाए अदत्तमेहुणपरिग्गहे चेव। समणाणं मुलगुणा तिविहंतिविहेण नायव्वा ॥ २४३॥ (भा०)

व्याख्या—नामप्रत्याख्यानं स्थापनाप्रत्याख्यानं 'दविए'त्ति द्रव्यप्रत्याख्यानं, 'अदिच्छ'त्ति दातुमिच्छा दित्सा न दित्सा अदित्सा सैव प्रत्याख्यानमदित्साप्रत्याख्यानं 'पडिसेहे'त्ति प्रतिषेधप्रत्याख्यानं, 'एवं भावे'त्ति एवं भावप्रत्याख्यानं च, 'एए खलु छब्भेया पच्चक्खाणंमि नायव्व'त्ति गाथादलं निगदसिद्धमयं गाथासमुदायार्थः। अवयवार्थं तु यथावसरं वक्ष्यामः, तत्र नामस्थापने गतार्थे ॥ २३८ ॥ अधुना द्रव्यप्रत्याख्यानप्रतिपादनायाह—'दव्वनिमित्तं' गाथाशकलम्, अस्य व्याख्या—द्रव्यनिमित्तं प्रत्याख्यानं वस्त्रादिद्रव्यार्थमित्यर्थः, यथा केषाञ्चित् साम्प्रतक्षपकाणां, तथा द्रव्ये प्रत्याख्यानं यथा भूम्यादौ व्यवस्थितः करोति, तथा द्रव्यभूतः—अनुपयुक्तः सन् यः करोति तदप्यभीष्टफलरहितत्वात् द्रव्यप्रत्याख्यानमुच्यते, तुशब्दाद् द्रव्यस्य द्रव्याणां द्रव्येण द्रव्यैर्द्रव्येष्विति, क्षुण्णश्चायं मार्गः, 'तत्थ रायसुय'त्ति अत्र कथानकं—एगस्स रण्णो धूया अण्णस्स रण्णो दिण्णा, सो य मओ, ताहे सा पिउणा आणिया, धम्मं पुत्त! करेहि त्ति भणिया, सा पासंडीणं दाणं देति, अण्णया कत्तिओ धम्ममासोत्ति मंसं न खामित्ति पच्चक्खायं, तत्थ पारणए अणेगाणि सत्तसहस्साणि मंसत्थाए उवणीयाणि, ताहे

1 एकस्य राज्ञो दुहिताऽन्यस्मै राज्ञे दत्ता, स च मृतः, तदा सा पित्रानीता, धर्मं पुत्रिके! कुर्विति भणिता, सा पापण्डिभ्यो दानं ददाति, अन्यदा कार्तिको धर्ममास इति मांसं न खादामीति प्रत्याख्यातं, तत्र पारणकेऽनेकाः शतसहस्राः (पशवो) मांसार्थमुपनीताः, तदा

[1]भत्तं दिज्जति, तत्थ साहू अदूरेण वोलेंता निमंतिया, तेहिं भत्तं गहियं, मंसं नेच्छंति, सा य रायधूया भणइ–किं तुज्झं न ताव कत्तियमासो पूरइ?, ते भणंति जावज्जीवाए कत्तिउत्ति, किं वा कह वा, ताहे ते धम्मकहं कहेंति, मंसदोसे य परिकहेंति, पच्छा संवुद्धा पव्वतिया, एवं तीसे दव्वपच्चक्खाणं, पच्छा भावपच्चक्खाणं जातं, अधुना अदित्साप्रत्याख्यानं प्रतिपाद्यते, तत्रेदं गाथार्द्धं, अदित्साप्रत्याख्याने 'वंभणसमणा अदिच्छ'त्ति हे ब्राह्मण हे श्रमण अदित्सेति–न मे दातुमिच्छा, न तु नास्ति यद् भवता याचितं, ततश्चादित्सैव वस्तुतः प्रतिषेधात्मिकेति प्रत्याख्यानमिति गाथार्थः ॥ २३९ ॥ अधुना प्रतिषेधप्रत्याख्यानव्याचिख्यासयेदं गाथाशकलमाह–'अमुगं दिज्जउ मज्झं'गाहा व्याख्या—अमुकं घृतादि दीयतां मह्यं, इतरस्त्वाह–नास्ति मे तदिति, न तु दातुं नेच्छा, एष इत्थंभूतो भवति प्रतिषेधः, अयमपि वस्तुतः प्रत्याख्यानमेव, प्रतिषेध एव प्रत्याख्यानं २। ॥ २४० ॥ इदानीं भावप्रत्याख्यानं प्रतिपाद्यते, तत्रेदं गाथार्द्धं 'सेसपयाण य गाहा पच्चक्खाणस्स भावंमि' शेषपदानामागमनोआगमादीनां साक्षादिहानुक्तानां प्रत्याख्यानस्य सम्बन्धिनां गाथा कार्येति योगवाक्यशेषौ, इह गाथा प्रतिष्ठोच्यते, निश्चितिरित्यर्थः, 'गाथृ प्रतिष्ठालिप्सयोर्ग्रन्थे चे'ति धातुवचनात्, 'भावंमि'त्ति द्वारपरामर्शः, भावप्रत्याख्यान इति । तदेतद्दर्शयन्नाह–'तं दुविहं सुतणोसुय'गाहा, 'तद्'भावप्रत्याख्यानं द्विविधं–द्विप्रकारं 'सुत-

---

[1] भक्तं दीयते, तत्र साधवोऽदूरे व्यतिव्रजन्तो निमन्त्रिताः, तैर्भक्तं गृहीतं, मांसं नेच्छन्ति, सा च राजदुहिता भणति–किं युष्माकं न तावत् कार्त्तिकमासः पूर्णः ?, ते भणन्ति–यावज्जीवं कार्त्तिक इति, किं वा कथं वा ?, तदा ते धर्मकथां कथयन्ति, मांसदोषांश्च परिकथयंति, पश्चात् संबुद्धा प्रव्रजिता, एवं तस्या द्रव्यप्रत्याख्यानं पश्चाद् भावप्रत्याख्यानं जातं

नोसुत'त्ति श्रुतप्रत्याख्यानं नोश्रुतप्रत्याख्यानं च 'सुयं दुहा पुव्वमेव नोपुव्वं' श्रुतप्रत्याख्यानमपि द्विधा भवति–पूर्वश्रुतप्रत्याख्यानं नोपूर्वश्रुतप्रत्याख्यानं च, 'पुव्वसुय नवमपुव्वं' पूर्वश्रुतप्रत्याख्यानं नवमं पूर्वं, 'नोपुव्वसुयं इमं चेव' नोपूर्वश्रुतप्रत्याख्यानमिदमेव–प्रत्याख्यानाध्ययनमित्येतच्चोपलक्षणमन्यच्चातुरप्रत्याख्यानमहाप्रत्याख्यानादि पूर्वबाह्यमिति गाथार्थः ॥ २४१ ॥ अधुना नोश्रुतप्रत्याख्यानप्रतिपादनायाह–'नोसुयपच्चक्खाणं' गाहा 'णोसुयपच्चक्खाणं'ति श्रुतप्रत्याख्यानं न भवतीति नोश्रुतप्रत्याख्यानं, 'मूलगुणे चेव उत्तरगुणे य' मूलगुणांश्चाधिकृत्योत्तरगुणांश्च, मूलभूता गुणाः २ त एव प्राणातिपातादिनिवृत्तिरूपत्वात् प्रत्याख्यानं वर्त्तते, उत्तरभूता गुणाः २ त एवाशुद्धपिण्डनिवृत्तिरूपत्वात् प्रत्याख्यानं तद्विषयं वा अनागतादि वा दशविधमुत्तरगुणप्रत्याख्यानं, 'सव्वं देसं'ति मूलगुणप्रत्याख्यानं द्विधा–सर्वमूलगुणप्रत्याख्यानं देशमूलगुणप्रत्याख्यानं च, सर्वमूलगुणप्रत्याख्यानं पञ्च महाव्रतानि, देशमूलगुणप्रत्याख्यानं पञ्चाणुव्रतानि, इदं चोपलक्षणं वर्त्तते यत उत्तरगुणप्रत्याख्यानमपि द्विधैव–सर्वोत्तरगुणप्रत्याख्यानं देशोत्तरगुणप्रत्याख्यानं च, तत्र सर्वोत्तरगुणप्रत्याख्यानं दशविधमनागतमतिक्रान्तमित्याद्युपरिष्टाद् वक्ष्यामः, देशोत्तरगुणप्रत्याख्यानं सप्तविधं–त्रीणि गुणव्रतानि चत्वारि शिक्षाव्रतानि, एतान्यप्यूर्ध्वं वक्ष्यामः, पुनरुत्तरगुणप्रत्याख्यानमोघतो द्विविधं–'इत्तरियमावकहियं च' तत्रेत्वरं–साधूनां किञ्चिदभिग्रहादिः श्रावकाणां तु चत्वारि शिक्षाव्रतानि, यावत्कथिकं तु नियन्त्रितं, यत् कान्तारदुर्भिक्षादिष्वपि न भज्यते, श्रावकाणां तु त्रीणि गुणव्रतानीति गाथार्थः ॥ २४२ ॥ साम्प्रतं स्वरूपतः सर्वमूलगुणप्रत्याख्यानमुपदर्शयन्नाह–'पाणिवहमुसावाए' गाहा, प्राणा–इन्द्रि-

यादयः, तथा चोक्तम्—"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिश्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्ता, एषां वियोगीकरणं तु हिंसा ॥ १ ॥" तेषां वधः प्राणवधो [न] जीववधस्तस्मिन्, मृषा वदनं मृषावादस्तस्मिन्, असदभिधान इत्यर्थः, 'अदत्तं'ति उपलक्षणत्वाददत्तादाने परवस्त्वाहरण इत्यर्थः, 'मेहुण'त्ति मैथुने अब्रह्मसेवने यदुक्तं भवति, 'परिग्गहे चेव'त्ति परिग्रहे चैव, एतेषु विषयभूतेषु श्रमणानां—साधूनां मुलगुणाः त्रिविधत्रिविधेन योगत्रयकरणत्रयेण नेतव्याः—अनुसरणीयाः, इयमत्र भावना—श्रमणाः प्राणातिपाताद्विरतास्त्रिविधं त्रिविधेन तत्थ 'तिविध'न्ति न करेति न कारवेइ २ करंतंपि अण्णं णाणुजाणेति, 'तिविहं'ति मणेणं वायाए काएणं, एवमन्यत्रापि योजनीयमिति गाथार्थः ॥ २४३ ॥ इत्थं तावदुपदर्शितं सर्वमूलगुणप्रत्याख्यानं, अधुना देशमूलगुणप्रत्याख्यानावसरः, तच्च श्रावकाणां भवतीतिकृत्वा विनेयानुग्रहाय तद्धर्मविधिमेवौघतः प्रतिपिपादयिषुराह—

सावयधम्मस्स विहिं वुच्छामी धीरपुरिसपन्नत्तं । जं चरिऊण सुविहिया गिहिणोवि सुहाइं पावंति ॥ १५५६ ॥
साभिग्गहा य निरभिग्गहा य ओहेण सावया दुविहा। ते पुण विभज्जमाणा अट्ठविहा हुंति नायव्वा ॥ १५५७ ॥
दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ १५५८ ॥
एगविहं दुविहेणं इक्किक्कविहेण छट्ठओ होइ । उत्तरगुण सत्तमओ अविरयओ चेव अट्ठमओ ॥ १५५९ ॥
पणय चउक्कं च तिगं दुगं च एगं च गिण्हइ वयाइं । अहवाऽवि उत्तरगुणे अहवाऽवि न गिण्हई किंचि ॥ १५६० ॥
निस्संकियनिक्कंखिय निव्वितिगिच्छा अमूढदिट्ठी य । वीरवयणंमि एए बत्तीसं सावया भणिया ॥ १५६१ ॥

व्याख्या—तत्राभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतोऽपि प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च सामाचारीं शृणोतीति श्रावक इति, उक्तं च—"यो ह्यभ्युपेतसम्यक्त्वो, यतिभ्यः प्रत्यहं कथाम्। शृणोति धर्मसम्बद्धामसौ श्रावक उच्यते ॥ १ ॥" श्रावकाणां धर्म्मः २ तस्य विधिस्तं वक्ष्ये—अभिधास्ये, किंभूतं ?—'धीरपुरुषप्रज्ञप्तं' महासत्त्वमहाबुद्धितीर्थकरगणधरप्ररूपितमित्यर्थः, यं चरित्त्वा सुविहिता गृहिणोऽपि सुखान्यैहिकामुष्मिकाणि प्राप्नुवन्तीति गाथार्थः ॥१५५६॥ तत्र—'साभिग्गहा य निरभिग्गहा य' गाहा, अभिगृह्यन्त इत्यभिग्रहाः—प्रतिज्ञाविशेषाः सह अभिग्रहैर्वर्त्तन्त इति साभिग्रहाः, ते पुनरनेकभेदा भवन्ति, तथाहि—दर्शनपूर्वकं देशमूलगुणोत्तरगुणेषु सर्वेष्वेकास्मिंश्च (स्मिन्) वा भवन्त्येव तेषामभिग्रहः, निर्गता—अपेता अभिग्रहा येभ्यस्ते निरभिग्रहाः, ते च केवलसम्यग्दर्शनिन एव, यथा कृष्णसत्यकिश्रेणिकादयः, इत्थं ओघेन—सामान्येन श्रावका द्विधा भवन्ति, ते पुनर्द्विविधा अपि विभज्यमाना अभिग्रहग्रहणविशेषेण निरूप्यमाणा अष्टविधा भवन्ति ज्ञातव्या इति गाथार्थः॥१५५७॥ तत्र यथाऽष्टविधा भवन्ति तथोपदर्शयन्नाह—'दुविहतिविहेण' गाहा, इह योऽसौ कञ्चनाभिग्रहं गृह्णाति स ह्येवं—'द्विविध'मिति कृतकारितं 'त्रिविधेने'ति मनसा वाचा कायेनेति, एतदुक्तं भवति—स्थूलप्राणातिपातं न करोत्यात्मना न कारयत्यन्यैर्मनसा वचसा कायेनेति प्रथमः, अस्यानुमतिरप्रतिषिद्धा, अपत्यादिपरिग्रहसद्भावात्, तद्व्यापृतिकरणे च तस्यानुमतिप्रसङ्गाद्, इतरथा परिग्रहापरिग्रहयोरविशेषेण प्रव्रजिताप्रव्रजितयोरभेदापत्तेरिति भावना, अत्राह—ननु भगवत्यामागमे त्रिविधं त्रिविधेनेत्यपि प्रत्याख्यानमुक्तमगारिणः, तच्च श्रुतोक्तत्वादनवद्यमेव, तदिह कस्मान्नोक्तं निर्युक्तिकारेणेति ?, उच्यते, तस्य विशेषविषयत्वात्, तथाहि—किल यः प्रविव्रजिषुरेव प्रतिमां

प्रतिपद्यते पुत्रादिसन्ततिपालनाय स एव त्रिविधं त्रिविधेनेति करोति, तथा विशेष्यं वा किञ्चिद् वस्तु स्वयम्भूरमणमत्स्यादिकं तथा स्थूलप्राणातिपातादिकं चेत्यादि, न तु सकलसावद्यव्यापारविरमणमधिकृत्येति, ननु च निर्युक्तिकारेण स्थूलप्राणातिपातादावपि त्रिविधंत्रिविधेनेति नोक्तो विकल्पः, 'वीरवयणंमि एए वत्तीसं सावया भणिया' इति वचनादन्यथा पुनरधिकाः स्युरिति ?, अत्रोच्यते, सत्यमेतत्, किंतु वाहुल्यपक्षमेवाङ्गीकृत्य तिर्युक्तिकारेणाभ्यधायि, यत् पुनः क्वचिदवस्थाविशेषे कदाचिदेव समाचर्यते न सुष्ठु समाचार्यनुपाति तन्नोक्तं, वाहुल्येन तु द्विविधं त्रिविधेनेत्यादिभिरेव पड्भिर्विकल्पैः सर्वस्यागारिणः सर्वमेव प्रत्याख्यानं भवतीति न कश्चिद् दोष इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, 'दुविहं तिविहेण बितियओ होति'त्ति 'द्विविध' मिति स्थूलप्राणातिपातं न करोति न कारयति 'द्विविधेने'ति मनसा वाचा, यद्वा मनसा कायेन, यद्वा वाचा कायेन, इह च प्रधानोपसर्जनभावविवक्षया भावार्थोऽवसेयः,, तत्र यदा मनसा वाचा न करोति न कारयति तदा मनसैवाभिसन्धिरहित एव वाचापि हिंसकमब्रुवन्नेव कायेनैव दुश्चेष्टितादिना करोत्यसंज्ञिवत्, यदा तु मनसा कायेन च न करोति न कारयति तदा मनसाभिसन्धिरहित एव कायेन च दुश्चेष्टितादि परिहरन्नेव अनाभोगाद्वाचैव हिंसकं ब्रूते, यदा तु वाचा कायेन च न करोति न कारयति तदा मनसैवाभिसन्धिमधिकृत्य करोतीति, अनुमतिस्तु त्रिभिरपि सर्वत्रैवास्तीति भावना, एवं शेषविकल्पा अपि भावनीया इति, 'दुविहं एगविहेणं'ति द्विविधमेकविधेन, 'एक्कविहं चेव तिविहेणं'ति एकविधं चैव त्रिविधेनेति गाथार्थः ॥ १५५८ ॥ 'एगविहं दुविहेणं'ति एकविधं द्विविधेन 'एक्केक्कविहेण छट्ठओ होइ' एकविधमेकविधेन षष्ठो भवति भेदः, 'उत्तरगुण सत्तमओ'त्ति प्रतिपन्नोत्तरगु-

णः सप्तमः, इह च सम्पूर्णासम्पूर्णोत्तरगुणभेदमनादृत्य सामान्येनैक एव भेदो विवक्षितः, 'अविरयओ चेव अट्ठमओ'त्ति अविरतश्चैवाष्टम इति अविरतसम्यग्दृष्टिरिति गाथार्थः ॥ १५५९ ॥ इत्थमेते अष्टौ भेदाः प्रदर्शिताः, एत एव विभज्यमाना द्वात्रिंशद् भवन्ति, कथमित्यत आह—'पणग'त्ति पञ्चाणुव्रतानि समुदितान्येव गृह्णाति कश्चित्, तत्रोक्तलक्षणाः षड् भेदा भवन्ति, 'चउक्कं च'त्ति तथाऽणुव्रतचतुष्टयं गृह्णात्यपरस्तत्रापि षडेव, 'तिग'न्ति एवमणुव्रतत्रयं गृह्णात्यन्यस्तत्रापि षडेव, 'दुगं च'त्ति इत्थमणुव्रतद्वयं गृह्णाति, तत्रापि षडेव, 'एक्कं व'त्ति तथाऽन्य एकमेवाणुव्रतं गृह्णाति, तत्रापि षडेव, 'गिण्हइ वयाइं'ति इत्थमनेकधा गृह्णाति व्रतानि, विचित्रत्वात् श्रावकधर्मस्य, एवमेते पञ्च षट्का स्त्रिंशद् भवन्ति, प्रतिपन्नोत्तर-गुणेन सहैकत्रिंशत्, तथा चाह—'अहवावि (य) उत्तरगुणे'त्ति अथवोत्तरगुणान्—गुणव्रतादिलक्षणान् गृह्णाति, समुदितान्येव गृह्णाति, केवलसम्यग्दर्शनिना सह द्वात्रिंशद् भवन्ति, तथा चाह—'अहवावि न गिण्हती किंचि'त्ति अथवा न गृह्णाति तानप्युत्तरगुणानिति, केवलं सम्यग्दृष्टिरेवेति गाथार्थः ॥ १५६० ॥ इह पुनर्मूलगुणोत्तरगुणानामाधारः सम्यक्त्वं वर्त्तते तथा चाह—'निस्संकियनिकंखिय'गाहा, शङ्कादिस्वरूपमुदाहरणद्वारेणोपरिष्टाद् वक्ष्यामः 'वीरवचने' महावीरवर्द्धमानस्वामि-प्रवचने 'एते' अनन्तरोक्ता द्वात्रिंशदुपासकाः—श्रावका भणिताः—उक्ता इति गाथार्थः ॥ १५६१ ॥ एते चेव बत्तीसतिविहा करणतियजोगतियकालतिएणं विसेसेज्जमाणा सीयालं समणोवासगसयं भवति, कहं ?, पाणाइवायं न करेति मणेणं, अथवा पाणातिपातं न करेइ वायाए, अहवा पाणातिपातं न करेइ काएणं ३, अथवा पाणातिवातं न करेति मणेणं वायाए य, अथवा पाणातिवायं न करेति मणेणं काएण य, अथवा पाणातिपातं न करेति वायाए काएण य ६, अथवा पाणातिपातं न करेति

मणेणं वायाए काएण य', एते सत्त भंगा करणेणं, एवं कारवणेणवि एए चेव सत्त भंगा १४, एवं अणुमोयणेणवि सत्त भंगा २१, अहवा न करेइ न कारवेइ मणसा १ अहवा न करेइ न कारवेइ वचसा, २ अहवा न करेइ न कारवेइ काएण ३ अहवा न करेइ न कारवेइ मणसा वयसा ५ अहवा न करेइ न कारवेइ मणसा कायेणं ५ अहवा न करेइ न कारवेइ वयसा कायसा ६ अहवा न करेइ न कारवेइ मणसा वयसा कायसा ७, एते करणकारावणेहिं सत्त भंगा ७ एवं करणाणुमोयणेहिवि सत्त भंगा ७, एवं कारावणाणुमोयणेहिवि सत्त भंगा, एवं करणकारावणाणुमोयणेहिवि सत्त भंगा ७, एवेते सत्त सत्तभंगाणं एगूणपण्णासं विगप्पा भवन्ति, एत्थ इमो एगूणपन्नासइमो विगप्पो—पाणात्तिवायं न करेइ न कारवेइ करेंतंपि अन्नं न समणुजाणइ मणेणं वायाए काएणंति, एस अंतिमविगप्पो पडिमापडिवन्नस्स समणोवासगस्स तिविहंतिविहेणं भवतीति, एवं ताव अतीतकाले पडिक्कमंतस्स एगूणपण्णा भवन्ति, एवं पडुपण्णेवि काले संवरेंतस्स एगूणपण्णा भवन्ति, एवं अणागएवि काले पच्चक्खायंतस्स एगूणपन्नासा भवन्ति, एवमेता एगूणपण्णासा तिण्णि सीयालं सावयसयं भवति—

सीयालं भंगसयं जस्स विसोहीएँ होति उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥ १ ॥ एवं पुण पंचहिं अणुव्वएहिं गुणियं सत्तसयाणि पंचत्तीसाणि सावयाणं भवन्ति,—सीयालं भंगसयं गिहिपच्चक्खाणभेयपरिमाणं । जोगत्तियकरणत्तियकालतिएणं गुणेयव्वं ॥ २ ॥ सीयालं भंगसयं पच्चक्खाणंमि जस्स उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला य ॥ ३ ॥ सीयालं भंगसयं गिहिपच्चक्खाणभेयपरिमाणं । तं च विहिणा इमेणं भावेयव्वं पयत्तेणं ॥ ४ ॥ तिन्नि तिया तिन्नि दुया तिन्निक्किका य हुंति जोगेसु । तिदुइक्कं तिदुइक्कं तिदुएगं चेव करणाइं ॥ ५ ॥ पढमे लब्भइ एगो सेसेसु पएसु तिय तिय तियंति । दो नव तिय दो नवगा तिगुणिय सीयाल भंग-

सयं ॥ ६ ॥ अहवा अणुव्वए चेव पडुच्च एकगादिसंजोगदुवारेण पभूयतरा भेदा निदंसिज्जंति, तत्रेयमेकादिसंयोगपरिमाणप्रदर्शनपराऽन्यकर्तृकी गाथा ॥

पंचण्हमणुवयाणं इक्कगदुगतिगचउक्कपणएहिं । पंचगदसदसपणइक्कगे य संजोग कायव्वा ॥ १ ॥

एतीए वक्खाणं—पंचण्हमणुव्वयाणं पुव्वभणियाणं 'एक्कगदुगतिगचउक्कपणएहिं' चिंतिज्जमाणाणं 'पंचगदसदसपणगएक्कगो य संजोग णातव्वा' एक्केण चिंतिज्जमाणाणं पंच संजोगा, कहं ?, पंचसु घरएसु एगेण पंचेव भवन्ति, दुगेण चिंतिज्जमाणाणं दस चेव, कहं ?, पढमबीयघरेण एक्को १ पढमततियघरेण २ पढमचउत्थघरेण ३ पढमपंचमघरेण ४ बितियततियघरेण ५ बीयचउत्थघरेण ६ बीयपंचमघरेण सत्तमो ७ ततियचउत्थघरेण ८ ततियपंचमघरेण ९ चउत्थपंचमघरेण १० ॥ तिगेण चिंतिज्जमाणाणं दस चेव, कहं ?, पढमबियततियघरेण एक्को १ पढमबितियचउत्थघरेण २ पढमबितियपंचमघरेण ३ पढमतईयचउत्थघरेण ४ पढमततियपंचमघरेण ५ पढमचउत्थपंचमघरेण ६ बितियततियचउत्थघरएण ७ बितियततियपंचमघरेण ८ बितियचउत्थपंचमघरेण ९ ततियचउत्थपंचमघरेण १० । चउक्कगेण चिंतिज्जमाणाणं पंच हवंति, कहं ?, पढमबितियततियचउत्थघरेण एक्को पढमबितियततियपंचमघरेण २ पढमबितियचउत्थपंचमघरेण ३ पढमततियचउत्थपंचमघरेण ४ बितियततियचउत्थपंचमघरेण ५, पंचगेण चिंतिज्जमाणाण एगो चेव भवतित्तिगाथार्थः ॥ १ ॥ एत्थ य एक्कगेण य जे पंच संजोगा दुगेण जे दस इत्यादि, एएसिं चारणीयापओगेण आगयफलंगाहाओ तिण्णि—

वयमिक्कगसंजोगाण हुंति पंचण्ह तीसई भंगा । दुगसंजोगाण दसण्ह तिन्नि सट्ठा सया हुंति ॥ १ ॥

संजोगाण दसण्ह भंगसयं इक्कवीसई सट्ठा। चउसंजोगाण पुणो चउसट्ठिसयाणिऽसीयाणि ॥ २ ॥
सत्तुत्तरिं सयाइं छसत्तराइं च पंच संजोए। उत्तरगुण अविरयमेलियाण जाणाहि सव्वग्गं ॥ ३ ॥
सोलस चेव सहस्सा अट्ठसया चेव होंति अट्ठहिया। एसो उवासगाणं वयगहणविही समासेणं ॥ ४ ॥ (प्र०)
व्याख्या—एताश्चतस्रोऽप्यन्यकृताः सोपयोगा इत्युपन्यस्ताः, एतासिं भावणाविही इमा—तत्र तावदियं स्थापना,

| प्रा० | मृ० | अ० | मै० | प० |
|---|---|---|---|---|
| २।३ | २।३ | २।३ | २।३ | २।३ |
| २।२ | २।२ | २।२ | २।२ | २।२ |
| २।१ | २।१ | २।१ | २।१ | २।१ |
| १।३ | १।३ | १-३ | १।३ | १।३ |
| १।२ | १।२ | १।२ | १।२ | १।२ |
| १।१ | १।१ | १।१ | १।१ | १।१ |

थूलगपाणातिवातं पच्चक्खाइ दुविहं तिविहेण १ दुविहं दुविहेणं २ दुविहं एक्कविहेणं ३ एगविहं तिविहेणं ४ एगविहं दुविहेण ५ एगविहं एगविहेण ६, एवं थूलगमुसावायअदत्तादाणमेहुणपरिग्गहेसु, एक्केक्के छभेदा, एए सव्वेवि मिलिया तीसं हवंतित्ति, ततश्च यदुक्तं प्राक् 'वयएक्कगसंजोगाण होंती पंचण्ह तीसई भंग'त्ति तद् भावितं, इयाणिं दुगचारणिया—थूलगपाणाइवायं थूलगमुसावायं पच्चक्खाति दुविहंतिविहेण १ थूलगपाणाइवायं दुविहंतिविहेण थूलगमुसावायं पुण दुविहं दुविहेण २ थूलगपाणाइवायं २-३ थूलगमुसावायं पुण दुविहं एगविहेण ३ थूलगपाणाइवायं २-३ थूलगमुसावायं पुण एगविहंतिविहेण ४ थूलगपाणाइवायं २-३ थूलगमुसावायं पुण एगविहं दुविहेण ५ थूलगपाणातिवायं २-३ थूलगमुसावायं पुण एगविहंएगविहेण ६, एवं थूलगअदत्तादाणमेहुणपरिग्गहेसु एक्केक्के छब्भंगा, सव्वेवि मिलिया चउवीसं, एए य थूलगपाणाइवायं पढमघरगममुंचमाणेण लद्धा, एवं त्रितियादिघरएसु पत्तेयं चउव्वीस हवंति, एए य सव्वेवि मिलिया चोयालं सयं, चालिओ थूलगपाणाइवाओ, इयाणिं थूलगमुसा-

वायाइ चिंतिज्जइ—तत्थ थूलगमुसावायं थूलगअदत्तादाणं पच्चक्खाति दुविहं तिविहेणं १ थूलगमुसावायं दुविहं तिविहेण अदत्तादाणं पुण दुविहं दुविहेण २ एवं पुव्वक्कमेण छब्भंगा नायव्वा, एवं मेहुणपरिग्गहेसु पत्तेयं पत्तेयं छ २, सव्वेवि मिलिया अट्ठारस, एते मुसावायं पढमघरगममुंचमाणेण लद्धा १८, एवं बीयादिघरेसुवि पत्तेयं २ अट्ठारस २ भवन्ति, एए सव्वेवि मेलिया अट्ठुत्तरं सयंति, चारिओ थूलगमुसावाओ, इयाणिं थूलगादत्तादाणादि चिंतिज्जति, तत्थ थूलगादत्तादाणं थूलगमेहुणं वा पच्चक्खाति दुविहंतिविहेण १, थूलगअदत्ताणं २-३ थूलगमेहुणं पुण दुविहं दुविहेण २—२ एवं पुव्वकमेण छब्भंगा नायव्वा, एवं थूलगपरिग्गहेणवि छभंगा, मेलिया बारस, एए य थूलगअदत्तादाणं पढमघरममुंचमाणेण लद्धा, एवं बितियाइसुवि पत्तेयं छ २ हवंति, एते सव्वेवि मेलिया बावत्तरि हवंति, चारितं थूलगादत्तादाणं, इदाणिं थूलगमेथुणादि चिंतिज्जति, तत्थ थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाति दुविधं तिविधेण १ थूलगमेथुणं थूलगपरिग्गहं पुण दुविधं दुविधेण २ एवं पुव्वकमेण छब्भंगा, एते थूलगमेथुणपढमघरममुंचमाणेण लद्धा, एवं बीयादिसुवि पत्तेयं २ छ २ हवंति, सव्वेवि मेलिया छत्तीसं, एते य मूलाओ आरब्भ सव्वेवि चोतालसयं अट्ठुत्तरसयं बावत्तरिं छत्तीसं मेलिता तिण्णि सताणि सट्ठाणि हवंति, ततश्च यदुक्तं प्राक् 'दुगसंजोगाण दसण्ह तिन्नि सट्ठा सता होंति'त्ति तदेतद् भावितं, इदाणिं तिगचारणीयाए थूलगपाणातिवातं थूलगमुसावायं थूलगादत्तादाणं पच्चक्खाति दुविधं तिविधेण १ थूलगपाणातिवातं थूलगमुसावादं २-३ थूलगादत्तादाणं पुण दुविधं दुविधेण २ थूलगपाणातिवायं थूलगमुसावायं २-३ थूलगादत्तादाणं पुण दुविहं एगविहेणं ३ एवं पुव्वकमेण छब्भंगा, एवं मेहुणपरिग्गहेसुवि पत्तेयं २ छ २, सव्वेवि मेलिया

अट्ठारस, एते य थूलगमुसावादपढमघरकममुंचमाणेण लद्धा, एवं वीयादिसुवि पत्तेयं २ अट्ठारस २ हवंति, सव्वेवि मेलिया अट्ठुत्तरं सयं, एवं च थूलगपाणाइवायपढमघरममुंचमाणेण लद्धा, एवं वीयाइसुवि पत्तेयं २ अट्ठुत्तरं २ सयं हवंति, एए य सव्वेवि मिलिया छ सयाणि अडयालाणि, एवं थूलगपाणातिवाओ तिगसंजोएण थूलगमुसावाएण सह चारिओ, एवं अदत्तादाणेण सह चारिज्जति, तत्थ थूलगपाणाइवायं थूलगादत्तादाणं थूलगमेहुणं च पच्चक्खाइ दुविहंतिविहेण १ थूलगपाणाइवायं थूलगादत्तादाणं २-३ थूलगमेहुणं पुण दुविहं दुविहेण २ एवं पुव्वक्कमेण छब्भंगा, एवं थूलगपरिग्गहेणवि छ मेलिया दुवालस, एते य अदत्तादाणपढमघरगममुंचमाणेण लद्धा, एवं वीयाइसुवि पत्तेयं २ दुवालस २, सव्वेवि मेलिया वावत्तरिं हवंति, एते य पाणाइवायपढमघरममुंचमाणेण लद्धा, एते वितियाइसुवि पत्तेयं वावत्तरि २, सव्वेऽवि मिलिया चत्तारि सया वत्तीसा हवंति, एवं थूलगपाणाइवाओ तिगसंजोगेण थूलगादत्तादाणेण सह चारिओ, इयाणिं थूलमेहुणेण परिग्गहेण सह चारिज्जइ, तत्थ थूलगपाणाइवायं थूलगमेहुणं थूलगपरिग्गहं २-३ पाणातिवायं मेहुणं २-३ परिग्गहं दुविहं दुविहेण २ एवं पुव्वक्कमेण छब्भंगा, एए उ थूलगमेहुणपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं २ छ छ, सव्वेऽपि मेलिया छत्तीसं, एते य थूलगपाणातिवायपढमघरगममुंचमाणेण लद्धा, वितियादिसु पत्तेयं २ छत्तीसं, सव्वेवि मेलिया सोलसुत्तरा दो सया। एवं थूलगपाणातिवाओ तिगसंजोएणं मेहुणेण सह चारिओ, चारिओ य तिगसंजोएणं पाणातिवाओ, इदाणिं मुसावाओ चिंतिज्जइ, तत्थ थूलगमुसावायं थूलगादत्तादाणं थूलगमेहुणं च पच्चक्खाति दुविहं तिविहेण १ थूलगमुसावायं थूलगादत्तादाणं २-३ थूलगमेहुणं पुण दुविहं दुविहेण २ एवं पुव्वक्कमेण छब्भंगा, एवं थूलगपरिग्गहेणवि छ, मेलिया दुवालस,

एते य थूलगादत्तादाणपढमघरगममुंचमाणेण लद्धा, बितियादिसुवि पत्तेयं दुवालस २, सव्वेऽवि मेलिया बावत्तरि, एते य थूलगमुसावायपढमघरगममुंचमाणेण लद्धा, बितियादिसु पत्तेयं बावत्तरि २, सव्वेवि मेलिया चत्तारि सया बत्तीसा, एवं थूलगमुसावाओ तिगसंजोएण थूलगादत्तादाणेण सह चारिओ इयाणिं थूलगमेहुणेण सह चारिज्जइ, तत्थ थूलगमुसावायं थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाति दुविहंतिविहेण १ थूलगमुसावायं थूलगमेहुणं २-३ थूलगपरिग्गहं पुण दुविहंदुविहेण २ एवं पुव्वक्कमेण छब्भंगा, एए थूलगमेहुणपढमघरगममुंचमाणेण लद्धा, बितियादिसुवि पत्तेयं २ छ २ हवंति, सव्वेऽवि मेलि-या छत्तीसं, एते य थूलगमुसावादपढमघरगममुंचमाणेण लद्धा, बितियादिसुवि पत्तेयं छत्तीसं २ हवंति, सव्वेऽवि मेलिया दो स-या सोलसुत्तरा, चारिओ तिगसंजोएण थूलगमुसावाओ, इयाणिं थूलगादत्तादाणादि चिंतिज्जइ, तत्थ थूलगादत्तादाणं मेहुणं परिग्गहं च पच्चक्खाइ दुविहंतिविहेण १ थूलगादत्तादाणं थूलगमेहुणं २-३ थूलगपरिग्गहं पुण दुविहंदुविहेण २, एवं पुव्वक्कमेण छब्भंगा, एते य थूलगमेहुणपढमघरममुंचमाणेण लद्धा, बितियादिसुवि पत्तेयं छ २, सव्वेऽवि मेलिया छत्तीसं, एते य थूलगादत्ता-दाणपढमघरगममुंचमाणेण लद्धा, बितियाइसु पत्तेयं छत्तीसं २, सव्वेऽवि मेलिया दो सया सोलसुत्तरा, एते य मूलाओ आरब्भ सव्वेऽवि अडयाला छ सया बत्तीसा चउसया सोलसुत्तरा दो सया य बत्तीसा चउसया सोलसुत्तरा दो सया, एए सव्वेऽवि मेलिया इगवीससयाइं सट्ठाइं भंगाणं भवंति, ततश्च यदुक्तं प्राग् 'तिगसंजोगाण दसण्ह भंगसया एक्कवीसई सट्ठा' तदेतद् भावितं, इयाणिं चउक्कचारणिया, तत्थ थूलगपाणाइवायं थूलगमुसावायं थूलगादत्तादाणं थूलगमेहुणं च पच्चक्खाति दुविहंतिविहेण १ थूल-गपाणातिवायाइ २-३ थूलगमेहुणं पुण दुविहंदुविहेण २, एवं पुव्वक्कमेण छब्भंगा, थूलगपरिग्गहेणवि छ, एएवि मेलिया

दुवालस, एते य थूलगादत्तादाणपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं दुवालस २, सवेवि मेलिया वावत्तरि, एते उ थूलगमुसावायपढमघरममुंचमाणेण लद्धा, वितियासुवि पत्तेयं वावत्तरि २, सवेवि मेलिया चत्तारि सया वत्तीसा, एते य थूलगपाणातिवायपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं चत्तारि २ सया वत्तीसा, सवेवि मेलिया दो सहस्सा पंच सया वाणउया, इदाणिं अण्णो विगप्पो—थूलगपाणाइवायं थूलगमुसावायं थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाति दुविहं दुविहेण २, एवं पुवक्कमेण छब्भंगा, एते उ थूलगमेहुणपढमघरगममुंचमाणेण लद्धा, वितियादिसु पत्तेयं २ छ छ सवे मेलिया छत्तीसं, एते उ थूलगमुसावायपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं छत्तीसं २, सवेवि मेलिया दो सया सोलसुत्तरा, एए थूलगपाणाइवायपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं २ दो २ सया सोलसुत्तरा, सवेवि मेलिया दुवालस सया छन्नउया, इयाणिं अण्णो विगप्पो—थूलगपाणाइवायं थूलगअदत्तादाणं थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाति दुविहंतिविहेण १, थूलगपाणातिवातं थूलगादत्तादाणं थूलगमेहुणं २-२ थूलगपरिग्गहं च पुण दुविहंदुविहेण २, एवं पुवक्कमेण छब्भंगा, एते य थूलगमेहुणस्स पढमघरममुंचमाणेण लद्धा, वितियादिसुवि छ २, मेलिया छत्तीसं, एते य थूलगादत्तादाणपढमघरममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं छत्तीसं २, सवेऽवि मेलिया दो सया सोलसुत्तरा, एते य थूलगपाणाइवायपढमघरगममुंचमाणेण लद्धा, वितियादिसुवि पत्तेयं दो दो सया सोलसुत्तरा, सवेऽवि मेलिया दुवालस सया छण्णउया, इदाणिमण्णो विगप्पो—थूलगमुसावायं थूलगादत्तादाणं थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाति दुविहंतिविहेणं १ थूलगमुसावायाति २-२ थूलगपरिग्गहं पुण दुविहंदुविहेण २, एवं पुवक्कमेण

छब्भंगा, एते य थूलगमेहुणपढमघरगममुंचमाणेण लद्धा, बितियादिसुवि पत्तेयं छ २, मेलिया छत्तीसं, एते य थूलगादत्तादाणपढमघरममुंचमाणेण लद्धा, बितियाइसुवि घरेसु पत्तेयं २ छत्तीसं २, मेलिया दो सया सोलसुत्तरा, एते थूलगमुसावायपढमघरगममुंचमाणेण लद्धा, बितियाइसुवि पत्तेयं दो दो सया सोलसुत्तरा, सबेवि मिलिया दुवालस सया छणउया, एए य मूलाओ आरब्भ सबेवि दो सहस्सा पंचसया बाणउया, दुवालससया छण्णउया ३, मिलिया छसहस्सा चत्तारि सया असीया, ततश्च यदुक्तं प्राक् 'चउसंजोगाण पुण चउसट्ठिसयाणऽसीयाणि'त्ति, इयाणिं पंचगचारणिया, तत्थ थूलगपाणाइवायं थूलगमुसावायं थूलगादत्तादाणं थूलगमेहुणं थूलगपरिग्गहं च पच्चक्खाइ दुविहंतिविहेण १ पाणातिवायाति २-३ थूलगपरिग्गहं दुविहं दुविहेण २ एवं पुवक्कमेण छब्भंगा, एए थूलगमेहुणपढमघरगममुंचमाणेण लद्धा, बीयाइसुवि पत्तेयं २ छ छ, मेलिया छत्तीसं, एते य थूलगादत्तादाणपढमघरगममुंचमाणेण लद्धा, बीयादिसुवि पत्तेयं २ छत्तीसं २, मिलिया दो सया सोलसुत्तरा, एए य थूलगमुसावायपढमघरगममुंचमाणेण लद्धा, बितियाइसुवि पत्तेयं २ दो सया सोलसुत्तरा २, मेलिया दुवालस सया छन्नउया, एए य थूलगपाणातिवायपढमघरममुंचमाणेण लद्धा, बितियाइसुवि पत्तेयं २ दुवालस सया छण्णउया, सबेवि मेलिया सत्तसहस्सा सत्तसया छावुत्तरा, ततश्च यदुक्तं प्राक् 'सत्ततरीसयाइं छसत्तराइं तु पंचसंजोए' एतद् भावितं, 'उत्तरगुणअविरयमेलियाण जाणाहि सबग्गं'ति उत्तरगुणगाही एगो चेव भेओ, अविरयसम्मदिट्ठी बितिओ, एएहिं मेलियाण सबेसिं पुवभणियाण भेयाण जाणाहि सबग्गं इमं जातं, परूवणं पडुच्च तं पुण इमं—सोलस चेवेत्यादि

गाथा भाविताऽर्थैवेत्यभिहितमानुषङ्गिकं, प्रकृतं प्रस्तुमः, तत्र यस्मात् श्रावकधर्मस्य तावत् मूलं सम्यक्त्वं तस्माद् तद्गत-मेव विधिमभिधातुकाम आह—

तत्थ समणोवासओ पुव्वामेव मिच्छत्ताओ पडिक्कमइ, संमत्तं उवसंपज्जइ, नो से कप्पइ अज्जप्पभिई अन्नउत्थिए वा अन्नउत्थिअदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरिहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालत्तएणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा, नन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तीकंतारेणं, से य संमत्ते पसत्थसमत्तमोहणियकम्माणुवेयणोवसमखयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पन्नत्ते, सम्मत्तस्स समणोवासएणं इमे पंच अइयारा जाणियव्वा न समायरियव्वा, तंजहा-संका कंखा वितिगिच्छा परपासंडपसंसा परपासंडसंथवे ( सूत्रम् ) ॥

अस्य व्याख्या—श्रमणानामुपासकः श्रमणोपासकः श्रावक इत्यर्थः, श्रमणोपासकः 'पूर्वमेव' आदावेव श्रमणोपासको भवन् मिथ्यात्वात्-तत्त्वार्थाश्रद्धानरूपात् प्रतिक्रामति-निवर्त्तते, न तन्निवृत्तिमात्रमत्राभिप्रेतं, किं तर्हि ?, तन्निवृत्तिद्वारेण सम्यक्त्वं-तत्त्वार्थश्रद्धानरूपं उप-सामीप्येन प्रतिपद्यते, सम्यक्त्वमुपसम्पन्नस्य सतः न 'से' तस्य 'कल्पते' युज्यते 'अद्यप्रभृति' सम्यक्त्वप्रतिपत्तिकालादारभ्य, किं न कल्पते ?-अन्यतीर्थिकान्-चरकपरिव्राजकभिक्षुभौतादीन् अन्यतीर्थिकदेवतानि-

रुद्रविष्णुसुगतादीनि अन्यतीर्थिकपरिगृहीतानि वा(अर्हत्)चैत्यानि—अर्हत्प्रतिमालक्षणानि यथा भौतपरिगृहीतानि वीरभ-द्रमहाकालादीनि वन्दितुं वा नमस्कर्तुं वा, तत्र वन्दनं—अभिवादनं, नमस्करणं—प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनं, को दोषः स्यात् ?, अन्येषां तद्भक्तानां मिथ्यात्वादिस्थिरीकरणादिरिति, तथा पूर्वं—आदौ अनालप्तेन सता अन्यतीर्थिकैस्ता-नेवालप्तुं वा संलप्तुं वा, तत्र सकृत् सम्भाषणमालपनं पौनःपुन्येन संलपनं, को दोषः स्यात् ?, ते हि तप्ततरायोगोलकल्पाः खल्वासनादिक्रियायां नियुक्ता भवन्ति, तत्प्रत्ययः कर्मबन्धः, तथा तेन वा प्रणयेन गृहागमनं कुर्युः, अथ च श्रावकस्य स्वजनपरिजनोऽगृहीतसमयसारस्तैः सह सम्बन्धं यायादित्यादि, प्रथमालप्तेन त्वसम्भ्रमं लोकापवादभयात् कीदृशस्त्व-मित्यादि वाच्यमिति, तथा तेषामन्यतीर्थिकानां अशनं—घृतपूर्णादि पानं—द्राक्षापानादि खादिमं—त्रपुषफलादि स्वादिमं—कक्कोललवङ्गादि दातुं वा अनुप्रदातुं वा न कल्पत इति, तत्र सकृद् दानं पुनः पुनरनुप्रदानमिति, किं सर्वथैव न कल्पत इति ?, न, अन्यथा राजाभियोगेनेति—राजाभियोगं मुक्त्वा बलाभियोगं मुक्त्वा देवताभियोगं मुक्त्वा गुरुनिग्रहेण—गुरुनिग्रहं मुक्त्वा वृत्तिकान्तारं मुक्त्वा, एतदुक्तं भवति—राजाभियोगादिना ददद्पि न धर्ममतिक्रामति ।

इह चोदाहरणानि, 'कहं[1] रायाभिओगेण देंतो णातिचरति धम्मं ?, तत्रोदाहरणम्—हत्थिणाउरे नयरे जियसत्तू राया, कत्तिओ सेट्ठी नेगमसहस्सपढमासणिओ सावगवण्णगो, एवं कालो वच्चइ, तत्थ य परिव्वायगो मासंमासेण खमइ,



1 कथं राजाभियोगेन ददन्नातिचरति धर्मं हस्तिनापुरे नगरे जितशत्रू राजा, कार्त्तिकः श्रेष्ठी निगमसहस्रप्रथमासनिकः श्रावकवर्णकः, एवं कालो व्रजति, तत्र च परिव्राजको मासंमासेन क्षपयति,

तं [1] सव्वलोगो आढाति, कत्तिओ नाढाति, ताहे से सो गेरुओ पओसमावण्णो छिद्दाणि मग्गति, अण्णया रायाए निमंतिओ पारणए नेच्छति, वहुसो २ राया निमंतेइ ताहे भणइ–जइ नवरं मम कत्तिओ परिवेसेइ तो नवरं जेमेमि, राया भणइ–एवं करेमि, राया समणूसो कत्तियस्स घरं गओ, कत्तिओ भणइ–संदिसह, राया भणति–गेरुयस्स परिवेसेहि, कत्तिओ भणति–न वट्टइ अम्हं, तुम्ह विसयवासित्ति करेमि, चिंतेइ–जइ पव्वइओ होंतो न एवं भवंतं, पच्छा णेण परिवेसियं, सो परिवेसेज्जंतो अंगुलिं चालेति, किह ते ?, पच्छा कत्तिओ तेण निव्वेएण पव्वइओ नेगमसहस्सपरिवारो मुणिसुव्वयसमीवे, वारसंगाणि पढिओ, वारस वरिसाणि परियाओ, सोहम्मे कप्पे सक्को जाओ, सो परिव्वायओ तेणाभिओगेण आभिओगिओ एरावणो जाओ, पेच्छिय सक्कं पलाओ गहिउं सक्को विलग्गो, दो सीसाणि कयाणि, सक्कावि दो जाया, एवं जावइयाणि सीसाणि विउव्वति तावतियाणि सक्को विउव्वति सक्करूवाणि, ताहे नासिउमारद्धो,

---

१ तं सर्वलोक आद्रियते, कार्तिको नाद्रियते, तदा तस्मै स गैरिकः प्रद्वेषमापन्नश्छिद्राणि मार्गयति, अन्यदा राज्ञा निमन्त्रितः पारणके नेच्छति, वहुशो २ राजा निमन्त्रयति तदा भणति–यदि परं कार्तिकः मां परिवेपयति तर्हि नवरं जेमामि, राजा भणति–एवं करोमि, राजा समनुष्यः कार्त्तिकस्य गृहं गतः, कार्त्तिको भणति–संदिश, राजा भणति–गैरिकं परिवेपय, कार्त्तिको भणति–न वर्त्ततेऽस्माकं, युष्मद्विपयवासीति करोमि, चिन्तयति–यदि प्रव्रजितोऽभविष्यं नैवमभविष्यत्, पश्चादनेन परिवेपितं, स परिवेष्यमाणोऽङ्गुलिं चालयति, कथं तव ?, पश्चात् कार्त्तिकस्तेन निर्वेदेन प्रव्रजितो नैगमसहस्रपरिवारो मुनिसुव्रत. समीपे, द्वादशाङ्गानि पठितः, द्वादश वर्पाणि पर्यायः, सौधर्मे कल्पे शक्रो जातः, स परिव्राट् तेनाभियोगेनाभियोगिक ऐरावणो जातः, दृष्ट्वा च शक्रं पलायितः गृहीत्वा शक्रो विलग्नः, द्वे शीर्षे कृते, शक्रौ अपि द्वौ जातौ, एवं यावन्ति शीर्षाणि विकुर्वति तावन्तिः शक्ररूपाणि विकुर्वति शक्रः, तदा नंष्टुमारब्धः,

सक्केणाहओ पच्छा ठिओ, एवं रायाभिओगेण देंतो नाइक्कमति, केत्तिया एयारिसया होहिंति जे पव्वइस्संति, तम्हा न दायव्वो। गणाभिओगेण वरुणो रहमुसले निउत्तो, एवं कोऽवि सावगो गणाभिओगेण भत्तं दवाविज्जा दिंतोवि सो नाइचरइ धम्मं, बलाभिओगोवि एमेव, देवयाभिओगेण जहा एगो गिहत्थो सावओ जाओ, तेण वाणमंतराणि चिरपरिचियाणि उज्झियाणि, एगा तत्थ वाणमंतरी पओसमावण्णा, गावीरक्खगो पुत्तो तीए वाणमंतरीए गावीहिं समं अवहरिओ, ताहे उइण्णा साहइ तज्जंती—किं ममं उज्झसि न वत्ति ?, सावगो भणइ, नवरि मा मम धम्मविराहणा भवतु, सा भणइ—ममं अच्चेहि, सो भणइ—जिणपडिमाणं अवसाणे ठाहि, आमं ठामि, तेण ठविया, ताहे दारगो गावीओ आणीयाओ, एरिसा केत्तिया होहिंति तम्हा न दायव्वं, दवाविज्जंतो णातिचरति। गुरुनिग्गहेण भिक्खुउवासगपुत्तो सावगं धूयं मग्गति, ताणि न देंति, सो कवडसड्ढत्तणेण साधू सेवेति, तस्स भावओ उवगयं, पच्छा साहेइ—एएण कारणेण पुव्विं ढुक्कोमि,

---

१ शक्रेणाहतः पश्चात् स्थितः, एवं राजाभियोगेन ददत् नातिक्रामति, कियन्त एतादृशो भविष्यन्ति ये प्रव्रजिष्यन्ति तस्मान्न दातव्यः। गणाभियोगेन वरुणो रथमुशले नियुक्तः, एवं कोऽपि श्रावको गणाभियोगेन भक्तं दाप्यते ददद्पि स नातिचरति धर्मं। बलाभियोगोऽप्येवमेव। देवताभियोगेन यथैको गृहस्थः श्रावको जातः, तेन व्यन्तराश्चिरपरिचिता उज्झिताः, एका तत्र व्यन्तरी प्रद्वेषमापन्ना, गोरक्षकः पुनस्तया व्यन्तर्या गोभिः सममपहृतः, तदाऽवतीर्णा कथयति तर्जयन्ती—किं मामुज्झसि न वेति ?, श्रावको भणति—नवरं मा मे धर्मविराधना भूत्, सा भणति—मामर्चय, स भणति—जिनप्रतिमानां पार्श्वे तिष्ठ, ओं तिष्ठामि, तेन स्थापिता, दारको गावश्च तदानीताः, ईदृशाः कियन्तो भविष्यन्ति तस्मान्न दातव्यं, दाप्यमानो नातिचरति। गुरुनिग्रहेण भिक्षूपासकपुत्रः श्रावकं दुहितरं याचते न तौ दत्तः, स कपटश्राद्धतया साधून् सेवते, तस्य भावेनोपगतं, पश्चात् कथयति—एतेन कारणेन पूर्वमागतोऽस्मि

इयाणिं सब्भावसावओ, सावओ साहू पुच्छइ, तेहिं कहियं, ताहे दिण्णा धूया, सो सावओ जुयगं घरं करेइ, अण्णया तस्स मायापियरो भत्तं भिक्खुगाण करेंति, ताइं भणंति–अज्ज एक्कसिं वच्चाहि, सो गओ, भिक्खुएहिं विज्जाए मंतिऊण फलं दिण्णं, ताए वाणमंतीरए अहिट्ठिओ घरं गओ तं सावयधूयं भणइ–भिक्खुगाणं भत्तं देमो, सा नेच्छइ, दासाणि सयणो य आरद्धो सज्जेउं, साविया आयरियाण गंतुं कहेति, तेहिं जोगपडिभेओ दिण्णो, सो से पाणिएण दिण्णो, सा वाणमंतरी नट्ठा, साभाविओ जाओ पुच्छइ कहं वत्ति ?, कहिए पडिसेहेति, अण्णे भणंति–तीए मयणमिंजाए वमाविओ, सो तो साभाविओ जाओ, भणइ–अम्मापिउछलेण मणा विवंचिउत्ति, तं किर फासुगं साहूणं दिण्णं, एरिसा केत्तिया आयरिया होहिंति तम्हा परिहरेज्जा। वित्तीकंतारेणं देज्जा, सोरट्ठो सड्ढओ उज्जेणिं वच्चइ दुकाले तच्चणिएहिं समं, तस्स पत्थयणं, खीणं भिक्खुएहिं भण्णइ–अम्हएहिं वहाहि पत्थयणं तो तुज्झवि दिज्जिहित्ति, तेण पडिवण्णं,

---

१ इदानीं सद्भावश्रावकः, श्रावकः साधून् पृच्छति, तैः कथितं, तदा दत्ता दुहिता, स श्रावकः पृथग्गृहं करोति, अन्यदा तस्य मातापितरौ भक्तं भिक्षुकाणां कुरुतः, तौ भणतः–अद्यैकशः आगच्छ, स गतः, भिक्षुकैर्विद्यया मन्त्रयित्वा फलं दत्तं, तया व्यन्तर्याऽधिष्ठितो गृहं गतः तां श्रावकदुहितरं भणति–भिक्षुकेभ्यो भक्तं दद्मः, सा नेच्छति, दासाः स्वजनश्च आरब्धः सज्जयितुं, श्राविकाऽऽचार्यान् गत्वा कथयति, तैः योगप्रतिभेदो दत्तः, स तस्मै पानीयेन दत्तः, सा व्यन्तरी नष्टा, स्वाभाविको जातः पृच्छति–कथं वेति ?, कथिते प्रतिषेधति, अन्ये भणन्ति–तया मदनबीजेन वमितः, स ततः स्वाभाविको जातो, भणति–मातापितृच्छलेन मनाक् विवञ्चित इति, तत्किल प्रासुकं साधुभ्यो दत्तं, ईदृशाः कियन्त आचार्या भविष्यन्ति तस्मात् परिहरेत्। वृत्तिकान्तारेण दद्यात्, सौराष्ट्रः श्रावक उज्जयिनीं व्रजति दुष्काले तच्चनिकैः समं, तस्य पथ्यदनं क्षीणं, भिक्षुकैर्भण्यते–अस्मदीयं वह पथ्यदनं तर्हि तुभ्यमपि दीयते इति, तेन प्रतिपन्नं,

ऽण्णया तस्स पोट्टसरणी जाया, सो चीवरेहिं वेढिओ तेहिं अणुकंपाए, सो भट्टारगाणं नमोक्कारं करेंतो कालगओ देवो वेमाणिओ जाओ, ओहिणा तच्चणियसरीरं पेच्छइ, ताहे सभूसणेण हत्थेण परिवेसेति, सड्ढाण ओहावणा, आयरियाण आगमणं, कहणं च, तेहिं भणियं—जाह अग्गहत्थं गिण्हिऊण भणह—नमो अरहंताणंति, बुज्झ गुज्झगा २, तेहिं गंतूण भणिओ संबुद्धो वंदित्ता लोगस्स कहेइ—जहा नत्थि एत्थ धम्मो तम्हा परिहरेज्जा ॥

अत्राह—इह पुनः को दोषः स्याद् येनेत्थं तेषामशनादिप्रतिषेध इति ?, उच्यते, तेषां तद्भक्तानां च मिथ्यात्वस्थिरीकरणं, धर्मबुद्ध्या ददतः सम्यक्त्वलाञ्छना, तथा आरम्भादिदोषश्च, करुणागोचरं पुनरापन्नानामनुकम्पया दद्यादपि, यदुक्तं—"सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं। सत्ताणुकंपणट्ठा दाणं न कहिंचि पडिसिद्धं ॥ १ ॥" तथा च भगवन्तस्तीर्थकरा अपि त्रिभुवनैकनाथाः प्रविव्रजिषवः सांवत्सरिकमनुकम्पया प्रयच्छन्त्येव दानमित्यलं विस्तरेण । प्रकृतमुच्यते—'संमत्तस्स समणोवासएण'मित्यादि सूत्रं, अस्य व्याख्या 'सम्यक्त्वस्य' प्राग्निरूपितस्वरूपस्य श्रमणोपासकेन—श्रावकेण 'एते' वक्ष्यमाणलक्षणाः अथवाऽमी ये प्रक्रान्ताः पञ्चेति सङ्ख्यावाचकः अतिचारा मिथ्यात्वमोहनीयकर्मोदयादात्मनोऽशुभाः परि-

१ अन्यदा तस्यातीसारो जातः, स चीवरैर्वेष्टितस्तैरनुकम्पया, स भट्टारकेभ्यो नमस्कारं कुर्वन् कालगतो देवो वैमानिको जातः, अवधिना तच्चनिकशरीरं प्रेक्षते, तदा सभूषणेन हस्तेन परिवेषयति, श्राद्धानामपभ्राजना, आचार्याणामागमनं, कथनं च, तैर्भणितं—याताग्रहस्तं गृहीत्वा भणत—नमोऽर्हद्भ्य इति, बुध्यस्व गुह्यक ! २, तैर्गत्वा भणितः संबुद्धो वंदित्वा लोकाय कथयति—यथा नास्त्यत्र धर्मस्तस्मात्परिहरेत् ॥ २ ॥ सर्वैरपि जिनैर्जितदुर्जयरागद्वेषमोहैः । सत्त्वानुकम्पनार्थं दानं न कुत्रापि प्रतिषिद्धम् ॥ १ ॥

णामविशेषा इत्यर्थः, यैः सम्यक्त्वमतिचरति, ज्ञातव्याः ज्ञपरिज्ञया न समाचरितव्याः, नासेव्या इति भावार्थः । 'तद्यथे'—त्युदाहरणप्रदर्शनार्थः, शङ्का काङ्क्षा विचिकित्सा परपाषण्डप्रशंसा परपाषण्डसंस्तवश्चेति, तत्र शङ्कनं शङ्का, भगवदर्हत्-प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात् सम्यगनवधार्यमाणेषु संशय इत्यर्थः, किमेवं स्यात् नैव-मिति, संशयकरणं शङ्का, सा पुनर्द्विभेदा—देशशङ्का सर्वशङ्का च, देशशङ्का देशविषया, यथा किमयमात्माऽसङ्ख्येयप्रदे-शात्मकः स्यादथ निष्प्रदेशो निरवयवः स्यादिति, सर्वशङ्का पुनः सकलास्तिकायजात एव किमेवं नैवं स्यादिति । मिथ्यादर्शनं च त्रिविधम्—अभिगृहीतानभिगृहीतसंशयभेदात्, तत्र संशयो मिथ्यात्वमेव, यदाह—"[1]पयमक्खरं च एक्कं जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोयंतोवि हु मिच्छद्दिट्ठी मुणेयव्वो ॥ १ ॥" तथा—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाज्ञा च (जिनाभिहितं) ॥१॥ एकस्मिन्नप्यर्थे सन्दिग्धे प्रत्ययोऽर्हति हि नष्टः । मिथ्यात्वदर्शनं तत्सचादिहेतुर्भवगतीनाम् ॥ २॥" तस्मात् मुमुक्षुणा व्यपगतशङ्केन सता जिनवचनं सत्यमेव सामन्यतः प्रतिपत्तव्यं, संशया-स्पदमपि सत्यं, सर्वज्ञाभिहितत्वात्, तदन्यपदार्थवत्, मतिदौर्बल्यादिदोषात्तु कार्त्स्न्येन सकलपदार्थस्वभावावधारणमशक्यं छद्मस्थेन, यदाह—"न हि नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति । ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म ॥ १ ॥" इह [2]चोदाहरणं—जो संकं करेइ सो विणस्सति, जहा सो पेज्जायओ, पेज्जाए मासा जे परिभज्जमाणा ते छूढा, अंधगारए

१ पदमक्षरं चैकं यो न रोचयति सूत्रनिर्दिष्टम् । शेषं रोचयन्नपि मिथ्यादृष्टिर्ज्ञातव्यः ॥ १ ॥ २ यः शङ्कां करोति स विनश्यति यथा स पेयापायी, पेयायां माषा ये परिभृज्ज्यमानास्ते क्षिप्ताः, अन्धकारे

लेहसालाओ आगया दो पुत्ता पियंति, एगो चिंतेति—एयाओ, मच्छियाओ संकाए तस्स वग्गुलो वाउ जाओ, मओ य, विइओ चिंतेइ—न मम माया मच्छिया देइ जीओ, एते दोसा । काङ्क्षणं काङ्क्षा—सुगतादिप्रणीतदर्शनेषु ग्राहोऽभिलाष इत्यर्थः, तथा चोक्तं—'कंखा अन्नन्नदंसणग्गाहो'सा पुनर्द्विभेदा—देशकाङ्क्षा सर्वकाङ्क्षा च, देशकाङ्क्षैकदेशविषया, एकमेव सौगतं दर्शनं काङ्क्षति, चित्तजयोऽत्र प्रतिपादितोऽयमेव च प्रधानो मुक्तिहेतुरित्यतो घटमानकमिदं न दूरापेतमिति, सर्वकाङ्क्षा तु सर्वदर्शनान्यवकाङ्क्षति, अहिंसादिप्रतिपादनपराणि सर्वाण्येव कपिलकणभक्षाक्षपादादिमतानीह लोके च नात्यन्तक्लेश-प्रतिपादनपराण्यतः शोभनान्येवेति, अथवैहिकामुष्मिकफलानि काङ्क्षति, प्रतिषिद्धा चेयमर्हद्भिरतः प्रतिषिद्धानुष्ठानादेनां कुर्वतः सम्यक्त्वातिचारो भवति, तस्मादेकान्तिकमव्याबाधमपवर्गं विहायान्यत्र काङ्क्षा न कार्येति, एत्थोदाहरणं, राया कुमारामच्चो य आसेणावहिया अडविं पविट्ठा, छुहापरद्धा वणफलाणि खायंति, पडिनियत्ताण राया चिंतेइ. लड्डुयपूयलग-मादीणि सव्वाणि खामि, आगया दोवि जणा, रण्णा सूयारा भणिया—जं लोए पयरइ तं सव्वं सव्वे रंधेहत्ति, उवट्ठवियं च रन्नो, सो राया पेच्छणयदिट्ठंतं करेइ, कप्पडिया बलिएहिं धाडिज्जइ, एवं मिट्ठस्स अवगासो होहितित्ति कणकुंडगमंडगादीणिवि

१ लेखशालाया आगतौ द्वौ पुत्रौ पिबतः, एकश्चिन्तयति—एता मक्षिकाः, शङ्कया तस्य वल्गुलो वायुर्जातो मृतश्च, द्वितीयश्चिन्तयति—न मह्यं माता मक्षिका दद्यात् जीवितः, एते दोषाः । २ अत्रोदाहरणं राजा कुमारामात्यश्चाश्वेनापहृतावटवीं प्रविष्टौ, क्षुधापरिगतौ वनफलानि खादतः, प्रतिनिवृत्तयो राजा चिन्तयति—लड्डुकापूपादीनि सर्वाणि खादामि, आगतौ द्वावपि जनौ, राज्ञा सूदा भणिताः—यल्लोके प्रचरति तत् सर्वं सर्वे राध्यतेति, उपस्थापितं च राज्ञे, स राजा प्रेक्षणकदृष्टान्तं करोति, कार्पटिका बलिभिर्धाव्यन्ते, एवं मिष्टस्यावकाशो भविष्यतीति कणकुण्डकमण्डकादीन्यपि

खइयाणि[1], तेहिं सूलेण मओ, अमच्चेण वमणविरेयणाणि कयाणि, सो आभागी भोगाण जाओ, इयरो विणट्ठो। चिकित्सा मतिविभ्रमः, युक्त्यागमोपपन्नेऽप्यर्थे फलं प्रति सम्मोहः, किमस्य महतस्तपःक्लेशायासस्य सिकताकणकवलनादेरायत्यां मम फलसम्पद् भविष्यति किं वा नेति, उभयथेह क्रियाः फलवत्यो निष्फलाश्च दृश्यन्ते कृषीवलानां, न चेयं शङ्कातो न भिद्यते इत्याशङ्कनीयं, शङ्का हि सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया इयं तु क्रियाविषयैव, तत्त्वतस्तु सर्वे एते प्रायो मिथ्यात्वमोहनीयोदयतो भवन्तो जीवपरिणामविशेषाः सम्यक्त्वातिचारा उच्यन्ते, न सूक्ष्मेक्षिकाऽत्र कार्येति, इयमपि न कार्या, यतः सर्वज्ञोक्तकुशलानुष्ठानाद् भवत्येव फलप्राप्तिरिति, अत्र चौरोदाहरणं[2]—सावगो नंदीसरवरगमणं दिव्वगंधाणं(तं) देवसंघरिसेण मित्तस्स पुच्छणं विज्जाए दाणं साहणं मसाणे चउप्पायं सिक्कगं, हेट्ठा इंगाला खायरो य सूलो, अट्ठसयं वारा परिजवित्ता पाओ सिक्कगस्स छिज्जइ एवं बितिओ तइए चउत्थे य छिण्णे आगासेणं वच्चति, तेण विज्जा गहिया, किण्हचउद्दसिरत्तिं साहेइ मसाणे, चोरो य नगरारक्खिएहिं परिरुब्भमाणो तत्थेव अतियओ, ताहे वेढेउं सुसाणे ठिया

---

१ खादितानि, तैः शूलेन मृतः, अमात्येन वमनविरेचनानि कृतानि, स भोगानामाभागी जातः, इतरो विनष्टः। २ चौरोदाहरणं श्रावको नन्दीश्वरवरगमनं देवसंघर्षेण दिव्यगन्धः मित्रस्य पृच्छा विद्याया दानं साधनं श्मशाने चतुष्पादं सिक्ककमधस्ताद् अङ्गाराः खादिरश्च स्तम्भः अष्टशतं वारान् परिजप्य पाद-सिक्ककस्य छेद्यते एवं द्वितीयः तृतीये चतुर्थे च छिन्ने आकाशेन गम्यते, तेन विद्या गृहीता, कृष्णचतुर्दशीरात्रौ साधयति श्मशाने, चौरश्च नगरारक्षकै रुध्यमानस्तत्रैवातिगतस्तदा वेष्टयित्वा श्मशानं ( ते ) स्थिताः

पभाए घिप्पिहितित्ति, सो य भमंतो तं विज्जासाहयं पेच्छइ, तेण पुच्छिओ भणति–विज्जं साहेमि, चोरो भणति–केण दिण्णा ?, सो भणति–सावगेण, चोरेण भणियं–इमं दव्वं गिण्हाहि, विज्जं देहि, सो सड्ढो वितिगिच्छति–सिज्झेज्जा न वत्ति, तेण दिण्णा, चोरो चिंतेइ–सावगो कीडियाएवि पावं नेच्छइ, सच्चमेयं, सो साहिउमारद्धो, सिद्धा, इयरो सड्ढो गहिओ, तेण आगासगएण लोओ भेसिओ ताहे सो मुक्को, सड्ढावं दोवि जाया, एवं निव्वितिगिच्छेण होयव्वं, अथवा विद्वज्जुगुप्सा, विद्वांसः–साधवः विदितसंसारस्वभावाः परित्यक्तसमस्तसङ्गाः तेषां जुगुप्सा–निन्दा, तथाहि–तेऽस्नानात्, प्रस्वेदजलक्लिन्नमलत्वात् दुर्गन्धिवपुषो भवन्ति तान् निन्दति–को दोषः स्यात् यदि प्रासुकेन वारिणाऽङ्गक्षालनं कुर्वीरन् भगवन्तः ?, इयमपि न कार्या, देहस्यैव परमार्थतोऽशुचित्वात्, एत्थं उदाहरणं–एको सड्ढो पच्चंते वसति, तस्स धूयाविवाहे कहवि साहवो आगया, सा पिउणा, भणिया–पुत्तग ! पडिलाहेहि साहुणो, सा मंडियपसाहिया पडिलाभेति, साहूण जल्लगंधो तीए अग्घाओ, चिंतेइ–अहो अणवज्जो भट्टारगेहिं धम्मो देसिओ जइ फासुएण ण्हाएज्जा ?, को दोसो होज्जा ?, सा तस्स ठाणस्स अणालोइयपडिक्कंता

१ प्रभाते गृहीष्यते इति, स च भ्रमन् तं विद्यासाधकं प्रेक्षते, तेन पृष्टो भणति–विद्यां साधयामि, चौरो भणति–केन दत्ता ?, स भणति–श्रावकेण, चौरेण भणितं–इदं द्रव्यं गृहाण विद्यां देहि, स श्राद्धो विचिकित्सति सिध्येद्वा नेति, तेन दत्ता, चौरश्चिन्तयति–श्रावकः कीटिकाया अपि पापं नेच्छति, सत्यमेतत्, स साधयितुमारब्धः, सिद्धा, इतरः श्राद्धो गृहीतः, तेनाकाशगतेन लोको भापितः, तदा स मुक्तः, श्राद्धावपि जातौ, एवं निर्विचिकित्सेन भवितव्यं । २ अत्रोदाहरणं एकः श्राद्धः प्रत्यन्ते वसति, तस्य दुहितृविवाहे कथमपि साधवः आगताः, सा पित्रा भणिता–पुत्रिके ! प्रतिलम्भय साधून्, सा मण्डितप्रसाधिता प्रतिलम्भयति, साधूनां जल्लगन्धस्तयाऽऽघ्रातः, चिन्तयति–अहो अनवद्यो भट्टारकैर्धर्मो देशितः यदि प्रासुकेन स्नायात् को दोषो भवेत् ?, सा तस्य स्थानस्यानालोचितप्रतिक्रान्ता

[1]कालं किच्चा रायगिहे गणियाए पोट्टे उववन्ना, गब्भगता चेव अरइं जणेति, गब्भपाडणेहि य न पडइ, जाया समाणी उज्झिया, सा गंधेण तं वणं वासेति, सेणिओ य तेण पएसेण निग्गच्छइ सामिणो वंदगो, सो खंधावारो तीए गंधं न सहइ, रण्णा पुच्छियं–किमेयंति, कहियं दारियाए गंधो, गंतूण दिट्ठा, भणति–एसेव पढमपुच्छाति, गओ सेणिओ, पुव्वुद्दिट्ठवुत्तंते कहिते भणइ राया–कहिं एसा पच्चणुभविस्सइ सुहं दुक्खं वा ?, सामी भणइ–एएण कालेण वेदियं, सा तव चेव भज्जा भविस्सति अग्गमहिसी, अट्ठ संवच्छराणि जाव तुज्झं रममाणस्स पुट्ठीए हंसोवल्लीलीं काही तं जाणिज्जासि, वंदित्ता गओ, सो य अवहरिओ गंधो, कुलपुत्तएण साहरिया, संवड्ढिया जोव्वणत्था जाया, कोमुइवारे अम्मयाए समं आगया, अभओ सेणिओ (य) पच्छण्णा कोमुइवारं पेच्छंति, तीए दारियाए अंगफासेण अज्झोववण्णो णाममुद्दं दसियाए तीए बंधति, अभयस्स कहियं–णाममुद्दा हारिया, मग्गाहि, तेण मणुस्सा दारेहिं ठविया, एक्केक्कं माणुस्सं पलोएउं नीणिज्जइ, सा

---

१ कालं कृत्वा राजगृहे गणिकाया उदरे उत्पन्ना, गर्भगतैवारातिं जनयति, गर्भपातनैरपि च न पतति, जाता सन्त्युज्झिता, सा गन्धेन तद्वनं वासयति, श्रेणिकश्च तेन प्रदेशेन निर्गच्छति, स्वामिनो वन्दनाय, स स्कन्धावारस्तस्या गन्धं न सहते, राज्ञा पृष्टं–किमेतदिति ?, कथितं दारिकाया गन्धः, गत्वा दृष्टा, भणति–एषैव प्रथमपृच्छेति, गतः श्रेणिकः, पूर्वोद्दिष्टे वृत्तान्ते कथिते भणति राजा–कैषा प्रत्यनुभविष्यति सुखं दुःखं वा ?, स्वामी भणति–एतेन कालेन वेदितं, सा तवैव भार्या भविष्यति अग्रमहिषी, अष्ट संवत्सरान् यावत्तव रममाणस्य पृष्ठौ हंसोलीं करिष्यति तां जानीयाः, वन्दित्वा गतः, स चापहृतो गन्धः, कुलपुत्रकेण संहृता संवृद्धा च यौवनस्था जाता, कौमुदीवासरेऽम्बया सममागता, अभयः श्रेणिकश्च प्रच्छन्नौ कौमुदीवासरं प्रेक्षेते, तस्या दारिकाया अङ्गस्पर्शेनाध्युपपन्नो नाममुद्रां तस्या दशायां बध्नाति, अभयाय कथितं–नाममुद्रा हारिता, मार्गय, तेन मनुष्या द्वारि स्थापिताः, एकैको मनुष्यः प्रलोक्य निष्काश्यते, सा

दारिया दिट्ठा चोरोत्ति गहिया, परिणीया य, अण्णया य वज्जुलेण रमंति, रायाणिउ तेण पोत्तेण वाहेंति, इयरा पोत्तं देंति, सा विलग्गा, रण्णा सरियं, मुक्का य पवइया, एवं विउदुगुंछाफलं । परपाषंडानां—सर्वज्ञप्रणीतपाषण्डव्यतिरिक्तानां प्रशंसा प्रशंसनं प्रशंसा स्तुतिरित्यर्थः । परपाषण्डानामोघतस्त्रीणि शतानि त्रिषष्ठ्यधिकानि भवन्ति, यत उक्तम्—"असीयसयं किरियाणं अकिरियवाईण होइ चुलसीती । अण्णाणिय सत्तट्ठी वेणइयाणं च बत्तीसं ॥ १ ॥ गाहा", इयमपि गाथा विनेयजनानुग्रहार्थं ग्रन्थान्तरप्रतिबद्धाऽपि लेशतो व्याख्यायते—'असियसयं किरियाणं'ति अशीत्युत्तरं शतं क्रियावादिनां, तत्र न कर्त्तारं विना क्रिया सम्भवति तामात्मसमवायिनीं वदन्ति ये तच्छीलाश्च ते क्रियावादिनः, ते पुनरात्माद्यस्तित्वप्रतिपत्तिलक्षणाः अनेनोपायेनाशीत्यधिकशतसङ्ख्या विज्ञेयाः, जीवाजीवाश्रवबन्धसंवरनिर्जरापुण्यापुण्यमोक्षाख्यान् नव पदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ, तयोरधो नित्यानित्यभेदौ, तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः, पुनश्चेत्थं विकल्पाः कर्त्तव्याः—अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः, विकल्पार्थश्चायं—विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च कालतः, कालवादिनः, उक्तेनैवाभिलापेन द्वितीयो विकल्पः ईश्वरवादिनः, तृतीयो विकल्प आत्मवादिनः 'पुरुष एवेदं सर्वं'मित्यादि, नियतिवादिनश्चतुर्थो विकल्पः, पञ्चमविकल्पः स्वभाववादिनः, एवं स्वत इत्यत्यजता लब्धाः पञ्च विकल्पाः, परत इत्यनेनापि पञ्चैव लभ्यन्ते, नित्यत्वा-

१ दारिका दृष्टा चोर इति गृहीता परिणीता च, अन्यदा च वागलीयेन रमन्ते, राजानस्तं पोतेन वाहयन्ति, इतरः पोतं ददति, सा विलग्ना, राज्ञा स्मृतं, मुक्ता च प्रव्रजिता, एतद् विद्वज्जुगुप्साफलं ।

परित्यागेन चैते दश विकल्पाः एवमनित्यत्वेनापि दशैव, एकत्र विंशतिर्जीवपदार्थेन लब्धाः, अजीवादिष्वप्यष्टस्वेवमेव प्रतिपदं विंशतिर्विकल्पानामतो विंशतिर्नवगुणा शतमशीत्युत्तरं क्रियावादिनामिति । 'अक्किरियाणं च भवति चुलसीति'त्ति अक्रियावादिनां च भवति चतुरशीतिर्भेदा इति, न हि कस्यचिदवस्थितस्य पदार्थस्य क्रिया समस्ति, तद्भाव एवावस्थितेरभावादित्येवं वादिनोऽक्रियावादिनः, तथा चाहुरेके—"क्षणिकाः सर्वसंस्काराः, अस्थितानां कुतः क्रिया ?। भूतिर्येषां क्रिया सैव, कारकं सैव चोच्यते ॥ १ ॥" इत्यादि, एते चात्मादिनास्तित्वप्रतिपत्तिलक्षणा अमुनोपायेन चतुरशीतिर्द्रष्टव्याः, एतेषां हि पुण्यापुण्यवर्जितपदार्थसप्तकन्यासस्तथैव जीवस्याधः स्वपरविकल्पभेदद्वयोपन्यासः, असत्त्वादात्मनो नित्यानित्यभेदौ न स्तः, कालादीनां तु पञ्चानां षष्ठी यदृच्छा न्यस्यते, पश्चाद्विकल्पभेदाभिलापः,—नास्ति जीवः स्वतः कालत इत्येको विकल्पः, एवमीश्वरादिभिरपि यदृच्छावसानैः, सर्वे च षड् विकल्पाः, तथा नास्ति जीवः परतः कालत इति षडेव विकल्पाः, एकत्र द्वादश, एवमजीवादिष्वपि षट्सु प्रतिपदं द्वादश विकल्पाः एकत्र, सप्त द्वादशगुणाश्चतुरशीतिर्विकल्पा नास्तिकानामिति । 'अण्णाणिय सत्तट्ठि'त्ति अज्ञानिकानां सप्तषष्टिर्भेदा इति, तत्र कुत्सितं ज्ञानमज्ञानं तदेषामस्तीति अज्ञानिकाः, नन्वेवं लघुत्वात् प्रक्रमस्य प्राक् बहुव्रीहिणा भवितव्यं ततश्चाज्ञाना इति स्यात्, नैष दोषः, ज्ञानान्तरमेवाज्ञानं मिथ्यादर्शनसहचारित्वात्, ततश्च जातिशब्दत्वाद् गौरखरवदरण्यमित्यादिवदज्ञानिकत्वमिति, अथवा अज्ञानेन चरन्ति तत्प्रयोजना वा अज्ञानिकाः—असंचित्य कृतवैफल्यादिप्रतिपत्तिलक्षणाः, अमुनोपायेन सप्तषष्टिर्ज्ञातव्याः, तत्र जीवादिनवपदार्थान् पूर्ववत् व्यवस्थाप्य पर्यन्ते चोत्पत्तिमुपन्यस्याधः सप्त सदादयः उपन्यसनीयाः,

सत्त्वमसत्त्वं सदसत्त्वं अवाच्यत्वं सदवाच्यत्वं असदवाच्यत्वं सदसदवाच्यत्वमिति चैकैकस्य जीवादेः सप्त सप्त विकल्पाः, एते नव सप्तकाः त्रिषष्टिः, उत्पत्तेस्तु चत्वार एवाद्या विकल्पाः, तद्यथा—सत्त्वमसत्त्वं सदसत्त्वं अवाच्यत्वं चेति, त्रिषष्टिमध्ये क्षिप्ताः सप्तषष्टिर्भवन्ति, को जानाति जीवः सन्नित्येको विकल्पः, ज्ञातेन वा किं ?, एवमसदादयोऽपि वाच्याः, उत्पत्तिरपि किं सतोऽसतः सदसतोऽवाच्यस्येति को जानातीति ?, एतन्न कश्चिदपीत्यभिप्रायः । 'वेणइयाणं च बत्तीस'त्ति वैनयिकानां च द्वात्रिंशद् भेदाः, विनयेन चरन्ति विनयो वा प्रयोजनमेषामिति वैनयिकाः, एते चानवधृतलिङ्गाचारशास्त्रा विनयप्रतिपत्तिलक्षणा अमुनोपायेन द्वात्रिंशदवगन्तव्याः—सुरनृपतियतिज्ञातिस्थविराधममातृपितॄणां प्रत्येकं कायेन वचसा मनसा दानेन च देशकालोपपन्नेन विनयः कार्य इत्येते चत्वारो भेदाः सुरादिष्वष्टसु स्थानकेषु, एकत्र मिलिता द्वात्रिंशदिति, सर्वसङ्ख्या पुनरेतेषां त्रीणि शतानि त्रिषष्ट्यधिकानि, न चैतत् स्वमनीषिकाव्याख्यानं, यस्मादन्यैरप्युक्तं—"आस्तिकमतमात्माद्या नित्यानित्यात्मका नव पदार्थाः। कालनियतिस्वभावेश्वरात्मकृताः (तकाः) स्वपरसंस्थाः ॥ १ ॥ कालयदृच्छानियतीश्वरस्वभावात्मनश्चतुरशीतिः । नास्तिकवादिगणमतं न सन्ति भावाः स्वपरसंस्थाः ॥ २ ॥ अज्ञानिकवादिमतं नव जीवादीन् सदादिसप्तविधान् । भावोत्पत्तिं सदसद्द्वैतावाच्यां च को वेत्ति ? ॥ ३ ॥ वैनयिकमतं विनयश्चेतोवाक्कायदानतः कार्यः । सुरनृपतियतिज्ञातिस्थविराधममातृपितृषु सदा ॥ ४ ॥" इत्यलं प्रसङ्गेन प्रकृतं प्रस्तुमः, एतेषां प्रशंसा न कार्या—पुण्यभाज एते सुलब्धमेभिर्यद् जन्मेत्यादिलक्षणा, एतेषां मिथ्यादृष्टित्वादिति । अत्र चोदाहरणं—पाडलिपुत्ते चाणक्को,

१ पाटलीपुत्रे चाणक्यः,

चंदगुत्तेणं भिक्खुगाणं वित्ती हरिता, ते तस्स धम्मं कहेंति, राया तूसति चाणक्कं पलोएति, ण य पसंसति ण देति, तेण चाणक्कभज्जा ओलग्गिता, ताए सो करणिं गाहितो, ताधे कथितेण भणितं तेण–सुभासियंति, रण्णा तं अण्णं च दिण्णं, विदियदिवसे चाणक्को भणति–कीस दिन्नं ?, राया भणइ–तुज्झेहिं पसंसितं, सो भणइ–ण मे पसंसितं, सव्वारंभपवित्ता कहं लोगं पत्तियाविंतित्ति !, पच्छा ठितो, केत्तिया एरिसा तम्हा ण कायव्वा। परपाषण्डैः–अनन्तरोक्तस्वरूपैः सह संस्तवः परपाषण्डसंस्तवः, इह संवासजनितः परिचयः संवसनभोजनालापादिलक्षणः परिगृह्यते, न स्तुतिरूपः, तथा च लोके प्रतीत एव संपूर्वः स्तौतिः परिचय इति, 'असंस्तुतेषु प्रसभं कुलेष्वि'त्यादाविति, अयमपि न समाचरणीयः, तथा हि एकत्र संवासे तत्प्रक्रियाश्र .णात् तत्क्रियादर्शनाच्च तस्यासकृदभ्यस्तत्वादवाप्तसहकारिकारणात् मिथ्यात्वोदयतो दृष्टिभेदः संजायते अतोऽतिचारहेतुत्वान्न समाचरणीयोऽयमिति। अत्र चोदाहरणं–सोरट्ठसड्ढगो पुव्वभणितो। एवं शङ्कादिसकलशल्यरहितः सम्यक्त्ववान् शेषाणुव्रतादिप्रतिपत्तियोग्यो भवति, तानि चाणुव्रतानि स्थूलप्राणातिपातादिनिवृत्तिरूपाणि प्राक् लेशतः सूचितान्येव 'दुविधन्तिविधेण पढमो' इत्यादि(ना) अधुना स्वरूपतस्तान्येवोपदर्शयन्नाह–

**थूलगपाणाइवायं समणोवासओ पच्चक्खाइ, से पाणाइवाए दुविहे पन्नत्ते, तंजहा–संकप्पओ अ आरंभओ**

---

१ चन्द्रगुप्तेन भिक्षुकाणां वृत्तिर्हृता, ते तस्मै धर्मं कथयन्ति, राजा तुष्यति, चाणक्यं प्रलोकयति, तान् न प्रशंसति न ददाति, तैश्चाणक्यभार्या सेवितुमारब्धा, तया स करणिं ग्राहितः, तदा कथितेन भणितं तेन–सुभाषितमिति, राज्ञा तदन्यच्च दत्तं, द्वितीयदिवसे चाणक्यो भणति–कथं दत्तं ?, राजा भणति–युष्माभिः प्रशंसितं, स भणति–न मया प्रशंसितं सर्वारम्भप्रवृत्ताः कथं लोकं प्रत्याययन्ति ?, पश्चात् स्थितः, कियन्त ईदृशास्तस्मान्न कर्त्तव्या। २ सौराष्ट्रश्रावकः पूर्वभणितः

अ, तत्थ समणोवासओ संकप्पओ जावज्जीवाए पच्चक्खाइ, नो आरंभओ, थूलगपाणाइवायवेरमणस्स समणोवासएणं इमे पंच अइयारा जाणियव्वा, तंजहा–बंधे वहे छविच्छेए अइभारे भत्तपाणवुच्छेए १। (सूत्रं)॥

अस्य व्याख्या–स्थूलाः–द्वीन्द्रियादयः,स्थूलत्वं चैतेषां सकललौकिकजीवत्वप्रसिद्धेः, एतदपेक्षयैकेन्द्रियाः (णां) सूक्ष्माधिगमेना(न)जीवत्वसिद्धेरिति, स्थूला एव स्थूलकास्तेषां प्राणाः-इन्द्रियादयः तेषामतिपातः स्थूलप्राणातिपातः तं श्रमणोपासकः श्रावक इत्यर्थः प्रत्याख्याति, तस्माद् विरमत इति भावना । स च प्राणातिपातो द्विविधः प्रज्ञप्तः, तीर्थकरगणधरैर्द्विविधः प्ररूपित इत्यर्थः, 'तद्यथे'त्युदाहरणोपन्यासार्थः, सङ्कल्पजश्चारम्भजश्च, सङ्कल्पाज्जातः सङ्कल्पजः, मनसः सङ्कल्पाद् द्वीन्द्रियादिप्राणिनः मांसास्थिचर्म्मनखवालदन्ताद्यर्थं व्यापादयतो भवति, आरम्भाज्जातः आरम्भजः, तत्रारम्भो–हलदन्तालखननस्तत्(लवन) प्रकारस्तस्मिन् शङ्खचन्दणकपिपीलिकाधान्यगृहकारकादिसङ्घट्टनपरितापापद्रावलक्षण इति, तत्र श्रमणोपासकः सङ्कल्पतो यावज्जीवयापि प्रत्याख्याति, न तु यावज्जीवयैव नियमत इति, 'नारम्भज'मिति, तस्यावश्यतयाऽऽरम्भसद्भावादिति, आह– एवं सङ्कल्पतः किमिति सूक्ष्मप्राणातिपातमपि न प्रत्याख्याति ?, उच्यते, एकेन्द्रिया हि प्रायो दुष्परिहाराः सद्मवासिनां सङ्कल्प्यैव सचित्तपृथ्व्यादिपरिभोगात्, तत्थ पाणातिपाते कज्जमाणे के दोसा ? अकज्जंते के गुणा ?, तत्थ दोसे उदाहरणं कोंकणगो, तस्स भज्जा मया, पुत्तो य से अत्थि, तस्स दारगस्स दाइयभएण दारियं ण लभति, ताधे सो अन्नलक्खेण रमंतो



---

१ तत्र प्राणातिपाते क्रियमाणे के दोषाः ? अक्रियमाणे च के गुणाः ?, तत्र दोषे उदाहरणं कोङ्कणकः, तस्य भार्या मृता, पुत्रश्च तस्य अस्ति, तस्य दारकस्य दायादभयेन दारिकां न लभते, तदा सोऽन्यलक्ष्येण रममाणो

विंधति। गुणे उदाहरणं सत्तवदिओ। विदियं उज्जेणीए दारगो, मालवेहिं हरितो सावगदारगो, सूतेण कीतो, सो तेण भणितो—लावगे ऊसासेहि, तेण मुक्का, पुणो भणिओ मारेहित्ति, सो णेच्छति, पच्छा पिट्टेत्तुमारद्धो, सो पिट्टिज्जंतो कूवति, पच्छा रण्णा सुतो, सद्दावेतूण पुच्छितो, ताधे साहति, रण्णावि भणिओ णेच्छति, ताधे हत्थिणा तासितो तथावि णेच्छति, पच्छा रण्णा सीसरक्खो ठवितो, अण्णता थेरा समोसड्ढा, तेसिं अंतिए पव्वइतो। ततियं गुणे उदाहरणं—पाडलिपुत्ते नगरे जियसत्तू राया, खेमो से अमच्चो चउविधाए बुद्धीए संपण्णो समणोवासगो सावगगुणसंपण्णो, सो पुण रण्णो हिउत्तिकाउं अण्णेसिं दंडभडभोइयाणं अप्पितो, तस्स विणासणणिमित्तं खेमसंतिए पुरिसे दाणमाणेहिं सक्कारिंति, रण्णो अभिमरए पउंजंति, गहिता य भणंति हम्ममाणा—अम्हे खेमसंगता तेण चेव खेमेण णिउत्ता, खेमो गहितो भणति—अहं सव्वसत्ताणं खेमं करेमि किं पुण रण्णो सरीरस्सत्ति ?, तथावि वज्झो आणत्तो, रण्णो य असोगवणियाउ(ए) अगाहा पुक्खरिणीसंछण्णपत्तभि-

---

१ विध्यति। गुणे उदाहरणं सप्तपदिकः द्वितीयं, उज्जयिन्या दारको, मालवकैर्हृतः श्रावकदारकः, सूतेन क्रीतः, स तेन भणितः—लावकान् मारय, तेन मुक्ताः, पुनर्भणितः—मारयेति, स नेच्छति, पश्चात्पिट्टयितुमारब्धः, स पिट्टयमानः कूजति, पश्चाद् राज्ञा श्रुतः, शब्दयित्वा पृष्टः, तदा कथयति, राज्ञाऽपि भणितो नेच्छति, तदा हस्तिना त्रासितस्तथापि नेच्छति, पश्चाद्राज्ञा शीर्षरक्षकः स्थापितः, अन्यदा स्थविराः समवसृतास्तेषामन्तिके प्रव्रजितः। तृतीयमुदाहरणं गुणे—पाटलिपुत्रे नगरे जितशत्रू राजा, क्षेमस्तस्य अमात्यश्चतुर्विधया बुद्ध्या संपन्नः श्रमणोपासकः श्रावकगुणसंपन्नः, स पुना राज्ञे हित इतिकृत्वाऽन्येषां दण्डभटभोजिकानामप्रियः, तस्य विनाशननिमित्तं क्षेमसत्कान् पुरुषान् दानसन्मानाभ्यां सत्कारयन्ति, राज्ञोऽभिमरकान् प्रयुञ्जन्ति, गृहीताश्च भणन्ति हन्यमानाः—वयं क्षेमसत्काः तेनैव क्षेमेण नियुक्ताः, क्षेमो गृहीतो भणति—अहं सर्वसत्त्वानां क्षेमं करोमि किं पुना राज्ञः शरीरस्येति ?, तथापि वध्य आज्ञप्तः, राज्ञश्चाशोकवनिकायामगाधा पुष्करिणी संछन्नपत्रवि-

समुणाला उप्पलपउमोपसोभिता, सा य मगरगाहेहिं दुरवगाहा, ण य ताणि उप्पलादीणि कोइ उच्चिणिउं समत्थो, जो य वज्झो रण्णा आदिस्सति सो वुच्चति–एत्तो पुक्खरिणीतो पउमाणि आणेहित्ति, ताधे खेमो उट्ठेऊण नमोऽत्थु णं अरहंताणं भणित्तु जदिहं निरावराधी तो मे देवता साणेज्झं देंतु, सागारं भत्तं पच्चक्खायितुं ओगाढो, देवदासाणेज्झेणं मगरपुट्ठीठितो बहूणि उप्पलपउमाणि गेण्हित्तुत्तिण्णो, रण्णा हरिसितेण खामितो उवगूढो य, पडिपक्खणिग्गहं कातूण भणितो–किं ते वरं देमि ?, तेण णिरुंभमाणेणवि पव्वज्जा चरिता पव्वइतो, एते गुणा पाणातिपातवेरमणे । इदं चातिचाररहितमनुपालनीयं, तथा चाह–'थूलगे'त्यादि, स्थूलकप्राणातिपातविरमणस्य विरतेरित्यर्थः श्रमणोपासकेनामी पञ्चातिचाराः 'जाणियव्वा' ज्ञपरिज्ञया न समाचरितव्याः–न समाचरणीयाः, तद्यथेत्युदाहरणोपन्यासार्थः, तत्र बन्धनं बन्धः–संयमनं रज्जुदामनकादिभिर्हननं वधः ताडनं कसादिभिः छविः–शरीरं तस्य छेदः–पाटनं करपत्रादिभिः भरणं भारः अतीव भरणं अतिभारः–प्रभूतस्य पूगफलादेः स्कन्धपृष्ठ्यादिष्वारोपणमित्यर्थः, भक्तं–अशनमोदनादि पानं–पेयमुदकादि तस्य च व्यवच्छेदः–निरोधोऽदानमित्यर्थः, एतान् समाचरन्नतिचरति प्रथमाणुव्रतं, तदत्रायं तस्य विधिः—

१ समृणाला उत्पलपद्मोपशोभिता, सा च मकरग्राहैर्दुरवगाहा, न च तान्युत्पलादीनि कोऽप्युच्चेतुं समर्थः, यश्च वध्यो राज्ञाऽऽदिश्यते स उच्यते–इतः पुष्करिणीतः पद्मान्यानयेति, तदा क्षेम उत्थाय नमोऽस्तु अर्हद्भ्यो भणित्वा यद्यहं निरपराधस्तदा मह्यं देवता सान्निध्यं ददातु, साकारं भक्तं प्रत्याख्यायावगाढः, देवतासान्निध्येन मकरपृष्ठस्थितो बहून्युत्पलपद्मानि गृहीत्वोत्तीर्णः, राज्ञा हृष्टेन क्षामितः उपगूढश्च, प्रतिपक्षनिग्रहं कृत्वा भणितः–किं ते वरं ददामि ?, तेन निरुध्यमानेनापि प्रव्रज्या चीर्णा प्रव्रजितः, एते गुणाः प्राणातिपातविरमणे ।

[1] वन्धो दुविधो–दुप्पदाणं चतुप्पदाणं च, अट्ठाए अणट्ठाए य, अणट्ठाए न वट्टति वंधेत्तुं, अट्ठाए दुविधो–निरवेक्खो सावेक्खो य, णिरवेक्खो णेच्चलं धणितं जं वंधति, सावेक्खो जं दामगंठिणो जं व सक्केंति पलीवणगादिसुं मुंचितुं छिंदितुं वा तेण संसरपासएण वंधेतवं, एवं ताव चतुप्पदाणं, दुपदाणंपि दासो वा दासी वा चोरो वा पुत्तो वा ण पढंतगादि जति वज्झति तो सावेक्खाणि वंधितवाणि रक्खितवाणि य जधा अग्गिभयादिसु ण विणस्संति, ताणि किर दुपदचतुप्पदाणि सावगेण गेण्हितवाणि जाणि अवद्धाणि चेव अच्छंति, वहो तधा चेव, वधो णाम तालणा, अणट्ठाए णिरवेक्खो णिद्दयं तालेति, सावेक्खो पुण पुव्वमेव भीतपरिसेण होतवं, मा हणणं कारिज्जा, जति करेज्ज ततो मम्मं मोत्तूणं ताधे लताए दोरेण वा एक्कं दो तिण्णि वारे तालेति, छविछेदो अणट्ठाए तधेव णिरवेक्खो हत्थपादकण्णणक्काइं णिद्दयत्ताए छिंदति, सावेक्खो गंडं वा अरुयं वा छिंदेज्ज वा डहेज्ज वा, अतिभारो ण आरोवेतवो, पुव्वं चेव जा वाहणाए जीविया सा मोत्तवा,

---

[1] बन्धो द्विविधो–द्विपदानां चतुष्पदानां च, अर्थायानर्थाय च, अनर्थाय न वर्त्तते बद्धुं, अर्थाय द्विविधः–निरपेक्षस्सापेक्षश्च, निरपेक्षो यन्निश्चलं बध्नाति वाढं, सापेक्षो यद्दामग्रन्थिना यच्च शक्नोति प्रदीपनकादिषु मोचयितुं छेत्तुं वा तेन संसरत्पाशकेन बद्धव्यं, एवं तावत् चतुष्पदानां, द्विपदानामपि दासो वा दासी वा चौरो वा पुत्रो वाऽपठदादिर्यदि वध्यते तदा सापेक्षाणि बद्धव्यानि रक्षितव्यानि च यथाऽग्निभयादिषु न विनश्यन्ति, ते किल द्विपदचतुष्पदाः श्रावकेण ग्रहीतव्या येऽबद्धा एव तिष्ठन्ति, वधोऽपि तथैव, वधो नाम ताडनं, अनर्थाय निरपेक्षो निर्दयं ताडयति, सापेक्षः पुनः पूर्वमेव भीतपर्षदा भवितव्यं मा घातं कुर्या, यदि कुर्यात् ततो मर्म मुक्त्वा तदा लतया दवरकेण वा एकशो द्विस्त्रिर्वारान् ताडयति, छविच्छेदोऽनर्थाय तथैव निरपेक्षो हस्तपादकर्णनासिकादि निर्दयतया छिनत्ति, सापेक्षो गण्डं वा अरुवां छिन्द्याद्वा दहेद्वा, अतिभारो नारोपयितव्यः, पूर्वमेव या वाहनेनाजीविका सा मोक्तव्या,

णं होज्जा अण्णा जीविता ताधे दुपदो जं सयं उक्खिवति उत्तारेति वा भारं एवं वहाविज्जति, बइल्लाणं जधा साभाविया-ओवि भारातो ऊणओ कीरति, हलसगडेसुवि वेलाए मुयति, आसहत्थीसुवि एस विही, भत्तपाणवोच्छेदो ण कस्सइ कातव्वो, तिवच्छुद्धो मा मरेज्ज, तधेव अणट्ठाए दोसा परिहरेज्जा, सावेक्खो पुण रोगणिमित्तं वा वायाए वा भणेज्जा—अज्ज ते ण देमित्ति, संतिणिमित्तं वा उववासं कारावेज्जा, सव्वत्थवि जतणा जधा थूलगपाणातिवातस्स अतिचारो ण भवति तथा पयतितव्वं, णिरवेक्खवंधादिसु य लोगोवघातादिया दोसा भाणियव्वा। उक्तं सातिचारं प्रथमाणुव्रतं, अधुना द्वितीयमुच्यते, तत्रेदं सूत्रं—

थूलगमुसावायं समणोवासओ पच्चक्खाइ, से य मुसावाए पंचविहे पन्नत्ते, तंजहा—कन्नालीए गवालीए भोमालिए नासावहारे कूडसक्खिज्जे। थूलगमुसावायवेरमणस्स समणोवासएणं इमे पंच०, तंजहा—सहस्स-ब्भक्खाणे रहस्सब्भक्खाणे सदारमंतभेए मोसुवएसे कूडलेहकरणे २॥

अस्य व्याख्या—मृषावादो हि द्विविधः—स्थूलः सूक्ष्मश्च, तत्र परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवः स्थूलो, विपरीत-

---

१ न भवेदन्या जीविका तदा द्विपदो यं स्वयमुत्क्षिपति उत्तारयति वा भारं एवं वाह्यते, बलिवर्दानां यथा स्वाभाविकादपि भारादूनः क्रियते, हलशकटे-ष्वपि वेलायां मुञ्चति, अश्वहस्त्यादिष्वप्येष एव विधिः, भक्तपानव्यवच्छेदो न कस्यापि कर्त्तव्यः तीव्रक्षुन्मा मृत, तथैवानर्थाय दोषाय ( तस्मात् ) परिहरेत्, सापेक्षः पुना रोगनिमित्तं वा वाचा वा भणेत्—अद्य तुभ्यं न ददामीति, शान्तिनिमित्तं वोपवासं कारयेत्,' सर्वत्रापि यतना यथा स्थूलप्राणातिपातस्यातिचारो न भवति तथा प्रयतितव्यं, निरपेक्षबन्धादिपु च लोकोपघातादयो दोषा भणितव्याः।

स्त्वितरः, तत्र स्थूल एव स्थूलकः २ श्चासौ मृषावादश्चेति समासः, तं श्रमणोपासकः प्रत्याख्यातीति पूर्ववत्, स च मृषावादः पञ्चविधः प्रज्ञप्तः—पञ्चप्रकारः प्ररूपितस्तीर्थकरगणधरैः, तद्यथेत्युदाहरणोपन्यासार्थः, कन्याविषयमनृतं अभिन्नकन्यकामेव भिन्नकन्यकां वक्ति विपर्ययो वा, एवं गवानृतं अल्पक्षीरामेव गां वहुक्षीरां वक्ति विपर्ययो वा, एवं भूम्यनृतं परसत्कामेवात्मसत्कां वक्ति, व्यवहारे वा नियुक्तोऽनाभवद्व्यवहारस्यैव कस्यचिद् भागाद्यभिभूतो वक्ति—अस्येयमाभवतीति, न्यस्यते—निक्षिप्यत इति न्यासः—रूप्यकाद्यर्प्पणं तस्यापहरणं न्यासापहारः, अदत्तादानरूपत्वादस्य कथं मृषावादत्वमिति ?, उच्यते, अपलपतो मृषावाद इति, कूटसाक्षित्वं उत्कोचमात्सर्याद्यभिभूतः प्रमाणीकृतः सन् कूटं वक्ति, अविधवाद्यनृतस्यात्रैवान्तर्भावो वेदितव्यः । [1]मुसावादे के दोसा ? अकज्जंते वा के गुणा ?, तत्थ दोसा कण्णगं चेव अकण्णगं भणंते भोगंतरायदोसा पदुट्ठा वा आतघातं करेज्ज कारवेज्ज वा, एवं सेसेसुवि भाणियव्वा । णासावहारे य पुरोहितोदाहरणम्—सो जधा णमोक्कारे, गुणे उदाहरणं—कोंकणगसावगो मणुस्सेण भणितो, घोडए णासंते आहणाहित्ति, तेण आहतो मतो य करणं णीतो, पुच्छितो—को ते सक्खी ?, घोडगसामिएण भणियं, एतस्स पुत्तो मे सक्खी, तेण दारएण भणितं—सच्चमेतन्ति, तुट्ठा पूजितो सो, लोगेण

---

१ मृषावादे के दोषाः ? अक्रियमाणे वा के गुणाः ?, तत्र दोषाः कन्यकामेवाकन्यकां भणति भोगान्तरायदोषाः प्रद्विष्टा वाऽऽत्मघातं कुर्यात्कारयेद्वा, एवं शेषेष्वपि भणितव्याः । न्यासापहारे च पुरोहितोदाहरणं—स यथा नमस्कारे, गुणे उदाहरणं—कोङ्कणकश्रावको मनुष्येण भणितः—घोटकं नश्यन्तं आजहि इति, तेनाहतो मृतश्च करणं नीतः, पृष्टः—कस्तव साक्षी ?, घोटकस्वामिकेन भणितं—एतस्य पुत्रो मे साक्षी, तेन दारकेण भणितं—सत्यमेतदिति, तुष्टाः ( सभ्याः ) पूजित· स , लोकेन

र्थे पसंसितो, एवमादिया गुणा मुसावादवेरमणे । इदं चातिचाररहितमनुपालनीयम्, तथा चाह–'थूलगमुसावादवेरमणस्स' व्याख्या—स्थूलकमृषावादविरमणस्य श्रमणोपासकेनामी पञ्चातिचाराः ज्ञातव्याः ज्ञपरिज्ञया न समाचरितव्याः, तद्यथेति पूर्ववत्, सहसा–अनालोच्य अभ्याख्यानं सहसाऽभ्याख्यानं अभिशंसनम्–असदध्यारोपणं, तद्यथा–चौरस्त्वं पारदारिको वेत्यादि, रहः–एकान्तस्तत्र भवं रहस्यं तेन तस्मिन् वा अभ्याख्यानं रहस्याभ्याख्यानं, एतदुक्तं भवति–एकान्ते मन्त्रयमाणान् वक्ति–एते हीदं चेदं च राजापकारित्वादि मन्त्रयन्ति, स्वदारे मन्त्रभेदः स्वदारमन्त्रभेदः–स्वदारमन्त्र[भेद]प्रकाशनं स्वकलत्रविश्रब्धविशिष्टावस्थामन्त्रितान्यकथनमित्यर्थः, कूटम्–असद्भूतं लिख्यत इति लेखः तस्य करणं–क्रिया कूटलेखक्रिया–कूटलेखकरणं अन्यमुद्राक्षरबिम्बस्वरूपलेखकरणमित्यर्थः, एतानि समाचरन्नतिचरति द्वितीयाणुव्रतमिति, तत्रापायाः प्रदर्श्यन्ते, 'सहसऽब्भक्खाणं खलपुरिसो सुणेज्जा सो वा इतरो वा मारिज्जेज्ज वा, एवं गुणो, वेसित्ति भएणं अप्पाणं तं वा विरोधेज्जा, एवं रहस्सब्भक्खाणेऽवि, सदारमंतभेदे जो अप्पणो भज्जाए सद्धिं जाणि रहस्से बोल्लिताणि ताणि अण्णेसिं पगासेति पच्छा सा लज्जिता अप्पाणं परं वा मारेज्जा, तत्थ उदाहरणम्–मथुरावाणिगो दिसीयत्ताए गतो, भज्जा सो जाधे ण एति ताधे बारसमे वरिसे अण्णेण समं घडिता, सो आगतो, रत्तिं अन्नायवेसेण

१ च प्रशंसितः, एवमादिका गुणा मृषावादविरमणे । २ सहसाऽभ्याख्यानं खलपुरुषः शृणुयात् स चेतरो वा मारयेत् एवं गुणः, द्वेषीति भयेनात्मानं तं वा विराधयेत्, एवं रहोऽभ्याख्यानेऽपि, स्वदारमन्त्रभेदे य आत्मनो भार्यया समं यानि रहसि उक्तानि तान्यन्येषां प्रकाशयति पश्चात्, सा लज्जिताऽऽत्मानं परं वा मारयेत्, तत्रोदाहरणं–मथुरावणिक् दिग्यात्रायै गतः, भार्या तस्य यदा नायाति तदा द्वादशे वर्षेऽन्येन समं स्थिता, स आगतः, रात्रौ अज्ञातवेषेण

कप्पडियत्तणेण पविसति, ताणं तद्दिवसं पगतं, कप्पडिओ य मग्गति, तीए य वहितव्वगं खज्जगादि, ताधे णियगपतिं वाहेति, अण्णातचज्जाए ताधे पुणरवि गंतुं महता रिद्धीए आगतो सयणाण समं मिलितो, परोवदेसेण वयस्साण सव्वं कधेति, ताए अप्पा मारितो। मोसुवतेसे परिव्वायगो मणुस्सं भणति–किं किलिस्ससि ?, अहं ते जदि रुच्चति णिसण्णो चेव दव्वं विढवावेमि, जाहि किराडयं उच्छिण्णं मग्गाहि, पच्छा कालुद्देसेहिं मग्गेज्जासि, जाधे य वाउलो जणदाणगहणेण ताधे भणिज्जासि, सो तधेव भणति, जाधे विसंवदति ताधे ममं सक्खि उद्दिसेज्जत्ति, एवं करणे उ हारितो जितो(न)दवावितो य, कूडलेहकरणे भइरधी अण्णे य उदाहरणा। उक्तं सातिचारं द्वितीयाणुव्रतं, अधुना तृतीयं प्रतिपादयन्नाह—

थूलगअदत्तादाणं समणो०, से अदिन्नादाणे दुविहे पन्नत्ते, तंजहा–सचित्तादत्तादाणे अचित्तादत्तादाणे अ। थूलादत्तादाणवेरमणस्स समणोवासएणं इमे पंच अइयारा जाणियव्वा, तंजहा–तेनाहडे तक्करपओगे विरुद्धरज्जाइक्कमणे कूडतुलकूडमाणे तप्पडिरूवगववहारे ३ ॥

---

१ कार्पटिकत्वेन प्रविशति, तयोस्तद्दिवसे प्रकृतं, कार्पटिकश्च मार्गयति, तस्याश्च वहनीयं खाद्यकादि, तदा निजकपतिं वाहयति, अज्ञातचर्यया तदा पुनरपि गत्वा महत्या ऋद्ध्या आगतः स्वजनैः समं मिलति, परोपदेशेन वयस्यानां कथयति सर्वं, तयाऽऽत्मा मारितः। मृषोपदेशे परिव्राजको मनुष्यं भणति–किं क्लाम्यसि ?, अहं ते यदि रोचते निषण्ण एवं द्रव्यमुपार्जयामि, याहि किराटकं ( द्रव्यसमूहं ) उद्यतकं मार्गय, पश्चात् कालोद्देशे मार्गयसे, यदा च व्याकुलो जनदानग्रहणेन तदा भणेः, स तथैव भणति, यदा विसंवदति तदा मां साक्षिणमुद्दिशेरिति, एवं करणेऽपि पराजितो जितो न दापितश्च, कूटलेखकरणे भगिरथी अन्ये चोदाहरणानि

व्याख्या—अदत्तादानं द्विविधं—स्थूलं सूक्ष्मं च, तत्र परिस्थूलविषयं चौर्यारोपणहेतुत्वेन प्रतिषिद्धमिति, दुष्टाध्यवसायपूर्वकं स्थूलं, विपरीतमितरत्, स्थूलमेव स्थूलकं स्थूलकं च तत् अदत्तादानं चेति समासः, तच्छ्रमणोपासकः प्रत्याख्यातीति पूर्ववत्, सेशब्दः मागधदेशीप्रसिद्धो निपातस्तच्छब्दार्थः, तच्चादत्तादानं द्विविधं प्रज्ञप्तं—तीर्थकरगणधरैर्द्विप्रकारं प्ररूपितमित्यर्थः, तद्यथेति पूर्ववत्, सह चित्तेन सचित्तं—द्विपदादिलक्षणं वस्तु तस्य क्षेत्रादौ सुन्यस्तदुर्न्यस्तविस्मृतस्य स्वामिनाऽदत्तस्य चौर्यबुद्ध्याऽऽदानं सचित्तादत्तादानं, आदानमिति ग्रहणं, अचित्तं—वस्त्रकनकरत्नादि तस्यापि क्षेत्रादौ सुन्यस्तदुर्न्यस्तविस्मृतस्य स्वामिनाऽदत्तस्य चौर्यबुध्याऽऽदानमचित्तादत्तादानमिति, अदत्तादाने के दोषाः ?, अकज्जंते वा के गुणा ?, एत्थ इमं चेवोदाहरणम्—जधा एगा गोट्ठी, सावगोऽवि ताए गोट्ठीए, एगत्थ य पगरणं वट्टति, जणे गते गोट्ठीलएहिं घरं पेल्लितं, थेरीए एक्केक्को मोरपुत्तपाएसु पट्टंतीए अंकितो, पभाए रण्णो णिवेदितं, राया भणति—कथं ते जाणियवा ?, थेरी भणति—एते पादेसु अंकिता, णगरसमागमे दिट्ठा, दो तिण्णि चत्तारि सव्वा गोट्ठी गहिता, एगो सावगो भणति—ण हरामि ण लंछितो य, तेहिंवि भणितं—ण एस हरति मुक्को, इतरे सासिता, अविय सावयेण गोट्ठिं ण पविसितवं, जं किंचिवि पयोयणेण

---

१ अक्रियमाणे वा के गुणाः ?, अत्रेदमेवोदाहरणं—यथैका गोष्ठी, श्रावकोऽपि तस्यां गोष्ठ्यां, एकत्र च प्रकरणं वर्त्तते, जने गते गोष्ठीकैर्गृहं लुण्टितं, स्थविरयैकैको मयूरपुत्रपादैः प्रतिछन्नाऽङ्कितः, प्रभाते राज्ञो निवेदितं, राजा भणति—कथं ते ज्ञातव्याः ?, स्थविरा भणति—एते पादेष्वङ्किताः, नगरसमागमे दृष्टाः, द्वौ त्रयः सर्वा गोष्ठी गृहीता, एकः श्रावको भणति—न मुष्णामि न च लाञ्छितः, तैरपि भणितं—नैष मुष्णाति मुक्तः, इतरे शासिताः अपि च श्रावकेण गोष्ठ्यां न प्रवेष्टव्यं, यत् केनापि प्रयोजनेन

[1]पविसति ता ववहारगहिंसादि ण देति, ण य तेसिं आयोगठाणेसु ठाति। इदं चातिचाररहितमनुपालनीयं, तथा चाह-'थूलगे'त्यादि स्थूलकादत्तादानविरमणस्य श्रमणोपासकेनामी पञ्चातीचारा ज्ञातव्याः, न समाचरितव्याः, तद्यथा—स्तेनाहृतं, स्तेनाः—चौरास्तैराहृतं—आनीतं किञ्चित् कुङ्कुमादि देशान्तरात् स्तेनाहृतं तत् समर्घमिति लोभाद् गृह्णतोऽतिचारः, तस्कराः—चौरास्तेषां प्रयोगः—हरणक्रियायां प्रेरणमभ्यनुज्ञा तस्करप्रयोगः, तान् प्रयुङ्क्ते—हरत यूयमिति, विरुद्धनृपयोर्यद् राज्यं तस्यातिक्रमः—अतिलङ्घनं विरुद्धराज्यातिक्रमः, न हि ताभ्यां तत्र तदाऽतिक्रमोऽनुज्ञातः, 'कूटतुलाकूटमानं' तुला प्रतीता मानं—कुडवादि, कूटत्वं—न्यूनाधिकत्वं, न्यूनया ददतोऽधिकया गृह्णतोऽतिचारः, तेन—अधिकृतेन प्रतिरूपकं—सदृशं तत्प्रतिरूपकं तस्य विविधमवहरणं व्यवहारः—प्रक्षेपस्तत्प्रतिरूपको व्यवहारः, यद्यत्र घटते व्रीह्यादि घृतादिषु पलञ्जीवसादि तस्य प्रक्षेप इतियावत्, तत्प्रतिरूपकेण वा वसादिना व्यवहरणं तत्प्रतिरूपकव्यवहारः, एतानि समाचरन्नतिचरति तृतीयाणुव्रतमिति। दोसा[2] पुण तेणाहडगहिते रायावि हणेज्जा, सामी वा पच्चभिजाणेज्जा ततो दंडेज्ज वा मारेज्ज वा इत्यादयः, शेषा अपि वक्तव्याः। उक्तं सातिचारं तृतीयाणुव्रतं, इदानीं चतुर्थमुपदर्शयन्नाह—

**परदारगमणं समणो० पच्चक्खाति सदारसंतोसं वा पडिवज्जइ, से य परदारगमणे दुविहे पन्नत्ते, तंजहा—**

---

१ प्रविशति तदा व्यवहारकहिंसादि न ददाति न च तेषामायोगस्थानेषु तिष्ठति। २ दोषाः पुनः स्तेनाहृते गृहीते राजाऽपि हन्यात्, स्वामी वा प्रत्यभिजानीयात् ततो दण्डयेत् मारयेद्वा,

ओरालियपरदारगमणे वेउव्वियपरदारगमणे, सदारसंतोसस्स समणोवा० इमे पंच०, तंजहा–अपरिगहियागमणे इत्तरियपरिग्गहियागमणे अणंगकीडा परवीवाहकरणे कामभोगतिव्वाभिलासे ४ ॥ ( सू० )

आत्मव्यतिरिक्तो योऽन्यः स परस्तस्य दाराः–कलत्रं परदारास्तस्मिन् (तेषु)गमनं परदारगमनं, गमनमासेवनरूपतया द्रष्टव्यं, श्रमणोपासकः प्रत्याख्यातीति पूर्ववत्, स्वकीया दाराः–स्वकलत्रमित्यर्थः, तेन (तैः) तस्मिन् (तेषु) वा संतोषः स्वदारसन्तोषः तं वा प्रतिपद्यते, इयमत्र भावना–परदारगमनप्रत्याख्याता यास्वेव परशब्दः प्रवर्त्तते, स्वदारसन्तुष्टस्त्वेकानेकस्वदारव्यतिरिक्ताभ्यः सर्वाभ्य एवेति, सेशब्दः पूर्ववत्, तच्च परदारगमनं द्विविधं प्रज्ञप्तं, तद्यथेति पूर्ववत्, औदारिकपरदारगमनं–स्त्र्यादिपरदारगमनं वैक्रियपरदारगमनं–देवाङ्गनागमनं, तथा [1]चउत्थे अणुव्वते सामण्णेण अणियत्तस्स दोसा–मातरमवि गच्छेज्जा, उदाहरणं–गिरिणगरे तिण्णि वयंसियाओ, ताओ उज्जेंतं गताओ, चोरेहिं गहिताओ, णेत्तुं पारसकूले विक्कीताओ, ताण पुत्ता डहरगा घरेसु उज्झियता, तेवि मित्ता जाता, मातासिणेहेण वाणिज्जेणं गता पारसउलं, ताओ य गणियाओ सहदेसियाउत्ति भाडिं देंति, तेवि संपत्तीए सयाहि सयाहि गया, एगो सावगो, ताहि यऽप्पणीयाहि मातमिस्सियाहिं समं

---

१ चतुर्थेऽणुव्रते सामान्येनानिवृत्तस्य दोषा मातरमपि गच्छेत्, उदाहरणं–गिरिनगरे तिस्रो वयस्याः, ता उज्जयन्तं गताश्चौरैर्गृहीताः, नीत्वा पारसकूले विक्रीताः, तासां पुत्राः क्षुल्लका गृहेषु उज्झिताः, तेऽपि मित्राणि जाताः, मातृस्नेहेन वाणिज्येन गताः पारसकूलं, ताश्च गणिकाः सदेशीया इति भाटीं ददति, तेऽपि भवितव्यतया स्वकीयायाः २ ( मातुः पार्श्वे ) गताः, एकः श्रावकः, ताभिश्चात्मीयाभिर्मातृमिश्राभिः सम–

[1]वुच्छा, सेट्ठो णेच्छति, महिला अणिच्छं णातुं तुण्णिका अच्छति, कातो तुज्झे आणीता ?, ताए सिट्ठं, तेण भणितं–अम्हे चेव तुम्हे पुत्ता, इयरेसिं सिट्ठं मोइया पव्वइता, एते अणिवित्ताणं दोसा। बिदियं–धूताएवि समं वसेज्जा, जधा गुव्विणीए भज्जाए दिसागमणं, पेसितं जधा ते धूता जाता, सोऽवि ता ववहरति जाव जोव्वणं पत्ता, अण्णा (अण्ण) णगरे दिण्णा सो ण याणति जधा दिण्णत्ति, सो पडियंतो तम्मि णगरे मा भंडं विणस्सिहितित्ति वरिसारत्तं ठितो, तस्स तीए धूताए समं घडितं, तहवि ण याणति, वत्ते वासारत्ते गतो सणगरं, धूतागमणं, दट्ठूणं विलियाणि, नियत्तु ताए मारितो अप्पा, इयरोऽवि पव्वतितो। ततियं–गोट्ठीए समं चेडो अच्छति, तस्स सा माता हिंडति, सुण्हा से णियगएत्ति णो साहइ पतिं, सा तस्स माता देवकुलठितेहिं धुत्तेहिं गच्छंती दिट्ठा, तेहिं परिभुत्ता, मातापुत्ताणं पोत्ताणि परियत्तिताणि, तीए भण्णति–महिलाए कीस ते उवरिल्लं पोत्तं गहितं ?, हा पाव ! किं ते कतं ?, सो णट्ठो पव्वइतो। चउत्थं–जमलाणि गणियाए उज्झिताणि,

---

१ मुषिताः, स इष्टो नेच्छति, महेला अनिच्छां ज्ञात्वा तूष्णीका तिष्ठति, कुतो यूयमानीताः, ?, तयोक्तं, तेन भणितं–वयमेव युष्माकं पुत्राः, इतरेषां शिष्टं, मोचिताः प्रव्रजिताः, एतेऽनिवृत्तानां दोषाः। द्वितीयं–दुहित्राऽपि समं वसेत्, यथा गर्भिण्यां भार्यायां दिग्गमनं, प्रेषितं यथा ते दुहिता जाता, सोऽपि तावत् व्यवहरति यावद्यौवनं प्राप्ता, अन्याऽन्यस्मिन् नगरे दत्ता स न जानाति यथा दत्तेति, स प्रत्यागच्छन् तस्मिन्नगरे मा भाण्डं विनेशदिति वर्षारात्रं स्थितः, तस्य तया दुहित्रा समं संयोगो जातः, तथापि न जानाति, वृत्ते वर्षारात्रे गतः स्वनगरं, दुहित्रागमनं, दृष्ट्वा विलज्जितौ, निवृत्य तया मारित आत्मा, इतरोऽपि प्रव्रजितः। तृतीयं–गोष्ठ्या समं चेटस्तिष्ठति, तस्य सा माता हिण्डते, स्नुषा तस्या निजकेति न कथयति पत्यै, सा तस्य माता देवकुलस्थितैर्धूर्तैर्गच्छन्ती दृष्टा तैः परिभुक्ता, मातृपुत्रयोर्वस्त्रे परावृत्ते, तया भण्यते–महेलायाः कथं त्वयोपरितनं वस्त्रं गृहीतं ?, हा पाप ! किं त्वया कृतं ?, स नष्टः प्रव्रजितः। चतुर्थं–यमलं गणिकयोज्झितं,

पत्तेहिं मित्तेहिं गहिताणि वट्टंति, तेसिं पुव्वसंठितीए संजोगो कतो, अण्णदा सो दारगो ताए गणियाए पुव्वमाताए सह लग्गो, सा से भगिणी धम्मं सोतुं पव्वइता, ओहीणाणमुप्पण्णं, गणियाघरं गता, तेण गणियाए पुत्तो जातो, अज्जा गहाय परियंदाइ, कहं ?, पुत्तोऽसि मे भत्तिज्जओऽसि मे दारगा देवरोऽसि मे भायासि मे, जो तुज्झ पिता सो मज्झ पिया पती य ससुरो य भाता य मे, जा तुज्झ माया सा मे माया भाउज्जाइया सवत्तिणी सासू य, एवं नाऊण दोसे वज्जेयव्वं। एते इहलोए दोसा परलोए पुण णपुंसगत्तविरूवपियविप्पयोगादिदोसा भवन्ति, णियत्तस्स इहलोए परलोए य गुणा, इहलोए कच्छे कुलपुत्तगाणि सड्ढाणि आणंदपूरे, एगो य धिज्जातिओ दरिद्दो, सो थूलेसरे उववासेण वरं मग्गति, कोबे (र)! चाउव्वेज्जभत्तस्स मोल्लं देहि, जा पुण्णं करेमि, तेण वाणमंतरेण भणितं—कच्छे सावगाणि कुलपुत्ताणि भज्जपतियाणि, एयाणं भत्तं करेहि, ते महप्फलं होहिति, दोण्णि वारा भणितो गतो कच्छं, दिण्णं दाणं सावयाणं भत्तं दक्खिणं च, भणति—साहध किं तुज्झं तवचरणं जेण तुज्झे

---

१ भ्राताभिर्मित्रैर्गृहीतं वर्त्तते, तयोः पूर्वसंस्थित्या संयोगः कृतः, अन्यदा स दारकस्तया गणिकया पूर्वमात्रा सह लग्नः, सा तस्य भगिनी धर्मं श्रुत्वा प्रव्रजिता, अवधिज्ञानमुत्पन्नं, गणिकागृहं गता, तेन गणिकायां पुत्रो जातः, आर्या गृहीत्वा क्रीडयति (उल्लापयति), कथं ?, पुत्रोऽसि मे भ्रातृव्योऽसि मे दारक ! देवरोऽसि मे भ्राताऽसि मे, यस्तव पिता स मम पिता पतिः श्वशुरो भ्राता च मे, या तव माता सा मे माता भ्रातृजाया श्वश्रूः सपत्नी च, एवं ज्ञात्वा दोषान् वर्जयितव्यं । एते इहलोके दोषाः परलोके पुनर्नपुंसकत्वविरूपत्वप्रियविप्रयोगादयो दोषा भवन्ति, निवृत्तस्येहलोके परलोके च गुणाः, इहलोके कच्छे कुलपुत्रौ श्राद्धौ आनन्दपुरे, एकश्च धिग्जातीयो दरिद्रः, स स्थूलेश्वरं (व्यन्तरं) उपवासेनाराध्य वरं मार्गयति—कुबेर ! चातुर्वैद्यभक्तस्य मूल्यं देहि यतः पुण्यं करोमि, तेन व्यन्तरेण कथितं—कच्छे श्रावकौ कुलपुत्रौ भार्यापती, एताभ्यां भक्तं देहि, तव महत्फलं भविष्यति, द्विर्भणितो गतः कच्छं, दत्तं दानं श्रावकाभ्यां भक्तं दक्षिणा च, भणति—कथयतं किं युवयोस्तपश्चरणं येन युवां

देवेस्स पुज्जाणि ?, तेहिं भणितं—अम्हे वालभावे एगंतरं मेथुणं पच्चक्खायं, अण्णदा अम्हाणं किहवि संजोगो जातो, तं च विवरीयं समावडियं, जद्दिवसं एगस्स वंभचेरपोसधो तद्दिवसं विइयस्स पारणगं, एवं अम्ह घरंगताणि चेव कुमारगाणि, धिज्जातितो संवुद्धो । एते इहलोए गुणा, परलोए पधाणपुरिसत्तं देवत्ते पहाणातो अच्छराओ मणुयत्ते पधाणाओ माणुसीतो विउला य पंचलक्खणा भोगा पियसंपयोगा य आसण्णसिद्धिगमणं चेति । इदं चातिचाररहितमनुपालनीयं, तथा चाह–'सदारसंतोसस्स' इत्यादि, स्वदारसन्तोषस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्यास्तद्यथा–इत्वरपरिगृहीतागमनं अपरिगृहीतागमनं अनङ्गक्रीडा परविवाहकरणं कामभोगतीव्राभिलाषः, तत्रेत्वरकालपरिगृहीता कालशब्दलोपादित्वरपरिगृहीता, भाटिप्रदानेन कियन्तमपि कालं दिवसमासादिकं स्ववशीकृतेत्यर्थः, तस्या गमनम्–अभिगमो मैथुनासेवना इत्वरपरिगृहीतागमनं, अपरिगृहीताया गमनं अपरिगृहीतागमनं, अपरिगृहीता नाम वेश्या अन्यसत्कगृहीतभाटी कुलाङ्गना वाऽनाथेति, अनङ्गानि च–कुचकक्षोरुवदनादीनि तेषु क्रीडनमनङ्गक्रीडा, अथवाऽनङ्गो मोहोदयोद्भूतः तीव्रो मैथुनाध्यवसायाख्यः कामो भण्यते तेन तस्मिन् वा क्रीडा कृतकृत्यस्यापि स्वलिङ्गेन आहार्यैः काष्ठफलपुस्तकमृत्तिकाचर्म्मादिघटितप्रजननैर्योषिद्वाच्यप्रदेशासेवनमित्यर्थः, परविवाहकरणमितीह स्वापत्यव्यतिरिक्तमपत्यं

---

१ देवस्यापि पूज्यौ ?, ताभ्यां भणितं–आवाभ्यां बाल्ये एकान्तरितं मैथुनं प्रत्याख्यातं, अन्यदाऽऽवयोः कथमपि संयोगो जातः, तच्च विपरीतमापतितं, यद्दिवसे एकस्य ब्रह्मचर्यपोषधः तद्दिवसे द्वितीयस्य पारणकमेवमावां गृहगतावेव कुमारौ, धिग्जातीयः संवृद्धः । एते ऐहलौकिका गुणाः, परलोके प्रधानपुरुषत्वं देवत्वे प्रधाना अप्सरसो मनुजत्वे प्रधाना मानुष्यो विपुलाश्च पञ्चलक्षणा भोगाः प्रियसंप्रयोगाश्चासन्नसिद्धिगमनं च ।

परशब्देनोच्यते तस्य कन्याफललिप्सया स्नेहबन्धेन वा विवाहकरणमिति, [1]अवि य–उस्सग्गे णियगावच्चाणवि वरणसंवरणं ण करेति किमंग पुण अण्णेसिं ?, जो वा जत्तियाण आगारं करेइ, तत्तिया कप्पंति, सेसा ण कप्पंति, ण वट्टति महती दारिया दिज्जउ गोधणे वा संडो छुपेज्जेति भणिउं। काम्यन्त इति कामाः–शब्दरूपगन्धा भुज्यन्त इति भोगा–रसस्पर्शाः, कामभोगेषु तीव्राभिलाषः, तीव्राभिलाषो नाम तदध्यवसायित्वं, तस्माच्चेदं करोति–समाप्तरतोऽपि योषिन्मुखोपस्थकर्णकक्षान्तरेष्वतृप्ततया प्रक्षिप्य लिङ्गं मृत इव आस्ते निश्चलो महतीं वेलामिति. दन्तनखोत्पलपत्रकादिभिर्वा मदनमुत्तेजयति, वाजीकरणानि चोपयुङ्क्ते, योषिदवाच्यदेशं वा मृद्नाति। एतानीत्वरपरिगृहीतगमनादीनि समाचरन्नतिचरति चतुर्थाणुव्रतमिति। [2]एत्थ य आदिल्ला दो अतियारा सदारसंतुट्ठस्स भवंति णो परदारविवज्जगस्स, सेसा पुण दोण्हवि भवन्ति, दोसा पुण इत्तरियपरिगहितागमणे बिदिएण सद्धिं वेरं होज्ज मारेज्ज तालेज्ज वा इत्यादयः, एवं सेसेसुवि भाणियव्वा। उक्तं सातिचारं चतुर्थाणुव्रतं। अधुना पञ्चमं प्रतिपाद्यते, तत्रेदं सूत्रम्—

अपरिमियपरिग्गहं समणो० इच्छापरिमाणं उवसंपज्जइ, से परिग्गहे दुविहे पन्नत्ते, तंजहा–सचित्तपरिग्गहे अचित्तपरिग्गहे य, इच्छापरिमाणस्स समणोवा० इमे पंच०–धणधन्नपमाणाइक्कमे खित्तवत्थुपमाणाइक्कमे हिरन्नसुवन्नपमाणाइक्कमे दुपयचउप्पयपमाणाइक्कमे कुवियपमाणाइक्कमे ५ ॥ (सू०)

---

१ अपि च उत्सर्गे निजकापत्यानामपि वरणसंवरणं न करोति किं पुनरन्येषां ?, यो वा यावतामाकारं करोति तावन्तः कल्पन्ते, शेषा न कल्पन्ते, न युज्यते महतीं दारिकां ददातु गोधने वा षण्ढः क्षिपत्विति भणितुं। २ अत्र चाद्यौ द्वावतिचारौ स्वदारसंतुष्टस्य भवतः न परदारविवर्जकस्य, शेषाः पुनर्द्वयोरपि भवन्ति, दोषाः पुनरित्वरपरिगृहीतागमने द्वितीयेन सार्धं वैरं भवेत् मारयेत् ताडयेद्वा, एवं शेषेष्वपि भणितव्याः,

'अपरिमितपरिग्गहं समणोवासतो पच्चक्खाति' परिग्रहणं परिग्रहः अपरिमितः—अपरिमाणः तं श्रमणोपासकः प्रत्याख्याति, सचित्तादेः अपरिमाणात् परिग्रहाद् विरमतीति भावना, इच्छायाः परिमाणं २ तदुपसम्पद्यते, सचित्तादिगोचरेच्छापरिमाणं करोतीत्यर्थः। स च परिग्रहो द्विविधः प्रज्ञप्तः, तद्यथेत्येतत् प्राग्वत्, सह चित्तेन सचित्तं—द्विपदचतुष्पदादि तदेव परिग्रहः अचित्तं—रत्नवस्त्रकुप्यादि तदेव चाचित्तपरिग्रहः। एत्थ[1] य पंचमअणुवते अणियत्तस्स दोसे नियत्तस्स य गुणे, तत्थोदाहरणम्—लुद्धनंदो कुसीमूलियं लद्धु विणट्ठो नंदो सावगो पूइतो भंडागारवती ठवितो, अहवावि वाणिणी रतणाणि विक्किणति छुद्धाए मरंती, सड्ढेण भणिता—एत्तिअपरिक्खओ णत्थि, अण्णस्स णीताणि, ताए भण्णाति—जं जोग्गं तं देहि, सो पत्थं देइ, सुभक्खे तीए भत्तारो आगतो, पुच्छति—रतणाणि कहिं ?, भणति—विक्कियाणि मए, कहं ?, सा भणइ—गोहुमसेइयाए एक्केक्कं दिन्नं अमुगस्स वाणियगस्स, सो वाणियगो तेण भणिओ—रयणा अप्पेह पूरं वा मोल्लं देहि, सो नेच्छइ, तओ रण्णो मूलं गतो एरिसे अग्घे वट्टमाणे एतस्स एतेण एत्तियं दिण्णं, सो विणासितो, पढमं पुण ताणि

---

१ अत्र च पञ्चमाणुव्रते अनिवृत्तस्य दोषा निवृत्तस्य च गुणाः, तत्रोदाहरणं—लोभनन्दः कुशीमूलिकां लब्ध्वा विनष्ट', नन्दः श्रावकः पूजितो भाण्डागारपतिः स्थापितः, अथवाऽपि वणिग्भार्या रत्नानि विक्रीणाति क्षुधा म्रियमाणा, श्राद्धेन भण्यते—ईयत्परीक्षको नास्ति, अन्यस्य पार्श्वे नीतानि, तया भण्यते—यद्योग्यं तद्देहि, स प्रस्थं ददाति, सुभिक्षे तस्या भर्त्ताऽऽगतः, पृच्छति—रत्नानि क्व ?, भणति—विक्रीतानि मया, कथं ?, सा भणति—गोधूमसेतिकयैकैकं दत्तममुकस्मै वणिजे, स वणिक् तेन भणितः—रत्नान्यर्पय पूर्णं वा मूल्यं देहि, स नेच्छति, ततो राज्ञो मूलं गतः—ईदृशेऽर्घे वर्त्तमाने एतस्यैतेनेयद्दत्तं, स विनाशितः प्रथमं पुनस्तानि

[1]रतणाणि सावगस्स विकिणियाणि तेण परिग्गहपरिमाणाइरित्ताइंतिकाउं न गहियाणि, सावगेण णेच्छितं, सो पूइतो। इदं चातिचाररहितमनुपालनीयं, तथा चाह–'इच्छापरिमाणस्स समणोवासएणं०' इच्छापरिमाणस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्याः, तद्यथेति पूर्ववत्, क्षेत्रवास्तुप्रमाणातिक्रमः तत्र शस्योत्पत्तिभूमिः क्षेत्रं, तच्च सेतुकेतुभेदाद् द्विभेदं, तत्र सेतुक्षेत्रं अरघट्टादिसेक्यं, केतुक्षेत्रं पुनराकाशपतितोदकनिष्पाद्यं, वास्तु–अगारं तदपि त्रिविधं-खातमुत्सृतं खातोच्छ्रितं च, तत्र खातं–भूमिगृहकादि उच्छ्रितं–प्रासादादि, खातोच्छ्रितं–भूमिगृहस्योपरि प्रासादः, एतेषां क्षेत्रवास्तूनां प्रमाणातिक्रमः, प्रत्याख्यानकालगृहीतप्रमाणोल्लङ्घनमित्यर्थः। तथा हिरण्यसुवर्णप्रमाणातिक्रमस्तत्र हिरण्यं–रजतमघटितं घटितं वा अनेकप्रकारं द्रम्मादिः, सुवर्णं प्रतीतमेव तदपि घटिताघटितं, एतद्ग्रहणाच्चेन्द्रनीलमरकताद्युपलग्रहः, अक्षरगमनिका पूर्ववदेव, तथा धनधान्यप्रमाणातिक्रमः, तत्र धनं–गुडशर्करादि, गोमहिष्यजाविकाकरभतुरगाद्यन्ये, धान्यं–व्रीहिकोद्रवमुद्गमाषतिलगोधूमयवादि, अक्षरगमनिका प्राग्वदेव, तथा द्विपदचतुष्पदप्रमाणातिक्रमः, तत्र द्विपदादीनि–दासीमयूरहंसादीनि, चतुष्पदानि–हस्त्यश्वमहिष्यादीनि, अक्षरगमनिका पूर्ववदेव, तथा कुप्यप्रमाणातिक्रमः, तत्र कुप्यं–आसनशयनभण्डककरोटकलोहाद्युपस्करजातमुच्यते, एतद्ग्रहणाच्च वस्त्रकम्बलपरिग्रहः, अक्षरगमनिका पूर्ववदेव, तान् क्षेत्रवास्तुप्रमाणातिक्रमादीन् समाचरन्नतिचरति पञ्चमाणुव्रतमिति। [2]एत्थ य दोसा जीवघातादि भणितव्वा। उक्तं सातिचारं पञ्चमाणुव्रतम् इत्युक्तान्यणुव्रतानि, साम्प्रतमेतेषामेवाणुव्रतानां परिपालनाय भावनाभूतानि

१ रत्नानि श्रावकाय विक्रेतुं नीतानि, तेन परिग्रहप्रमाणातिरिक्तानीतिकृत्वा न गृहीतानि, श्रावकेण नेष्टं, स पूजितः, २ अत्र च दोषा जीवघातादयो भणितव्याः

गुणव्रतान्यभिधीयन्ते–तानि पुनस्त्रीणि भवन्ति, तद्यथा–दिग्व्रतं उपभोगपरिमाणं अनर्थदण्डपरिवर्जनमिति, तत्राद्य-गुणव्रतस्वरूपाभिधित्सयाऽऽह—

दिसिवए तिविहे पन्नत्ते–उड्ढदिसिवए अहोदिसिवए तिरियदिसिवए, दिसिवयस्स समणो०इमे पञ्च० तंजहा–उड्ढदिसिपमाणाइक्कमे अहोदिसिपमाणाइक्कमे तिरियदिसिपमाणाइक्कमे खित्तवुड्ढी सइअंतरद्धा ६ ॥ ( सूत्रं )

दिशो ह्यनेकप्रकाराः शास्त्रे वर्णिताः, तत्र सूर्योपलक्षिता पूर्वा शेषाश्च पूर्वदक्षिणादिकास्तदनुक्रमेण द्रष्टव्याः, तत्र दिशां संवन्धि दिक्षु वा व्रतमेतावत्सु पूर्वादिविभागेषु मया गमनाद्यनुष्ठेयं न परत इत्येवंभूतं दिग्व्रतं, एतच्चौघतः त्रिविधं प्रज्ञप्तं तीर्थकरगणधरैः, तद्यथेत्युदाहरणोपन्यासार्थः,ऊर्ध्वादिग् ऊर्ध्वं दिग् तत्सम्बन्धि तस्यां वा व्रतं ऊर्ध्वं दिग्व्रतं,एतावती दिगूर्द्ध्वं पर्वताद्यारोहणादवगाहनीया न परत इत्येवंभूतं इति भावना, अधो दिग् अधो दिक् तत्सम्बन्धि तस्यां वा व्रतं अधोदिग्-व्रतं–अर्वाग्दिग्व्रतम्, एतावती दिगध इन्द्रकूपाद्यवतरणादवगाहनीया न परत इत्येवंभूतमिति हृदयं, तिर्यक् दिशस्तिर्यग्-दिशः–पूर्वादिकास्तासां सम्बन्धि तासु वा व्रतं तिर्यग्व्रतं, एतावती दिग् पूर्वेणावगाहनीया एतावती दक्षिणेनेत्यादि, न परत इत्येवंभूतमिति भावार्थः । अस्मिंश्च सत्यवगृहीतक्षेत्राद् वहिः स्थावरजङ्गमप्राणिगोचरो दण्डः परित्यक्तो भवतीति गुणः । इदमतिचाररहितमनुपालनीयमतोऽस्यैवातिचारानभिधित्सुराह–'दिसिवयस्स समणो०' दिग्व्रतस्य उक्तरूपस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्याः, तद्यथा–ऊर्ध्वदिक्प्रमाणातिक्रमः यावत्प्रमाणं परिगृहीतं तस्यातिलङ्घनमित्यर्थः, एवमन्यत्रापि भावना कार्या, अधोदिक्प्रमाणातिक्रमः, तिर्यग्दिक्प्रमाणातिक्रमः, क्षेत्रस्य वृद्धिः

क्षेत्रवृद्धिः [ इति ]—एकतो योजनशतपरिमाणमभिगृहीतमन्यतो दश योजनानि गृहीतानि तस्यां दिशि समुत्पन्ने कार्ये योजनशतमध्यादपनीयान्यानि दश योजनानि तत्रैव स्वबुद्ध्या प्रक्षिपति, संवर्द्धयत्येकत इत्यर्थः, स्मृतेर्भ्रंशः—अन्तर्धानं स्मृत्यन्तर्धानं किं मया परिगृहीतं कया मर्यादया व्रतमित्येवमननुस्मरणमित्यर्थः, स्मृतिमूलं नियमानुष्ठानं, तद्भ्रंशे तु नियमत एव नियमभ्रंश इत्यतिचारः। एत्थ य सामाचारी–उड्ढुं जं पमाणं गहितं तस्स उवरिं पव्वतसिहरे रुक्खे वा मक्कडो पक्खी वा सावयस्स वत्थं आभरणं वा गेण्हिउं पमाणातिरेकं उवरि भूमिं वच्चेज्जा, तत्थ से ण कप्पति गंतुं, जाधे तु पडितं अण्णेण वा आणितं ताधे कप्पति, इदं पुण अट्ठावयउज्जंतगयग्गपयकुडसम्मेयसुपतिट्ठवज्जोंतचित्तकूडअंजणगमंदरादिसु पव्वतेसु भवेज्जा, एवं अधेवि कूवियादिसु विभासा, तिरियं जं पमाणं गहितं तं तिविधेणवि करणेण णातिक्कमितव्वं, खेत्तवुड्ढी सावगेण ण कायव्वा, कथं ?, सो पुव्वेण भंडं गहाय गतो जाव तं परिमाणं ततो परेण भंडं अग्घतित्तिकातुं अवरेण जाणि जोयणाणि पुव्वदिसाए संछुभति, एसा खेत्तवुड्ढी से ण कप्पति कातुं, सिय जति वोलीणो होज्जा णियत्तियव्वं, निस्सारिते य

१ अत्र च सामाचारी ऊर्ध्वं यत् प्रमाणं गृहीतं तस्योपरि पर्वतशिखरे वृक्षे वा मर्कटः पक्षी वा श्रावकस्य वस्त्रमाभरणं वा गृहीत्वा प्रमाणातिरेकामुपरि-भूमिं व्रजेत्, तत्र तस्य न कल्पते गन्तुं, यदा तु पतितं अन्येन वा आनीतं तदा कल्पते, इदं पुनरष्टापदोज्जयन्तगजाग्रपदसम्मेतसुप्रतिष्ठोज्जयन्तचित्रकूटाञ्जनमन्द-रादिषु पर्वतेषु भवेत्, एवमधोऽपि कूपिकादिषु विभाषा, तिर्यग् यत् प्रमाणं गृहीतं तत् त्रिविधेनापि करणेन नातिक्रान्तव्यं, क्षेत्रवृद्धिः श्रावकेण न कर्तव्या, कथं ?, स पूर्वस्यां भाण्डं गृहीत्वा गतो यावत्तत्प्रमाणं ततः परतो भाण्डमर्घतीतिकृत्वाऽपरस्यां यानि योजनानि ( तानि ) पूर्वस्यां दिशि क्षिपति, एषा क्षेत्र-वृद्धिस्तस्य न कल्पते कर्तुं, स्याद्यदि अतिक्रान्तो भवेत् निवर्तितव्यं, निस्सृते च

णं गंतवं, अण्णोवि ण विसज्जितवो, अणाणाए कोवि गतो होज्ज जं विसुमरियखेत्तगतेण लद्धं तं ण गेण्हेज्जत्ति। [ग्रं० २१०००] उक्तं सातिचारं प्रथमं गुणव्रतं अधुना द्वितीयमुच्यते, तत्रेदं सूत्रं—

उवभोगपरिभोगवए दुविहे पन्नत्ते तंजहा—भोअणओ कम्मओ अ । भोअणओ समणोवा० इमे पञ्च०—सचित्ताहारे सचित्तपडिवद्धाहारे अप्पउलिओसहिभक्खणया तुच्छोसहिभ० दुप्पउलिओसहिभक्खणया ७ ॥

उपभुज्यत इत्युपभोगः, उपशब्दः सकृदर्थे वर्त्तते, सकृद्भोग उपभोगः—अशनपानादि, अथवाऽन्तर्भोगः उपभोगः—आहारादि, उपशब्दोऽत्रान्तर्वचनः, परिभुज्यत इति परिभोगः, परिशब्दोऽत्रावृत्तौ वर्त्तते, पुनः पुनर्भोगः वस्त्रादेः परिभोग इति, अथवा वहिर्भोगः परिभोग एवमेव वसनालङ्कारादेः, अत्र परिशब्दो वहिर्वाचक इति, एतद्विषयं व्रतं—उपभोगपरिभोगव्रतं, एतत् तीर्थकरगणधरैर्द्विविधं प्रज्ञप्तं, तद्यथेत्युदाहरणोपन्यासार्थः, भोजनतः कर्मतश्च, तत्र भोजनत उत्सर्गेण निरवद्याहारभोजिना भवितव्यं, कर्मतोऽपि प्रायो निरवद्यकर्मानुष्ठानयुक्तेनेत्यक्षरार्थः । इह चेयं सामाचारी—'भोयणतो सावगो उस्सग्गेण फासुगं आहारं आहारेज्जा, तस्सासति अफासुगमवि सचित्तवज्जं, तस्स असती अणंतकायबहुबीयगाणि परिहरितव्वाणि,

---

१ न गन्तव्यं, अन्योऽपि न विसर्जनीयः, अनाज्ञया कोऽपि गतो भवेत् यद्विस्मृतक्षेत्रे च गतेन लब्धं तन्न गृह्णीयात् इति । २ भोजनतः श्रावक उत्सर्गेण प्रासुकमाहारमाहरेत्, तस्मिन्नसति अप्रासुकमपि सचित्तवर्जं, तस्मिन्नसति अनन्तकायबहुबीजकानि परिहर्त्तव्यानि,

इमं च अण्णं भोयणतो परिहरति–असणे अणंतकायं अल्लगमूलगादि मंसं च, पाणे मंसरसमज्जादि, खादिमे उदुंवरका-उंबरवडपिप्पलपिलंखुमादि, सादिमं मधुमादि, अचित्तं च आहारेयव्वं, जदा किर ण होज्ज अचित्तो तो उस्सग्गेण भत्तं पच्चक्खातितव्वं ण तरति ताधे अववाएण सचित्तं अणंतकायबहुवीयगवज्जं, कम्मतोऽवि अकम्मा ण तरति जीवितुं ताधे अच्चंतसावज्जाणि परिहरिज्जंति । इदमपि चातिचाररहितमनुपालनीयमित्यतस्तस्यैवातिचारानभिधित्सुराह–'भोयणतो समणोवासएण' भोजनतो यद्व्रतमुक्तं तदाश्रित्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्याः, तद्यथा–'सचित्ताहारः' सचित्तं चेतना संज्ञानमुपयोगोपधानमिति पर्यायाः, सचित्तश्चासौ आहारश्चेति समासः, सचित्तो वा आहारो यस्य सचित्तमाहारयति इति वा मूलकन्दलीकन्दकार्द्रकादिसाधारणप्रत्येकतरुशरीराणि सचित्तानि सचित्तं पृथिव्याद्या-हारयतीति भावना । तथा सचित्तप्रतिबद्धाहारो यथा वृक्षे प्रतिबद्धो गुन्दादि पक्वफलानि वा । तथा अपक्वौषधभक्षणत्वमि-दं प्रतीतं, सचित्तसंमिश्राहार इति वा पाठान्तरं, सचित्तेन संमिश्र आहारः सचित्तसंमिश्राहारः, वल्ल्यादि पुष्पादि वा संमिश्रं, तथा दुष्पक्वौषधिभक्षणता दुष्पक्वाः–अस्विन्ना इत्यर्थः तद्भक्षणता, तथा तुच्छौषधिभक्षणता तुच्छा हि असारा मुद्गफलीप्रभृतयः, अत्र हि महती विराधना अल्पा च तुष्टिः, वह्निभिरप्यैहिकोऽप्यपायः सम्भाव्यते । ऐत्थ

१ इदं चान्यत् भोजनतः परिहरति–अशनेऽनन्तकायं आर्द्रकमूलकादि मांसं च, पाने मांसरसमज्जादि, खाद्ये उदुम्बरकाकोदुम्बरवटपिप्पलप्लक्षादि स्वाद्ये मध्वादि, अचित्तं चाहर्तव्यं, यदा किल न भवेत् अचित्त उत्सर्गेण भक्तं प्रत्याख्यातव्यं न शक्नोति तदाऽपवादेन सचित्तं अनन्तकायबहुबीजकवर्जं, कर्मतोऽप्य-कर्मा न शक्नोति जीवितुं तदाऽत्यन्तसावद्यानि परिह्रियन्ते । २ अत्र

सिंगाखायकोदाहरणं–खेत्तरक्खगो सिंगातो खाति, राया णिग्गच्छति, मज्झण्हे पडिगतो, तधावि खायति, रण्णा कोउएणं पोट्टं फालावितं केत्तियाओ खइताओ होज्जत्ति, णवरि फेणो अन्नं किंचि णत्थि, एवं भोजन इति गतं । अधुना कर्मतो यत् व्रतमुक्तं तदप्यतिचाररहितमनुपालनीयं इत्यतोऽस्यातिचारानभिधित्सुराह—

कम्मओ णं समणोवा॰ इमाइं पन्नरस कम्मादाणाइं जा॰, तंजहा–इंगालकम्मे वणकम्मे साडीकम्मे भाडीकम्मे फोडीकम्मे, दंतवाणिज्जे लक्खवाणिज्जे रसवाणिज्जे केसवाणिज्जे विसवाणिज्जे, जंतपीलणकम्मे निल्लंछणकम्मे दवग्गिदावणया सरदहतलायसोसणया असईपोसणया ७ ॥ ( सूत्रं ) ॥

कर्मतो यद् व्रतमुक्तं णमिति वाक्यालङ्कारे तदाश्रित्य श्रमणोपासकेनामूनि–प्रस्तुतानि पञ्चदशेतिसङ्ख्या कर्मादानानीत्यसावद्यजीवनोपायाभावेऽपि तेषामुत्कटज्ञानावरणीयादिकर्महेतुत्वादादानानि कर्मादानानि ज्ञातव्यानि न समाचरितव्यानि । तद्यथेत्यादि पूर्ववत्, अङ्गारकर्म–अङ्गारकरणविक्रयक्रिया, एवं वनशकटभाटकस्फोटना दन्तलाक्षारसविषकेशवाणिज्यं च यंत्रपीडननिर्लाञ्छनदवदापनसरोहृदादिपरिशोषणासतीपोषणास्वपि द्रष्टव्यमित्यक्षरार्थः । भावार्थस्त्वयं–'इंगालकम्मं'[2]ति, इंगाला निद्दहितुं विकिणति, तत्थ छण्हं कायाणं वधो तं न कप्पति, वणकम्मे–जो वणं किणाति,

---

१ शिम्बाखादक उदाहरणं क्षेत्ररक्षकः शिम्बाः खादति, राजा निर्गच्छति, मध्याह्ने प्रतिगतः, तथापि खादति, राज्ञा कौतुकेनोदरं पाटितं कियत्यः [illegible] भवेयुरिति, नवरं फेनः, अन्यत्किमपि नास्ति । २ अङ्गारकर्मेति–अङ्गारान् [illegible] विक्रीणाति तत्र षण्णां कायानां [illegible] [illegible], [illegible]

पच्छा रुक्खे छिंदित्तुं मुल्लेण जीवति, एवं पणिगादि पडिसिद्धा हवंति, साडीकम्मं—सागडीयत्तणेण जीवति, तत्थ बंधवधमाई दोसा, भाडीकम्मं—सएण भंडोवक्खरेण भाडएण वहइ, परायगं ण कप्पति, अण्णेसिं वा सगडं बलद्दे य न देति, एवमादी कातुं ण कप्पति, फोडिकम्मं—उदत्तेणं हलेण वा भूमीफोडणं, दंतवाणिज्जं—पुव्विं चेव पुलिंदाणं मुल्लं देति दंते देज्जा वत्ति, पच्छा पुलिंदा हत्थी घातेंति, अचिरा सो वाणियओ एहिइत्तिकातुं, एवं धीम्मरगाणं संखमुल्लं देंति, एवमादी ण कप्पति, पुव्वाणीतं किणति, लक्खवाणिज्जेऽवि एते चेव दोसा—तत्थ किमिया होंति, रसवाणिज्जं—कल्लालत्तणं सुरादि तत्थ पाणे बहुदोसा मारणअक्कोसवधादी तम्हा ण कप्पति, विसवाणिज्जं—विसविक्कयो से ण कप्पति, तेण बहूण जीवाण विराधणा, केसवाणिज्जं—दासीओ गहाय अण्णत्थ विक्किणति जत्थ अग्घंति, एत्थवि अणेगे दोसा परवसत्तादयो, जंतपीलणकम्मं—तेल्लियं जंतं उच्छुजन्तं चक्कादि तंपि ण कप्पते, णिलंछणकम्मं—वद्धेउं गोणादि ण कप्पति, दवग्गिदावणताकम्मं—वणदवं देति

---

१ पश्चाद्वृक्षान् छित्वा मूल्येन जीवति, एवं पण्याया॰ प्रतिषिद्धा भवन्ति, शाकटिककर्म—शाकटिकत्वेन जीवति, तत्र बन्धवधादिका दोषाः, भाटीकर्म—स्वकीयेन भाण्डोपस्करेण भाटकेन वहति परकीयं न कल्पते, अन्येभ्यो वा शकटं बलीवर्दौ च न ददाति, एवमादि कर्तुं न कल्पते, स्फोटिकर्म—तुदत्रेण हलेन वा भूमिस्फोटनं, दन्तवाणिज्यं—पूर्वमेव पुलिन्द्रेभ्यो मूल्यं ददाति, दन्तान् दद्यातेति, पश्चात् पुलिन्द्रा हस्तिनो घातयन्ति अचिरात् स वणिक् आयास्यतीतिकृत्वा, एवं धीवराणां शङ्खमूल्यं ददाति, एवमादि न कल्पते, पूर्वानीतं क्रीणाति, लाक्षावाणिज्येऽपि एत एव दोषास्तत्र कृमयो भवन्ति, रसवाणिज्यं—कौलालत्वं सुरादि तत्र पाने बहवो दोषाः मारणाक्रोशवधादयस्तस्मान्न कल्पते, विषवाणिज्यं विषविक्रयस्तस्य न कल्पते, तेन बहूनां जीवानां विराधना, केशवाणिज्यं—दासीर्गृहीत्वाऽन्यत्र विक्रीणाति यत्रार्घन्ति, अत्राप्यनेके दोषाः परवशत्वादयः, यन्त्रपीडनकर्म—तैलिकं यन्त्रं इक्षुयन्त्रं चक्रादि तदपि न कल्पते, निर्लाञ्छनकर्म—वर्धयितुं गवादीन् न कल्पते, दवाग्निदापनताकर्म वनदवं ददाति

छेत्तरक्खणणिमित्तं जधा उत्तरावहे पच्छा दड्डे तरुणगं तणं उट्ठेति, तत्थ सत्ताणं सत्तसहस्साण वधो, सरदहतलागपरिसो-सणताकम्मं—सरदहतलागादीणि सोसेति पच्छा वाविज्जंति, एवं ण कप्पति, असदीपोसणताकम्मं—असतीओ पोसेति जधा गोल्लविसए जोणीपोसगा दासीण भाडिं गेण्हेंति, प्रदर्शनं चैतद् वहुसावद्यानां कर्मणां एवंजातीयानां, न पुनः परिगण-नमिति भावार्थः । उक्तं सातिचारं द्वितीयं गुणव्रतं, साम्प्रतं तृतीयमाह—

अणत्थदंडे चउव्विहे पन्नत्ते, तंजहा—अवज्झाणायरिए पमत्तायरिए हिंसप्पयाणे पावकम्मोवएसे, अण-त्थदंडवेरमणस्स समणोवा० इमे पञ्च० तंजहा—कंदप्पे कुक्कुइए मोहरिए संजुत्ताहिगरणे उवभोगपरिभो-गाइरेगे ८ ॥ ( सूत्रम् )

अनर्थदण्डशब्दार्थः, अर्थः—प्रयोजनं, गृहस्थस्य क्षेत्रवास्तुधनशरीरपरिजनादिविषयं तदर्थ आरम्भो—भूतोपमर्दोऽर्थ-दण्डः, दण्डो निग्रहो यातना विनाश इति पर्यायाः, अर्थेन—प्रयोजनेन दण्डोऽर्थदण्डः स चैष भूतविषयः उपमर्दनलक्षणो दण्डः क्षेत्रादिप्रयोजनमपेक्षमाणोऽर्थदण्ड उच्यते, तद्विपरीतोऽनर्थदण्डः—प्रयोजननिरपेक्षः, अनर्थः अप्रयोजनमनुप-योगो निष्कारणतेति पर्यायाः, विनैव कारणेन भूतानि दण्डयति सः, तथा कुठारेण प्रहृष्टस्तरुस्कन्धशाखादिषु प्रहरति कृकलासपिपीलिकादीन् व्यापादयति कृतसङ्कल्पः, न च तद्व्यापादने किञ्चिदतिशयोपकारि प्रयोजनं येन विना गार्हस्थ्यं प्रतिपालयितुं न शक्यते, सोऽयमनर्थदण्डः चतुर्विधः प्रज्ञप्तः, तद्यथा—'अपध्यानाचरित' इति अपध्यानेनाचरितः अप-

१ क्षेत्ररक्षणनिमित्तं यथोत्तरापथे, पश्चात् दग्धे तरुणं तृणमुत्तिष्ठते, तत्र सत्त्वानां शतसहस्राणां वधः, सरोह्रदतटाकपरिशोषणताकर्म—सरोह्रदतटाकादीन् शोषयति, पश्चादुप्यन्ते, एवं न कल्पते, असतीपोषणताकर्म—असतीः पोषयति यथा गौडविषये योनिपोषका दासीनां भाटिं गृह्णन्ति

ध्यानाचरितः समासः, अप्रशस्तं ध्यानं अपध्यानं, इह देवदत्तश्रावककोङ्कणकसाधुप्रभृतयो ज्ञापकं, 'प्रमादाचरितः' प्रमादेनाचरित इति विग्रहः, प्रमादस्तु मद्यादिः पञ्चधा, तथा चोक्तम्—"मज्जं विसयकसाया विकथा णिद्दा य पंचमी भणिया" अनर्थदण्डत्वं चास्योक्तशब्दार्थद्वारेण स्वबुद्ध्या भावनीयं, 'हिंसाप्रदानं' इह हिंसाहेतुत्वादायुधानलविषादयो हिंसोच्यते, कारणे कार्योपचारात्, तेषां प्रदानमन्यस्मै क्रोधाभिभूतायानभिभूताय वा न कल्पते, प्रदाने त्वनर्थदण्ड इति, 'पापकर्मोपदेशः' पातयति नरकादाविति पापं तत्प्रधानं कर्म पापकर्म तस्योपदेश इति समासः, यथा—कृष्यादि कुरुत, तथा चोक्तं—"छित्ताणि कसध गोणे दमेध इच्चादि सावगजणस्स। णो कप्पति उवदिसिउं जाणियजिणवयणसारस्स ॥ १ ॥" इदमतिचाररहितमनुपालनीयमित्यतोऽस्यैवातिचाराभिधित्सयाऽऽह—'अणट्ठदंडे'त्यादि, अनर्थदण्डविरमणस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्याः, तद्यथा—कन्दर्पः—कामः तद्धेतुर्विशिष्टो वाक्प्रयोगः कन्दर्प उच्यते, रागोद्रेकात् प्रहासमिश्रो मोहोद्दीपको नर्मेति भावः। इह सामाचारी—सावगस्स अट्टहासो न कप्पति, जति णाम हसियव्वं तो ईसिं चेव विहसितव्वंति। कौकुच्यं—कुत्सितसंकोचनादिक्रियायुक्तः कुचः कुकुचः तद्भावः कौकुच्यं—अनेकप्रकारा मुखनयनोष्ठकरचरणभ्रूविकारपूर्विका परिहासादिजनिका भाण्डादीनामिव विडम्बनक्रियेत्यर्थः। एत्थ सामायारी—तारिसगाणि भासितुं ण कप्पति जारिसेहिं लोगस्स हासो उप्पज्जति, एवं गतीए ठाणेण वा ठातितुन्ति। मौखर्यं—धार्ष्ट्यप्रायमसत्या-

१ क्षेत्राणि कृषत गा दमयत इत्यादि श्रावकजनस्य। न कल्पते उपदेष्टुं ज्ञातजिनवचनसारस्य ॥ १ ॥ २ श्रावकस्याट्टहासो न कल्पते, यदि नाम हसितव्यं तर्हि ईषदेव विहसितव्यमिति। ३ अत्र सामाचारी—तादृंशि भाषितुं न कल्पते यादृशैर्लोकस्य हासमुत्पद्यते, एवं गत्या स्थानेन वा स्थातुमिति

सम्बद्धप्रलापित्वमुच्यते, मुंहेण[1] वा अरिमाणेति, जधा कुमारामच्चेणं सो चारभडओ विसज्जितो, रण्णा णिवेदितं, ताए जीविकाए वित्ति दिण्णा, अण्णंता रुट्ठेण मारितो कुमारामच्चो। संयुक्ताधिकरणं—अधिक्रियते नरकादिष्वनेनेत्यधिकरणं—वास्तूदूषलशिलापुत्रकगोधूमयन्त्रकादि संयुक्तं—अर्थक्रियाकरणयोग्यं संयुक्तं च तदधिकरणं चेति समासः। एत्थ[2] समाचारी—सावगेण संजुत्ताणि चेव सगडादीनि न धरेतव्वाणि, एवं वासीपरसुमादिविभासा। 'उपभोगपरिभोगातिरेक' इति उपभोगपरिभोगशब्दार्थो निरूपित एव तदतिरेकः। एत्थवि[3] सामायारी—उवभोगातिरित्तं जदि तेल्लामलए वहुए गेण्हति ततो वहुगा ण्हायगा वच्चंति तस्स लोलियाए, अण्हविण्हायगा ण्हायंति, एत्थ पूतरगाआउक्कायवधो, एवं पुप्फतंवोलमादिविभासा, एवं ण वट्टति, का विधी सावगस्स उवभोगे ण्हाणे ?, घरे ण्हायवं णत्थि ताधे तेल्लामलएहिं सीसं घंसित्ता सव्वे साडेतूणं ताहे तडागाईतडे निविट्ठो अंजलिहि ण्हाति, एवं जेसु य पुप्फेसु पुप्फकुंथुताणि ताणि परिहरति। उक्तं सातिचारं

---

१ मुखेन वाऽरिमानयति, यथा कुमारामात्येन स चारभटो विसृष्टः, राज्ञो निवेदितं, तया जीविकया वृत्तिर्दत्ता, अन्यदा रुष्टेन मारितः कुमारामात्यः। २ अत्र सामाचारी श्रावकेण संयुक्तानि शकटादीनि न धारणीयानि, एवं वासीपर्श्वादिविभाषा। ३ अत्रापि सामाचारी—उपभोगातिरिक्तं यदि तैलामलकादीनि बहूनि गृह्णाति ततो बहवः स्नानकारका व्रजन्ति तस्य लौल्येन, अन्येऽस्नायका अपि स्नान्ति, अत्र पूतरकाद्यप्कायवधः, एवं पुष्पतांवूलादिविभाषा, एवं न वर्त्तते, को विधिः श्रावकस्योपभोगे स्नाने ?—गृहे स्नातव्यं नास्ति तदा तैलामलकैः शीर्षं घृष्ट्वा सर्वाणि शाटयित्वा ततस्तडाकादीनां तटे निवेश्याञ्जलिभिः स्नाति, एवं येषु पुष्पेषु पुष्पकुन्थ्वस्तानि परिहरति।

तृतीयाणुव्रतं, व्याख्यातानि गुणव्रतानि, अधुना शिक्षापदव्रतानि उच्यन्ते, तानि च चत्वारि भवन्ति, तद्यथा—सामायिकं देशावकाशिकं पौषधोपवासः अतिथिसंविभागश्चेति, तत्राद्यशिक्षापदव्रतप्रतिपादनायाह—

**सामाइअं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगपडिसेवणं च। सिक्खा दुविहा गाहा उववायठिई गई कसाया य। बंधंता वेयंता पडिवज्जाइक्कमे पंच॥ १॥ सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइयं कुज्जा॥ २॥ सव्वंति भाणिऊणं विरई खलु जस्स सव्विया नत्थि। सो सव्वविरइवाई चुक्कइ देसं च सव्वं च॥ ३॥ सामाइयस्स समणो० इमे पञ्च०, तंजहा—मणदुप्पणिहाणे वइदुप्पणिहाणे कायदुप्पणिहाणे सामाइयस्स सइअकरणया सामाइयस्स अणवट्ठियस्स करणया ९॥ ( सूत्रम् )॥**

समो—रागद्वेषवियुक्तो यः सर्वभूतान्यात्मवत् पश्यति, आयो लाभः प्राप्तिरिति पर्यायाः, समस्यायः समायः, समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचरणपर्यायैर्निरुपमसुखहेतुभिरधःकृतचिन्तामणिकल्पद्रुमोपमैर्युज्यते, स एव समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं समाय एव सामायिकं, नामशब्दोऽलङ्कारार्थः, अवद्यं—गर्हितं पापं, सहावद्येन सावद्यः योगो—व्यापारः कायिकादिस्तस्य परिवर्जनं—परित्यागः कालावधिनेति गम्यते, तत्र मा भूत् सावद्ययोगपरिवर्जनमात्रमपापव्यापारासेवनशून्यमित्यत आह—निरवद्ययोगप्रतिसेवनं चेति, अत्र सावद्ययोगपरिवर्जनवन्निरवद्ययोगप्रतिसेवनेऽप्यहर्निशं यत्नः कार्य इति दर्शनार्थं चशब्दः परिवर्जनप्रतिसेवनक्रियाद्वयस्य तुल्यकक्षतोद्भावनार्थः। एत्थ पुण सामाचारी—सामाइयं

१ अत्र पुनः सामाचारी सामायिकं

[1]सावएण कथं कायव्वंति ?, इह सावगो दुविधो–इड्ढीपत्तो अणिड्ढिपत्तो य, जो सो अणिड्ढिपत्तो सो चेतियघरे साधुसमीपे वा घरे वा पोसधसालाए वा जत्थ वा विसमति अच्छते वा निव्वावारो सव्वत्थ करेति तत्थ, चउसु ठाणेसु णियमा कायव्वं–चेतियघरे साधुमूले पोषधसालाए घरे आवासगं करेंतोत्ति, तत्थ जति साधुसगासे करेति तत्थ का विधी ?, जति परं परभयं नत्थि जतिवि य केणइ समं विवादो णत्थि जति कस्सइ ण धरेइ मा तेण अंछवियछियं कज्जिहिति, जति य धारणगं दट्ठूण न गेण्हति मा णिज्जिहित्ति, जति वावारं ण वावारेति, ताधे घरे चेव सामायिकं कातूणं वच्चति, पंचसमिओ तिगुत्तो ईरियाउवजुत्ते जहा साहू भासाए सावज्जं परिहरंतो एसणाए कट्ठं लेट्ठुं वा पडिलेहिउं पमज्जेत्तुं, एवं आदाणे णिक्खेवणे, खेलसिंघाणे ण विगिंचति, विगिंचंतो वा पडिलेहेति य पमज्जति य, जत्थ चिट्ठति तत्थवि गुत्तिणिरोधं करेति। एताए विधीए गत्ता तिविधेण णमित्तु साधुणो पच्छा सामाइयं करेति, 'करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविधं तिविधेणं जाव साधू पज्जुवासामित्ति कातूणं, पच्छा ईरियावहियाए

---

1 श्रावकेण कथं कर्त्तव्यमिति ?, इह श्रावको द्विविधः–ऋद्धिप्राप्तोऽनृद्धिप्राप्तश्च, यः सोऽनृद्धिप्राप्तः स चैत्यगृहे साधुसमीपे वा गृहे वा पौषधशालायां वा यत्र वा विश्राम्यति तिष्ठति वा निर्व्यापारः सर्वत्र करोति तत्र, चतुर्षु स्थानेषु नियमात् कर्त्तव्यं–चैत्यगृहे साधुमूले पौषधशालायां गृहे वाऽऽवश्यकं कुर्वन्निति, तत्र यदि साधुसकाशे करोति तत्र को विधिः ?–यदि परं परभयं नास्ति यदि च केनापि सार्धं विवादो नास्ति यदि कस्मैचिन्न धारयति मा तेनाकर्षविकर्षं भूदिति, यदि चाधमर्णं दृष्ट्वा न गृह्णेय मा नीयेयेति, यदि व्यापारं न करोति, तदा गृह एव सामायिकं कृत्वा व्रजति, पञ्चसमितस्त्रिगुप्त ईर्याद्युपयुक्तो यथा साधुः भाषायां सावद्यं परिहरन् एषणायां लेष्टुं काष्ठं वा प्रतिलिख्य प्रमृज्य एवमादाने निक्षेपे, श्लेष्मसिङ्घाने न त्यजति, त्यजन् वा प्रतिलिखति च प्रमार्ष्टि च, यत्र तिष्ठति तत्रापि गुप्तिनिरोधं करोति, एतेन विधिना गत्वा त्रिविधेन नत्वा साधून् पश्चात् सामायिकं करोति–करोमि भदन्त ! सामायिकं सावद्यं योगं प्रत्याख्यामि द्विविधं त्रिविधेन यावत् साधून् पर्युपासे इतिकृत्वा, पश्चात् ऐर्यापथिकीं

पडिकमति, पच्छा आलोएत्ता वंदति आयरियादी जधारातिणिया, पुणोवि गुरुं वंदित्ता पडिलेहित्ता णिविठ्ठो पुच्छति पढति वा, एवं चेतियाइएसुवि, जदा सगिहे पोसधसालाए वा आवासए वा तत्थ णवरि गमणं णत्थि, जो इड्ढीपत्तो(सो) सव्विड्ढीए एति, तेण जणस्स उच्छाहोवि आढिता य साधुणो सुपुरिसपरिग्गहेणं, जति सो कयसामाइतो एति ताधे आसहत्थिमादिणा जणेण य अधिकरणं वट्टति, ताधे ण करेति, कयसामाइएण य पादेहिं आगंतवं, तेणं ण करेति, आगतो साधुसमीवे करेति, जति सो सावओ तो ण कोइ उट्ठेति, अह अहाभद्दओ ता पूता कता होतुत्ति भण(ण्ण)ति, ताधे पुव्वरइतं आसणं कीरति, आयरिया उट्ठिता य अच्छंति, तत्थ उट्ठेंतमणुट्ठेंते दोसा विभासितवा, पच्छा सो इड्ढीपत्तो सामाइयं करेइ अणेण विधिणा—करेमि भन्ते! सामाइयं सावज्जं जोगं पच्चक्खामि दुविधं तिविधेण जाव नियमं पज्जुवासामित्ति, एवं सामाइयं काउं पडिक्कंतो वंदित्ता पुच्छति, सो य किर सामाइयं करेंतो मउडं अवणेति कुंडलाणि णाममुद्दं

---

१ प्रतिक्रामति, पश्चात् आलोच्य वन्दते आचार्यादीन् यथारात्निकं, पुनरपि गुरुं वन्दित्वा प्रतिलिख्य निविष्टः पृच्छति पठति वा, एवं चैत्यादिष्वपि, यदा स्वगृहे पौषधशालायां वा आवासके वा तदा नवरं गमनं नास्ति, य ऋद्धिप्राप्तः स सर्वर्द्ध्याऽऽयाति, तेन जनस्योत्साहः अपि च साधव आदृताः सुपुरुषपरिग्रहेण, यदि स कृतसामायिक आयाति तदाऽश्वहस्त्यादिना जनेन चाधिकरणं वर्तते ततो न करोति, कृतसामायिकेन च पादाभ्यामागन्तव्यं तेन न करोति, आगतः साधुसमीपे करोति, यदि स श्रावकस्तदा न कोऽपि अभ्युत्तिष्ठति, अथ यथाभद्रकस्तदाऽऽदृतो भवत्विति भण्यते, तदा पूर्वरचितमासनं क्रियते, आचार्याश्चोत्थितास्तिष्ठन्ति, तत्रोत्तिष्ठत्यनुत्तिष्ठति च दोषा विभाषितव्याः, पश्चात् स ऋद्धिप्राप्तः सामायिकं करोत्यनेन विधिना—करोमि भदन्त! सामायिकं सावद्यं योगं प्रत्याख्यामि द्विविधं त्रिविधेन यावन्नियमं पर्युपासे इति, एवं सामायिकं कृत्वा प्रतिक्रान्तो वन्दित्वा पृच्छति, स किल सामायिकं कुर्वन् मुकुटं अपनयति कुण्डले नाममुद्रां

[1]पुप्फतंवोलपावारगमादी वोसिरति। एसा विधी सामाइयस्स। आह—सावद्ययोगपरिवर्जनादिरूपत्वात् सामायिकस्य कृतसामायिकः श्रावको वस्तुतः साधुरेव, स कस्माद् इत्वरं सर्वसावद्ययोगप्रत्याख्यानमेव न करोति त्रिविधं त्रिविधेनेति?, अत्रोच्यते, सामान्येन सर्वसावद्ययोगप्रत्याख्यानस्यागारिणोऽसम्भवादारम्भेष्वनुमतेरव्यवच्छिन्नत्वात्, कनकादिषु चाऽऽत्मीयपरिग्रहादनिवृत्तेः, अन्यथा सामायिकोत्तरकालमपि तदग्रहणप्रसङ्गात्, साधुश्रावकयोश्च प्रपञ्चेन भेदाभिधानात्। तथा चाह ग्रन्थकारः—

सिक्खा दुविधा गाहा, उववातठिती गती कसाया य। बंधंता वेदेन्ता पडिवज्जाइक्कमे पंच ॥ १ ॥

इह शिक्षाकृतः साधुश्रावकयोर्महान् विशेषः, सा च शिक्षा द्विधा—आसेवनाशिक्षा ग्रहणशिक्षा च, आसेवना—प्रत्युपेक्षणादिक्रियारूपा, शिक्षा—अभ्यासः, तत्रासेवनाशिक्षामधिकृत्य सम्पूर्णामेव चक्रवालसामाचारीं सदा पालयति साधुः, श्रावकस्तु न तत्कालमपि सम्पूर्णामपरिज्ञानादसम्भवाच्च, ग्रहणशिक्षां पुनरधिकृत्य साधुः सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातर उत्कृष्टतस्तु विन्दुसारपर्यन्तं गृह्णातीति, श्रावकस्तु सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातर उत्कृष्टतस्तु षड्जीवनिकायां यावदुभयतोऽर्थतस्तु पिण्डैषणां यावत्, नतु तामपि सूत्रतो निरवशेषामर्थत इति। सूत्रप्रामाण्याच्च विशेषः, तथा चोक्तम्—“सामाइयंमि तु कते समणो इव सावओ हवइ जम्हा। एतेण कारणेणं वहुसो सामाइयं कुज्जा॥ १॥” इति, गाथासूत्रं प्राग् व्याख्यातमेव, लेशतस्तु व्याख्यायते—सामायिके प्राग्निरूपितशब्दार्थे, तुशब्दोऽवधारणार्थः, सामायिक एव कृते न शेषकालं श्रमण इव—साधुरिव श्रावको भवति यस्मात्, एतेन कारणेन वहुशः—अनेकशः सामायिकं कुर्यादि-

---

१ पुष्पताम्बूलप्रावारकादि व्युत्सृजति, एप विधिः सामायिकस्य।

त्यत्र श्रमण इव चोक्तं न तु श्रमण एवेति यथा समुद्र इव तडागः न तु समुद्र एवेत्यभिप्रायः । तथोपपातो विशेषकः, साधुः सर्वार्थसिद्ध उत्पद्यते श्रावकस्त्वच्युते परमोपपातेन जघन्येन तु द्वावपि सौधर्म एवेति, तथा चोक्तं–"अविराधितसामण्णस्स साहुणो सावगस्स उ जहण्णो । सोधम्मे उववातो भणिओ तेलोक्कदंसीहिं ॥ १ ॥" तथा स्थितिर्भेदिका, साधोरुत्कृष्टा त्रयस्त्रिंशत्सागरोपमाणि जघन्या तु पल्योपमपृथक्त्वमिति, श्रावकस्य तूत्कृष्टा द्वाविंशतिः सागरोपमाणि जघन्या तु पल्योपममिति । तथा गतिर्भेदिका, व्यवहारतः साधुः पञ्चस्वपि गच्छति, तथा च कुरटोत्कुरुटौ नरकं गतौ कुणालादृष्टान्तेनेति श्रूयते, श्रावकस्तु चतसृषु न सिद्धगताविति, अन्ये च व्याचक्षते–साधुः सुरगतौ मोक्षे च, श्रावकस्तु चतसृष्वपि । तथा कषायाश्च विशेषकाः, साधुः कषायोदयमाश्रित्य सञ्ज्वलनापेक्षया चतुस्त्रिद्व्येककषायोदयवानकषायोऽपि भवति छद्मस्थवीतरागादिः, श्रावकस्तु द्वादशकषायोदयवान् अष्टकषायोदयवांश्च भवति, यदा द्वादशकषायवांस्तदाऽनन्तानुबन्धवर्जा गृह्यन्ते, एते चाविरतस्य विज्ञेया इति, यदा त्वष्टकषायोदयवान् तदाऽनन्तानुबन्धिअप्रत्याख्यानकषायवर्जा इति, एते च विरताविरतस्य । तथा बन्धश्च भेदकः, साधुर्मूलप्रकृत्यपेक्षया अष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा, उक्तं च–"सत्तविधबंधगा हुंति पाणिणो आउवज्जगाणं तु । तह सुहुमसंपरागा छव्विहबंधा विणिद्दिट्ठा ॥ १ ॥ मोहाउयवज्जाणं पगडीणं ते उ बंधगा भणिया । उवसंतखीणमोहा केवलिणो एगविधबंधा ॥ २ ॥ ते पुण

१ अविराद्धश्रामण्यस्य साधोः श्रावकस्यापि जघन्यतः । सौधर्मे उपपातो भणितस्त्रैलोक्यदर्शिभिः ॥ १ ॥ २ सप्तविधबन्धका भवन्ति प्राणिन आयुर्वर्जानां तु । तथा सूक्ष्मसंपरायाः षड्विधबन्धा विनिर्दिष्टाः ॥ १ ॥ मोहायुर्वर्जानां प्रकृतीनां ते तु बन्धका भणिताः । उपशान्तक्षीणमोहौ केवलिन एकविधबन्धकाः ॥ २ ॥ ते पुन-

[1]दुसमयठितीयस्स बंधगा ण पुण संपरागस्स । सेलेसीपडिवण्णा अवंधगा होंति विण्णेया ॥ २ ॥" श्रावकस्तु अष्टविध-बन्धको वा सप्तविधबन्धको वा । तथा वेदनाकृतो भेदः, साधुरष्टानां सप्तानां चतसृणां वा प्रकृतीनां वेदकः, श्रावकस्तु नियमादष्टानामिति । तथा प्रतिपत्तिकृतो विशेषः, साधुः पञ्च महाव्रतानि प्रतिपद्यते, श्रावकस्त्वेकमणुव्रतं द्वे त्रीणि चत्वारि पञ्च वा, अथवा साधुः सकृत् सामायिकं प्रतिपद्य सर्वकालं धारयति, श्रावकस्तु पुनः २ प्रतिपद्यत इति । तथाऽति-क्रमो विशेषकः, साधोरेकव्रतातिक्रमे पञ्चव्रतातिक्रमः, श्रावकस्य पुनरेकस्यैव, पाठान्तरं वा, किं च-इतरश्च सर्वशब्दं न प्रयुङ्क्ते, मा भूद्देशविरतेरप्यभाव इति, आह च-'सामाइयंमि उ कए' 'सवंति भाणिऊणं' गाहा, सर्वमित्यभिधाय-सर्वं सावद्यं योगं परित्यजामीत्यभिधाय विरतिः खलु यस्य 'सर्वा' निरवशेषा नास्ति, अनुमतेर्नित्यप्रवृत्तत्वादिति भावना, स एवंभूतः सर्वविरतिवादी 'चुक्कइ'त्ति भ्रश्यति देशविरतिं सर्वविरतिं च प्रत्यक्षमृषावादित्वादित्यभिप्रायः । पर्याप्तं प्रसङ्गेन प्रकृतं प्रस्तुमः । इदमपि च शिक्षापदव्रतमतिचाररहितमनुपालनीयमित्यत आह-'सामाइयस्स समणो' [गाहा], सामा-यिकस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्याः, तद्यथा-मनोदुष्प्रणिधानं, प्रणिधानं-प्रयोगः दुष्टं प्रणिधानं दुष्प्रणिधानं मनसो दुष्प्रणिधानं मनोदुष्प्रणिधानं, कृतसामायिकस्य गृहसत्केतिकर्त्तव्यतासुकृतदुष्कृतपरिचिन्त-नमिति, उक्तं च-"[2]सामाइयंति (तु)कातुं घरचिन्तं जो तु चिंतये सड्डो । अट्टवसट्टमुवगतो निरत्थयं तस्स सामइयं ॥ १ ॥

---

१ द्विसमयस्थितिकस्य बन्धका न पुनः सांपरायिकस्य । शैलेशीप्रतिपन्ना अबन्धका भवन्ति विज्ञेया ॥ ३ ॥ २ सामायिकं(तु) कृत्वा गृहचिन्तां ( कार्यं ) यस्तु चिन्तयेच्छ्राद्धः । आर्त्तवशार्त्तमुपगतो निरर्थकं तस्य सामायिकम् ॥ १ ॥

वागूदुष्प्रणिधानं कृतसामायिकस्यासभ्यनिष्ठुरसावद्यवाक्प्रयोग इति, उक्तं च–"¹कडसामइओ पुव्वं बुद्धीए पेहितूण भासेज्जा। सइ णिरवज्जं वयणं अण्णह सामाइयं ण भवे ॥ २ ॥" कायदुष्प्रणिधानं कृतसामायिकस्याप्रत्युपेक्षितादिभूतलादौ करच-रणादीनां देहावयवानामनिभृतस्थापनमिति, उक्तं च–"²अणिरिक्खियापमज्जिय थंडिल्ले ठाणमादि सेवन्तो। हिंसाभावेवि ण सो कडसामइओ पमादाओ ॥ १ ॥" सामायिकस्य स्मृत्यकरणं–सामायिकस्य सम्बन्धिनी या स्मरणा स्मृतिः–उपयोगलक्षणा तस्या अकरणम्–अनासेवनमिति, एतदुक्तं भवति–प्रबलप्रमादवान् नैव स्मरत्यस्यां वेलायां मया यत्सामायिकं कर्त्तव्यं कृतं न कृतमिति वा, स्मृतिमूलं च मोक्षसाधनानुष्ठानमिति, उक्तं च–"³ण सरइ पमादजुत्तो जो सामइयं कदा तु कातव्वं। कतमकतं वा तस्स हु कयंपि विफलं तयं णेयं ॥१॥" सामायिकस्यानवस्थितस्य करणं अनवस्थितकरणं, अनवस्थितमल्पकालं वा कर-णानन्तरमेव त्यजति, यथाकथञ्चिद्वाऽनवस्थितं करोतीति, उक्तं च–"⁴कातूण तक्खणं चिय पारेति करेति वा जधिच्छाए। अणवट्ठियं सामइयं अणादरातो न तं सुद्धं ॥ १ ॥" उक्तं सातिचारं प्रथमं शिक्षापदव्रतमधुना द्वितीयं प्रतिपादयन्नाह–

**दिसिव्वयगहियस्स दिसापरिमाणस्स पइदिणं परिमाणकरणं देसावगासियं, देसावगासियस्स समणो० इमे पञ्च०, तंजहा–आणवणप्पओगे पेसवणप्पओगे सद्दाणुवाए रूवाणुवाए बहिया पुग्गलपक्खेवे ॥ १० ॥ ( सूत्रं )**

---

१ कृतसामायिकः पूर्वं बुद्ध्या प्रेक्ष्य भाषेत। सदा निरवद्यं वचनमन्यथा सामायिकं न भवेत् ॥ १ ॥ २ अनिरीक्ष्याप्रमृज्य स्थण्डिलान् स्थानादि सेव-मानः। हिंसाऽभावेऽपि न स कृतसामायिकः प्रमादात् ॥ १ ॥ ३ न स्मरति प्रमादयुक्तो यः सामायिकं तु कदा कर्त्तव्यं। कृतमकृतं वा तस्य हु कृतमपि विफलं तकत् ज्ञेयं ॥ १ ॥ ४ कृत्वा तत्क्षणमेव पारयति करोति वा यदृच्छया। अनवस्थितं सामायिकमनादरात् न तत् शुद्धम् ॥ १ ॥

दिग्व्रतं प्राग् व्याख्यातमेव तद्गृहीतस्य दिक्परिमाणस्य दीर्घकालस्य यावज्जीवसंवत्सरचतुर्मासादिभेदस्य योजनशतादिरूपत्वात् प्रत्यहं तावत्परिमाणस्य गन्तुमशक्तत्वात् प्रतिदिनं–प्रतिदिवसमित्येतच्च प्रहरमुहूर्त्ताद्युपलक्षणं प्रमाणकरणं–दिवसादिगमनयोग्यदेशस्थापनं प्रतिदिनप्रमाणकरणं देशावकाशिकं, दिग्व्रतगृहीतदिक्परिमाणस्यैकदेशः–अंशः तस्मिन्नवकाशः–गमनादिचेष्टास्थानं देशावकाशस्तेन निर्वृत्तं देशावकाशिकं, एतच्चाणुव्रतादिगृहीतदीर्घतरकालावधिविरतेरपि प्रतिदिनसङ्क्षेपोपलक्षणमिति पूज्या वर्णयन्ति, अन्यथा तद्विषयसङ्क्षेपाभावाद् भावे वा पृथक्शिक्षापदभावप्रसङ्गादित्यलं विस्तरेण। 'एत्थ य सप्पदिट्ठंतं आयरिया पण्णवयंति, जधा सप्पस्स पुव्वं से बारसजोयणाणि विसओ आसि, पच्छा विज्जावादिएण ओसारेंतेण जोयणे दिट्ठिविसओ से ठवितो, एवं सावओवि दिसिव्वतागारे बहुयं अवरज्झियाउ, पच्छा देसावगासिएणं तंपि ओसारेति। अथवा विसदिट्ठंतो–अगतेण एक्काए अंगुलीए ठवितं, एवं विभासा। इदमपि शिक्षाव्रतमतिचाररहितमनुपालनीयमित्यत आह–'देसा० देशावकाशिकस्य–प्राग्निरूपितशब्दार्थस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्याः, तद्यथा–'आनयनप्रयोगः' इह विशिष्टे देशाधि(दि)के भूदेशाभिग्रहे परतः स्वयं गमनायोगाद्यदन्यः सचित्तादिद्रव्यानयने प्रयुज्यते सन्देशकप्रदानादिना त्वयेदमानेयमित्यानयनप्रयोगः, बलात् विनियोज्यः प्रेष्यः तस्य प्रयोगः यथाऽभिगृहीतपरविचारदेशव्यतिक्रमभयात् त्वयाऽवश्यमेव गत्वा मम गवाद्यानेयमिदं वा तत्र कर्तव्यमित्येवंभूतः प्रेष्यप्रयोगः। तथा शब्दानुपातः स्वगृहवृत्तिप्राकारकादिव्यवच्छिन्नभूदेशाभिग्रहेऽपि बहिः प्रयोजनो-

अत्र च सर्पदृष्टान्तमाचार्याः प्रज्ञापयन्ति, यथा पूर्वं तस्य सर्पस्य द्वादश योजनानि विषय आसीत्, पश्चाद्विद्यावादिनाऽपसारयता योजने तस्य दृष्टिविषयः स्थापितः, एवं श्रावकोऽपि दिग्व्रताकारे बह्वपराद्धवान् पश्चात् देशावकाशिकेन तदप्यपसारयति। अथवा विषदृष्टान्तः–अगदेनैकस्यामङ्गुलौ स्थापितं, एवं विभाषा

त्पत्तौ तत्र स्वयं गमनायोगात् वृत्तिप्राकारप्रत्यासन्नवर्तिनो बुद्धिपूर्वकं क्षुत्कासितादिशब्दकरणेन समवासितकान् बोधयतः शब्दस्यानुपातनम्—उच्चारणं तादृग् येन परकीयश्रवणविवरमनुपतत्यसाविति, तथा रूपानुपातः—अभिगृहीतदेशाद् बहिः प्रयोजनभावे शब्दमनुच्चारयत एव परेषां समीपानयनार्थं स्वशरीररूपदर्शनं रूपानुपातः, तथा बहिः पुद्गलप्रक्षेपः अभिगृहीतदेशाद् बहिः प्रयोजनभावे परेषां प्रबोधनाय लेष्ट्वादिक्षेपः पुद्गलप्रक्षेप इति भावना, देशावकाशिकमेतदर्थमभिगृह्यते मा भूद् बहिर्गमनागमनादिव्यापारजनितः प्राण्युपमर्द इति, स च स्वयं कृतोऽन्येन वा कारित इति न कश्चित् फले विशेषः प्रत्युत गुणः स्वयंगमने ईर्यापथविशुद्धेः परस्य पुनरनिपुणत्वादशुद्धिरिति कृतं प्रसङ्गेन ॥ व्याख्यातं सातिचारं द्वितीयं शिक्षापदव्रतं, अधुना तृतीयमुच्यते, तत्रेदं सूत्रम्—

पोसहोववासे चउव्विहे पन्नत्ते, तंजहा—आहारपोसहे सरीरसक्कारपोसहे बंभचेरपोसहे अव्वावारपोसहे, पोसहोववासस्स समणो० इमे पञ्च०, तंजहा—अप्पडिलेहियदुप्पडिलेहियसिज्जासंथारए अपमज्जियदुप्पमज्जियसिज्जासंथारए अप्पडिलेहियदुप्पडिलेहियउच्चारपासवणभूमीओ अप्पमज्जियदुप्पमज्जियउच्चारपासवणभूमीओ पोसहोववासस्स सम्मं अणणुपाल(ण)या ॥ ११ ॥ ( सूत्रं )

इह पौषधशब्दो रूढ्या पर्वसु वर्त्तते, पर्वाणि चाष्टम्यादितिथयः, पूरणात् पर्व, धर्मोपचयहेतुत्वादित्यर्थः, पौषधे उपवसनं पौषधोपवासः नियमविशेषाभिधानं चेदं पोषधोपवास इति, अयं च पोषधोपवासश्चतुर्विधः प्रज्ञप्तः, तद्यथा—'आहारपोषधः' आहारः प्रतीतः तद्विषयस्तन्निमित्तं पोषध आहारपोषधः, आहारनिमित्तं धर्मपूरणं पर्वेति भावना, एवं शरीरसत्कार-

पोषधः ब्रह्मचर्यपोषधः, अत्र चरणीयं चर्य्यं 'अवो यदि'त्यस्मादधिकारात् 'गदमदचरयमश्चानुपसर्गात्' (पा० ३-१-१००) इति यत्, ब्रह्म-कुशलानुष्ठानं, यथोक्तं-"ब्रह्म वेदा ब्रह्म तपो, ब्रह्म ज्ञानं च शाश्वतम् ।" ब्रह्म च तत् चर्यं चेति समासः शेषं पूर्ववत् । तथा अव्यापारपोषधः । एत्थ[1] पुण भावत्थो एस-आहारपोसधो दुविधो-देसे सव्वे य, देसे अमुगा विगती आयंविलं वा एक्कसिं वा दो वा, सव्वे चतुव्विधोऽवि आहारो अहोरत्तं पच्चक्खातो, सरीरपोसधो ण्हाणुवट्टणवण्णगविलेवणपुप्फगंधतंवोलाणं वत्थाभरणाणं च परिच्चागो य, सोवि देसे सव्वे य, देसे अमुगं सरीरसक्कारं करेमि अमुगं न करेमित्ति, सव्वे अहोरत्तं, वंभचेरपोसधो देसे सव्वे य, देसे दिवा रत्तिं एक्कसिं दो वा वारेत्ति, सव्वे अहोरत्तिं वंभयारी भवति, अवावारे पोसधो दुविहो देसे सव्वे य, देसे अमुगं वावारं ण करेमि, सव्वे सयलवावारे हलसगडघरपरक्कमादीओ ण करेति, एत्थ जो देसपोसधं करेति सामाइयं करेति वा ण वा, जो सव्वपोसधं करेति सो णियमा कयसामाइतो, जति ण करेति तो णियमा वंचिज्जति, तं कहिं ?, चेतियघरे साधूमूले वा घरे वा पोसधसालाए वा उम्मुक्कमणिसुवण्णो पढंतो पोत्थगं वा वायंतो

---

१ अत्र पुनर्भावार्थ एषः-आहारपोषधो द्विविधः-देशतः सर्वतश्च, देशे अमुका विकृतिः आचामाम्लं वा एकशो द्विर्वा, सर्वतश्चतुर्विधोऽप्याहारोऽहोरात्रं प्रत्याख्यातः, शरीरपोषधः स्नानोद्वर्त्तनवर्णकविलेपनपुष्पगन्धताम्बूलानां वस्त्राभरणानां च परित्यागात्, सोऽपि देशतः सर्वतश्च देशतोऽमुकं शरीरसत्कारं करोम्यमुकं न करोमि, सर्वतोऽहोरात्रं, ब्रह्मचर्यपोषधो देशतः सर्वतश्च, देशतो दिवा रात्रौ वा एकशो द्विर्वा, सर्वतोऽहोरात्रं ब्रह्मचारी भवति, अव्यापारपोषधो द्विविधो देशत. सर्वतश्च, देशतोऽमुकं व्यापारं न करोमि सर्वतः सकलव्यापारान् हलशकटगृहपराक्रमादिकान् न करोति, अत्र यो देशपोषधं करोति सामायिकं करोति वा नं वा, यः सर्वपोषधं करोति स निमात् कृतसामायिकः, यदि न करोति तदा नियमाद्भ्रश्यते, तत् क ?, चैत्यगृहे साधुमूले वा गृहे वा पोषधशालायां वा, उन्मुक्तमणिसुवर्णः पठन् पुस्तकं वा वाचयन्

धम्मं झाणं झायति, जधा एते साधुगुणा अहं असमत्थो मंदभग्गो धारेतुं विभासा । इदमपि च शिक्षापदव्रतमतिचाररहितमनुपालनीयमित्यत आह–'पोसधोववासस्स समणो'०पोषधोपवासस्य निरूपितशब्दार्थस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्याः, तद्यथा–अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारौ, इह संस्तीर्यते यः प्रतिपन्नपोषधोपवासेन दर्भकुशकम्बलीवस्त्रादिः स संस्तारः शय्या प्रतीता प्रत्युपेक्षणं–गोचरापन्नस्य शय्यादेश्चक्षुषा निरीक्षणं न प्रत्युपेक्षणं अप्रत्युपेक्षणं दुष्टम्–उद्भ्रान्तचेतसा प्रत्युपेक्षणं दुष्प्रत्युपेक्षणं ततश्चाप्रत्युपेक्षितदुष्प्रत्युपेक्षितौ शय्यासंस्तारौ चेति समासः, शय्यैव वा संस्तारः शय्यासंस्तारः, इत्येवमन्यत्राक्षरगमनिका कार्येति, उपलक्षणं च शय्यासंस्ताराद्युपयोगिनः पीठ(फल)कादेरपि । एत्थं[1] पुण सामायारी–कडपोसधो णो अप्पडिलेहिया सज्जं दुरूहति, संथारगं वा दुरुहइ, पोसहसालं वा सेवइ, दब्भवत्थं वा सुद्धवत्थं वा भूमीए संथरति, काइयभूमितो वा आगतो पुणरवि पडिलेहति, अण्णधातियारो, एवं पीढगादिसुवि विभासा । तथा अप्रमार्जितदुष्प्रमार्जितशय्यासंस्तारौ, इह प्रमार्जनं–शय्यादेरासेवनकाले वस्त्रोपान्तादिनेति, दुष्टम्–अविधिना प्रमार्जनं शेषं भावितमेव, एवं उच्चारप्रश्रवणभूमावपि, उच्चारप्रश्रवणं निष्ठ्यूतखेलमलाद्युपलक्षणं, शेषं भावितमेव । तथा पोषधस्य सम्यक्–प्रवचनोक्तेन विधिना निष्प्रकम्पेन चेतसा अननुपालनम्–अनासेवनम् । एत्थं[3] भावना–कतपोसधो

---

१ धर्मध्यानं ध्यायति, यथा साधुगुणानेतानहं मन्दभाग्योऽसमर्थो धारयितुं विभाषा । २ अत्र पुनः सामाचारी–कृतपोषधो नाप्रतिलिख्य शय्यामारोहति संस्तारकं वारोहति पोषधशालां वा सेवते दर्भवस्त्रं वा शुद्धवस्त्रं वा भूमौ संस्तृणाति, कायिकीभूमित आगतो वा पुनरपि प्रतिलिखति, अन्यथाऽतिचारः, एवं पीठकादिष्वपि विभाषा । ३ अत्र भावना कृतपोषधो-

[1]अथिरचित्तो आहारे ताव सव्वं देसं वा पत्थेति, विदियदिवसे पारणगस्स वा अप्पणो अट्ठाए आढत्तिं कारेइ, करेइ वा इमं २ वत्ति कहे धणियं वट्टइ, सरीरसक्कारे सरीरं वट्टेति, दाढियाउ केसे वा रोमराइं वा सिंगाराभिप्पायेण संठवेति, दाहे वा सरीरं सिंचति, एवं सव्वाणि सरीरविभूसाकरणाणि(ण)परिहरति बंभचेरे, इहलोए परलोए वा भोगे पत्थेति संबाधेति वा, अथवा सद्दफरिसरसरूवगंधे वा अहिलसति, कइया बंभचेरपोसहो पूरिहिइ, चइत्ता मो बंभचेरेणंति, अव्वावारे सावज्जाणि वावारेति कतमकतं वा चिंतेइ, एवं पंचतियारसुद्धो अणुपालेतव्वोत्ति। उक्तं सातिचारं तृतीयशिक्षापदव्रतं, अधुना चतुर्थमुच्यते, तत्रेदं सूत्रम्—

**अतिहिसंविभागो नाम नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुअं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाणं दाणं, अतिहिसंविभागस्स समणो० इमे पञ्च० तंजहा—सच्चित्तनिक्खेवणया सच्चित्तपिहणया कालइक्कमे परववएसे मच्छरिया य १२॥ (सूत्रं)**

इह भोजनार्थं भोजनकालोपस्थाय्यतिथिरुच्यते, तत्रात्मार्थं निष्पादिताहारस्य गृहिव्रतिनः मुख्यः साधुरेवातिथिस्तस्य

---

१ ऽस्थिरचित्त आहारे तावत् सर्वं देशं वा प्रार्थयते द्वितीयदिवसे वाऽऽत्मनः पारणकस्यार्थे आदर्तिं करोति कुरु वेदमिदं वेति कथायामत्यन्तं वर्त्तते, शरीरसत्कारे शरीरं वर्त्तयति श्मश्रुकेशान् वा रोमराजिं वा श्रृङ्गाराभिप्रायेण संस्थापयति, निदाघे वा शरीरं सिञ्चति, एवं सर्वाणि शरीरविभूषाकारणानि न परिहरति ब्रह्मचर्ये ऐहलौकिकान् पारलौकिकान् वा भोगान् प्रार्थयते संबाधयति वा, अथवा शब्दस्पर्शरसरूपगन्धान्वाऽभिलष्यति, कदा ब्रह्मचर्यपोषधः पूरयिष्यति त्याजिताः स्मो ब्रह्मचर्येणेति। अव्यापारे सावद्यान् व्यापारयति कृतमकृतं वा चिन्तयति, एवं पञ्चातिचारशुद्धोऽनुपालनीयः।

संविभागोऽतिथिसंविभागः, संविभागग्रहणात् पश्चात्कर्मादिदोषपरिहारमाह, नामशब्दः पूर्ववत्, 'न्यायागताना'मिति न्यायः द्विजक्षत्रियविट्शूद्राणां स्ववृत्त्यनुष्ठानं स्वस्ववृत्तिश्च प्रसिद्धैव प्रायो लोकहेर्या तेन तादृशा न्यायेनागतानां-प्रासानाम्, अनेनान्यायागतानां प्रतिषेधमाह, कल्पनीयानामुद्गमादिदोषपरिवर्जितानामनेनाकल्पनीयानां निषेधमाह, अन्नपानादीनां द्रव्याणाम्, आदिग्रहणाद् वस्त्रपात्रौषधभेषजादिपरिग्रहः, अनेनापि हिरण्यादिव्यवच्छेदमाह, 'देशकालश्रद्धासत्कारक्रमयुक्तं' तत्र नानाव्रीहिकोद्रवकङ्गुगोधूमादिनिष्पत्तिभाग् देशः सुभिक्षदुर्भिक्षादिः कालः विशुद्धश्चित्तपरिणामः श्रद्धा अभ्युत्थानासनदानवन्दनानुव्रजनादिः सत्कारः पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः, एभिर्देशादिभिर्युक्तं-समन्वितं, अनेनापि विपक्षव्यवच्छेदमाह, 'परया' प्रधानया भक्त्येति, अनेन फलप्राप्तौ भक्तिकृतमतिशयमाह, आत्मानुग्रहबुद्ध्या न पुनर्यत्यनुग्रहबुद्ध्येति, तथाहि-आत्मपरानुग्रहपरा एव यतयः संयता मूलगुणोत्तरगुणसम्पन्ना साधवस्तेभ्यो दानमिति सूत्राक्षरार्थः। [1]एत्थ सामाचारी-सावगेण पोसधं पारेंतेण णियमा साधूणमदातुं ण पारेयव्वं, अन्नदा पुण अनियमो-दातुं वा पारेति पारितो वा देइत्ति, तम्हा पुव्वं साधूणं दातुं पच्छा पारेतव्वं, कधं ?, जाधे देसकालो ताधे अप्पणो सरीरस्स विभूसं काउं साधुपडिस्सयं गंतुं णिमंतेति, भिक्खं गेण्हधत्ति, साधूण का पडिवत्ती?, ताधे अण्णो पडलं अण्णो मुहणंतयं

---

1 अत्र सामाचारी-श्रावकेण पोषधं पारयता नियमात् साधुभ्योऽदत्त्वा न पारयितव्यं अन्यदा पुनरनियमः दत्त्वा वा पारयति पारयित्वा वा ददातीति, तस्मात् पूर्वं साधुभ्यो दत्त्वा पारयितव्यं, कथं ?, यदा देशकालस्तदाऽऽत्मनः शरीरस्य विभूषां कृत्वा साधुप्रतिश्रयं गत्वा निमन्त्रयते भिक्षां गृह्णीतेति, साधूनां का प्रतिपत्तिः ?-तदाऽन्यः पटलं अन्यो मुखानन्तकं

[1]अण्णो भाणं पडिलेहेति, मा अंतराइयदोसा ठविंतगदोसा य भविस्संति, सो जति पढमाए पोरुसीए णिमंतेति अत्थि णमोक्कारसहिताइतो तो गेज्झति, अधव णत्थि ण गेज्झति, तं वहितव्वयं होति, जति घणं लगेज्जा ताधे गेज्झति संचिक्खाविज्जति, जो वा उग्घाडाए पोरिसिए पारेति पारणइत्तो अण्णो वा तस्स दिज्जति, पच्छा तेण सावगेण समगं गम्मति, संघाडगो वच्चति, एगो ण वट्टति पेसितुं, साधू पुरओ सावगो मग्गतो, घरं णेऊण आसणेण उवणिमंतिज्जति, जति णिविट्ठगा तो लट्ठयं, अध ण णिवेसंति तधावि विणयो पउत्तो, ताधे भत्तं पाणं सयं चेव देति, अथवा भाणं धरेति भज्जा देति, अथवा ठितीओ अच्छति जाव दिण्णं, साधूवि सावसेसं दव्वं गेण्हति, पच्छाकम्मपरिहारणट्ठा, दातूण वंदित्तुं विसज्जेति, विसज्जेत्ता अणुगच्छति, पच्छा सयं भुंजति, जं च किर साधूण ण दिण्णं तं सावगेण ण भोत्तव्वं, जति पुण साधू णत्थि ताधे देसकालवेलाए दिसालोगो कातव्वो, विसुद्धभावेण चिंतियव्वं—जति साधुणो होंता तो णित्थारितो

---

१ अन्यो भाजनं प्रतिलिखति माऽऽन्तरायिका दोषा भूवन् स्थापनादोषाश्च, स यदि प्रथमायां पौरुष्यां निमन्त्रयते अस्ति नमस्कारसहितस्तदा गृह्यतेऽथ च नास्ति न गृह्यते तद्वोढव्यं भवेत्, यदि घनं लगेत् तदा गृह्यते संरक्ष्यते, यो वोद्घाटपौरुष्यां पारयति पारणवानन्यो वा तस्मै दीयते, पश्चात्तेन श्रावकेण समं गम्यते संघाटको व्रजति एको न वर्त्तते प्रेषितुं, साधुः पुरतः श्रावकः पृष्ठतः, गृहं नीत्वाऽऽसनेन निमन्त्रयति, यदि निविष्टा लष्टं नाथ निविशन्ति तथापि विनयः प्रयुक्तो ( भवति ), तदा भक्तं पानं वा स्वयमेव ददाति अथवा भाजनं धारयति भार्या ददाति, अथवा स्थित एव तिष्ठति यावद्दत्तं, साधुरपि सावशेषं द्रव्यं गृह्णाति पश्चात्कर्मपरिहरणार्थाय, दत्त्वा वन्दित्वा विसर्जयति विसृज्यानुगच्छति, पश्चात् स्वयं भुङ्क्ते, यच्च किल साधुभ्यो न दत्तं न तच्छ्रावकेण भोक्तव्यं, यदि पुनः साधुर्नास्ति तदा देशकालवेलायां दिगालोकः कर्त्तव्यः, विशुद्धभावेन चिन्तयितव्यं—यदि साधवोऽभविष्यन् तदा निस्तारितोऽ-

होतोत्ति विभासा । इदमपि च शिक्षापदव्रतमतिचाररहितमनुपालनीयमिति, अत आह—अतिथिसंविभागस्य—प्राग्निरूपितशब्दार्थस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्याः, तद्यथा—'सचित्तनिक्षेपणं' सचित्तेषु—व्रीह्यादिषु निक्षेपणमन्नादेरदानबुद्ध्या मातृस्थानतः, एवं 'सचित्तपिधानं' सचित्तेन फलादिना पिधानं—स्थगनमिति समासः, भावना प्राग्वत्,'कालातिक्रम' इति कालस्यातिक्रमः कालातिक्रम इति उचितो यो भिक्षाकालः साधूनां तमतिक्रम्यानागतं वा भुङ्क्तेऽतिक्रान्ते वा, तदा च किं तेन लब्धेनापि कालातिक्रान्तत्वात् तस्य, उक्तं च—"काले दिण्णस्स पधेयणस्स अग्घो ण तीरते काउं । तस्सेव अकालपणामियस्स गेण्हंतया णत्थि ॥ १ ॥" 'परव्यपदेश' इत्यात्मव्यतिरक्तो योऽन्यः स परस्तस्य व्यपदेश इति समासः, साधोः पोषधोपवासपारणकाले भिक्षार्थं समुपस्थितस्य प्रकटमन्नादि पश्यतः श्रावकोऽभिधत्ते—परकीयमिदमिति, नास्माकीनमतो न ददामि, किञ्चिद्याचितो वाऽभिधत्ते—विद्यमान एवामुकस्येदमस्ति, तत्र गत्वा मार्गयत यूयमिति, 'मात्सर्यं' इति याचितः कुप्यति सदपि न ददाति, 'परोन्नतिवैमनस्यं च मात्सर्य'मिति, एतेन तावद् द्रमकेण याचितेन दत्तं किमहं ततोऽप्यून इति मात्सर्याद् ददाति, कषायकलुषितेनैव चित्तेन ददतो मात्सर्यमिति, व्याख्यातं सातिचारं चतुर्थं शिक्षापदव्रतं, अधुना इत्येष श्रमणोपासकधर्म्मः । आह—कानि पुनरणुव्रतादीनामित्वराणि यावत्कथिकानीति ?, अत्रोच्यते—

इत्थं पुण समणोवासगधम्मे पंचाणुव्वयाइं तिन्नि गुणव्वयाइं आवकहियाइं, चत्तारि सिक्खावयाइं इत्तरियाइं, एयस्स पुणो समणोवासगधम्मस्स मूलवत्थुं सम्मत्तं, तंजहा—तं निसग्गेण वा अभिगमेण वा पंच-

१ भविष्यदिति विभाषा । २ काले दत्तस प्रहेणकस्यार्घो न शक्यते कर्तुम् । तस्यैवाकालदत्तस्य ग्राहका न सन्ति ॥ १ ॥

अईयारविसुद्धं अणुव्वयगुणव्वयाइं च अभिग्गहा अन्नेऽवि पडिमादओ विसेसकरणजोगा, अपच्छिमा मारणंतिया संलेहणाझूसणाराहणया, इमीए समणोवासएणं इमे पञ्च०, तंजहा–इहलोगासंसप्पओगे परलोगासंसप्पओगे जीवियासंसप्पओगे मरणासंसप्पओगे कामभोगासंसप्पओगे ॥ १३ ॥ ( सूत्रं )

अत्र पुनः श्रमणोपासकधर्मे पुनःशब्दोऽवधारणार्थः, अत्रैव न शाक्यादिश्रमणोपासकधर्मे, सम्यक्त्वाभावेनाणुव्रताद्यभावादिति, वक्ष्यति च–'एत्थ पुण समणोवासगधम्मे मूलवत्थुं संमत्त'मित्यादि, पञ्चाणुव्रतानि प्रतिपादितस्वरूपाणि त्रीणि गुणव्रतानि उक्तलक्षणान्येव 'यावत्कथिकानी'ति सकृद्गृहीतानि यावज्जीवमपि भावनीयानि, चत्वारीति संख्या 'शिक्षापदव्रतानी'ति शिक्षा–अभ्यासस्तस्य पदानि–स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि, 'इत्वराणी'ति तत्र प्रतिदिवसानुष्ठेये सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये इति भावना, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयाविति । आह–अस्य श्रमणोपासकधर्मस्य किं पुनर्मूलवस्त्विति ?, अत्रोच्यते, सम्यक्त्वं, तथा चाह ग्रन्थकारः–'एतस्स पुणो समणोवासग०' अस्य पुनः श्रमणोपासकधर्मस्य, पुनःशब्दोऽवधारणार्थः अस्यैव, शाक्यादिश्रमणोपासकधर्मे सम्यक्त्वाभावात् न मूलवस्तु सम्यक्त्वं, वसन्त्यस्मिन्नणुव्रतादयो गुणास्तद्भावभावित्वेनेति वस्तु मूलभूतं द्वारभूतं च तद् वस्तु च मूलवस्तु, तथा चोक्तम्–"द्वारं मूलं प्रतिष्ठानमाधारो भाजनं निधिः । द्विषट्कस्यास्य धर्मस्य, सम्यक्त्वं परिकीर्त्तितम् ॥१॥" सम्यक्त्वं–प्रशमादिलक्षणं, उक्तं च–"प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं सम्यक्त्व"(तत्त्वा० भाष्ये अ०१सू०२)मिति, कथं पुनरिदं भवत्यत आह–'तन्निसग्गेण०'तत्–वस्तुभूतं सम्यक्त्वं निसर्गेण वाऽधिगमेन वा भवतीति

क्रिया, तत्र निसर्गः—स्वभावः अधिगमस्तु यथावस्थितपदार्थपरिच्छेद इति, आह—मिथ्यात्वमोहनीयकर्मक्षयोपशमादेरिदं भवति
कथमुच्यते निसर्गेण वेत्यादि ?, उच्यते, स एव क्षयोपशमादिर्निसर्गाधिगमजन्मेति न दोषः, उक्तं च—“ऊसरदेसं दड्ढिल्लयं
च विज्झाइ वणदवो पप्प । इय मिच्छस्स अणुदये उवसमसम्मं लभति जीवो ॥ १ ॥ जीवादीणमधिगमो मिच्छत्तस्स तु
खयोवसमभावे । अधिगमसम्मं जीवो पावेइ विसुद्धपरिणामो ॥ २ ॥”त्ति, अलं प्रसङ्गेन, इह भवोदधौ दुष्प्रापां सम्य-
क्त्वादिभावरत्नावाप्तिं विज्ञायोपलब्धजिनप्रवचनसारेण श्रावकेण नितरामप्रमादपरेणातिचारपरिहारवता भवितव्यमि-
त्यस्यार्थस्योक्तस्यैव विशेषख्यापनायानुक्तशेषस्य चाभिधानायेदमाह ग्रन्थकारः ‘पञ्चातिचारविसुद्ध’मित्यादि सूत्रं, इदं च
सम्यक्त्वं प्राग्निरूपितशङ्कादिपञ्चातिचारविशुद्धमनुपालनीयमिति शेषः, तथा अणुव्रतगुणव्रतानि—प्राग्निरूपितस्वरू-
पाणि दृढमतिचाररहितान्येवानुपालनीयानि, तथाऽभिग्रहाः—कृतलोचघृतप्रदानादयः शुद्धा—भङ्गाद्यतिचाररहिता एवा-
नुपालनीयाः, अन्ये च प्रतिमादयो विशेषकरणयोगाः सम्यक्परिपालनीयाः, तत्र प्रतिमाः—पूर्वोक्ताः ‘दंसणवयसामाइय’
इत्यादिना ग्रन्थेन, आदिशब्दादनित्यादिभावनापरिग्रहः, तथा अपश्चिमा मारणान्तिकी संलेखनाजोषणाराधना चातिचार-
रहिता पालनीयेत्यध्याहारः, तत्रैव पश्चिमैवापश्चिमा मरणं—प्राणत्यागलक्षणं, इह यद्यपि प्रतिक्षणमावीचीमरणमस्ति तथाऽपि



---

१ ऊषरदेशं दग्धं च विध्यायति वनदवः प्राप्य । एवं मिथ्यात्वस्यानुदये औपशमिकसम्यक्त्वं लभते जीवः ॥ १ ॥ जीवादीनामधिगमो मिथ्यात्वस्य क्षयोपशमभावे । अधिगमसम्यक्त्वं जीवः प्राप्नोति विशुद्धपरिणामः ॥ २ ॥

न तद् गृह्यते, किं तर्हि ?, सर्वायुष्कक्षयलक्षणमिति मरणमेवान्तो मरणान्तः तत्र भवा मारणान्तिकी वह्वचू (पूर्वपदात्) इति ठञ् ( पा० ४–४–६४ ) संलिख्यतेऽनया शरीरकपायादीति संलेखना–तपोविशेपलक्षणा तस्याः जोपणं–सेवनं तस्याराधना–अखण्डकालस्य करणमित्यर्थः, चशब्दः समुच्चयार्थः । एत्थ सामायारी[1]–आसेवितगिहिधम्मेण किल सावगेण पच्छा णिक्खमितवं, एवं सावगधम्मो उज्जमितो होति, ण सक्कति ताधे भत्तपच्चक्खाणकाले संथारसमणेण होतवंति विभासा । आह उक्तम्–'अपश्चिमा मारणान्तिकी संलेखनाझोषणाऽऽराधना'ऽतिचाररहिता सम्यक् पालनीयेति वाक्यशेषः, अथ के पुनरस्या अतिचारा इति तानुपदर्शयन्नाह–'इमीए समणोवासएणं०' अस्या–अनन्तरोदितसंलेखनासेवनाराधनायाः श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्याः न समाचरितव्याः, तद्यथा–इहलोकाशंसाप्रयोगः, इहलोको–मनुष्यलोकस्तस्मिन्नाशंसा–अभिलाषस्तस्याः प्रयोग इति समासः श्रेष्ठी स्याममात्यो वेति, एवं 'परलोकाशंसाप्रयोगः' परलोके–देवलोके, एवं जीविताशंसाप्रयोगः, जीवितं–प्राणधारणं तत्राभिलापप्रयोगः–यदि वहुकालं जीवेयमिति, इयं च वस्त्रमाल्यपुस्तकवाचनादिपूजादर्शनात् वहुपरिवारदर्शनाच्च, लोकश्लाघाश्रवणाच्चैवं मन्यते–जीवितमेव श्रेयः प्रत्याख्याताशनस्यापि, यत एवंविधा मदुद्देशेनेयं विभूतिर्विद्यत इति, 'मरणाशंसाप्रयोगः' न कश्चित्तं प्रतिपन्नानशनं गवेपयति न सपर्ययाऽऽद्रियते नैव कश्चित् श्लाघते, ततस्तस्यैवंविधश्चित्तपरिणामो जायते–यदि शीघ्रं म्रियेऽहमपुण्यकर्मेति, 'भोगाशंसाप्रयोगः' जन्मान्तरे चक्रवर्त्ती स्याम् वासुदेवो महामण्डलिकः शुभरूपवानित्यादि । उक्तः श्रावकधर्मः, व्याख्यातं सप्रभेदं देशो-

[1] अत्र सामाचारी–आसेवितगृहिधर्मेण किल श्रावकेन पश्चान्निष्क्रान्तव्यं, एवं श्रावकधर्मो भवत्युद्यतः, न शक्नोति तदा भक्तप्रत्याख्यानकाले संस्तारश्रमणेन भवितव्यं, विभाषा ।

त्तरगुणप्रत्याख्यानं, अधुना सर्वोत्तरगुणप्रत्याख्यानमुच्यते, तत्रेयं गाथा—'पच्चक्खाणं' गाहा। अथवा देशोत्तरगुणप्रत्याख्यानं श्रावकाणामेव भवतीति तदधिकार एवोक्तं, सर्वोत्तरगुणप्रत्याख्यानं तु लेशत उभयसाधारणमपीत्यतस्तदभिधित्सयाऽऽह—

पच्चक्खाणं उत्तरगुणेसु खमणाइयं अणेगविहं। तेण य इहयं पगयं तंपि य इणमो दसविहं तु ॥ १५६३ ॥

अणागयमइक्कंतं कोडियसहिअं निअंटिअं चेव। सागारमणागारं परिमाणकडं निरवसेसं ॥ १५६४ ॥

संकेयं चेव अद्धाए, पच्चक्खाणं तु दसविहं। सयमेवणुपालणियं, दाणुवएसे जह समाही ॥ १५६५ ॥

व्याख्या—प्रत्याख्यानं प्रागूनिरूपितशब्दार्थं, 'उत्तरगुणेषु' उत्तरगुणविषयं प्रकरणात् साधूनां तावदिदमिति—क्षपणादि, क्षपणग्रहणाच्चतुर्थादिपरिग्रहः, आदिग्रहणाद्विचित्राभिग्रहपरिग्रहः, 'अनेकविध'मित्यनेकप्रकारं, प्रकारश्च वक्ष्यमाणस्तेनानेकविधेन, चशब्दादुक्तलक्षणेन च, 'अत्रे'ति सामान्येनोत्तरगुणप्रत्याख्याननिरूपणाधिकारे, अथवा चशब्दस्यैवकारार्थत्वात् तेनैव,'अत्रे'ति सर्वोत्तरगुणप्रत्याख्यानप्रक्रमे प्रकृतम्—उपयोगोऽधिकार इति पर्यायस्तदपि चेदं दशविधं तु—मूलापेक्षया दशविधं दशप्रकारकमेवेति गाथार्थः॥१५६३॥अधुना दशविधमेवोपन्यस्यन्नाह—'अणागतं०'गाथा, अनागतकरणादनागतं, पर्युपणादावाचार्यादिवैयावृत्त्यकरणान्तरायसद्भावादारत एव तत्तपःकरणमित्यर्थः, एवमतिक्रान्तकरणादतिक्रान्तं, भावना प्राग्वत्। 'कोटिसहित'मिति कोटीभ्यां सहितं कोटिसहितं—मिलितोभयप्रत्याख्यानकोटि, चतुर्थादिकरणमेवेत्यर्थः, 'नियन्त्रितं चैव' नितरां यन्त्रितं नियन्त्रितं प्रतिज्ञातदिनादौ ग्लानाद्यन्तरायभावेऽपि नियमात् कर्त्तव्यमितिहृदयं, 'साकारं' आक्रियन्त इत्याकाराः—प्रत्याख्यानापवादहेतवोऽनाभोगादयः सहाकारैः साकारं, तथाऽविद्यमानाकार-

मनाकारं, 'परिमाणकृत'मिति दत्त्यादिकृतपरिमाणमिति भावना 'निरवशेष'मिति समग्राशनादिविषय इति गाथार्थः ॥ १५६४ ॥ 'सङ्केतं चेवे'ति केतं–चिह्नमङ्गुष्ठादि सह केतेन सङ्केतं सचिह्नमित्यर्थः, 'अद्धा य'त्ति कालाख्या, अद्धामाश्रित्य पौरुष्यादिकालमानमपीत्यर्थः, 'प्रत्याख्यानं तु दशविधं' प्रत्याख्यानशब्दः सर्वत्रानागतादौ सम्बध्यते, तुशब्दस्यैवकारार्थत्वाद् व्यवहितोपन्यासाद् दशविधमेव, इह चोपाधिभेदात् स्पष्ट एव भेद इति न पौनरुक्त्यमाशङ्कनीयमिति। आह–इदं प्रत्याख्यानं प्राणातिपातादिप्रत्याख्यानवत् किं तावत् स्वयमकरणादिभेदभिन्नमनुपालनीयं आहोश्विदन्यथा ?, अन्यथैवेत्याह–स्वयमेवानुपालनीयं, न पुनरन्यकारणे अनुमतौ वा निषेध इति, आह च–'दाणुवदेसे जध समाधि'त्ति अन्याहारदाने यतिप्रदानोपदेशे च 'यथा समाधिः' यथा समाधानमात्मनोऽप्यपीडया प्रवर्त्तितव्यमिति वाक्यशेषः, उक्तं च–'[1]भावितजिणवयणाणं ममत्तरहियाण णत्थि हु विसेसो। अप्पाणंमि परंमि य तो वज्जे पीडमुभओवि॥१॥''त्ति गाथार्थः ॥ १५६५ ॥ साम्प्रतमनन्तरोपन्यस्तदशविधप्रत्याख्यानाद्यभेदावयवार्थाभिधित्सयाऽऽह—

होही पज्जोसवणा मम य तया अंतराइयं हुज्जा। गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६६ ॥

सो दाइ तवोकम्मं पडिवज्जे तं अणागए काले। एयं पचक्खाणं अणागयं होइ नायव्वं ॥ १५६७ ॥

भविष्यति पर्युषणा मम च तदा अन्तरायं भवेत्, केन हेतुनेत्यत आह–गुरुवैयावृत्त्येन तपस्विग्लानतया वेत्युपलक्षणमिदमिति गाथासमासार्थः ॥ १५६६ ॥ स इदानीं तपःकर्म प्रतिपद्येत तदनागतकाले तत्प्रत्याख्यानमेवम्भूतमनागत-

---

१ भावितजिनवचनानां ममत्वरहितानां नास्त्येव विशेषः। आत्मनि परस्मिंश्च ततो वर्जयेत् पीडामुभयोरपि ॥ १ ॥

करणादनागतं ज्ञातव्यं भवतीति गाथार्थः ॥१५६७॥ इमो पुण एत्थ भावत्थो—अणागतं पच्चक्खाणं, जधा अणागतं तवं करेज्जा, पज्जोसवणागहणं एत्थ विकिट्ठं कीरति, सव्वजहन्नो अट्ठमं जधा पज्जोसवणाए, तथा चातुम्मासिए छट्ठं पक्खिए अब्भत्तट्ठं अण्णेसु य ण्हाणाणुजाणादिसु तहिं ममं अंतराइयं होज्जा, गुरू—आयरिया तेसिं कातव्वं, ते किं ण करेंति ?, असहू होज्जा, अथवा अण्णा काइ आणत्तिगा होज्जा कायव्विया गामंतरादि सेहस्स वा आणेयव्वं सरीरवेयावडिया वा, ताधे सो उववासं करेति गुरुवेयावच्चं च ण सक्केति, जो अण्णो दोण्हवि समत्थो सो करेतु, जो वा अण्णो समत्थो उववासस्स सो करेति णत्थि ण वा लभेज्जा न याणेज्ज वा विधिं ताधे सो चेव पुव्वं उववासं कातूणं पच्छा तद्दिवसं भुंजेज्जा, तवसी णाम खमओ तस्स कातव्वं होज्जा, किं तदा ण करेति ?, सो तीरं पत्तो पज्जोसवणा उस्सारिता, असहुत्ते वा सयं पारावितो, ताधे सयं हिंडेतुं समत्थो जाणि अब्भासे तत्थ वच्चउ, णत्थि ण लहति सेसं जधा गुरूणं विभासा, गेलण्णं—जाणति जधा तहिं

१ अयं पुनरत्र भावार्थः—अनागतं प्रत्याख्यानं यथाऽनागतं तपः कुर्यात्, पर्युषणाग्रहणमत्र विकृष्टं क्रियते, सर्वजघन्यमष्टमं यथा पर्युषणायां, तथा चतुर्मास्यां षष्ठं पाक्षिकेऽभक्तार्थं, अन्येषु वा स्नानानुयानादिषु तदा ममान्तरायिकं भविष्यति, गुरवः—आचार्यास्तेषां कर्त्तव्यं, ते किं न कुर्वन्ति ?, असहिष्णवो वा स्युः, अथवा अन्या वा काचिदाज्ञप्तिः कर्त्तव्या भवेत् ग्रामान्तरगमनादिका शैक्षकस्य वाऽऽनेतव्यं शरीरवैयावृत्यं वा, तदा स उपवासं करोति गुरुवैयावृत्यं च न शक्नोति, योऽन्यो द्वयोरपि समर्थः स करोतु, अन्यो वा यः समर्थ उपवासाय स करोति नास्ति न वा लभेत न जानीयाद्वा विधिं तदा स चैवोपवासं पूर्वं कृत्वा पश्चात् तद् ( पर्व ) दिवसे भुञ्जीत, तपस्वी नाम क्षपकस्तस्य कर्त्तव्यं भवेत्, किं तदा न करोति ?, स तीरं प्राप्तः पर्युषणा उत्सारिता, असहिष्णुत्वाद्वा स्वयं पारितवान्, तदा स्वयं हिण्डितुं समर्थो यानि समीपे तत्र व्रजतु, नास्ति न लभते शेषं यथा गुरूणां विभाषा, ग्लानत्वं—जानाति यथा तत्र

दिवसे असहू होति, विज्जेण वा भासितं अमुगं दिवसं कीरहिति, अथवा सयं चेव सो गंडरोगादीहिं तेहिं दिवसेहिं असहू भवतित्ति, सेसविभासा जथा गुरुम्मि, कारणा कुलगणसंघे आयरियगच्छे वा तधेव विभासा, पच्छा सो अणागतकाले काऊणं पच्छा सो जेमेज्जा पज्जोसवणातिसु, तस्स जा किर णिज्जरा पज्जोसवणादीहि तहेव सा अणागते काले भवति । गतमनागतद्वारम्, अधुनाऽतिक्रान्तद्वारावयवार्थप्रतिपादनायाह—

पज्जोसवणाइ तवं जो खलु न करेइ कारणज्जाए । गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥ १५६८ ॥
सो दाइ तवोकम्मं पडिवज्जइ तं अइच्छिए काले । एयं पच्चक्खाणं अइक्कंतं होइ नायव्वं ॥ १५६९ ॥
पट्ठवणओ अ दिवसो पच्चक्खाणस्स निट्ठवणओ अ। जहियं समिंति दुन्निवि तं भन्नइ कोडिसहियं तु ॥ १५७० ॥
मासे २ अ तवो अमुगो अमुगे दिणंमि एवइओ । हट्ठेण गिलाणेण व कायव्वो जाव ऊसासो ॥ १५७१ ॥
एयं पच्चक्खाणं नियंटियं धीरपुरिसपन्नत्तं । जं गिण्हंतऽणगारा अणिस्सि(स्भि)अप्पा अपडिबद्धा ॥ १५७२ ॥
चउद्सपुव्वी जिणकप्पिएसु पढमंमि चेव संघयणे । एयं विच्छिन्नं खलु थेरावि तया करेसी य ॥ १५७३ ॥

पर्युषणायां तपो यः खलु न करोति कारणजाते सति, तदेव दर्शयति गुरुवैयावृत्त्येन तपस्विग्लानतयां वेति गाथासमा-

---

१ दिवसेऽसहिष्णुर्भवति, वैद्येन वा भाषितं अमुष्मिन् दिवसे करिष्यते, अथवा स्वयमेव स गण्डरोगादिभिस्तेषु दिवसेषु असहिष्णुर्भावीति, शेषविभाषा यथा गुरौ, कारणात् कुलगणसङ्घेषु आचार्ये गच्छे वा तथैव विभाषा, पश्चात्सोऽनागतकाले कृत्वा पश्चात् स जेमेत् पर्युषणादिषु, तस्य या किल निर्जरा पर्युषणादिभिस्तथैव साऽनागते काले भवति ।

सार्थः ॥ १५६८ ॥ स इदानीं तपःकर्म प्रतिपद्यते तदतिक्रान्ते काले एतत् प्रत्याख्यानं-एवंविधमतिक्रान्तकरणादतिक्रान्तं भवति ज्ञातव्यमिति गाथासमासार्थः ॥ १५६९ ॥ भावत्थो पुण पज्जोसवणाए तवं तेहिं चेव कारणेहिं न करेइ, जो वा न समत्थो उववासस्स गुरुतवस्सिगिलाणकारणेहिं सो अतिक्कंते करेति, तथेव विभासा । व्याख्यातमतिक्रान्तद्वारं, अधुना कोटीसहितद्वारं विवृण्वन्नाह—प्रस्थापकश्च-प्रारम्भकश्च दिवसः प्रत्याख्यानस्य निष्ठापकश्च-समाप्तिदिवसश्च यत्र-प्रत्याख्याने 'समिंति' त्ति मिलतः द्वावपि पर्यन्तौ तद् भण्यते कोटीसहितमिति गाथासमासार्थः ॥ १५७० ॥ भावत्थो पुण जत्थ पच्चक्खाणस्स कोणो कोणो य मिलति, कथं?—गोसे आवस्सए अभत्तट्ठो गहितो अहोरत्तं अच्छिऊण पच्छा पुणरवि अभत्तट्ठं करेति, बितियस्स पट्ठवणा पढमस्स निट्ठवणा, एते दोऽवि कोणा एगट्ठा मिलिता, अट्ठमादिसु दुहतो कोडिसहितं जो चरिमदिवसे तस्सवि एगा कोडी, एवं आयंबिलनिव्वीतियएगासणा एगट्ठाणगाणिवि, अथवा इमो अण्णो विही—अभत्तट्ठं कतं आयंबिलेण पारितं, पुणरवि अभत्तट्ठं करेति आयंबिलं च, एवं एगासणगादीहिवि संजोगो कातव्वो, णिव्वीतिगादिसु सव्वेसु सरिसेसु विसरिसेसु य । गतं कोटिसहितद्वारं, इदानीं नियन्त्रितद्वारं न्यक्षेण निरूपयन्नाह—मासे २

१ भावार्थः पुनः पर्युषणायां तपस्तैरेव कारणैर्न करोति, यो वा न समर्थ उपवासाय गुरुतपस्विग्लानकारणैः सोऽतिक्रान्ते करोति, तथैव विभाषा । २ भावार्थः पुनर्यत्र प्रत्याख्यानस्य कोणः कोणश्च मिलतः, कथं ?, प्रत्यूषे आवश्यकेऽभक्तार्थो गृहीतः अहोरात्रं स्थित्वा पश्चात् पुनरपि अभक्तार्थं करोति, द्वितीयस्य प्रस्थापना प्रथमस्य निष्ठापना, एतौ द्वावपि कोणौ एकत्र मिलितौ, अष्टमादिषु द्विधातः कोटीसहितं यश्चरमदिवसः (स) तस्याप्येका कोटी, एवमाचामाम्लनिर्विकृतिकैकासनैकस्थानकान्यपि, अथवाऽयमन्यो विधिः—अभक्तार्थः कृत आचामाम्लेन पारयति, पुनरप्यभक्तार्थं करोति आचामाम्लं च, एवं एकासनादिभिरपि संयोगः कर्त्तव्यः, निर्विकृतादिषु सर्वेषु सदृशेषु विसदृशेषु च ।

च तपः अमुकं अमुके—अमुकदिवसे एतावत् षष्ठादि हृष्टेन—नीरुजेन ग्लानेन वा—अनीरुजेन कर्त्तव्यं यावदुच्छ्वासो यावदायुरिति गाथासमासार्थः ॥ १५७१ ॥ एतत् प्रत्याख्यानमुक्तस्वरूपं नियन्त्रितं धीरपुरुषप्रज्ञप्तं—तीर्थकरगणधरप्ररूपितं यद् गृह्णन्ति—प्रतिपद्यन्ते अनगारा—साधवः 'अनिभृतात्मानः' अनिदाना अप्रतिबद्धाः क्षेत्रादिष्विति गाथासमासार्थः ॥ १५७२ ॥ इदं चाधिकृतप्रत्याख्यानं न सर्वकालमेव क्रियते, किं तर्हि?, चतुर्दशपूर्विजिनकल्पिकेषु प्रथम एव वज्रऋषभनाराचसंहनने,(अधुना तु)एतद् व्यवछिन्नमेव, आह—तदा पुनः किं सर्व एव स्थविरादयः कृतवन्तः आहोश्विज्जिनकल्पिकादय एवेति?, उच्यते, सर्व एव,तथा चाह—स्थविरा अपि तथा(दा-)चतुर्दशपूर्व्यादिकाले, अपिशब्दादन्ये च कृतवन्त इति गाथासमासार्थः॥१५७३॥ [1]भावत्थो पुण नियंटितं णाम णियमितं, जथा एत्थ कायवं, अथवाऽच्छिण्णं जथा एत्थ अवस्सं कायवंति, मासे २ अमुगेहिं दिवसेहिं चतुत्थादि छट्ठादि अट्ठमादि एवतिओ छट्ठेण अट्ठमेण वा, हट्ठो ताव करेति चेव, जति गिलाणो हवति तथावि करेति चेव, णवरि ऊसासधरो, एतं च पच्चक्खाणं पढमसंघतणी अपडिबद्धा अणिस्सिता इत्थ य परत्थ य, अवधारणं मम असमत्थस्स अण्णो काहिति, एवं सरीरए अप्पडिबद्धा अणिस्सिता कुवंति, एतं पुण चोद्दसपुवीसु

---

१ भावार्थः पुनर्नियन्त्रितं नाम नियमितं यथाऽत्र कर्त्तव्यं, अथवाऽच्छिन्नं यथाऽत्रावश्यं कर्त्तव्यमिति, मासे २ अमुष्मिन् दिवसे चतुर्थादि षष्ठादि अष्टमादि एतावत्, षष्ठेनाष्टमेन वा, हृष्टस्तावत् करोत्येव, यदि ग्लानो भवति तथापि करोत्येव, परं उच्छ्वासधरः, एतच्च प्रत्याख्यानं प्रथमसंहननिनोऽप्रतिबद्धा अनिश्रिताः, अत्र चामुत्र च, अवधारणं ममासमर्थस्यान्यः करिष्यति, एवं शरीरेऽप्रतिबद्धा अनिश्रिताः कुर्वन्ति, एतत् पुनश्चतुर्दशपूर्विभिः

पढमसंघतणेण जिणकप्पेण य समं वोच्छिण्णं, तम्हि पुण काले आयरियपज्जंता थेरा तदा करेंता आसत्ति । व्याख्यातं नियन्त्रितद्वारं, साम्प्रतं साकारद्वारं व्याचिख्यासुराह—

मयहरगागारेहिं अन्नत्थवि कारणंमि जायंमि । जो भत्तपरिच्चायं करेइ सागारकडमेयं ॥ १५७४ ॥

अयं च महानयं च महान् अनयोरतिशयेन महान् महत्तरः, आक्रियन्त इत्याकाराः, प्रभूतैवंविधाकारसत्ताख्यापनार्थं बहुवचनमतो महत्तराकारैर्हेतुभूतैरन्यत्र वा–अन्यस्मिंश्चानाभोगादौ कारणजाते सति भुजिक्रियां करिष्येऽहमित्येवं यो भक्तपरित्यागं करोति सागारकृतमेतदिति गाथार्थः ॥१५७४॥ अवयवत्थो पुण सह आगारेहिं सागारं, आगारा उवरिं सुत्ताणुगमे भण्णिहिंति, तत्थ महत्तरागारेहिं–महल्लपयोयणेहिं, तेण अभत्तट्ठो पच्चक्खातो ताथे आयरिएहिं भण्णति–अमुगं गामं गंतवं, तेण निवेइयं जथा मम अज्ज अब्भत्तट्ठो, जति ताव समत्थो करेतु जातु य, ण तरति अण्णो भत्तट्ठितो अभत्तट्ठिओ वा जो तरति सो वच्चतु, णत्थि अण्णो तस्स वा कज्जस्स असमत्थो ताथे तस्स चेव अभत्तट्ठियस्स गुरू विसज्जयन्ति, एरिसस्स तं जेमंतस्स अणभिलासस्स अभत्तट्ठितणिज्जरा जा सा से भवति गुरुणिओएण, एवं उस्सूरलंभेवि विणस्सति अच्चंतं

---

१ प्रथमसंहननेन जिनकल्पेन च समं व्यवच्छिन्नं, तस्मिन् पुनः काले आचार्या जिनकल्पिकाः स्थविरास्तदा कुर्वन्त आसन् ।२ अवयवार्थः पुनः सहाकारैः साकारं, आकारा उपरि सूत्रानुगमे भणिष्यन्ते, तत्र महत्तराकारैः–महत्प्रयोजनैः, तेनाभक्तार्थः प्रत्याख्यातः तदाऽऽचार्यैर्भण्यते–अमुकं ग्रामं गन्तव्यं, तेन निवेदितं यथा ममाद्याभक्तार्थः, यदि तावत्समर्थः करोतु यातु च, न शक्नोति अन्यो भक्तार्थोऽभक्तार्थो वा यः शक्नोति स व्रजतु, नास्त्यन्यस्तस्य वा कार्यस्य ऽसमर्थः तदा तमेवाभक्तार्थिकं गुरवो विसृजन्ति, ईदृशस्य तं जेमतोऽनभिलाषस्याभक्तार्थनिर्जरा या सा तस्य भवति गुरुनियोगेन, एवमुत्सूरलाभेऽपि विनङ्क्ष्यति अत्यन्तं

विंभासा, जति थोवं ताथे जे णमोक्कारइत्ता पोरुसिइत्ता वा तेसिं विसज्जेज्जा जे ण वा पारणइत्ता जे वा असहू विभासा, एवं गिलाणकज्जेसु अण्णतरे वा कारणे कुलगणसंघकज्जादिविभासा, एवं जो भत्तपरिच्चागं करेति सागारकडमेतंति । गतं साकारद्वारं, इदानीं निराकारद्वारं व्याचिख्यासुराह—

**निज्जायकारणंमी मयहरगा नो करंति आगारं । कंतारवित्तिदुब्भिक्खयाइ एयं निरागारं ॥ १५७५ ॥**

निश्चयेन यातं—अपगतं कारणं—प्रयोजनं यस्मिन्नसौ निर्यातकारणस्तस्मिन् साधौ महत्तराः—प्रयोजनविशेपास्तत्फला-भावान्न कुर्वन्त्याकारान् कार्याभावादित्यर्थः, क ?—कान्तारवृत्तौ दुर्भिक्षतायां च—दुर्भिक्षभावे चेति भावः, अत्र यत् क्रियते तदेवंभूतं प्रत्याख्यानं निराकारमिति गाथार्थः ॥ १५७५ ॥ भावत्थो पुण णिज्जातकारणस्स तस्स जधा णत्थि एत्थ किंचिवि वित्ति ताहे महत्तरगादि आगारे ण करेति, अणाभोगसहसक्कारे करेज्ज, किं निमित्तं ?, कट्ठं वा अंगुलिं वा मुधे छुहेज्ज अणाभोगेणं सहसा वा, तेण दो आगारा कज्जंति, तं कहिं होज्जा ?, कंतारे जधा सिणपल्लिमादीसु, कंतारेसु वित्ती ण

---

१ विभापा, यदि स्तोकं तदा ये नमस्कारसहितकाः पौरुपीया वा तेपां विसर्जयेत् ये न वा पारणवन्तो ये वाऽसहिष्णवःविभापाः, एवं ग्लानकार्येपु अन्यतरस्मिन् वा कार्ये कुलगणसंघकार्यादिविभापा, एवं यो भक्तपरित्यागं करोति साकारकृतमेतत् । २ भावार्थः पुनर्निर्यातकारणस्य तस्य यथा नास्ति अत्र काचिद्वृत्तिः तदा महत्तरादीनाकारान् न करोति, अनाभोगसहसाकारौ कुर्यात्, किंनिमित्तं ?, काष्ठं वाऽङ्गुलिं वा मुखे क्षिपेत् अनाभोगेन सहसा वा, तेन द्वावाकारौ क्रियेते, तत् क भवेत् ?, कान्तारे यथा शणपल्ल्यादिपु, कान्तारेपु वृत्तिं न

लहति, पडिणीएण वा पडिसिद्धं होज्जा, दुब्भिक्खं वा वट्टइ हिंडंतस्सवि ण लब्भति, अथवा जाणति जथा ण जीवामित्ति ताथे णिरागारं पच्चक्खाति । व्याख्यातमनाकारद्वारम् , अधुना कृतपरिमाणद्वारमधिकृत्याह—

दत्तीहि उ कवलेहि व घरेहिं भिक्खाहिं अहव दव्वेहिं । जो भत्तपरिच्चायं करेइ परिमाणकडमेयं ॥ १५७६ ॥

दत्तीभिर्वा कवलैर्वा गृहैर्भिक्षाभिरथवा द्रव्यैः—ओदनादिभिराहारायामितमानैर्यो भक्तपरित्यागं करोति 'परिमाणकडमेतं'—ति कृतपरिमाणमेतदिति गाथासमासार्थः ॥ १५७६ ॥ अवेयवत्थो पुण दत्तीहिं अज्ज मए एगा दत्ती दो वा ३–४–५ दत्ती, किं वा दत्तीए परिमाणं?, वच्चगंपि(सित्थगंपि)एक्कसिं छुब्भति एगा दत्ती, डोवलियंपि जतियाओ वारातो पप्फोडेति तावतियाओ ताओ दत्तीओ, एवं कवले एक्केण २ जाव बत्तीसं दोहि ऊणिया कवलेहिं, घरेहिं एगादिएहिं २ ३ ४। भिक्खाओ एगादियाओ २ ३ ४, दवं अमुगं ओदणे खज्जगविही वा आयंबिलं वा अमुगं वा कुसणं एवमादिविभासा । गतं कृतपरिणामद्वारं, अधुना निरवशेषद्वारावयवार्थं अभिधातुकाम आह—

सव्वं असणं सव्वं पाणगं सव्वखज्जभुज्जविहं । वोसिरइ सव्वभावेण एयं भणियं निरवसेसं ॥ १५७७ ॥

---

१ लभते, प्रत्यनीकेन वा प्रतिषिद्धं भवेत्, दुर्भिक्षं वा वर्त्तते हिंडमानेनापि न लभ्यते, अथवा जानाति यथा न जीविष्यामीति तदा निराकारं प्रत्याख्याति । २ अवयवार्थः पुनर्दत्तिभिः अद्य मया एका दत्तिर्द्वे वा ३ ४ ५ दत्तयः, किं वा दत्तेः परिमाणं?, सिक्थकमप्येकशः क्षिपति एका दत्तिः दर्वीमपि यावतो वारान् प्रस्फोटयति तावत्यस्ता दत्तयः, एवं कवले एकेन यावत् द्वात्रिंशता द्वाभ्यामूना कवलाभ्यो, गृहैरेकादिभिः भिक्षा एकादिकाः २ ३ ४, द्रव्यममुकमोदनः खाद्यकविधिर्वा आचामाम्लं वा अमुकं वा द्विदलं एवमादि विभाषा ।

सर्वमशनं सर्वं वा पानकं सर्वखाद्यभोज्यं–विविधं खाद्यप्रकारं भोज्यप्रकारं च व्युत्सृजति–परित्यजति सर्वभावेन–सर्वप्रकारेण भणितमेतन्निरवशेषं तीर्थकरगणधरैरिति गाथासमासार्थः ॥ १५७७ ॥ वित्थरत्थो पुण जो भोअणस्स सत्तरविधस्स वोसिरति पाणगस्स अणेगविधस्स खंडपाणमादियस्स खाइमस्स अंबाइयस्स सादिमं अणेगविधं मधुमादि एतं सव्वं जाव वोसिरति एतं णिरवसेसं। गतं निरवशेषद्वारम् , इदानीं सङ्केतद्वारविस्तरार्थप्रतिपादनायाह—

अंगुट्ठमुट्ठिगंठीघरसेउस्सासथिवुगजोइक्खे। भणियं सकेयमेयं धीरेहिं अणंतनाणीहिं ॥ १५७८ ॥

अङ्गुष्ठश्च मुष्टिश्चेत्यादिद्वन्द्वः अङ्गुष्ठमुष्टिग्रन्थिगृहस्वेदोच्छ्वासस्तिवुकज्योतिष्कान् तान् चिह्नं कृत्वा यत् क्रियते प्रत्याख्यानं तत् भणितम्–उक्तं सङ्केतमेतत्, कैः ?–धीरैः–अनन्तज्ञानिभिरिति गाथासमासार्थः ॥ १५७८ ॥ अवयवत्थो पुण केतं नाम चिंधं, सह केतेन सङ्केतं, सचिह्नमित्यर्थः,'साधू सावगो वा पुण्णेवि पच्चक्खाणे किंचि चिण्हं अभिगिण्हति, जाव एवं तावाधं ण जिमेमित्ति, ताणिमाणि चिह्नानि, अंगुट्ठमुट्ठिगंठिघरसेऊसासथिवुगदीवताणि, तत्थ ताव सावगो पोरुसीपच्चक्खाइतो ताथे छेत्तं गतो, घरे वा ठितो ण ताव जेमेति, ताथे ण किर वट्टति अपच्चक्खाणस्स अच्छितुं, तदा

---

१ विस्तरार्थः पुनर्यो भोजनं सप्तदशविधं व्युत्सृजति पानीयमनेकविधं खण्डापानीयादि खाद्यमाम्रादि स्वाद्यमनेकविधं मध्वादि एतत् सर्वं यावद्व्युत्सृजति एतत् निरवशेषं। २ अवयवार्थः पुनः केतं नाम चिह्नं साधुः श्रावको वा पूर्णेऽपि प्रत्याख्याने किञ्चिच्चिह्नं अभिगृह्णाति यावदेवं तावदहं न जेमामि, तानीमानि चिह्नानि अङ्गुष्ठः मुष्टिर्ग्रन्थिर्गृहं स्वेदविन्दुरुच्छ्वासाः स्तिवुको दीपः, तत्र तावत् श्रावकः पौरुषीप्रत्याख्यानवान् तदा क्षेत्रं गतः गृहं वा स्थितः न तावन् जेमति, तदा किल न वर्त्ततेऽप्रत्याख्यानेन स्थातुं, तदा

अंगुट्ठचिंधं करेति, जाव ण मुयामि ताव न जेमेमित्ति, जाव वा गंठिं ण मुयामि, जाव घरं ण पविसामि, जाव सेओ ण णस्सति जाव वा एवतिया उस्सासा पाणियमंचिताए वा जाव एत्तिया थिबुगा उस्साबिंदूथिबुगा वा, जाव एस दीवगो जलति ताव अहं ण भुंजामित्ति, न केवलं भत्ते अण्णेसुवि अभिग्गहविसेसेसु संकेतं भवति, एवं ताव सावयस्स, साधुस्सवि पुण्णे पच्चक्खाणे किं अपच्चक्खाणी अच्छउ? तम्हा तेणवि कातव्वं सङ्केतमिति । व्याख्यातं सङ्केतद्वारं, साम्प्रतमद्धाद्वारप्रतिपिपादयिषयाह—

अद्धा पच्चक्खाणं जं तं कालप्पमाणछेएणं । पुरिमड्ढपोरिसीए मुहुत्तमासद्धमासेहिं ॥ १५७२ ॥

अद्धा—काले प्रत्याख्यानं यत् कालप्रमाणच्छेदेन भवति, पुरिमार्द्धपौरुषीभ्यां मुहूर्त्तमासार्द्धमासैरिति गाथासङ्क्षेपार्थः ॥ १५७९ ॥ अवयवत्थो पुण अद्धा णाम कालो कालो जस्स परिमाणं तं कालेणावबद्धं कालियपच्चक्खाणं, तंजथा-णमोक्कार पोरिसि पुरिमड्ढएकासणग अद्धमासमासं, चशब्देन दोण्णि दिवसा मासा वा जाव छम्मासित्ति पच्चक्खाणं, एतं अद्धापच्चक्खाणं । गतमद्धाप्रत्याख्यानं, इदानीं उपसंहरन्नाह—[ग्रं० २१५००]

---

१ अङ्गुष्ठचिह्नं करोति यावन्न मुञ्चामि तावन्न जेमामि यावद्वा ग्रन्थिं न मुञ्चामि यावद्वा गृहं न प्रविशामि यावद्वा स्वेदो न नश्यति यावद्वा एतावन्त उच्छ्वासाः पानीयमञ्चिकायां वा यावदेतावन्तः स्तिबुका अवश्यायबिन्दवो वा यावदेष दीपको ज्वलति तावदहं न भुञ्जे, न केवलं भक्तेऽन्येष्वपि अभिग्रहविशेषेषु संकेतं भवति, एवं तावत् श्रावकस्य, साधोरपि पूर्णे प्रत्याख्याने किमप्रत्याख्यानी तिष्ठतु? तस्मात् तेनापि कर्त्तव्यं संकेतमिति । २ अवयवार्थः पुनः अद्धा नाम कालः, कालो यस्य परिमाणं तत् कालेनावबद्धं कालिकं प्रत्याख्यानं, तद्यथा—नमस्कारसहितं पौरुषी पूर्वार्धैकाशनार्धमासमासानि चशब्देन द्वौ दिवसौ मासौ वा यावत् षण्मासाः इति प्रत्याख्यानं, एतदद्धाप्रत्याख्यानं

भणियं दसविहमेयं पच्चक्खाणं गुरूवएसेणं। कयपच्चक्खाणविहिं इत्तो वुच्छं समासेणं ॥ १५८० ॥
आह जइ जीवघाए पच्चक्खाए न कारए अन्नं। भंगभयाऽसणदाणे धुव कारवणे य नणु दोसे ॥ १५८१ ॥
नो कयपच्चक्खाणो, आयरियाईण दिज्ज असणाई। न य विरईपालणाओ वेयावच्चं पहाणयरं ॥ १५८२ ॥
नो तिविहंतिविहेणं पच्चक्खइ अन्नदाणकारवणं। सुद्धस्स तओ मुणिणो न होइ तब्भंगहेउत्ति ॥ १५८३ ॥
सयमेवणुपालणियं दाणुवएसो य नेह पडिसिद्धो। ता दिज्ज उवइसिज्ज व जहा समाहीइ अन्नेसिं ॥ १५८४ ॥
कयपच्चक्खाणोऽवि य आयरियगिलाणबालवुड्ढाणं। दिज्जासणाइ संते लाभे कयवीरियायारो ॥ १५८५ ॥

भणितं दशविधमेतत् प्रत्याख्यानं गुरूपदेशेन, कृतं प्रत्याख्यानं येन स तथाविधस्तस्य विधिस्तं 'अतः' ऊर्द्ध्वं वक्ष्ये 'समासेन' सङ्क्षेपेणेति गाथार्थः ॥ १५८० ॥ प्रत्याख्यानाधिकार एवाह परः, किमाह ?—यथा जीवघाते—प्राणातिपाते प्रत्याख्याते सत्यसौ प्रत्याख्याता न कारयत्यन्यमिति—न कारयति जीवघातं अन्यप्राणिनमिति, कुतः ?—भङ्गभयात्—प्रत्याख्यानभङ्गभयादित्यर्थ, भावार्थः—अश्यत इत्यशनम्—ओदनादि तस्य दानम्—अशनदानं तस्मिन्नशनदाने, अशनशब्दः पानाद्युपलक्षणार्थः, ततश्चैतदुक्तं भवति—कृतप्रत्याख्यानस्य सतः अन्यस्मै अशनादिदाने ध्रुवं कारणमिति—अवश्यं भुजिक्रियाकारणं, अशनादिलाभे सति भोक्तुर्भुजिक्रियासद्भावात्, ततः किमिति चेत्, ननु दोषः—प्रत्याख्यानभङ्गदोष इति गाथार्थः ॥ १५८१ ॥ अतः—'नो कयपच्चक्खाणो आयरियाईण दिज्ज असणाई' यतश्चैवमतः न कृतप्रत्याख्यानः पुमानाचार्यादिभ्य आदिशब्दादुपाध्यायतपस्विशैक्षकग्लानवृद्धादिपरिग्रहः दद्यात्, किम् ?—अशनादि, स्यादेतद्—ददतो वैयावृत्य-

लाभ इत्यत आह—न च विरतिपालनाद् वैय्यावृत्यं प्रधानतरमतः सत्यपि च लाभे किं तेनेति गाथार्थः ॥ १५८२ ॥ एवं विनेयजनहिताय पराभिप्रायमाशङ्क्य गुरुराह—न 'त्रिविधं' करणकारणानुमतिभेदभिन्नं 'त्रिविधेन' मनोवाक्काययोगत्रयेण 'प्रत्याख्याति' प्रत्याचष्टे प्रक्रान्तमशनादि अतोऽनभ्युपगतोपालम्भश्चोदकमते, यतश्चैवम् अन्यस्मै दानमशनादेरिति गम्यते, तेन हेतुभूतेन कारणं भुजिक्रियागोचरमन्यदानकरणं तच्छुद्धस्य—आशंसादिदोषरहितस्य ततः—तस्मात् मुनेः—साधोः न भवति तद्भङ्गहेतुः—प्रक्रान्तप्रत्याख्यानभङ्गहेतुः, तथाऽनभ्युपगमादिति गाथार्थः ॥१५८३॥ किंच—स्वयमेव—आत्मनैवानुपालनीयं प्रत्याख्यानमुक्तं निर्युक्तिकारेण, दानोपदेशौ च नेह प्रतिषिद्धौ, तत्रात्मनाऽऽनीय वितरणं दानं दानश्राद्धकादिकुलाख्यानं तूपदेश इति, यस्माद् एवं तस्माद् दद्यादुपदिशेद्वा, यथासमाधिना वा यथासामर्थ्येन 'अन्येभ्यो' बालादिभ्य इति गाथार्थः ॥ १५८४ ॥ अमुमेवार्थं स्पष्टयन्नाह 'कय'इत्यादि, निगदसिद्धा, एत्थ पुण सामायारी—सयं अभुंजंतोवि साधूणं आणेत्ता भत्तपाणं देज्जा, संतं वीरियं ण निगूहितव्वं अप्पणो, संते वीरिए अण्णो णाऽऽणावेयव्वो, जधा अण्णो अमुगस्स आणेदु दिंति, तम्हा अप्पणो संते वीरिए आयरियगिलाणबालवुड्ढपाहुणगादीण गच्छस्स वा संणायकुलेहिंतो वा असण्णातएहिं वा लद्धिसंपुण्णो आणेत्ता देज्ज वा दवावेज्ज वा परिचिएसु वा संखडीए वा दवावेज्ज, दाणेत्ति गतं, उवदिसेज्ज

---

१ अत्र पुनः सामाचारी—स्वयमभुञ्जानोऽपि साधुभ्य आनीय भक्तपाने दद्यात् सद्वीर्यं न निगूहितव्यं आत्मनः, सति वीर्येऽन्यो नाऽऽज्ञापयितव्यः यथाऽन्योऽमुकस्मै आनीय ददातु, तस्मात् आत्मनः सति वीर्ये आचार्यग्लानबालवृद्धप्राघूर्णकादिभ्यो गच्छाय वा सज्ञातीयकुलेभ्यो वाऽसज्ञातीयेभ्यो वा लब्धिसंपूर्ण आनीय दद्यात् दापयेद्वा, परिचितेभ्यो वा सङ्खड्या वा दापयेत् , दानमिति गतं, उपदिशेद्वा

वा संविग्गअण्णसंभोइयाणं जथा एताणि दाणकुलाणि सड्ढगकुलाणि वा, अतरंतो संभोइयाणवि उवदिसेज्ज ण दोसो, अह पाणगस्स सण्णाभूमिं वा गतेण संखडीभत्तादिगं वा होज्ज ताहे साधूणं अमुगत्थ संखडित्ति एवं उवदिसेज्जा । उवदेसत्ति गतं । जहासमाही णाम दाणे उवदेसे अ जहासामत्थं, जति तरति आणेदुं देति, अह न तरति तो दवावेज्ज वा उवदिसेज्ज वा, जथा जथा साधूणं अप्पणो वा समाधी तथा तथा पयतितव्वं जहासमाधित्ति वक्खाणियं । अमुमेवार्थमुपदर्शयन्नाह भाष्यकारः—

**संविग्गअण्णसंभोइयाण देसेज्ज सड्ढगकुलाइं । अतरंतो वा संभोइयाण देज्जा जहसमाही ॥ २४४ ॥ ( भा० )**

गतार्था, णवरमतरंतस्स अण्णसंभोइयस्सवि दातव्वं । साम्प्रतं प्रत्याख्यानशुद्धिः प्रतिपाद्यते, तथा चाह भाष्यकारः—

**सोही पच्चक्खाणस्स छव्विहा समणसमयकेऊहिं । पन्नत्ता तित्थयरेहिं तमहं वुच्छं समासेणं ॥ २४५ ॥ ( भा० )**

**सा पुण सद्दहणा जाणणा य विणयाणुभासणा चेव । अणुपालणा विसोही भावविसोही भवे छट्ठा ॥ १५८६ ॥**

शोधनं शुद्धिः, सा प्रत्याख्यानस्य—प्राग्निरूपितशब्दार्थस्य षड्विधा—षट्प्रकारा श्रमणसमयकेतुभिः—साधुसिद्धान्तचिह्न-

---

१ संविग्नेभ्योऽन्यसांभोगिकेभ्यो यथैतानि दानकुलानि श्राद्धककुलानि वा, अशक्नुवन् सांभोगिकेभ्योऽप्युपदिशेन्न दोषः, अथ पानकस्य संज्ञाभूमिं वा गतेन संखडीभक्तादिकं वा भवेत् तदा साधुभ्योऽमुकत्र संखडीत्येवमुपदिशेत्, उपदेश इति गतं, यथासमाधिनाम दाने उपदेशे च यथासामर्थ्यं, यदि शक्नोति आनीय ददाति अथ न शक्नोति तदा दापयेद्वोपदिशेद्वा, यथा यथा साधूनामात्मनो वा समाधिस्तथा तथा प्रयतितव्यं यथासमाधीति व्याख्यातं ।

२ नवरमशक्नुवतोऽन्यसांभोगिकायापि दातव्यं

भूतैः प्रज्ञप्ता-प्ररूपिता, कैः ?-तीर्थकरैः-ऋषभादिभिः, तामहं वक्ष्ये, कथं ?-समासेन-सङ्क्षेपेणेति गाथार्थः ॥ २४५ ॥ अधुना षड्विधत्वमुपदर्शयन्नाह—सा पुनः शुद्धिरेवं षड्विधा, तद्यथा श्रद्धानशुद्धिः ज्ञानशुद्धिश्च विनयशुद्धिः अनुभाषणाशुद्धिश्चैव, तथाऽनुपालनाविशुद्धिश्चैव भावशुद्धिर्भवति षष्ठी, पाठान्तरं वा 'सोहीसद्दहणे' त्यादि, तत्र शुद्धिशब्दो द्वारोपलक्षणार्थः, निर्युक्तिगाथा चेयमिति गाथासमासार्थः ॥ १५८६ ॥ अवयवार्थं तु भाष्यकार एव वक्ष्यति, तत्राद्यद्वारावयवार्थप्रतिपादनायाह—

पच्चक्खाणं सव्वन्नुदेसिअं जं जहिं जया काले। तं जो सद्दहइ नरो तं जाणसु सद्दहणसुद्धं ॥ २४६ ॥ (भा०)
पच्चक्खाणं जाणइ कप्पे जं जंमि होइ कायव्वं। मूलगुणे उत्तरगुणे तं जाणसु जाणणासुद्धं ॥ २४७ ॥ (भा०)

प्रत्याख्यानं सर्वज्ञभाषितं-तीर्थकरप्रणीतमित्यर्थः 'य'दिति यत् सप्तविंशतिविधस्यान्यतमं, सप्तविंशतिविधं च पञ्चविधं साधुमूलगुणप्रत्याख्यानं दशविधमुत्तरगुणप्रत्याख्यानं द्वादशविधं श्रावकप्रत्याख्यानं 'यत्र' जिनकल्पे चतुर्यामे पञ्चयामे वा श्रावकधर्मे वा 'यदा' सुभिक्षे दुर्भिक्षे वा पूर्वाह्णे पराह्णे वा काल इति-चरमकाले तत् यः श्रद्धत्ते नरः तत् तदभेदोपचारात् तस्यैव तथापरिणतत्वाज्जानीहि श्रद्धानशुद्धमिति गाथार्थः ॥ २४६ ॥ ज्ञानशुद्धं प्रतिपाद्यते, तत्र—प्रत्याख्यानं जानाति-अवगच्छति कल्पे-जिनकल्पादौ यत् प्रत्याख्यानं यस्मिन् भवति कर्त्तव्यं मूलगुणोत्तरगुणविषयं तज्जानीहि ज्ञानशुद्धमिति गाथार्थः ॥ २४७ ॥ विनयशुद्धमुच्यते, तत्रेयं गाथा—

किइकम्मस्स विसोही पउंजई जो अहीणमइरित्तं। मणवयणकायगुत्तो तं जाणसु विणयओ सुद्धं ॥ २४८ ॥ (भा०)

अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं। पंजलिउडो अभिमुहो तं जाणणु भासणासुद्धं ॥२४९॥ (भा०)
कंतारे दुब्भिक्खे आयंके वा महई समुप्पन्ने। जं पालियं न भग्गं तं जाणणु पालणासुद्धं ॥ २५० ॥ (भा०)
रागेण व दोसेण व परिणामेण व न दूसियं जं तु। तं खलु पचक्खाणं भावविसुद्धं मुणेयव्वं ॥ २५१ ॥ (भा०)
एएहिं छहिं ठाणेहिं पचक्खाणं न दूसियं जं तु। तं सुद्धं नायव्वं तप्पडिवक्खे असुद्धं तु ॥ २५२ ॥ (भा०)
थंभा कोहा अणाभोगा अणापुच्छा असंतइं। परिणामओ असुद्धो अवाउ जम्हा विउ पमाणं ॥ २५३ ॥ (भा०)

पच्चक्खाणं समत्तं

कृतिकर्मणः—वन्दनकस्येत्यर्थः विशुद्धिं—निरवद्यकरणक्रियां प्रयुङ्क्ते यः सः प्रत्याख्यानकाले अन्यूनातिरिक्तां विशुद्धिं मनोवाक्कायगुप्तः सन् प्रत्याख्यातृपरिणामत्वात् प्रत्याख्यानं जानीहि विनयतो—विनयेन शुद्धमिति गाथार्थः ॥ २४८ ॥ अधुनाऽनुभाषणशुद्धं प्रतिपादयन्नाह—कृतकृतिकर्मा प्रत्याख्यानं कुर्वन् अनुभाषते गुरुवचनं, लघुतरेण शब्देन भणतीत्यर्थः, कथमनुभाषते?—अक्षरपदव्यञ्जनैः परिशुद्धं, अनेनानुभाषणायत्नमाह, णवरं गुरू भणति वोसिरति, इमोवि भणति—वोसिरामो'त्ति, सेसं गुरुभणितसरिसं भाणितव्वं। किंभूतः सन् ?, कृतप्राञ्जलिरभिमुखस्तज्जानीह्यनुभाषणाशुद्धमिति गाथार्थः ॥ २४९ ॥ साम्प्रतमनुपालनाशुद्धमाह—कान्तारे—अरण्ये दुर्भिक्षे—कालविभ्रमे आतङ्के वा—ज्वरादौ महति समुत्पन्ने सति यत् पालितं यन्न भग्नं तज्जानीह्यनुपालनाशुद्धमिति। ऍत्थ उग्गमदोसा सोलस उप्पादणाएवि दोसा सोलस एसणादोसा

---

१ पर गुरुर्भणति—व्युत्सृजति, अयमपि भणति व्युत्सृजाम इति, शेषं गुरुभणितसदृशं भणितव्यं। २ अत्रोद्गमदोषाः षोडश उत्पादनाया अपि दोषाः षोडश एषणादोषा

दस एते सव्वे बातालीसं दोसा णिच्चपडिसिद्धा, एते कंतारे दुर्भिक्षादिसु ण भज्जंतित्ति गाथार्थः ॥ २५० ॥ इदानीं भावशुद्धमाह—रागेण वा–अभिष्वङ्गलक्षणेन द्वेषेण वा–अप्रीतिलक्षणेन, परिणामेन च–इहलोकाद्याशंसालक्षणेन स्तम्भादिना वा वक्ष्यमाणेन न दूषितं–न कलुषितं यत् तु–यदेव तत् खल्विति–तदेव खलुशब्दस्यावधारणार्थत्वात् प्रत्याख्यानं भावविशुद्धं 'मुणेयव्वं'ति ज्ञातव्यमिति गाथासमासार्थः ॥ अवयवत्थो पुण–रागेण एस पूइज्जदित्ति अहंपि एवं करेमि तो पुज्जिहामि एवं रागेण करेति, दोसेण तहा करेमि जहा लोगो ममहुत्तो पडति तेण एतस्स ण अड्ढायति एवं दोसेण, परिणामेण णो इहलोगट्ठताए णो परलोगट्ठयाए नो कित्तिजसवण्णसद्दहेतुं वा अण्णपाणवत्थलोभेण सयणासणवत्थहेतुं वा, जो एवं करेति तं भावसुद्धं ॥२५१॥ एभिर्निरन्तरव्यावर्णितैः षड्भिः स्थानैः श्रद्धानादिभिः प्रत्याख्यानं न दूषितं–न कलुषितं यत् तु–यदेव तत् शुद्धं ज्ञातव्यं । तत्प्रतिपक्षे–अश्रद्धानादौ सति अशुद्धं तु–अशुद्धमेवेति गाथार्थः ॥ २५२ ॥ परिणामेन वा न नदूषितमित्युक्तं तत्र परिणामं प्रतिपादयन्नाह—स्तम्भात्–मानात्, क्रोधात्–प्रतीतात्, अनाभोगात्–विस्मृतेः अनापृच्छातः असन्ततेः (त्तातः) परिणामात् अशुद्धः अपायो वा निमित्तं यस्मादेवं तस्मात् प्रत्याख्यानचिन्तायां विद्वा-

१ दश, एते सर्वे द्विचत्वारिंशत् दोषा नित्यं प्रतिषिद्धाः, एते कान्तारदुर्भिक्षादिषु न भज्यन्ते इति । २ अवयवार्थः पुना रागेणैष पूज्यते इत्यहमपि एवं करोमि ततः पूजयिष्ये एवं रागेण करोति, द्वेषेण तथा करोमि यथा लोको ममायत्तो पतति तेनैनं नाद्रियते एवं द्वेषेण, परिणामेन नेहलोकार्थाय न परलोकार्थाय न कीर्त्तिवर्णयशःशब्दहेतोर्वा अन्नपानवस्त्रलोभेन शयनासनवस्त्रहेतोर्वा, य एवं करोति तत् भावशुद्धं ।

न् प्रमाणं निश्चयनयदर्शनेनेति गाथार्थः ॥ २५२ ॥ थंभेणं एसो माणिज्जति अहंपि पच्चक्खामि तो माणिज्जामि, कोधेण पडिचोदणाइ अंबाडिओ णेच्छति जेमेतुं कोहेण अब्भत्तट्ठं करेति, अणाभोगेण ण याणति किं मम पच्चक्खाणंति जिमिएण संभरितं भग्गं पच्चक्खाणं, अणापुच्छा णाम अणापुच्छाए चेव भुंजति मा वारिज्जिहामि जहा तुमे अब्भत्तट्ठो पच्चक्खादोत्ति, अहवा जेमेमि तो भणिहामि वीसरितंति, 'असंतति'त्ति णत्थि एत्थ किंचि भोत्तव्वं वरं पच्चक्खातंति परिणामतोऽशुद्धोत्ति दारं । सो पुव्ववण्णितो इहलोगजसकित्तिमादि, अहवा एसेव थंभादि अवाउत्ति, अहं पच्चक्खामि, मा णिच्छुभीहामित्ति, अहवा एए ण पच्चक्खाति । एवं ण कप्पति विदू णाम जाणगो तस्स सुद्धं भवति सो अण्णधा ण करेति जम्हा, कम्हा ?, जाणगो, तम्हा विदू पमाणं, जाणंतो सुहं परिहरतित्ति भणितं होति, सो पमाणं, तस्य शुद्धं भवतीत्यर्थः । 'पच्चक्खाणं समत्तं' मूलद्वारगाथायां प्रत्याख्यानमिति द्वारं व्याख्यातं । शेषाणि तु प्रत्याख्यात्रादीनि पञ्च द्वाराणि नामनिष्पन्ननिक्षेपान्तर्गतान्यपि सूत्रानुगमोपरि व्याख्यास्यामः, किमिति?, अत्रोच्यते, येन प्रत्याख्यानं सूत्रानुगमेन परमार्थतः समाप्तिं

---

१ स्तम्भेनैष मान्यते अहमपि प्रत्याख्यामि ततो मानयिष्ये, क्रोधेन प्रतिनोदनया निर्भर्त्सितो नेच्छति जिमितुं क्रोधेनाभक्तार्थं करोति, अनाभोगेन न जानाति किं मम प्रत्याख्यानमिति जिमितेन स्मृतं भग्नं प्रत्याख्यानं, अनापृच्छा नाम अनापृच्छ्यैव भुनक्ति मा वारिषि यथा त्वयाऽभक्तार्थः प्रत्याख्यात इति, अथवा जेमामि ततो भणिष्यामि विस्मृतमिति, असदिति नास्त्यत्र किञ्चिद् भोक्तव्यं वरं प्रत्याख्यातमिति परिणामतोऽशुद्ध इति द्वारं । स पूर्ववर्णित इहलोकयशः-कीर्त्तिवर्णादि, अथवैष एव स्तम्भादिरपाय इति, अहं प्रत्याख्यामि मा निश्चिकाशिषमिति, अथवैते न प्रत्याख्यान्ति, एवं न कल्पते, विदुर्नाम ज्ञायकः तस्य शुद्धं भवति, सोऽन्यथा न करोति यस्मात्, कस्मात् ?, ज्ञायकः, तस्माद्विदुः प्रमाणं, जानानः सुखं परिहरतीति भणितं भवति, स प्रमाणं ।

यास्यतीति । अत्रान्तरेऽध्ययनशब्दार्थो निरूपणीयः, स चान्यत्र न्यक्षेण निरूपितत्वान्नेह प्रतन्यते, गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रालापकनिष्पन्नस्य निक्षेपस्यावसरः, स च सूत्रे सति भवति, सूत्रं चानुगमे, स च द्विधा—सूत्रानुगमो निर्युक्त्यनुगमश्च, तत्र निर्युक्त्यनुगमस्त्रिविधः, तद्यथा—निक्षेपनिर्युक्त्यनुगम उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति, तत्र निक्षेपनिर्युक्त्यनुगमोऽनुगतो वक्ष्यते च, उपोद्घातनिर्युक्त्यनुगमस्त्वाभ्यां द्वारगाथाभ्यामवगन्तव्यः, तद्यथा—'उद्देसे णिद्देसे य' इत्यादि, 'किं कतिविध'मित्यादि, सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु सूत्रे सति भवति, सूत्रं च सूत्रानुगम इति, स चावसरप्राप्त एव, युगपच्च सूत्रादयो व्रजन्ति, तथा चोक्तं—"सुत्तं सुत्ताणुगमो सुत्तालावयगतो य णिक्खेवो। सुत्तप्फासियनिज्जुत्ति णया य समगं तु वच्चंति ॥ १ ॥" अत्राक्षेपपरिहारौ न्यक्षेण सामायिकाध्ययने निरूपितावेव नेह वितन्येते इत्यलं विस्तरेण । तत्रेदं सूत्रं—

**सूरे उग्गए णमोक्कारसहितं पच्चक्खाति चउविहंपि आहारं असणं पाणं खाइमं साइमं, अण्णत्थ अणाभोगेणं सहसाकारेणं वोसिरामि ।**

अस्य व्याख्या—तल्लक्षणं—'संहिता च पदं चैव, पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा ॥ १ ॥' तत्रास्खलितपदोच्चारणं संहिता निर्दिष्टैव, अधुना पदानि—सूर्ये उद्गते नमस्कारसहितं प्रत्याख्याति, चतुर्विधमपि आहारं अशनं पानं खादिमं स्वादिमं, अन्यत्रानाभोगेन सहसाकारेण व्युत्सृजति । अधुना पदार्थ उच्यते—तत्र 'अश भोजने'

१ सूत्रं सूत्रानुगमः सूत्रालापकगतश्च निक्षेपः । सूत्रस्पर्शिकनिर्युक्तिर्नयाश्च युगपदेव व्रजन्ति ॥ १ ॥

इत्यस्य ल्युडन्तस्य अश्यत इत्यशनं भवति, तथा 'पा पाने' इत्यस्य पीयत इति पानमिति, 'खाद्द भक्षणे'इत्यस्य च क्त्व्यादिमन्प्रत्ययान्तस्य खाद्यत इति खादिमं भवति, एवं 'स्वद स्वर्द आस्वादने' इत्यस्य च स्वाद्यत इति स्वादिमं अथवा खाद्यं स्वाद्यं च, 'अन्यत्रे'ति परिवर्जनार्थं यथा 'अन्यत्र द्रोणभीष्माभ्यां, सर्वे योधाः पराङ्मुखा' इति, तथा आभोगनमाभोगः न आभोगोऽनाभोगः, अत्यन्तविस्मृतिरित्यर्थः, तेन, अनाभोगं मुक्त्वेत्यर्थः, तथा सहसाकरणं सहसाकारः—अतिप्रवृत्तियोगादनिवर्त्तनमित्यर्थः, तेन तं मुक्त्वा—व्युत्सृजतीत्यर्थः । एष पदार्थः, पदविग्रहस्तु समासभाक्पदविषय इति क्वचिदेव भवति न सर्वत्र, स च यथासम्भवं प्रदर्शित एव, चालनाप्रत्यवस्थाने च निर्युक्तिकारः स्वयमेव दर्शयिष्यतीति सूत्रसमुदायार्थः ॥ अधुना सूत्रस्पर्शिकनिर्युक्त्येदमेव निरूपयन्नाह—

असणं पाणगं चेव, खाइमं साइमं तहा । एसो आहारविही, चउव्विहो होइ नायव्वो ॥ १५८७ ॥

आसुं खुहं समेई, असणं पाणाणुवग्गहे पाणं । खे माइ खाइमंति य, साएइ गुणे तओ साई ॥ १५८८ ॥

अशनं—मण्डकौदनादि, पानं चैव—द्राक्षापानादि, खादिमं—फलादि तथा स्वादिमं—गुडताम्बूलपूगफलादि, एष आहारविधिश्चतुर्विधो भवति ज्ञातव्य इति गाथार्थः ॥ १५८७ ॥ साम्प्रतं समयपरिभाषया शब्दार्थनिरूपणायाह—आशु—शीघ्रं क्षुधां—बुभुक्षां शमयतीत्यशनं, तथा प्राणानाम्—इन्द्रियादिलक्षणानां उपग्रहे—उपकारे यद् वर्त्तत इति गम्यते तत् पानमिति, खमिति—आकाशं तच्च मुखविवरमेव तस्मिन् मातीति खादिमं, स्वादयति गुणान्-रसादीन् संयमगुणान् वा यतस्ततः स्वादिमं,

हेतुत्वेन तदेव स्वादयतीत्यर्थः। विचित्रं निरुक्तं पाठात्, भ्रमति च रौति च भ्रमर इत्यादिप्रयोगदर्शनात्, साधुरेवायमन्वर्थ इति गाथार्थः ॥ १५८८ ॥ उक्तः पदार्थः, पदविग्रहस्तु समासभाक्पदविषय इति नोक्तः। अधुना चालनामाह—

सव्वोऽविय आहारो असणं सव्वोऽवि वुच्चई पाणं। सव्वोऽवि खाइमंति य सव्वोऽवि य साइमं होई ॥१५८९॥

यद्यनन्तरोदितपदार्थापेक्षया अशनादीनि ततः सर्वोऽपि चाहारश्चतुर्विधोऽपीत्यर्थः अशनं, सर्वोऽपि चोच्यते पानं सर्वोऽपि च खादिमं सर्व एव स्वादिमं भवति, अन्यथा विशेषात्, तथाहि—यथैवाशनमोदनमण्डकादि क्षुधं शमयति तथैव पानकं द्राक्षाक्षीरपानादि खादिममपि च फलादि स्वादिममपि ताम्बूलपुगफलादि, यथा च पानं प्राणानामुपग्रहे वर्त्तते एवमशनादीन्यपि, तथा चत्वार्यपि खे मान्ति चत्वार्यपि वा स्वादयन्ति आस्वाद्यन्ते वेति न कश्चिद् विशेषः, तस्मादयुक्तमेवं भेद इति गाथार्थः ॥ १५८९ ॥ इयं चालना, प्रत्यवस्थानं तु यद्यपि एतदेवं तथापि [तुल्यार्थत्वप्राप्तावपि] रूढितो नीतितः प्रयोजनं संयमोपकारकमस्ति एवं कल्पनायाः, अन्यथा दोषः, तथा चाह—

जइ असणमेव सव्वं पाणग अविवज्जणंमि सेसाणं। हवइ य सेसविवेगो तेण विहत्ताणि चउरोऽवि ॥ १५९० ॥

यद्यशनमेव सर्वमाहारजातं गृह्यते ततः शेषापरिभोगेऽपि पानकादिवर्जने—उदकादिपरित्यागे शेषाणामाहारभेदानां निवृत्तिर्न कृता भवतीति वाक्यशेषः, ततः का नो हानिरिति चेत्? भवति शेषविवेकः—अस्ति च शेषाहारभेदपरित्यागः, न्यायोपपन्नत्वात्, प्रेक्षापूर्विकारितया त्यागपालनं न्यायः, स चेह सम्भवति, तेन विभक्तानि चत्वार्यपि अशनादीनि, तदेकभावेऽपि तत्तद्भेदपरित्यागे एतदुपपद्यत एवेति चेत्, सत्यमुपपद्यते दुरवसेयं तु भवति, तस्यैव देशस्त्यक्तस्तस्यैव नेति

'अर्द्धं कुक्कुट्याः पच्यते अर्द्धं प्रसवाय कल्प्यते' इति, अपरिणतानां श्रद्धानं च न जायते, एवं तु सामान्यविशेषभेद-निरूपणायां सुखावसेयं सुखश्रद्धेयं च भवति इति गाथार्थः ॥ १५९० ॥ तथा चाह—

**असणं पाणगं चेव, खाइमं साइमं तहा। एवं परूवियंमी, सद्दहिउं जे सुहं होइ ॥ १५९१ ॥**

अशनं पानकं चैव खादिमं स्वादिमं तथा, एवं प्ररूपिते—सामान्यविशेषभावेनाख्याते, तथाववोधात् श्रद्धातुं सुखं भवति, सुखेन श्रद्धा प्रवर्त्तते, उपलक्षणार्थत्वाद् दीयते पाल्यते च सुखमिति गाथार्थः ॥ १५९१ ॥ आह—मनसाऽन्यथा संप्रधारिते प्रत्याख्याने त्रिविधस्य प्रत्याख्यानं करोमीति वागन्यथा विनिर्गता चतुर्विधस्येति गुरुणाऽपि तथैव दत्तमत्र कः प्रमाणं ?, उच्यते, शिष्यस्य मनोगतो भाव इति, आह च—

**अन्नत्थ निवडिए वंजणंमि जो खलु मणोगओ भावो। तं खलु पच्चक्खाणं न पमाणं वंजणच्छलणा ॥१५९२॥**

अन्यत्र निपतिते व्यञ्जने—त्रिविधप्रत्याख्यानचिन्तायां चतुर्विध इत्येवमादौ निपतिते शब्दे यः खलु मनोगतो भावः प्रत्याख्यातुः खलुशब्दो विशेषणे अधिकतरसंयमयोगकरणापहृतचेतसोऽन्यत्र निपतिते न तु तथाविधप्रमादात् यो मनोगतो भावः आद्यः तत् खलु प्रत्याख्यानं प्रमाणं, अनेनापान्तरालगतसूक्ष्मविवक्षान्तरप्रतिषेधमाह, आद्याया एव प्रवर्त्तकत्वात्, व्यवहारदर्शनस्य चाधिकृतत्वाद्, अतः न प्रमाणं व्यञ्जनं—तच्छिष्याचार्ययोर्वचनं, किमिति ?, छलनाऽसौ व्यञ्जनमात्रं, तदन्यथाभावसद्भावादिति गाथार्थः ॥ १५९२ ॥ इदं च प्रत्याख्यानं प्रधाननिर्जराकारणमिति विधिवदनुपालनीयं, तथा चाह—

फासियं पालियं चेव, सोहियं तीरियं तहा । किट्टिअमाराहिअं चेव, एरिसयंमी पयइयव्वं ॥ १५९३ ॥

स्पृष्टं–प्रत्याख्यानग्रहणकाले विधिना प्राप्तं पालितं चैव–पुनः पुनरुपयोगप्रतिजागरणेन रक्षितं शोभितं–गुर्वादिप्रदानशेषभोजनासेवनेन तीरितं–पूर्णेऽपि कालावधौ किञ्चित्कालावस्थानेन कीर्त्तितं–भोजनवेलायाममुकं मया प्रत्याख्यातं तत् पूर्णमधुना भोक्ष्य इत्युच्चारणेन आराधितं–तथैव एभिरेव प्रकारैः सम्पूर्णैर्निष्ठां नीतं यस्मादेवंभूतमेव तदाज्ञापालनादप्रमादाच्च महत्कर्मक्षयकारणं तस्माद् ईदृशि प्रयतितव्यमिति एवंभूत एव प्रत्याख्याने यत्नः कार्य इति गाथार्थः ॥ १५९३ ॥ साम्प्रतमनन्तरपारम्पर्येण तत्प्रत्याख्यानगुणानाह—

पच्चक्खाणंमि कए आसवदाराइं हुंति पिहियाइं । आसववुच्छेएणं तण्हावुच्छेअणं होइ ॥ १५९४ ॥
तण्हावोच्छेदेण य अउलोवसमो भवे मणुस्साणं । अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ १५९५ ॥
तत्तो चरित्तधम्मो कम्मविवेगो तओ अपुव्वं तु । तत्तो केवलनाणं तओ अ मुक्खो सयासुक्खो ॥ १५९६ ॥

प्रत्याख्याने कृते–सम्यग्निवृत्तौ कृतायां किम् ?–आश्रवद्वाराणि भवन्ति पिहितानि–तद्विषयप्रतिबद्धानि कर्मबन्धद्वाराणि भवन्ति स्थगितानि, तत्रावृत्तेः, आश्रवव्यवच्छेदेन च कर्मबन्धद्वारस्थगनेन च संवरणेनेत्यर्थः, किं ?–तृड्व्यवच्छेदनं भवति–तद्विषयाभिलाषनिवृत्तिर्भवतीति गाथार्थः ॥ १५९४ ॥ तृड्व्यवच्छेदेन च तद्विषयाभिलाषनिवृत्तौ च अतुलः–अनन्यसदृशः उपशमो–मध्यस्थपरिणामो भवति मनुष्याणां–जायते पुरुषाणां, पुरुषप्रणीतः पुरुषप्रधानश्च धर्म इति ख्यापनार्थं मनुष्यग्रहणम्, अन्यथा स्त्रीणामपि भवत्येव, अतुलोपशमेन पुनः–अनन्यसदृशमध्यस्थपरिणामेन पुनः

प्रत्याख्यानं—उक्तलक्षणं भवति—शुद्धं जायते निष्कलङ्कमिति गाथार्थः ॥ १५९५ ॥ ततः प्रत्याख्यानाच्छुद्धाच्चारित्रधर्मः स्फुरतीति वाक्यशेषः, कर्मविवेकः—कर्मनिर्जरा ततः—चारित्रधर्मात्, ततश्चेति द्विरावर्त्यते ततश्च—तस्माच्च कर्मविवेकात् 'अपूर्व'मिति क्रमेणापूर्वकरणं भवति, ततः—अपूर्वकरणाच्छ्रेणिक्रमेण केवलज्ञानं, ततश्च—केवलज्ञानाद् भवोपग्राहिकर्मक्षयेण मोक्षः सदासौख्यः—अपवर्गो नित्यसुखो भवति, एवमिदं प्रत्याख्यानं सकलकल्याणैककारणं अतो यत्नेन कर्त्तव्यमिति गाथार्थः ॥ १५९६ ॥ इदं च प्रत्याख्यानं महोपाधेर्भेदाद् द्वादशविधं भवति आकारसमन्वितं वा गृह्यते पाल्यते वा, अत इदमभिधित्सुराह—

नमुक्कारपोरिसीए पुरिमड्ढेगासणेगठाणे य । आयंबिल अभत्तट्ठे चरमे य अभिग्गहे विगई ॥ १५९७ ॥

दो छच्च सत्त अट्ठ सत्तट्ठ य पंच छच्च पाणंमि । चउ पंच अट्ठ नव य पत्तेयं पिंडए नवए ॥ १५९८ ॥

दोच्चेव नमुक्कारे आगारा छच्च पोरिसीए उ । सत्तेव य पुरिमड्ढे एगासणगंमि अट्ठेव ॥ १५९९ ॥

सत्तेगट्ठाणस्स उ अट्ठेवायंबिलंमि आगारा । पंचेव अभत्तट्ठे छप्पाणे चरिमि चत्तारि ॥ १६०० ॥

पंच चउरो अभिग्गहि निव्वीए अट्ठ नव य आगारा । अप्पाउराण पंच उ हवंति सेसेसु चत्तारि ॥ १६०१ ॥

नमस्कार इत्युपलक्षणात् नमस्कारसहिते पौरुष्यां पुरिमार्द्धे एकाशने एकस्थाने च आचाम्ले अभक्तार्थे चरमे च अभिग्रहे विकृतौ, किं ?, यथासङ्ख्यमेते आकाराः, द्वौ षट् च सप्त अष्टौ सप्ताष्टौ पञ्च षट् पाने चतुः पञ्च अष्टौ नव प्रत्येकं पिण्डको नवक इति गाथाद्वयार्थः ॥ १५९७–१५९८ ॥ भावार्थमाह—द्वावेव नमस्कारे आकारौ, इह च नमस्कारग्रहणान्नमस्कार-

सहितं गृह्यते, तत्र द्वावेवाकारौ, आकारो हि नाम प्रत्याख्यानापवादहेतुः, इह च सूत्रं 'सूरे उग्गए णमोक्कारसहितं पच्चक्खाइ' इत्यादि सागारं व्याख्यातमेव, षट् चेति पौरुष्यां तु, इह च पौरुषी नाम-प्रत्याख्यानविशेषस्तस्यां षट् आकारा भवन्ति, इह चेदं सूत्रम्—

पोरुसिं पच्चक्खाति, उग्गते सूरे चउव्विहंपि आहारं असणं ४ अण्णत्थऽणाभोगेणं सहसाकारेणं पच्छन्नकालेणं दिसामोहेणं साधुवयणेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

अनाभोगसहसाकारसंगतिः पूर्ववत्, प्रच्छन्नकालादीनां त्विदं स्वरूपं—पच्छण्णातो दिसा उ रएण रेणुणा पव्वएण वा अण्णएण वा अंतरिते सूरो ण दीसति, पोरुसी पुण्णत्तिकातुं पारितो, पच्छा णातं ताहे ठाइतवं ण भग्गं, जति भुंजति तो भग्गं, एवं सव्वेहिवि, दिसामोहेण कस्सइ पुरिसस्स कम्हिवि खेत्ते दिसामोहो भवति, सो पुरिमं पच्छिमं दिसं जाणति, एवं सो दिसामोहेण—अइरुग्गदंपि सूरं दट्ठुं उस्सूरीभूतंति मण्णति णाते ठाति, साधुणो भणंति—उग्घाडपोरुसी ताव सो पजिमितो, पारित्ता मिणति अन्नो वा मिणइ, तेणं से भुञ्जंतस्स कहितं ण पूरितंति, ताहे ठाइदवं, समाधी णाम तेण य पोरुसी

१ प्रच्छन्ना दिशो रजसा रेणुना पर्वतेन वाऽन्येन वाऽन्तरिते सूर्यो न दृश्यते, पौरुषी पूर्णेतिकृत्वा पारितवान्, पश्चात् ज्ञातं तदा स्थातव्यं, न भग्नं यदि भुङ्क्ते तदा भग्नं, सर्वैरप्येवं, दिग्मोहेन कस्यचित् पुरुषस्य कस्मिन्नपि क्षेत्रे दिग्मोहो भवति, स पूर्वां पश्चिमां दिशं जानाति, एवं स दिग्मोहेन अचिरोद्गतमपि सूर्यं दृष्ट्वा उत्सूर्यीभूतमिति मन्यते ज्ञाते तिष्ठति, साधवो भणन्ति— उद्घाटा पौरुषी तावत् स प्रजिमितः पारयित्वा मिनोति अन्यो वा मिनोति, तेन तस्मै भुञ्जानाय कथितं न पूरितमिति, तदा स्थातव्यं । समाधिर्नाम तेन च पौरुषी

[1]पच्चक्खाता, आसुकारितं च दुक्खं जातं अण्णस्स वा, ताहे तस्स पसमणणिमित्तं पाराविज्जति ओसहं वा दिज्जति, एत्थंतरा णाते तहेव विवेगो, सप्तैव च पुरिमार्द्धे–पुरिमार्द्धं प्रथमप्रहरद्वयकालावधिप्रत्याख्यानं गृह्यते तत्र सप्त आकारा भवन्ति, इह च इदं सूत्रं–'सूरे उग्गते'इत्यादि, षडाकारा गतार्थाः, नवरं महत्तराकारः सप्तमः, असावपि सर्वोत्तरगुणप्रत्याख्याने साकारे कृताधिकारे अत्रैव व्याख्यात इति न प्रतन्यते, एकाशने अष्टावेव, एकाशनं नाम सकृदुपविष्टपुताचालनेन भोजनं, तत्राष्टावाकारा भवन्ति, इह चेदं सूत्रं—

'एक्कासण'मित्यादि 'अण्णत्थ अणाभोगेणं सहसाकारेणं सागारियागारेणं आउंटणपसारणेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरति। (सूत्रं)

अणाभोगसहसाकारा तहेव, सागारियं अद्धसमुद्दिट्ठस्स आगतं-जति वोलति पडिच्छति, अह थिरं ताहे सज्झायवाघातोत्ति उट्ठेउं अण्णत्थ गंतूणं समुद्दिसति, हत्थं पादं वा सीसं वा(ओउंटेज्ज)पसारेज्ज वा ण भज्जति, अब्भुट्ठाणारिहो आयरिओ पाहुणगो वा आगतो अब्भुट्ठेतव्वं तस्स, एवं समुद्दिट्ठस्स परिट्ठावणिया जति होज्ज कप्पति, महत्तरागारसमाधि तु

---

१ प्रत्याख्याता, आशुकारि च दुःखं जातमन्यस्य वा, तदा तस्य प्रशमनानिमित्तं पार्यते ओषधं वा दीयते, अत्रान्तरे ज्ञाते तथैव विवेकः। अनाभोगसहसाकारौ तथैव, सागारिकोऽर्धसमुद्दिष्टे आगतः यदि व्यतिक्राम्यति प्रतीक्ष्यते अथ स्थिरस्तदा स्वाध्यायव्याघात इति उत्थायान्यत्र गत्वा समुद्दिश्यते, हस्तं पादं वा शीर्षं वा आकुञ्चयेत् प्रसारयेत् वा न भज्यते, अभ्युत्थानार्ह आचार्यः प्राघूर्णको वाऽऽगतोऽभ्युत्थातव्यं तस्य, एवं समुद्दिष्टे पारिष्ठापनिकी यदि भवेत् कल्पते, महत्तराकारसमाधी तु तथैव।

तहेव'त्ति गाथार्थः ॥ १५९९ ॥ 'सप्तैकस्थानस्य तु' एकस्थानं नाम प्रत्याख्यानं तत्र सप्ताकारा भवन्ति, इह चेदं सूत्रं— 'एगट्ठाण'मित्यादि एगट्ठाणगं जहा अंगोवंगं ठवितं तेण तहावट्ठितेणेव समुद्दिसियवं, आगारा से सत्त, आउंटणपसारणा णत्थि, सेसं जहा एक्कासणए । अष्टैवाचाम्लस्याकारा, इदं च बहुवक्तव्यमितिकृत्वा भेदेन वक्ष्यामः 'गोण्णं णामं तिविध'-मित्यादिना ग्रन्थेन, असम्मोहार्थं तु गाथैव व्याख्यायते, 'पञ्चाभक्तार्थस्य तु' न भक्तार्थोऽभक्तार्थः, उपवास इत्यर्थः, तस्य पंचाकारा भवन्ति, इह चेदं सूत्रं—'सूरे उग्गते'इत्यादि, तस्स पंच आगारा—अणाभोग० सहसा० पारि० महत्तरा० सबसमाधि० जति तिविधस्स पच्चक्खाति तो विकिंचणिया कप्पति, जति चतुविधस्स पच्चक्खातं पाणं च णत्थि तदा न कप्पति, तत्थ छ आगारा—लेवाडेण वा अलेवाडेण वा अच्छेण वा बहलेण वा ससित्थेण वा असित्थेण वा वोसिरति, वुत्तत्था एते छप्पि, एतेन षट् पान इत्येतदपि व्याख्यातमेव, 'चरिमे च चत्वार' इत्येतच्चरिमं दुविधं—दिवसचरिमं भवचरिमं वा, दिवसचरिमस्स चत्तारि, अण्णत्थणाभोगेणं सहसाकारेणं महत्तराकारेणं सबसमाहिवत्तियागारेणं, भवचरिमं जावज्जीवियं तस्सवि एते चत्तारित्ति गाथार्थः ॥ १६०० ॥ पञ्च चत्वारश्चाभिग्रहे, निर्विकृतौ अष्टौ नव वा आकाराः,

---

१ एकस्थानकं यथा अङ्गोपाङ्गं स्थापितं तेन तथावस्थितेनैव समुद्देष्टव्यं, आकारास्तस्मिन् सप्त, आकुञ्चनप्रसारणं नास्ति, शेषं यथैकाशनके । तस्य पञ्चाकाराः—अनाभोग० सहसा० पारि० महत्तराकार० सर्वसमाधि०, यदि त्रिविधं प्रत्याख्याति तदा पारिष्ठापनिकी कल्पते, यदि चतुर्विधस्य प्रत्याख्यातं पानकं च नास्ति तदा न कल्पते, तत्र षडाकाराः—लेपकृता वा अलेपकृता वा अच्छेन वा बहलेन वाससिक्थेन वा असिक्थेन वा व्युत्सृजति, उक्तार्थाः एते षडपि, चरमं द्विविधं—दिवसचरमं भवचरमं च, दिवसचरमे चत्वारः अन्यत्राना० सहसा० महत्तरा० सर्वसमाधि०, भवचरमं यावज्जीविकं तस्याप्येते चत्वारः ।

अप्रावरण इति—अप्रावरणाभिग्रहे पञ्चैवाकारा भवन्ति, शेषेष्वभिग्रहेषु दण्डकप्रमार्जनादिषु चत्वार इति गाथाऽक्षरार्थः१६०१॥ भावार्थस्तु '[1]अभिग्गहेसु वाउडत्तणं कोइ पच्चक्खाति, तस्स पंच—अणाभोग०सहसागार० (महत्तरा०) चोलपट्टगागार० सव्वसमाहिवत्तियागार०सेसेसु चोलपट्टगागारो णत्थि, निव्विगतीए अट्ठ नव य आगारा इत्युक्तं, तत्थ दस विगतीओ—खीरं दधि णवणीयं घयं तेल्लं गुडो मधुं मज्जं मंसं ओगाहिमगं च, तत्थ पंच खीराणि गावीणं महिसीणं अजाणं एलियाणं उट्टीणं, उट्टीगं दधिं णत्थि, णवणीतं घतंपि, ते दधिणा विणा णत्थित्ति, दधिणवणीतघताणि चत्तारि, तेल्लाणि चत्तारि खर (तिल)अदसिकुसुंभसरिसवाणं, एताओ विगतीओ, सेसाणि तेल्लाणि निव्विगतीतो, लेवाडाणि पुण होन्ति, दो वियडा—कट्ठणिप्फण्णं उच्छुमाईपिट्ठेण य फाणित्ता, दोण्णि गुडा दवगुडो पिंडगुडो य, मधूणि तिण्णि, मच्छियं कोन्तियं भामरं, पोग्गलाणि तिण्णि, जलयरं थलयरं खहयरं, अथवा चम्मं मंसं सोणितं, एयाओ णव विगतीतो, ओगाहिमगं दसमं, तावियाए अद्दहियाए एगं ओगाहिमेगं चलचलेंतं पच्चति सफेणं वितियततियं, सेसाणि अ जोगवाहीणं कप्पति, जति णज्जति अह एगेण चेव

---

1 अभिग्रहेषु प्रावरणं कोऽपि प्रत्याख्याति, तस्य पञ्च—अनाभोग० सहसा० महत्तरा० चोलपट्टा०सर्वसमाधि०, शेषेषु चोलपट्टकाकारो नास्ति, निर्विकृतौ अष्टौ नव चाकाराः। तत्र विकृतयो दश—क्षीरं दधि नवनीतं घृतं तैलं गुडो मधु मद्यं मांसं अवगाहिमं च, तत्र पञ्च क्षीराणि गवां महिषीणां अजानां एडकानामुष्ट्रीणां, उष्ट्रीणां दधि नास्ति, नवनीतं घृतमपि, ते दध्ना विना ( न स्त इति ) दधिनवनीतघृतानि चत्वारि, तैलानि चत्वारि तिलातसीकुसुम्भसर्षपाणां, एता विकृतयः, शेषाणि तैलानि निर्विकृतयः, लेपकारीणि पुनर्भवन्ति, द्वे मद्ये—काष्ठनिष्पन्नं इक्ष्वादिपिष्टेन च फाणयित्वा, द्वौ गुडौ—द्रवगुडः पिण्डगुडश्च, मधूनि त्रीणि—माक्षिकं कौन्तिकं भ्रामरं, पुद्गलानि त्रीणि—जलचरजं स्थलचरजं खचरजं च, अथवा चर्म मांसं शोणितं, एता नव विकृतयः, अवगाहिमं दशमं, तापिकायामाद्रहणे एकमवगाहिमं चलचलत् पच्यते सफेणं द्वितीयं तृतीयं च, शेषाणि च योगवाहिनां कल्पन्ते, यदि ज्ञायते अथैकेनैवा

पूअएण सव्वो चेव तावगो भरितो तो बितियं चेव कप्पति णिव्विगतियपच्चक्खाणाइतस्स, लेवाडं होति, एसा आयरियपरंपरागता सामायारी। अधुना प्रकृतमुच्यते, क्वाष्टौ क्व वा नवाकारा इति ?, तत्र—

नवणीओगाहिमए अद्दवदहि(व)पिसियघयगुले चेव। नव आगारा तेसिं सेसदवाणं च अट्ठेव ॥ १६०२ ॥

'नवणीते ओगाहिमके अद्दवदवे'निगालित इत्यर्थः, पिसिते—मांसे घृते गुडे चैव, अद्रवग्रहणं सर्वत्राभिसम्बन्धनीयं, नव आकारा अमीषां विकृतिविशेषाणां भवन्ति शेषद्रवाणां—विकृतिशेषाणां अष्टावेवाकारा भवन्ति, उत्क्षिप्तविवेको न भवतीति गाथार्थः ॥ १६०२ ॥ इह चेदं सूत्रं—

'णिव्वियतियं पच्चक्खाती'त्यादि अन्नत्थऽणाभोगेणं सहसाकारेणं लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरति। (सूत्रं)

इदं च प्रायो गतार्थमेव, विशेषं तु 'पंचेव य खीराइं'इत्यादिना ग्रन्थेन भाष्यकारोपन्यासक्रमप्रामाण्यादुत्तरत्र वक्ष्यामः, अधुना तदुपन्यस्तमेवाचामाम्लमुच्यते—

गोन्नं नामं तिविहं ओअण कुम्मास सत्तुआ चेव। इक्किक्कंपि य तिविहं जहन्नयं मज्झिमुक्कोसं ॥ १६०३ ॥

आयामाम्लमिति गोण्णं नाम, आयामः—अवशायनं आम्लं—चतुर्थरसं ताभ्यां निर्वृत्तं आयामाम्लं, इदं चोपाधिभेदात्

---

१ पूपकेन सर्व एव तापकः पूरितस्तदा द्वितीयमेव कल्पते निर्विकृतिकप्रत्याख्यानिनः, लेपकृद् भवति। एषाऽऽचार्यपरम्परागता सामाचारी

त्रिविधं भवति, ओदनः कुल्माषाः सक्तवश्चैव, ओदनमधिकृत्य कुल्माषान् सक्तूंश्चेति, एकैकमपि चामीषां त्रिविधं भवति-जघन्यकं मध्यमं उत्कृष्टं चेति । कथमित्यत्राह—

दव्वे रसे गुणे वा जहन्नयं मज्झिमं च उक्कोसं । तस्सेव य पाउग्गं छलणा पंचेव य कुडंगा ॥ १६०४ ॥

द्रव्ये रसे गुणे चैव द्रव्यमधिकृत्य रसमधिकृत्य गुणं चाधिकृत्येत्यर्थः, किं ?—जघन्यं मध्यममुत्कृष्टं चेति, तस्यैवायामाम्लस्य प्रायोग्यं वक्तव्यं, तथा आयामाम्लं प्रत्याख्यातमिति दध्ना भुञ्जानस्यादोषः प्राणातिपातप्रत्याख्याने तदनासेवनवदिति छलना वक्तव्या, पञ्चैव कुडङ्गा—वक्रविशेषा इति । तद्यथा—

लोए वेए समए अन्नाणे खलु तहेव गेलन्ने । एए पंच कुडंगा नायव्वा अंबिलंमि भवे ॥ १६०५ ॥

लोके वेदे समये अज्ञाने खलु तथैव ग्लानत्वे लोकमङ्गीकृत्य कुडङ्गाः, एवं वेदान् समयान् अज्ञानं ग्लानत्वं च एते पञ्च कुडङ्गा ज्ञातव्याः, आयामाम्ले भवन्ति, आयामाम्लविषय इति गाथासमासार्थः ॥१६०५॥ विस्तरार्थस्तु वृद्धसम्प्रदायसमधिगम्यः, स चायं—'[1]एत्थ आयंबिलं च भवति आयंबिलपाउग्गं च, तत्थोदणे आयम्बिलं आयंबिलपाउग्गं च, आयंबिला सकूरा, जाणि कूरविहाणाणि आयंबिलपाउग्गं, तंदुलकणियाउ कुडंतो पीट्ठं पिहुगा पिट्ठपोवलियाओ रालगा मंडगादि, कुम्मासा पुव्वं पाणिएण कड्ढिज्जंति पच्छा उखलीए पीसंति, ते तिविधा—सण्हा मज्झिमा थूला, एते आयंबिलं, आयं-

---

१ अत्राचामाम्लं भवति आचामाम्लप्रायोग्यं च, तत्रौदने आचामाम्लमाचामाम्लप्रायोग्यं च, आयामाम्लः सकूराः, यानि कूरविधानानि आचामाम्लप्रायोग्यं, तन्दुलकणिकाः, कुण्डान्तः पिष्टेन पृथुकीकृताः, पृष्टपोलिका रालगा मण्डकाद्याः, कुल्माषाः पूर्वं पानीयेन क्वथ्यन्ते पश्चात् उदूखल्यां पिष्यन्ते, ते त्रिविधाः—श्लक्ष्णा मध्याः स्थूलाः, एते आचामाम्लं, आचा-

बिलपाउग्गाणि पुण जे तस्स तुसमीसा कणियाउ कंकडुगा य एवमादि, सत्तुया जवाणं गोधूमाणं विहिआणं वा, पाउग्गं पुण गोधूमभुज्जियापिचुगाला य जाव भुञ्जिज्जा, जे य जंतएण ण तीरंति पिसितुं, तस्सेव णिद्दारो कणिकादि वा, एयाणि आयंबिलपाउग्गाणि, तं तिविधंपि आयंबिलं तिविधं–उक्कोसं मज्झिमं जहन्नं, दव्वतो कलमसालिकूरो उक्कोसं जं वा जस्स पत्थं रुच्चति वा, रालगो सामागो वा जहन्नो, सेसा मज्झिमा, जो सो कलमसालीकूरो सो रसं पडुच्च तिविधो उक्कोसं ३, तं चेव तिविधंपि आयंबिलं णिज्जरागुणं पडुच्च तिविधं–उक्कोसो णिज्जरागुणो मज्झिमोजहण्णोत्ति, कलमसालिकूरो दव्वतो उक्कोसं दव्वं चउत्थरसिएण समुद्दिसति, रसओवि उक्कोसं तस्सच्चएणवि आयामेण उक्कोसं रसतो गुणतो जहण्णं थोवा- णिज्जरत्ति भणितं भवति, सो चेव कलमोदणो जदा अण्णेहिं आयामेहिं तदा दव्वतो उक्कोसो रसतो मज्झिमो गुणतोवि मज्झिमो चेव, सो चेव जदा उण्होदएण तदा दव्वतो उक्कोसं रसतो जहण्णं गुणतो मज्झिमं चेव, जेण दव्वतो उक्कोसं न

---

१ आम्लप्रायोग्याणि पुनर्या तस्य तुषमिश्राः कणिकाः काङ्कटुकाश्च एवमादि, सक्तवो यवानां गोधूमानां व्रीहीणां वा, प्रायोग्यं पुनर्गोधूमभृष्टं निर्गलितं यावद् भुञ्जीत, ये च यन्त्रकेण न शक्यन्ते पेष्टुं, तस्यैव निर्धारः कणिकादिर्वा, एतानि आचाम्लप्रायोग्याणि, तत् त्रिविधमप्याचामाम्लं त्रिविधं–उत्कृष्टं मध्यमं जघन्यं, द्रव्यतः कलमशालिकूर उत्कृष्टं यद्वा यस्मै पथ्यं रोचते वा, रालकः श्यामाको वा जघन्यः, शेषा मध्यमाः, यः स कलमशालिकूरः स रसं प्रतीत्य त्रिविधः उत्कृष्टः ३, तदेव त्रिविधमप्याचामाम्लं निर्जरागुणं प्रतीत्य त्रिविधं–उत्कृष्टो निर्जरागुणो मध्यमो जघन्य इति, कलमशालिकूरो द्रव्यत उत्कृष्ट द्रव्यं चतुर्थरसेन भुज्यते, रसतोऽपि उत्कृष्टं तस्य सत्केनाप्याचामाम्लेन उत्कृष्टं रसतो गुणतो जघन्यं स्तोका निर्जरेति भणितं भवति, स एव कलमौदनो यदाऽन्यैराचामाम्लैस्तदा द्रव्यत उत्कृष्टो रसतो मध्यमो गुणतोऽपि मध्यम एव, स एव यदोष्णोदकेन तदा द्रव्यत उत्कृष्टं रसतो जघन्यं गुणतो मध्यममेव, येन द्रव्यत उत्कृष्टं न

रसतो, इदाणिं जे मज्झिमा ते चाउलोदणा ते दव्वतो मज्झिमा आयंविलेण रसतो उक्कोसा गुणतो मज्झिमा, तहेव च उण्होदएण दव्वतो मज्झं रसतो जहण्णं गुणतो मज्झं मज्झिमं दव्वंतिकाऊणं, रालगतणकूरा दव्वतो जहण्णं आयंविलेण रसतो उक्कोसं गुणओ मज्झं, ते चेव आयामेण दव्वओ जहण्णं रसओ मज्झं गुणओ मज्झं, ते चेव उण्होदएण दव्वओ जहण्णं रसओ जहन्नं गुणओ उक्कोसं वहुणिज्जरत्ति भणितं होति, अहवा उक्कोसे तिण्णि विभासा—उक्कोसउक्कोसं उक्कोसमज्झिमं उक्कोसजहण्णं, कंजियआयामउण्होदएहिं जहण्णा मज्झिमा उक्कोसा णिज्जरा, एवं तिसु विभासितव्वं । छलणा णाम एगेणायंविलं पच्चक्खातं, तेण हिंडंतेण सुद्धोदणो गहितो, अण्णाणेण य खीरेण निमित्तं घेत्तूण आगतो आलोएत्तुं पजिमितो, गुरूहिं भणितो—अज्ज तुज्झ आयंविलं पच्चक्खातं, भणइ—सच्चं, तो किं जेमेसि ?, जेण मए पच्चक्खातं, जहा

---

१ रसतः । इदानीं ये मध्यमास्ते तण्डुलौदनास्ते द्रव्यतो मध्यमा आचामाम्लेन रसत उत्कृष्टा गुणतो मध्यमाः, तथैवोष्णोदकेन द्रव्यतो मध्यमं रसतो जघन्यं गुणतो मध्यमं मध्यमं द्रव्यमितिकृत्वा, रालगतृणकूरा द्रव्यतो जघन्यं आचामाम्लेन रसत उत्कृष्टं गुणतो मध्यं, त एवाचामाम्लेन द्रव्यतो जघन्यं रसतो मध्यं गुणतो मध्यं, त एवोष्णोदकेन द्रव्यतो जघन्यं रसतो जघन्यं गुणत उत्कृष्टं, बहुनिर्जरेति भणितं भवति, अथवा उत्कृष्टे तिस्रो विभाषाः—उत्कृष्टोत्कृष्टं उत्कृष्टमध्यमं उत्कृष्टजघन्यं, काञ्जिकाचामाम्लोष्णोदकैर्जघन्या मध्यमोत्कृष्टा निर्जरा, एवं त्रिषु विभाषितव्यं। छलना नाम एकेनाचामाम्लं प्रत्याख्यातं, तेन हिण्डमानेन शुद्धोदनो गृहीतः अज्ञानेन च क्षीरेण नियमितं गृहीत्वाऽऽगत आलोच्य प्रजिमितः, गुरुभिर्भणितः—अद्य त्वयाऽऽचामाम्लं प्रत्याख्यातं, भणति—सत्यं, तर्हि किं जेमसि ?, येन मया प्रत्याख्यातं, यथा

पंणातिपाते पच्चक्खाते ण मारिज्जति एवायंबिलेवि पच्चक्खाते तं ण कीरति, एसा छलणा, परिहारस्तु प्रत्याख्यानं भोजने तन्निवृत्तौ च भवति, भोजने आयामाम्लप्रायोग्यादन्यत् तत् प्रत्याख्याति आयाम्ले च वर्त्तते, तन्निवृत्तौ चतुर्विधमप्याहारं प्रत्याचक्षाणस्य, तथा लोक एवमेव प्रत्याख्यानार्थः दोसुं अत्थेसु वट्टति भोजने तन्निवृत्तौ च, तेण एसच्छलणा णिरत्थया । पंच कुडंगा–लोए वेदे समए अण्णाणे गिलाणे कुडंगोत्ति, एगेणायंबिलस्स पच्चक्खातं, तेण हिंडंतेण संखडी संभाविता, अण्णं वा उक्कोसं लद्धं, आयरियाण दंसेति, भणितं–तुज्झ आयंबिलं पच्चक्खातं, सो भणति–खमासमणा ! अम्हें बहूणि लोइयाणि सत्थाणि परिमिलिताणि, तत्थ य आयंबिलसद्दो णत्थि, पढमो कुडंगो १, अहवा वेदेसु चउसु संगोवंगेसु णत्थि आयंबिलं बिदिओ कुडंगो २, अहवा समए चरगचीरियभिक्खुपंडरंगाणं, तत्थवि णत्थि, ण जाणामि एस तुज्झं कतो आगतो ? तइओ कुडंगो ३, अण्णाणेण भणति–ण जाणामि खमासमणा ! केरिसियं आयंबिलं भवति ?, अहं जाणामि–कुसणेहिवि जिम्मइत्ति तेण गहितं, मिच्छामिदुक्कडं, ण पुणो गच्छामि, चउत्थो कुडंगो गिलाण भणति–

---

१ प्राणातिपाते प्रत्याख्याते न मार्यते एवमाचामाम्लेऽपि प्रत्याख्याते तन्न क्रियते, एषा छलना, द्वयोरर्थयोर्वर्त्तते तेनैषा छलना निरर्थिका । पञ्च कुडङ्गाः–लोके वेदे समये अज्ञाने ग्लाने कुडङ्ग इति, एकेनाचामाम्लस्य प्रत्याख्यातं, तेन हिण्डमानेन संखडी संभाविता, अन्यद्वोत्कृष्टं लब्धं, आचार्येभ्यो दर्शयते, भणितं–त्वयाचामाम्लं प्रत्याख्यातं, स भणति–क्षमाश्रमण ! अस्माभिर्बहूनि लौकिकानि शास्त्राणि परिमीलितानि, तत्र चाचामाम्लशब्दो नास्ति प्रथमः कुडङ्गः, अथवा वेदेषु चतुर्षु साङ्गोपाङ्गेषु नास्त्याचामाम्लं द्वितीयः कुडङ्गः, अथवा समये चरकचीरिकभिक्षुपाण्डुरङ्गाणां, तत्रापि नास्ति, न जानामि युष्माकं एष कुत आगतः ?, तृतीयः कुडङ्गः, अज्ञानेन भणति–न जानामि क्षमाश्रमणाः ! कीदृशमाचामाम्लं भवति ?, अहं जाने कुसणैरपि जेम्यते इति तेन गृहीतं, मिथ्या मे दुष्कृतं, न पुनर्गमिष्यामि, चतुर्थः कुडङ्गो, ग्लानो भणति–

[1]णतरामि आयंविलं काउं सूलं मे उट्ठति, अण्णं वा उद्दिसति रोगं, ताहे ण तीरति करेत्तुं, एस पंचमो कुडंगो। तस्स अट्ठ आगारा—अण्णत्थणाभोगेणं सहस्सागारेणं लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरति। अणाभोगसहसकारा तहेव लेवालेवो जति भाणे पुव्वं लेवाडगं गहितं समुद्दिट्ठं संलिहियं जति तेण आणेति ण भज्जति, उक्खित्तविवेगो जति आयंविले पतति विगतिमाती उक्खिवित्ता विगिंचतु मा णवरि गलतु अण्णं वा आयंविलस्स अप्पाउग्गं जति उद्धरितं तीरति उद्धरिते ण उवहम्मति, गिहत्थसंसट्ठेवि जति गिहत्थो डोवलियं भाणियं वा लेवाडं कुसणादीहिं तेण ईसित्ति लेवाडं तं भुज्जति, जइ रसो आलिखिज्जति वहुओ ताहे ण कप्पति, पारिट्ठावणितमहत्तरासमाधीओ तहेव। व्याख्यातमतिगम्भीरवुद्धिना भाष्यकारेणोपन्यस्तक्रममायामाम्लम्, अधुना तदुपन्यासप्रामाण्यादेव निर्विकृतिकाधिकारशेषं व्याख्यायते, तत्रेदं गाथाद्वयम्—

पंचेव य खीराइं चत्तारि दहीणि सप्पि नवणीता। चत्तारि य तिल्लाइं दो वियडे फाणिए दुन्नि ॥ १६०६ ॥
महुपुग्गलाइं तिन्नि चलचलओगाहिमं तु जं पक्कं। एएसिं संसट्ठं वुच्छामि अहाणुपुव्वीए ॥ १६०७ ॥

---

1 न शक्नोम्याचामाम्लं कर्तुं शूलं मे उत्तिष्ठते, अन्यं वा रोगं कथयति ततो न शक्यते कर्तुं, एष पञ्चमः कुडङ्गः। तस्याष्टावाकाराः—अन्यत्रानाभोगसहसाकारौ तथैव, लेपालेपो यदि भाजने पूर्वं लेपकृत् गृहीतं समुद्दिष्टं संलिखितं यदि तेनानयति न भज्यते, उत्क्षिप्तविवेको यद्याचामाम्ले पतति विकृत्यादिरुत्क्षिप्य विवेचयतु मा परं गलत्वन्यद्वा आचामाम्लसाप्रायोग्यं यद्युद्धर्तुं शक्यते उद्धृते नोपहन्यते, गृहस्थसंसृष्टेऽपि यदि गृहस्थेन इङ्गुदीतैलान्वितं भाजनं कृतं व्यञ्जनादिभिर्वा लेपकृतं तेनेषदिति लेपकृत् तद्भुज्यते, यदि रस आलिख्यते बहुस्तदा न कल्पते। पारिष्ठापनिकामहत्तरसमाधयस्तथैव।

'पंचेव य खीराइं' गाहा 'मधुपोग्गल'त्ति गाथा, इदं विकृतिस्वरूपप्रतिपादकं गाथाद्वयं गतार्थमेव, अधुना एतदाकारा व्याख्यायन्ते–तत्थ अणाभोगसहसक्कारा तहेव, लेवालेवो पुण जधा आयंबिले तहेव दट्ठवो, गिहत्थसंसट्ठो बहुवत्तवोत्ति गाहाहिं भण्णति, ताओ पुण इमातो–

खीरदहीवियडाणं चत्तारि उ अंगुलाइं संसट्ठं । फाणियतिल्लघयाणं अंगुलमेगं तु संसट्ठं ॥ १६०८ ॥

मुहपुग्गलरसयाणं अद्धंगुलयं तु होइ संसट्ठं । गुलपुग्गलनवणीए अद्दामलयं तु संसट्ठं ॥ १६०९ ॥

गिहत्थसंसट्ठस्स इमा विधी–खीरेण जति कुसणातिओ कूरो लब्भति तस्स जति कुडंगस्स उदणातो चत्तारि अंगुलाणि दुद्धं ताहे णिव्विगतिगस्स कप्पति पंचमं चारब्भ विगती य, एवं दधिस्सवि वियडस्सवि, केसु विसएसु विअडेण मीसिज्जति ओदणो ओगाहिमओ वा, फाणितगुडस्स तेल्लघताण य, एतेहिं कुसणिते जति अंगुलं उवरि अच्छति तो वट्टति, परेण न वट्टति, मधुस्स पोग्गलरसयस्स अद्धंगुलेण संसट्ठं होति, पिंडगुलस्स पुग्गलस्स णवणीतस्स य अद्दामलगमेत्तं

१ तत्रानाभोगसहसाकारौ तथैव, लेपालेपः पुनर्यथाऽऽचामाम्ले तथैव द्रष्टव्यः, गृहस्थसंसृष्टो बहुवक्तव्य इति गाथाभिर्भण्यते, ते पुनरिमे– । गृहस्थसंसृष्टस्य पुनरयं विधिः–क्षीरेण यदि कुसणादिकः कूरो लभ्यते तस्मिन् कुण्डे यद्योदनात् चत्वारि अंगुलानि दुग्धं तदा निर्विकृतिकस्य कल्पते पञ्चमं चारभ्य विकृतिश्च, एवं दध्नोऽपि सुराया अपि, केषुचिद्विषयेषु विकटेन मिश्यते ओदनोऽवगाहिमं वा, फाणितगुडस्य तैलघृतयोश्च, एताभ्यां कुसणिते यद्यङ्गुलमुपरि तिष्ठति तदा वर्त्तते (कल्पते), परतो न वर्त्तते, मधुनः पुद्गलरसस्य चार्धाङ्गुलेन संसृष्टं भवति, पिण्डगुडस्य पुद्गलस्य नवनीतस्य चार्द्रामलकमात्रं

संसट्ठं[1], जदि वहूणि एतप्पमाणाणि कप्पंति, एगंमि वहुए ण कप्पदित्ति गाथार्थः ॥ १६०८-१६०९ ॥ उक्खित्तविवेगो अहा आयंविले जं उद्धरितुं तीरति, सेसेसु णत्थि, पडुच्चमक्खियं पुण जति अंगुलीए गहाय मक्खेति तेल्लेण वा घतेण वा ताथे णिव्विगतियस्स कप्पति, अथ धाराए छुब्भति मणागंपि ण कप्पति। इदाणिं पारिट्ठावणियागारो, सो पुण एगासणेगठाणादिसाधारणेत्तिकट्टु विसेसेण परूविज्जति, तन्निरूपणार्थमाह—

आयंविलमणायंविल चउथा वालवुड्ढसहुअसहू । अणहिंडियहिंडियए पाहुणयनिमंतणावलिया ॥ १६१० ॥

'आयंविलए' गाथा व्याख्या—यद्वाऽत्रान्तरे प्रवुद्ध इव चोदकः पृच्छति—अहो ताव भगवता एगासणगएगट्ठाणगआयंविलचउत्थछट्ठट्ठमणिव्विगतिएसु पारिट्ठावणियागारो वण्णितो, ण पुण जाणामि केरिसगस्स साधुस्स पारिट्ठावणियं दातवं वा न दातवं वा?, आयरिओ भणइ, 'आयंविलमणायंविले' गाथा व्याख्या—पारिट्ठावणियभुंजणे जोग्गा साधू दुविधा—आयंविलगा अणायंविलगा य, अणायंविलिया आयंविलविरहिया, एक्कासणेकट्ठाणचउत्थछट्ठट्ठमणिव्विगतिय-

---

१ संसृष्टं, यदि वहून्येतत्प्रमाणानि तदा कल्पन्ते, एकस्मिन् वृहति न कल्पते । उत्क्षिप्तविवेको यथाऽऽचामाम्ले यदुद्धर्तुं शक्यते, शेषेषु नास्ति । प्रतीत्यम्रक्षितं पुनर्यद्यङ्गुल्या गृहीत्वा म्रक्षयति तैलेन वा घृतेन वा तदा निर्विकृतिकस्य कल्पते, अथ धारया क्षिपति मनागपि न कल्पते । इदानीं पारिष्ठापनिकाकारः, स पुनरेकासनैकस्थानादिसाधारण इतिकृत्वा विशेषेण प्ररूप्यते । अहो तावद् भगवता एकाशनैकस्थानाचाम्लचतुर्थषष्ठाष्टमनिर्विकृतिकेषु पारिष्ठापनिकाकारो वर्णितो, न पुनर्जानामि कीदृशस्य साधोः पारिष्ठापनिकं दातव्यं वा न दातव्यं वा ?, आचार्यो भणति—पारिष्ठापनिकभोजने योग्याः साधवो द्विविधाः—आचामाम्लका अनाचामाम्लकाश्च, अनाचामाम्लका आचामाम्लविरहिताः, एकासनैकस्थानचतुर्थषष्ठाष्टमनिर्विकृति-

पज्जवसाणा, दसमभत्तियादीणं मंडलीए उद्धरितं पारिट्ठावणियं ण कप्पति दातुं, तेसिं पेज्जं उण्हयं वा दिज्जति, अहिट्ठिया य तेसिं देवतावि होज्ज, एगो आयंबिलगो एगो चउत्थभत्तितो होज्ज कस्स दातबं ?, चउत्थभत्तियस्स, सो दुविहो—बालो वुड्ढो य, बालस्स दातवं, बालो दुविहो—सहू असहू य, असहुस्स दातबं, असहू दुविहो—हिंडंतो अहिंडंतओ य, हिंडयस्स दातवं, हिंडंतओ दुविधो—वत्थबगो पाहुणगो य, पाहुणगस्स दातबं, एवं चउत्थभत्तो बालोऽसहू हिंडंतो पाहुणगो पारिट्ठावणियं भुंजाविज्जति, तस्स असति बालो असहू हिंडंतो वत्थबो २ तस्स असति बालो असहू अहिंडंतो पाहूणगो ३ तस्स असति बालो असहू अहिंडंतो वत्थबो, एवमेतेण करणोवाएण चतुहिवि पदेहिं सोलस आवलियाभंगा विभासितवा, तत्थ पढमभंगिअस्स दातवं, एतस्स असति बितियस्स, तस्सासति तदियस्स, एवं जाव चरिमस्स दातबं, पउरपारिट्ठावणियाए वा सवेसि दातवं, एवं आयंबिलियस्स छट्ठभत्तियस्स सोलसभंगा विभासा, एवं आयंबिलियस्स

---

१ कावसानाः, दशमप्रभृतिभ्यो मण्डल्यामुद्धृतं पारिष्ठापनिकं न कल्पते दातुं, तेभ्यः पेयमुष्णं वा दीयते, अधिष्ठिता च तेषां देवता भवेत्। एक आचामाम्लक एकश्चतुर्थभक्तिको भवेत् कस्मै दातव्यं ?, चतुर्थभक्ताय, स द्विविधो—बालो वृद्धश्च, बालाय दातव्यं, बालो द्विविधः—सहिष्णुरसहिष्णुश्च, असहिष्णवे दातव्यं, असहिष्णुर्द्विविधः—हिण्डमानोऽहिण्डमानश्च, हिण्डमानाय दातव्यं, हिण्डमानो द्विविधः—वास्तव्यः प्राघूर्णकश्च, प्राघूर्णकाय दातव्यं, एवं चतुर्थभक्तो बालोऽसहो हिण्डमानः प्राघूर्णकः पारिष्ठापनीयं भोज्यते, तस्मिन्नसति बालोऽसहो हिण्डमानो वास्तव्यः, तस्मिन्नसति बालोऽसहोऽहिण्डमानः प्राघूर्णकः तस्मिन्नसति बालोऽसहोऽहिण्डमानो वास्तव्यः, एवमेतेन करणोपायेन चतुर्भिः पदैः षोडशावलिकाभङ्गा विभावितव्याः, तत्र प्रथमभङ्गिकाय दातव्यं, एतस्मिन्नसति द्वितीयस्मै, तस्मिन्नसति तृतीयस्मै, एवं यावच्चरमाय दातव्यं, प्रचुरपारिष्ठापनिकायां वा सर्वेभ्यो दातव्यं, एवमाचामाम्लषष्ठभक्तिकयोः षोडश भङ्गाः विभाषा, एवमाचामाम्ल—

[1]अट्ठमभत्तियस्स सोलस भंगा, एवं आयंबिलियस्स निव्वितियस्स सोलस भंगा, णवरं आयंबिलियस्स दातव्वं, एवं आयंबिलियस्स एक्कासणियस्स सोलस भंगा, एवं आयंबिलियस्स. एगट्ठाणियस्स सोलस भंगा, एवमेते आयंबिलियउक्खेवगसंजोगेसु सव्वग्गेण छण्णवति आवलियाभंगा भवन्ति, आयंबिलउक्खेवो गतो, एगो चउत्थभत्तितो एगो छट्ठभत्तितो, एत्थवि सोलस, नवरं छट्ठभत्तियस्स दातव्वं, एवं चउत्थभत्तियस्स सोलस भंगा, एगो एक्कासणितो एगो एगट्ठाणिओ एगट्ठाणियस्स दातव्वं, एगो एक्कासणितो एगो णिव्वीतिओ, एक्कासणियस्स दातव्वं, एत्थवि सोलस, एगो एगट्ठाणिओ एगो णिव्वीतिओ एगट्ठाणियस्स दातव्वं, एत्थवि सोलसत्ति गाथार्थः ॥ १६१० ॥ तं पुण पारिट्ठावणितं जहाविधीए गहितं विधिभुत्तसेसं च तो तेसिं दिज्जइ, तत्र—

**विहिगहियं विहिभुत्तं उव्वरियं जं भवे असणमाई । तं गुरुणाऽणुन्नायं कप्पइ आयंबिलाईणं ॥ १६११ ॥**
**(विहिगहिअं विहिभुत्तं)तह गुरुहिं(जं भवे)अणुन्नायं। ताहे वंदणपुव्वं भुंजइ से संदिसावेउं(पाठान्तरम्)॥१६११॥**

---

१ काष्टमभक्तिकयोः षोडश भङ्गाः, एवमाचामाम्लनिर्विकृतिकयोः षोडश भङ्गाः, नवरमाचामाम्लकाय दातव्यं, एवमाचामाम्लैकाशनयोः षोडश भंगा, एवमाचामाम्लैकस्थानकयोः षोडश भङ्गाः, एवमेते आचामाम्लोत्क्षेपकसंयोगेन सर्वाग्रेण षण्णवतिरावलिकाभङ्गा भवन्ति, आचामाम्लोत्क्षेपो गतः, एकश्चतुर्थभक्तिक एकः षष्ठभक्तिकः, अत्रापि षोडश, नवरं षष्ठभक्तिकाय दातव्यं, एवं चतुर्थभक्तिकस्य षोडश भङ्गाः, एक एकाशनिक एक एकस्थानिकः एकस्थानिकाय दातव्यं, एक एकाशनिक एको निर्विकृतिक एकाशनिकाय दातव्यं, अत्रापि षोडश, एक एकस्थानिक एको निर्विकृतिकः एकस्थानिकाय दातव्यं, अत्रापि षोडश भङ्गाः । तत् पुनः पारिष्ठापनिकं यथाविधि गृहीतं विधिभुक्तशेषं च तदा तेभ्यो दीयते ।

'विहिंगहियं विहिभुत्तं' गाहा व्याख्या—विधिगहितं णाम अलुद्धेण उग्गमितं, पच्छा मंडलीए कडपदरगसीहखइदेण वा विधीए भुत्तं, एवंविधं पारिट्ठावणियं, जाहे गुरू भणति—अज्जो इमं पारिट्ठावणियं इच्छाकारेण भुञ्जाहित्ति, ताहे सो कप्पति वंदणं दाउं संदिसावेत्ति भोत्तुं, एत्थ चउभंगविभासा—

चउरो य हुंति भंगा पढमे भंगंमि होइ आवलिया । इत्तो अ तइयभंगो आवलिया होइ नायव्वा ॥१६१२॥

'चउरो य होंति भंगा' गाहा व्याख्या—विधिगहितं विधिभुक्तं विधिगहितं अविधिभुक्तं अविधिगहीतं विहिभुत्तं अविधिगहितं अविधिभुक्तं, तत्थ पढमभंगो, साधू भिक्खं हिंडति, तेण य अलुद्धेण बाहिं संजोअणदोसे विप्पजढेण ओहारितं भत्तपाणं पच्छा मंडलीए पतरगच्छेदातिसुविधीए समुदिट्ठं, एवंविधं पुव्ववण्णियाण आवलियाणं कप्पते समुदिसिउं, इदाणिं बितियभंगो तधेव विहीगहितं भुत्तं पुण कागसियालादिदोसदुट्ठं, एवं अविधिए भुत्तं, एत्थ जति उव्वरति तं

१ विधिगृहीतं नामालुब्धेनोद्गमितं, पश्चात् मण्डल्यां कटप्रतरकसिंहखादितेन विधिना भुक्तं एवंविधं पारिष्ठापनिकं, यदा गुरुर्भणति–आर्य ! इदं पारिष्ठापनिकं इच्छाकारेण भुङ्क्ष्वेति, तदा स कल्पते वन्दनं दत्त्वा संदिशेति भोक्तुं अत्र चत्वारो भङ्गाः, विभाषा, विधिगृहीतं विधिभुक्तं विधिगृहीतमविधिभुक्तं अविधिगृहीतं विधिभुक्तं अविधिगृहीतमविधिभुक्तं, तत्र प्रथमो भङ्गः, साधुर्भिक्षां हिण्डते, तेन चालुब्धेन बहिः संयोजनादोषविप्रहीनेनावहृतं भक्तपानं पश्चात् मण्डल्यां प्रतरकच्छेदादिसुविधिना समुद्दिष्टं, एवंविधं पूर्ववर्णितानामावलिकानां कल्पते समुद्देष्टुं, इदानीं द्वितीयभङ्गः तथैव विधिगृहीतं भुक्तं पुनः काकशृगालादिदोषदुष्टं, एवमविधिना भुक्तं, अत्र यदुद्वरति तत्

छड्डिज्जति, ण कप्पति, छद्दिमादीदोसा तम्मि, एरिसं जो देति जो य भुंजति दोण्हवि विवेगो कीरति, अपुणकारए वा उवट्ठिताणं पंचकल्लाणयं दिज्जति, इदाणिं तइयभंगो, तत्थ अविधिगहितं–वीसुं वीसुं उक्कोसगाणि दव्वाणि भायणि पच्छा कच्छपुडगंपिव पडिसुद्धे विरेएति, एतेसिं भोत्तव्वंति आगतो, पच्छा मंडलिगराइणिएण समरसं कातुं मंडलिए विधीए समुद्दिट्ठं, एवंविधे जं उवरितं तं पारिट्ठावणियागारं आवलियाणं विधिभुत्तंतिकाउं कप्पति, चउत्थभंगो आवलियाण ण कप्पेति भुत्तुं, ते चेव पुव्वभणिता दोसा, एवमेतं भावपच्चक्खाणं भणितमिति गाथार्थः ॥ १६१२ ॥ व्याख्यातं मूलगाथोपन्यस्तं प्रत्याख्यानमधुना प्रत्याख्यातोच्यते, तथा चाह—

**पच्चक्खाएण कया पच्चक्खाविंतएवि सूआए (उ)। उभयमवि जाणगेअर चउभंगे गोणिदिट्ठंतो ॥ १६१३ ॥**

'पच्चक्खाएण' गाहा व्याख्या—प्रत्याख्याता–गुरुस्तेन प्रत्याख्यात्रा कृता प्रत्याख्यापयितर्यपि शिष्ये सूचा–उल्लिङ्गना, न हि प्रत्याख्यानं प्रायो गुरुशिष्यावन्तरेण भवति, अण्णे तु–'पच्चक्खाणेण कय'त्ति पठन्ति, तत् पुनरयुक्तं, प्रत्या-

---

१ त्यज्यते, न कल्पते, छर्द्यादयो दोषास्तस्मिन्, ईदृशं यो ददाति यश्च भुङ्क्ते द्वयोरपि विवेकः क्रियते, अपुनःकरणतया वोत्थितयोः पञ्चकल्याणकं दीयते, इदानीं तृतीयभङ्गः, तत्राविधिगृहीतं–विष्वग् विष्वग् उत्कृष्टानि द्रव्याणि भाजने पश्चात्कक्षापुटमिव प्रतिशुद्धे विरेचयति, एतानि भोक्तव्यानि इत्यागतः, पश्चात् माण्डलिकरात्निकेन समरसं कृत्वा मण्डल्यां विधिना समुद्दिष्टं, एवंविधे यदुद्धरति तत् पारिष्ठापनिकाकारमावलिकानां विधिभुक्तमितिकृत्वा कल्पते, चतुर्थो भङ्ग आवलिकानां न कल्पते भोक्तुं, त एव पूर्वभणिता दोषाः, एवमेतत् भावप्रत्याख्यानं भणितम्

ख्यातुर्निर्युक्तिकारेण साक्षादुपन्यस्तत्वात् सूचाऽनुपपत्तेः, प्रत्याख्यापयितुरपि तदनन्तरङ्गत्वादिति, अत्र च ज्ञातर्यज्ञातरि च चत्वारो भेदा भवन्ति, तत्र चतुर्भङ्गे गोणिदृष्टान्त इति गाथाक्षरार्थः ॥ १६१३ ॥ भावार्थं तु स्वयमेवाह—

मूलगुणउत्तरगुणे सव्वे देसे य तहय सुद्धीए । पच्चक्खाणविहिन्नू पच्चक्खाया गुरू होइ ॥ १६१४ ॥

'मूलगुण' गाहा व्याख्या—मूलगुणेषूत्तरगुणेषु च एवं सर्वोत्तरगुणेषु देशोत्तरगुणेषु च, तथा च शुद्धौ—षड्विधायां श्रद्धानादिलक्षणायां प्रत्याख्यानविधिज्ञः, अस्मिन् विषये प्रत्याख्यानविधिमाश्रित्येत्यर्थः, प्रत्याख्यातीति प्रत्याख्याता गुरुः—आचार्यो भवतीति गाथार्थः ॥ १६१४ ॥

किइकम्माइविहिन्नू उवओगपरो अ असढभावो अ । संविग्गथिरपइन्नो पच्चक्खावितओ भणिओ ॥ १६१५ ॥

'किइकम्मा'गाहा व्याख्या—कृतिकर्मादिविधिज्ञः—वन्दनाकारादिप्रकारज्ञ इत्यर्थः, उपयोगपरश्च प्रत्याख्यान एव चोपयोगप्रधानश्च अशठभावश्च—शुद्धचित्तश्च संविग्नो—मोक्षार्थी स्थिरप्रतिज्ञः—न भाषितमन्यथा करोति, प्रत्याख्यापयतीति प्रत्याख्यापयिता—शिष्यः एवंभूतो भणितः तीर्थकरगणधरैरिति गाथार्थः ॥ १६१५ ॥

इत्थं पुण चउभंगो जाणगइअरंभि गोणिनाएणं । सुद्धासुद्धा पढमंतिमा उ सेसेसु अ विभासा ॥ १६१६ ॥

'इत्थं पुण'गाथा व्याख्या—एत्थ पुण पच्चक्खायंतस्स पच्चक्खावेंतस्स य चउभंगो—जाणतो जाणगस्स पच्चक्खाति शुद्धं

१ अत्र पुनः प्रत्याख्यातुः प्रत्याख्यापयितुश्च चतुर्भङ्गी—ज्ञो ज्ञस्य सकाशात् प्रत्याख्याति शुद्धं

पच्चक्खाणं, जम्हा दोवि जाणंति किमपि पच्चक्खाणं णमोक्कारसहितं पोरुसिमादियं वा, जाणगो अयाणगस्स जाणावेउं पच्चक्खा(वे)ति, जहा णमोक्कारसहितादीणं अमुगं ते पच्चक्खातंति सुद्धं अन्नहा ण सुद्धं, अयाणगो जाणगस्स पच्चक्खाति ण सुद्धं, पभुसंदिट्ठा(ई)सु विभासा, अयाणगो अयाणगस्स पच्चक्खाति, असुद्धमेव, एत्थं दिट्ठंतो गावीतो, जति गावीण पमाणं सामिओत्रि जाणति, गोवालोत्रि जाणति, दोण्हंपि जाणगाणं भूतीमोल्लं सुहं सामीओ देति इतरो गेण्हति, एवं लोइयो चउभंगो, एवं जाणगो जाणगेण पच्चक्खावेति सुद्धं, जाणगो अजाणगेण केणइ कारणेण पच्चक्खावेन्तो सुद्धो णिक्कारणे ण सुद्धति, अयाणगो जाणयं पच्चक्खावेति सुद्धो, अयाणओ अयाणए पच्चक्खावेति ण सुद्धोत्ति गाथार्थः ॥ १६१६ ॥

मूलद्वारगाथायामुक्तः प्रत्याख्याता, साम्प्रतं प्रत्याख्यातव्यमुक्तमप्यध्ययने द्वाराशून्यार्थमाह—

दव्वे भावे य दुहा पच्चक्खाइव्वयं हवइ दुविहं । दव्वंमि अ असणाई अन्नाणाई य भावंमि ॥ १६१७ ॥

'दवे भावे'गाहा व्याख्या—द्रव्यतो भावतश्च द्विधा प्रत्याख्यातव्यं तु विज्ञेयं, द्रव्यप्रत्याख्यातव्यं अशनादि, अज्ञा-

---

१ प्रत्याख्यानं, यस्माद्द्वावपि जानीतः किमपि प्रत्याख्यानं नमस्कारसहितं पौरुष्यादिकं वा, ज्ञोऽज्ञं ज्ञापयित्वा प्रत्याख्यापयति, यथा नमस्कारसहितादिष्वमुकं त्वया प्रत्याख्यातमिति शुद्धमन्यथा न शुद्धं, अज्ञो ज्ञस्य पार्श्वे प्रत्याख्याति न शुद्धं, प्रभुसंदिष्टादिषु विभाषा, अज्ञोऽज्ञस्य प्रत्याख्याति, अशुद्धमेव, अत्र दृष्टान्तो गाव., यदि गवां प्रमाणं स्वाम्यपि जानाति गोपालोऽपि जानाति, द्वयोरपि जानानयोर्भृतिमूल्यं सुखं स्वामी ददाति इतरो गृह्णाति, एवं लौकिकी चतुर्भङ्गी, एवं ज्ञो ज्ञं प्रत्याख्यापयति शुद्धं, ज्ञोऽज्ञेन केनचित्कारणेन प्रत्याख्यापयन् शुद्धः निष्कारणे न शुद्ध्यति, अज्ञो ज्ञं प्रत्याख्यापयति शुद्धः अज्ञोऽज्ञं प्रत्याख्यापयति न शुद्धः ।

नादि तु भावे—भावप्रत्याख्यातव्यमिति गाथार्थः ॥ १६१७ ॥ मूलद्वारगाथायां गतं तृतीयं द्वारं, इदाणिं परिसा, सा य पुव्विं वण्णिता सामाइयणिज्जुत्तीए सेलघणकुडगादी, इत्थ पुण सविसेसं भण्णति—परिसा दुविधा, उवट्ठिता अणुवट्ठिता य, उवट्ठिताए कहेतव्वं, अणुवट्ठिताए ण कहेतव्वं, जा सा उवट्ठिता सा दुविधा—सम्मोवट्ठिता मिच्छोवट्ठिता य, मिच्छोवट्ठिता जहा अज्जगोविंदा तारिसाए ण वट्टति कहेतुं, सम्मोवट्ठिता दुविधा—भाविता अभाविता य, अभाविताए ण वट्टति कहेतुं, भाविता दुविधा—विणीता अविणीता य, अविणीताए ण वट्टति, विणीताए कहेतव्वं, विणीता दुविधा—वक्खित्ता अवक्खित्ता य, वक्खित्ता जा सुणेति कम्मं च किंचि करेति खिज्जति वा अण्णं वा वावारं करेति, अवक्खित्ता ण अण्णं किंचि करेति केवलं सुणति, अवक्खित्ताए कहेयव्वं, अवक्खित्ता दुविधा—उवउत्ता अणुवउत्ता य, अणुवउत्ता जा सुणेति अण्णमण्णं वा चिंतेति, उवउत्ता जा निच्चिन्ता, तम्हा उवउत्ताए कहेतव्वं । तथा चाह—

---

१ इदानीं पर्षत्, सा च पूर्वं वर्णिता सामायिकनिर्युक्तौ शैलघनकुटादिका, अत्र पुनः सविशेषं भण्यते—पर्षत् द्विविधा—उपस्थिता अनुपस्थिता च, उपस्थितायै कथयितव्यं अनुपस्थितायै न कथयितव्यं, या सोपस्थिता सा द्विविधा—सम्यगुपस्थिता मिथ्योपस्थिता च, मिथ्योपस्थिता यथा आर्यगोविन्दाः, तादृश्यै न युज्यते कथयितुं, सम्यगुपस्थिता द्विविधा—भाविता अभाविता च, अभावितायै न युज्यते कथयितुं, भाविता द्विविधा—विनीता अविनीता च, अविनीतायै न युज्यते कथयितुं, विनीतायै कथयितव्यं, विनीता द्विविधा—व्याक्षिप्ता अव्याक्षिप्ता च, व्याक्षिप्ता या शृणोति कर्म च किञ्चित् करोति खिद्यते वा अन्यं वा व्यापारं करोति, अव्याक्षिप्ता नान्यत् किञ्चित् करोति केवलं शृणोति, अव्याक्षिप्तायै कथयितव्यं, अव्याक्षिप्ता द्विविधा—उपयुक्ता अनुपयुक्ता च, अनुपयुक्ता या शृणोति अन्यदन्यद्वा चिन्तयति, उपयुक्ता या निश्चिन्ता (सोपयुक्ता), तस्मात् उपयुक्तायै कथयितव्यं ।

सोउं उवट्ठियाए विणीयवक्खित्ततदुवउत्ताए । एवंविहपरिसाए पच्चक्खाणं कहेयव्वं ॥ १६१८ ॥ द्वारम् ॥

'सोउं उवट्ठिताए' गाहा व्याख्या—गतार्था, एवमेसा उवट्ठिता सम्मोवट्ठिता भाविता विणीयाऽवक्खित्ता उवयुत्ता य, पढमपरिसा जोग्गा कहणाए, सेसा उ तेवट्ठी परिसाओ अजोग्गाओ, अज्जोगाण इमा पढमा–उवट्ठिता सम्मोवट्ठिता भाविता विणीया अवक्खित्ता अणुवउत्ता, एसा पढमा अजोग्गा, एवं तेवट्ठिंपि भाणितव्वा,—'उवठियसम्मोवट्ठियभावितविणया य होइ वक्खित्ता । उवउत्तिगा य जोग्गा सेस अजोगातो तेवट्ठि ॥ १ ॥' एतं पच्चक्खाणं पढमपरिसाए कहेज्जति, तव्वतिरित्ताए ण कहेतव्वं, ण केवलं पच्चक्खाणं सव्वमवि आवस्सयं सव्वमवि सुयणाणंति । मूलद्वारगाथायां परिपदिति गतमधुना कथनविधिरुच्यते, तत्रायं वृद्धवादः–काए विधीए कहितव्वं ?, पढमं मूलगुणा कहेंति पाणातिपातवेरमणाति, ततो साधुधम्मे कथिते पच्छा असढस्स सावगधम्मो, इहरा कहिज्जति सत्तिट्ठोवि सावयधम्मं पढमं सोतुं तत्थेव

1 एवमेषा उपस्थिता सम्यगुपस्थिता भाविता विनीताऽव्याक्षिप्ता उपयुक्ता च प्रथमा पर्षद् योग्या कथनायै, शेषा अयोग्याः त्रिपष्टिः पर्षदः, अयोग्यानामियं प्रथमा–उपस्थिता सम्यगुपस्थिता भाविता विनीता अव्याक्षिप्ता अनुपयुक्ता, एषा प्रथमा अयोग्या, एवं त्रिपष्टिरपि भणितव्याः,–उपस्थिता सम्यगुपस्थिता भाविता विनीता च भवत्यव्याक्षिप्ता उपयुक्ता च योग्या शेषा अयोग्यास्त्रिपष्टिः ॥ १ ॥ एतत् प्रत्याख्यानं प्रथमायै पर्षदे कथ्यते, तद्व्यतिरिक्तायै न कथयितव्यं, न केवलं प्रत्याख्यानं सर्वमप्यावश्यकं सर्वमपि श्रुतज्ञानमिति । केन विधिना कथयितव्यं ?, प्रथमं मूलगुणाः कथ्यंते प्राणातिपातविरमणादयः, ततः साधुधर्मे कथिते पश्चात् अशठाय श्रावकधर्मः, इतरथा कथ्यमाने सत्त्ववानपि श्रावकधर्मं प्रथमं श्रुत्वा तत्रैव

वित्तीं करेइ, [उत्तरेत्ति] उत्तरगुणेसुवि छम्मासियं आदि काउं जं जस्स जोग्गं पच्चक्खाणं तं तस्स असढेण कहेतव्वं । अथवाऽयं कथनविधिः—

आणागिज्झो अत्थो आणाए चेव सो कहेयव्वो । दिट्ठंतिउ दिट्ठंता कहणविहि विराहणा इअरा ॥१६१९॥ द्वारम् ॥

'आणागिज्झो अत्थो'गाहा व्याख्या—आज्ञा—आगमस्तद्ग्राह्यः—तद्विनिश्चेयोऽर्थः, अनागतातिक्रान्तप्रत्याख्यानादिः आज्ञयैव—आगमेनैवासौ कथयितव्यो, न दृष्टान्तेन, तथा दार्ष्टान्तिकः—दृष्टान्तपरिच्छेद्यः प्राणातिपाताद्यनिवृत्तानामेते दोषा भवन्तीत्येवमादिर्दृष्टान्तात्—दृष्टान्तेन कथयितव्यः, कथनविधिः—एषः कथनप्रकारः प्रत्याख्याने, यद्वा सामान्येनैवाज्ञाग्राह्योऽर्थः—सौधर्मादिः आज्ञयैवासौ कथयितव्यो न दृष्टान्तेन, तत्र तस्य वस्तुतोऽसत्त्वात्, तथा दार्ष्टान्तिकः—उत्पादादिमानात्मा वस्तुत्वाद् घटवदित्येवमादिर्दृष्टान्तात् कथयितव्यः, एषः कथनविधिः, विराधना इतरथा—विपर्ययोऽन्यथा कथनविधेः अप्रतिपत्तिहेतुत्वाद् अधिकतरसम्मोहादिति गाथार्थः ॥ १६१९ ॥ मूलद्वारगाथोपन्यस्त उक्तः कथनविधिः, साम्प्रतं फलमाह—

पच्चक्खाणस्स फलं इहपरलोए अ होइ दुविहं तु । इहलोइ धम्मिलाई दामन्नगमाई परलोए ॥ १६२० ॥

'पच्चक्खाणस्स'गाहा व्याख्या—प्रत्याख्यानस्य—उक्तलक्षणस्य फलं—कार्यं इहलोके परलोके च भवति द्विविधं—द्विप्रकारं, तुशब्दः स्वगतानेकभेदप्रदर्शनार्थः, तथा चाह—इहलोके धम्मिलादय उदाहरणं दामन्नकादयः परलोके इति

१ वृत्तिं करोति, उत्तरेति उत्तरगुणेष्वपि षाण्मासिकमादौ कृत्वा यस्य योग्यं प्रत्याख्यानं तस्यासौ अशठेन कथयितव्यं,

गाथाऽक्षरार्थः । कथानकं तु धम्मिलोदाहरणं धम्मिल्लहिंडितो णायवं, आदिसद्दातो आमोसधिमादीया घेप्पंति । दामण्णगोदाहरणं तु–रायपुरे णगरे एगो कुलपुत्तो जातीतो, तस्स जिणदासो मित्तो, तेण सो साधुसगासं णीतो, तेण मच्छयमंसपच्चक्खाणं गहितं, दुब्भिक्खे मच्छाहारो लोगो जातो, इतरोवि सालेहिं महिलाए खिंसिज्जमाणो गतो, उदिण्णे मच्छे दट्ठुं पुणरावत्ती जाता, एवं तिण्णि दिवसे तिण्णि वारं गहिता मुक्का य, अणसणं कातुं रायगिहे णगरे मणियारसेट्ठिपुत्तो दामण्णगो णाम जातो, अट्ठवरिसस्स कुलं मारीए उच्छिण्णं, तत्थेव सागरवोदसत्थवाहस्स गिहे चिट्ठइ, तत्थ य गिहे भिक्खट्ठं साधुणो पइट्ठा, साधुणा संघाडइल्लस्स कहितं, एतस्स गिहस्स एस दारगो अधिपती भविस्सति, सुतं सत्थवाहेण, पच्छा सत्थवाहेण पच्छन्नं चंडालाण अप्पितो, तेहिं दूरं णेतुं अंगुलिं छेत्तुं भेसितो णिव्विसओ कतो, णासंतो तस्सेव गोसंधिएण गहितो पुत्तोत्ति, जोव्वणत्थो जातो, अण्णता सागरपोतो तत्थ गतो तं दट्ठूण उवाएण परियणं पुच्छति–कस्स

---

१ धम्मिल्लहिण्डितो ज्ञातव्यं, आदिशब्दात् आमर्शौषध्याद्या गृह्यन्ते, दामन्नकोदाहरणं तु राजपुरे नगरे एकः कुलपुत्रो जातः, तस्य जिनदासो मित्रं, तेन स साधुसकाशं नीतः, तेन मत्स्यमांसप्रत्याख्यानं गृहीतं, दुर्भिक्षे मत्स्याहारो लोको जातः, इतरोऽपि श्यालमहिलाभ्यां निन्द्यमानो गतः, पीडितान् मत्स्यान् दृष्ट्वा पुनरावृत्तिर्जाता, एवं त्रीन् दिवसान् त्रीन् वारान् गृहीता मुक्ताश्च, अनशनं कृत्वा राजगृहे नगरे मणिकारश्रेष्ठिपुत्रो दामन्नको नाम जातः, अष्टवर्षस्य मार्या कुलमुत्सन्नं, तत्रैव सागरपोतसार्थवाहस्य गृहे तिष्ठति, तत्र च गृहे भिक्षार्थं साधवः प्रविष्टाः, साधुना संघाटकीयाय कथितं–एतस्य गृहस्यैष दारकोऽधिपतिर्भावी, श्रुतं सार्थवाहेन, पश्चात् सार्थवाहेन प्रच्छन्नं चाण्डालेभ्योऽर्पितः, तैर्दूरं नीत्वाऽङ्गुलिं छित्वा भापितः निर्विषयः कृतः, नश्यन् तस्यैव गोसंधिकेन (गोष्ठाधिपतिना) गृहीतः पुत्र इति, यौवनस्थो जातः, अन्यदा सागरपोतस्तत्र गतः तं दृष्ट्वोपायेन परिजनं पृच्छति–कस्यैषः ?,

एस १, कथितं अणाधोत्ति इहागतो, इमो सोत्ति, ता लेहं दाउं घरं पावेहित्ति विसज्जितो, गतो, रायगिहस्स बाहिपरिसरे देवउले सुयति, सागरपोतधूता विसा णाम कण्णा तीए अच्चणियवावडाए दिट्ठो, पितुमुद्दमुद्दितं लेहं दट्ठुं वाएति–एतस्स दारगस्स असोइयमक्खितपादस्स विसं दातवं, अणुस्सारफुसणं, कण्णगदाणं, पुणोवि मुद्देति, णगरं पविट्ठो, विसाऽणेण विवाहिता, आगतो सागरपोतो, मातिघरअच्चणियविसज्जणं, सागरपुत्तमरणं सोतुं सागरपोतो हितयफुट्टणेण मतो, रण्णा दामण्णगो घरसामी कतो, भोगसमिद्धी जाता, अण्णया पव्वण्हे मंगलिएहिं पुरतो से उग्गीयं–'अणुपुंखमावयंतावि अणत्था तस्स बहुगुणा होंति । सुहदुक्खकच्छपुडतो जस्स कतंतो वहइ पक्खं ॥ १ ॥' सोतुं सतसहस्सं मंगलियाण देति, एवं तिण्णि वारा तिण्णि सतसहस्साणि, रण्णा सुतं, पुच्छितेण सव्वं रण्णो सिट्ठं, तुट्ठेण रण्णा सेट्ठी ठावितो, बोधिलाभो, पुणो धम्माणुट्ठाणं देवलोगगमणं, एवमादि परलोए । अहवा सुद्धेण पच्चक्खाणेण देवलोगगमणं पुणो बोधिलाभो सुकुल-

---

१ कथितमनाथ इति इहागतः, अयं स इति, ततो लेखं दत्वा गृहं प्रापयेति विसृष्टो गतः, राजगृहस्य बहिः परिसरे देवकुले सुप्तः, सागरपोतदुहिता विषानाम्नी कन्या, तयाऽर्चनिकाव्यापृतया दृष्टः, पितृमुद्रामुद्रितं लेखं दृष्ट्वा वाचयति, एतस्मै दारकाय अधौताम्रक्षितपादाय विषं दातव्यं, अनुस्वारस्फेटनं कन्यादानं, पुनरपि मुद्रयति, नगरे प्रविष्टः, विषाऽनेन विवाहिता, आगतः सागरपोतः, मातृगृहार्चनिकायै विसर्जनं, सागरपुत्रमरणं श्रुत्वा सागरपोतः हृदय-स्फोटनेन मृतः, राज्ञा दामन्नको गृहस्वामी कृतः, भोगसमृद्धिर्जाता, अन्यदा च पर्वाहनि माङ्गलिकैः पुरतस्तस्योद्गीतं–अन्यथा आपतन्तोऽप्यनर्थास्तस्य बहुगुणा भवन्ति । सुखदुःखकक्षपुटको यस्य कृतान्तो वहति पक्षं ॥ १ ॥ श्रुत्वा शतसहस्रं माङ्गलिकाय ददाति, एवं त्रीन् वारान् त्रीणि शतसहस्राणि, राज्ञा श्रुतं, पृष्टेन सर्वं शिष्टं राज्ञे, तुष्टेन राज्ञा श्रेष्ठी स्थापितः, बोधिलाभः, पुनर्धर्मानुष्ठानं देवलोकगमनं, एवमादि परलोके । अथवा शुद्धेन प्रत्याख्यानेन देवलोकगमनं पुनर्बोधिलाभः सुकुल-

पॅच्चायाती सोक्खपरंपरेण सिद्धिगमणं, केसिंचि पुणो तेणेव भवग्गहणेण सिद्धिगमणं भवतीति । अत एव प्रधानफलोपदर्शनेनोपसंहरन्नाह—

**पच्चक्खाणमिणं सेविऊण भावेण जिणवरुद्दिट्ठं । पत्ता अणंतजीवा सासयसुक्खं लहुं मुक्खं ॥ १६२१ ॥**

'पच्चक्खाणमिणं' गाहा व्याख्या—प्रत्याख्यानमिदं–अनन्तरोक्तं आसेव्य भावेन अन्तःकरणेन जिनवरोद्दिष्टं–तीर्थकरकथितं, प्राप्ता अनन्तजीवाः, शाश्वतसौख्यं शीघ्रं मोक्षम् ॥ आह–इदं फलं गुणनिरूपणायां 'पच्चक्खाणम्मि कते' इत्यादिना दर्शितमेव पुनः किमर्थमिति ?, उच्यते, तत्र वस्तुतः प्रत्याख्यानस्वरूपद्वारेणोक्तं, इह तु लोकनीतित इति न दोषः, यद्वा इत एव द्वारादवतार्य स्वरूपकथनत एव प्रवृत्तिहेतुत्वात् तत्रोक्तं इत्यनपराध एवेत्यलं विस्तरेण । उक्तोऽनुगमः साम्प्रतं नयाः, ते च नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः खल्वौघतः सप्त भवन्ति, स्वरूपं चैतेषामधस्तात् सामायिकाध्ययने न्यक्षेण प्रदर्शितमेवेति नेह प्रतन्यते, इह पुनः स्थानाशून्यार्थं एते ज्ञानक्रियान्तरभावद्वारेण समासतः प्रोच्यन्ते, ज्ञाननयः क्रियानयश्च, तत्र ज्ञाननयदर्शनमिदं–ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चाह—

**नायंमि गिण्हियव्वे अगिण्हियव्वंमि चेव अत्थंमि । जइयव्वमेव इइ जो उवएसो सो नओ नाम ॥ १६२२ ॥**

---

१ प्रत्यायातिः सौख्यपरम्परकेण सिद्धिगमनं, केषाञ्चित् पुनस्तेनैव भवग्रहणेन सिद्धिगमनं भवतीति ।

सव्वेसिंपि नयाणं बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू ॥ १६२३ ॥

॥ इति पच्चक्खाणनिज्जुत्ती समत्ता । श्रीभद्रबाहुस्वामिविरचितं श्रीमदावश्यकसूत्रं सम्पूर्णम् ॥

'णातम्मि गेण्हितव्वे' गाहा व्याख्या—ज्ञाते-सम्यक्परिच्छिन्ने 'गेण्हितव्वे'त्ति ग्रहीतव्ये उपादेये 'अगिण्हितव्वंमि'त्ति अग्रहीतव्ये अनुपादेये, हेय इत्यर्थः, चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थः, उपेक्षणीयसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्यैव च व्यवहितः प्रयोगो द्रष्टव्यः, ज्ञात एव ग्रहीतव्ये अग्रहीतव्ये तथोपेक्षणीये च ज्ञात एव नाज्ञाते 'अत्थंमि'त्ति अर्थे ऐहिकामुष्मिके, तत्रैहिको ग्रहीतव्यः स्रक्चन्दनाङ्गनादिः अग्रहीतव्यो विषशस्त्रकण्टकादिः उपेक्षणीयस्तृणादिः आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिरग्रहीतव्यो मिथ्यात्वादिरुपेक्षणीयो विपक्षाभ्युदयादिरिति, तस्मिन्नर्थे यतितव्यमेव इति—ऐहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन यतितव्यमेव, प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः । इत्थं चैतदङ्गीकर्त्तव्यं, सम्यग्ज्ञाने वर्त्तमानस्य फलाविसंवाददर्शनात्, तथा चान्यैरप्युक्तम्—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता । मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात् ॥१॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिना हि ज्ञान एव यतितव्यं, तथाऽऽगमोऽप्येवमेव व्यवस्थितः, यत उक्तं—"पढमं णाणं ततो दया, एवं चिट्ठति सव्वसंजते । अण्णाणी किं काहिति किं वा णाहिति छेयपावयं ? ॥ १ ॥" इतश्चैतदेवमङ्गीकर्तव्यं—यस्मात् तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रि-

१ प्रथमं ज्ञानं ततो दया एवं तिष्ठति सर्वसंयतः । अज्ञानी किं करिष्यति किं वा ज्ञास्यति छेकं पापकं वा ॥ १ ॥

याऽपि निषिद्धा, तथा चागमः—"गीतत्थो य विहारो विदितो गीतत्थमीसितो भणितो । एत्तो ततियविहारो णाणुण्णातो जिणवरेहिं ॥ १ ॥" न यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यत इत्यभिप्रायः । एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भवाम्भोधेस्तटस्थस्य दीक्षाप्रतिपन्नस्य उत्कृष्टतपश्चरणवतोऽपि न तावदपवर्गप्राप्तिः सञ्जायते [यतो] यावज्जीवाद्यखिलवस्तुपरिच्छेद्यरूपं केवलज्ञानं नोत्पन्नमिति, तस्मात् ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितं 'इति जो उवदेसो सो णओ णाम'त्ति इति—एवं उक्तेन न्यायेन य उपदेशः ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः । अयं च नामादौ षड्विधप्रत्याख्याने ज्ञानरूपमेव प्रत्याख्यानमिच्छति, ज्ञानात्मकत्वादस्य, क्रियारूपं तु तत्कार्यत्वात् तदायतत्त्वान्नेच्छति, गुणभूतं चेच्छतीति गाथार्थः । उक्तो ज्ञाननयोऽधुना क्रियानयावसरः, तद्दर्शनं चेदं—क्रियैव प्रधानं ऐहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चायमप्युक्तलक्षणमेव स्वपक्षसिद्धये गाथामाह—'णायम्मि गेण्हितव्वे' इत्यादि, अस्याः क्रियानयदर्शनानुसारेण व्याख्या—ज्ञाते ग्रहीतव्ये अग्रहीतव्ये चैवमर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिर्दृश्यते, तथा चान्यैरप्युक्तं—"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥ १ ॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिनाऽपि

१ गीतार्थश्च विहारो द्वितीयो गीतार्थनिश्रितो भणितः । इतस्तृतीयविहारो नानुज्ञातो जिनवरैः ॥ १ ॥

क्रियैव कर्त्तव्या, तथा मुनीन्द्रवचनमप्येवं व्यवस्थितं, यत उक्तम्—"चेइयकुलगणसंघे आयरियाणं च पवयण सुए य । सव्वेसुवि तेण कयं तवसंजममुज्जमंतेणं ॥ १ ॥" इतश्चैतदेवमङ्गीकर्तव्यम्—यस्मात् तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तं, तथा चागमः—"सुबहुंपि सुयमहीयं किं काही चरणविप्पहीणस्स ? । अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥ १ ॥" दृशिक्रियाविकलत्वात् तस्येत्यभिप्रायः । एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं, चारित्रं क्रियेत्यनर्थान्तरं, क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भगवतः समुपन्नकेवलज्ञानस्यापि न तावत् मुक्त्यवाप्तिः सञ्जायते यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात् क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति य उपदेशः—क्रियाप्राधान्यख्यापनपरः स नयो नाम क्रियानय इत्यर्थः । अयं च नामादौ षड्विधे प्रत्याख्याने क्रियारूपमेव प्रत्याख्यानमिच्छति, तदात्मकत्वादस्य, ज्ञानं तु तदर्थमुपादीयमानत्वादप्रधानत्वान्नेच्छति गुणभूतं चेच्छतीति गाथार्थः । उक्तः क्रियानयः, इत्थं ज्ञानक्रियानयस्वरूपं श्रुत्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह—किमत्र तत्त्वं ?, पक्षद्वयेऽपि युक्तिसम्भवाद्, आचार्यः पुनराह—'सव्वेसिं' गाहा, अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह—'सव्वेसिंपि' गाहा व्याख्या—'सर्वेषा'मिति मूलनयानां अपिशब्दात् तद्भेदानां च नयानां—द्रव्यास्तिकादीनां बहुविधवक्तव्यतां—सामान्यमेव विशेषा

१ चैत्यकुलगणसङ्घे आचार्येषु च प्रवचने श्रुते च । सर्वेष्वपि तेन कृतं तपःसंयमयोरुद्यच्छता ॥ १ ॥ २ सुबह्वपि श्रुतमधीतं किं करिष्यति चरणविप्रहीणस्य । अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोट्यपि ॥ १ ॥

एव उभयमेवानपेक्षं इत्यादिरूपां अथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां निशम्य—श्रुत्वा तत सर्वनय-विशुद्धं—सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात् सर्वे नया एव भावनिक्षेपमिच्छन्तीति गाथार्थः ॥ १६२३ ॥ इति शिष्यहितायां प्रत्याख्यानविवरणं समाप्तमिति । व्याख्यायाध्ययनमिदं यदवाप्तमिह शुभं मया पुण्यम् । शुद्धं प्रत्या-ख्यानं लभतां भव्यो जनस्तेन ॥ १ ॥ समाप्ता चेयं शिष्यहितानामावश्यकटीका ॥ कृतिः सिताम्बराचार्यजिनभटनिग-दानुसारिणो विद्याधरकुलतिलकाचार्यजिनदत्तशिष्यस्य धर्मतो जाइणीमहत्तरासूनोरल्पमतेराचार्यहरिभद्रस्य ।

यदिहोत्सूत्रमज्ञानाद्, व्याख्यातं तद् बहुश्रुतैः । क्षन्तव्यं कस्य सम्मोहः, छद्मस्थस्य न जायते ? ॥ १ ॥
यदर्जितं विरच(मंच)यता सुबोध्यां,पुण्यं मयाऽऽवश्यकशास्त्रटीकाम् ।भवे भवे तेन ममैवमेवं,भूयाज्जिनोक्तानुमते प्रयासः ॥२॥
अन्यच्च सन्त्यज्य समस्तसत्त्वा, मात्सर्यदुःखं भवबीजभूतम् । सुखात्मकं मुक्तिपदावहं च, सर्वत्र माध्यस्थमवाप्नुवन्तु ॥ ३ ॥

समाप्ता चेयमावश्यकटीका । द्वाविंशतिः सहस्राणि, प्रत्येकाक्षरगणनया(संख्यया) । अनुष्टुप्छन्दसा मानमस्या उद्देशतः कृतम् ॥ १ ॥ अंकतोऽपि ग्रन्थाग्रं २२०००

इत्याचार्यवर्यश्रीमद्धरिभद्रसूरिसूत्रितसंक्षिप्तविवृतियुतं
श्रुतकेवलिश्रीमद्भद्रबाहुस्वामिसूत्रितनिर्युक्तिमूल-
भाष्यभाष्ययुक्तं श्रीमदावश्यकसूत्रं समाप्तं ॥